वामनजयादित्यविरचिता

# काशिका

## न्यास-पदमञ्जरी-भावबोधिनी-सहिता

अष्टमो भागः

सम्पादकः
डॉ० जयशङ्कर लाल त्रिपाठी

तारा बुक एजेन्सी

वामनजयादित्यविरचिता

# का शि का

न्यास-पदमञ्जरी-भावबोधिनी-सहिता

अष्टमो भागः

सम्पादकौ :

डा० जयशंकर लाल त्रिपाठी

तारा बुक एजेन्सी

प्राच्यभारतीग्रन्थमाला—३०

*Prācyabhāratīgranthamālā—30*

# काशिका

## अष्टमो भागः

डॉ० जयशङ्कर लाल त्रिपाठी

*Prācyabhāratīgranthamālā—30*

# KĀŚIKĀ

**(A COMMENTARY ON PĀṆINI'S GRAMMAR)**

of

VĀMANA & JAYĀDITYA

with

NYĀSA or KĀŚIKĀ-VIVARAṆAPAÑJIKĀ

of

JINENDRABUDDHI

and

PADAMAÑJARĪ

of

HARADATTA MIŚRA

with

BHĀVABODHINĪ

Hindi Exposition by Dr. JAYA SHANKAR LAL TRIPATHI

*Critically Edited by* :

**Dr. Jaya Shankar Lal Tripathi**
Vyākaraṇācārya (Goldmedalist), M. A., Ph. D., D. Litt.
Reader, Department of Sanskrit, Faculty of Arts,
Banaras Hindu University

*Foreword by*

**Prof. Bishwanath Bhattacharya**
*Ex. Mayūrabhañja Professor & Head, Department of Sanskrit*
*Banaras Hindu University*

Volume VIII
[Adhyāyas 6.3-7.1]

**TARA BOOK AGENCY**
VARANASI

प्राच्यभारतीग्रन्थमाला—३०

श्रीमद्वामन-जयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका

श्रीमज्जिनेन्द्रबुद्धिविरचितया 'न्यास'परपर्यायकाशिकाविवरणपञ्जिकाख्यया

विद्वद्वरश्रीहरदत्तमिश्रविरचित-'पदमञ्जरी'-समाख्यया च व्याख्यया सहिता

डॉ० जयशङ्करलालत्रिपाठिविरचितया 'भावबोधिनी' हिन्दीव्याख्यया च विभूषिता

सम्पादकः

डॉ० जयशङ्कर-लाल-त्रिपाठी

व्याकरणाचार्यः ( लब्धस्वर्णपदकः ), एम० ए०, पी-एच्० डी०, डी० लिट्०

रीडर, संस्कृत-विभागः, कला-संकायः, काशी-हिन्दू-विश्वविद्यालयः

प्रस्तावकः

डॉ० विश्वनाथ-भट्टाचार्यः

भूतपूर्वो मयूरभञ्ज प्रोफेसर, विभागाध्यक्षः, संस्कृत-विभागः, कला-संकायः

काशी-हिन्दू-विश्वविद्यालयः

## अष्टमो भागः

[ ६.३-७.१ अध्यायात्मकः ]

**तारा बुक एजेंसी**

वाराणसी

१९९१ तमः ख्रिष्टाब्दः ]

[ २०४८ तमो वैक्रमाब्दः

## PUBLISHER'S NOTE

We have the pleasure in presenting the Eighth Volume of Kāśikā with Nyāsa and Padamañjarī along with the new Hindi exposition Bhāvabodhinī by Dr. Jaya Shankar Lal Tripathi.

The learned editor of the present edition—Dr. Jaya Shankar Lal Tripathi, Reader in the Department of Sanskrit, Banaras Hindu University has taken great pains and care in editing the text and Hindi exposition. He has provided, in addition to Hindi exposition, critical notes and references which; we are sure, will render this edition more useful and valuable than all the earlier editions.

The whole work shall be completed in eleven volumes as follows :

| *Volumes* | *Adhyāya/Pāda* | *to Adhyāya/Pāda* |
|---|---|---|
| I | 1/1 | 1/2 |
| II | 1/3 | 2/2 |
| III | 2/3 | 3/2 |
| IV | 3/3 | 4/1 |
| V | 4/2 | 5/1 |
| VI | 5/2 | 5/4 |
| VII | 6/1 | 6/2 |
| VIII | 6/3 | 7/1 |
| IX | 7/2 | 7/4 |
| X | 8/1 | 8/4 |
| XI | | Indices |

We hope that the present edition shall be appreciated and warmly welcomed by students and scholars alike.

'वाग्वै पराच्यव्याकृताऽवदत्, तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते'।

—तै० सं० ६.४.७.३

तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ॥

—भर्तृहरिः १।१३१

## FOREWORD

The present eighth volume of the Kāśikā covers the last two *Pādas* of the sixth chapter and first pāda of seventh chapter of the Aṣṭādhyāyī. I feel happy to present the volume to the world of letters and congratulate the learned editor, Dr. Jaya Shankar Lal Tripathi, my colleague on the successful completion of more than three-fourth of the scheme of publication of the Kāśikā along with two commentaries and his own Hindi exposition of the *vṛtti*.

In the foreword of the earlier volume, I drew the attention of the discerning scholars to the salient features of this edition and noted that flawlessly printed text, critical notes and carefully executed comprehensive Hindi rendering were the most laudable achievements of the editor. I am happy to note that Dr. Tripathi has maintained all these distinctions in the present volume as well.

One additional point, however, is noteworthy. A large number of sutrās of the Aṣṭādhyāyī deals with accents and as such the Kāśikā quotes a number of vedic words and sentences by way of illustrations. Dr. Tripathi has taken pains to provide accent-marks in all these Vedic illustrations. This has been a desiderative for long. The latest editor of the Kāśikā to use accentuation, to my mind, was Prof. Aryendra Sharma. Dr. Tripathi has revived the right tradition and all Sanskritists would appreciate how painstaking is the process. On this count also, Dr. Tripathi deserves unstinted praise.

"*Ā Paritoṣād viduṣām*" has been the established norm of a scholar's assessment in India and I am sure that Sanskritists, especially those devoted to the study of Pāṇinian Vyākaraṇa will be happy with the present volume. In the end, I would urge the learned editor to complete his ambitious scheme as early as possible.

Let Lord Viśvanātha provide him with the right *adhyavasāya*.

BISHWANATH BHATTACHARYA
*Ex. Professor and Head*

*Department of Sanskrit*
*Banaras Hindu University*
*Varanasi-5*
*24.3.1991*

## सङ्केत-सूची

| | | |
|---|---|---|
| अथर्व० | = | अथर्ववेदः |
| अ० वे० | = | ,, |
| आ० ध० | = | आपस्तम्बधर्मसूत्रम् |
| आप० श्रौ० | = | आपस्तम्ब-श्रौतसूत्रम् |
| आश्व० श्रौ० | = | आश्वलायन-श्रौतसूत्रम् |
| उ० सू० | = | उणादि-सूत्रम् |
| ऋ० | = | ऋग्वेदः |
| का० वा० | = | कात्यायन-वार्त्तिकम् |
| का० सं० | = | काठक-संहिता |
| कौ० गृ० | = | कौषीतकी-गृह्यसूत्रम् |
| ग० सू० | = | गण-सूत्रम् |
| तै० ब्रा० | = | तैत्तिरीय-ब्राह्मणम् |
| तै० सं० | = | तैत्तिरीय-संहिता |
| द० उ० | = | दशपादी-उणादिः |
| धा० पा० | = | धातुपाठः |
| नि० | = | निरुक्तम् |
| पा० शि० | = | पाणिनीयशिक्षा |
| पा० सू० | = | पाणिनीयसूत्रम् |
| पै० सं० | = | पैप्पलाद-संहिता |
| फि० सू० | = | फिट् सूत्रम् |
| म० भा० | = | महाभाष्यम् |
| मै० सं० | = | मैत्रायणी-संहिता |
| वा० सं० | = | वाजसनेयी-संहिता |
| व्या० प० | = | व्याडि-परिभाषा |
| श० ब्रा० | = | शतपथ-ब्राह्मणम् |
| सी० दे० प० | = | सीरदेव-परिभाषा |

# सम्पादकीयम्

आपः पवित्रं परमं पृथिव्या अद्भ्यः पवित्रं परमं हि मन्त्राः ।
तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥

(वाक्यपदीय कां १ का० १४ टीका)

"प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण ।" इत्येवं वदता भाष्यकारेण पाणिनेः प्रयत्नस्य महत्त्वं स्पष्ट-शब्दैरुद्घोषितम् । किञ्च तदीयसूत्रघटकवर्णानां सार्थक्यमपि सर्वस्वीकार्यत्वेन निर्दिष्टम् । एवञ्च पाणिनीयसूत्राणां व्याख्यानं न तथा सरलं यथा सामान्यरूपेण सर्वैरशब्दशास्त्रज्ञैरुच्यते । अद्यावधि परिशीलनानन्तरमपि केषाञ्चित् सूत्राणामाशयो न सर्वसंमतः । तत्रार्थ-विषये शङ्कासम्भवत्वं स्वयमेव पाणिनिनोत्प्रेक्ष्य स्वोपज्ञा वृत्तिर्लिखिताऽऽसीदिति यत्र तत्रो-ल्लेखैर्निश्चितं ज्ञायते ।

सा च पाणिनिना विरचिता सूत्रवृत्तिर्द्विविधाऽऽसीदिति महाभाष्यादि-दर्शनेन सुस्पष्टं प्रतीयते । अतएव महा-भाष्यकारेणेदं प्रदर्शितम् "उभयथा चैतत् प्रतिपादितं सूत्रकारेण ।" (मभा० १।४।१)

दौर्भाग्यमिदमस्माकं यत् प्राचीनकालादेव लुप्तप्राया पाणिनिविरचिता सूत्रवृत्तिर्येनान्यैराचार्यैः सूत्रार्थाभिप्राय-प्रदर्शनार्थं प्रयतितम् । साम्प्रतमुपलब्धासु सूत्रवृत्तिषु वामनजयादित्याभ्यां प्रणीता **'काशिका'** नाम्नी सूत्रवृत्तिरेव शेख-रायमाणा शाब्दिकानुपकरोति । अत्र विषये महान् विवादो विद्यते यदुभाभ्यां सम्मिल्य विलिखिता यद्वा पृथक्-पृथक् । तत्रापि च केन कियानंशो विरचितः—एतत्सर्वं तु अस्य संस्करणस्य प्रथमभागे एव विवेचितमिति जिज्ञासुभिस्तत्रैव द्रष्टव्यम् ।

काशिकायां मङ्गलश्लोकेषु एतत् स्पष्टीकृतं यदस्यां किं किं विचारणीयत्वेन निश्चितम् । 'सूत्रार्थप्रधानो ग्रन्थो वृत्ति'रिति लक्षणं निरूपयता पदमञ्जरीकारेण महावैयाकरणेन श्रीहरदत्तमिश्रेणेदं सुस्पष्टं निर्दिष्टं यदस्यां वृत्तौ सूत्रार्थ-विषयको विचार एव प्रामुख्यं भजते ।

यथा पाणिनीयसूत्राणामभिप्रायाणां प्रकाशने काशिका सर्ववृत्तीरतिशेते तथैव काशिकायाः रहस्यावबोधने श्रीमदाचार्य-जिनेन्द्रबुद्धि-पादविरचितं न्यासापरनामकं काशिकाविवरणपञ्जिकाख्यं तथा वैयाकरणशिरोमणि-श्रीमद्हरदत्त-मिश्रमहोदयविरचिता पदमञ्जरीनाम्नी प्रौढा व्याख्या च परमसहायिकेति न तिरोहितं शाब्दिकानाम् । अतएव किञ्चित्पूर्वं व्याख्याद्वयीविशिष्टमेकं संस्करणं प्रकाशितमभूत् । तच्चोपलब्धं प्रकाशितं साहित्यमाश्रित्यैव सम्पादितं प्रकाशितं चाभूत् । तत्रानेकाः प्रमादास्त्रुटयश्चासन्निति परिशीलनपराणां प्रत्यक्षमेव । तदनन्तरं 'फोटो आफसेट' माध्यमेन पुनस्तस्यैव तेनैव रूपेण पुनः प्रकाशनं जातम् । तत्र भूमिकाभागे विदुषा श्रीमता श्रीनारायणमिश्रमहोदयेन काश्चन त्रुटयः संशोध्य शाब्दिका उपकृताः ।

हैदराबाद-विश्वविद्यालयीयसंस्कृतपरिषदा श्रीमदार्येन्द्रशर्मणा निर्दिष्टं सम्पादितं च काशिकामूलमात्रमवलोक्य मे मनस्यप्येका भावना समुद्भूता यदधुनावधि समुपलब्धं सकलं विषयवस्तु सम्यक् परिशील्य समीक्षात्मकमेकं नव्यं भव्यं संस्करणं प्रकाश्य शाब्दिकानां विशेषतोऽध्ययनशीलानां छात्राणां समक्षं प्रस्तोतव्यम् ।

अस्यां दिशि भृशं चिन्तयतो मे मनस्येका नवीना भावना समुदिता यदिदानीं यथा विविध-विषयाणां व्याख्यानं राष्ट्रभाषायां हिन्द्यां विद्यते तथैवास्याः परमोपकारिकायाः भाष्यादिसमाश्रितायाः काशिकाया एका विशदा छात्रसमस्या-निराकरणसमर्था प्रामाणिका व्याख्या हिन्द्यां विलिख्य प्रकाशनीया । काशीपुराधीश्वरस्य भगवतो विश्वनाथस्य महत्या कृपया मदीया योजना सफलतां गता । मया नवीनानुवादशैली आश्रिता । अस्यां सूत्रार्थस्य सम्पूर्णोऽनुवादः सरलया पद्धत्या प्रदर्शितः । विशिष्टशब्दानां व्याख्यानं लघुकोष्ठके (    ) मध्ये विहितम् । अपेक्षित-भावप्रकाशनार्थं बृहत्कोष्ठकानां [    ] मध्येऽतिरिक्त-शब्दावली समायोजिता । एतेन मूलस्य व्याख्यानावबोधने न कुत्रापि सन्देहो भविष्यतीति

चिन्तयामि । किञ्च दुरूहविषयाणां रहस्यसमुद्घाटनार्थं 'विमर्श' इत्यस्यान्तर्गतं स्वतन्त्रं व्याख्यानं परमोपकारकं भविष्यतीति मे विचारः ।

काशिकादीन् पाणिनीयसूत्रक्रमानुसारि-ग्रन्थान् अधीयानानां समक्षं प्रक्रियाविषयिणी समस्या प्रायः समुदेति । एतदर्थमस्यां हिन्दीव्याख्यायां प्रायः सर्वत्रावश्यकस्थलेषु प्रक्रियायाः तदुपयोगिसूत्राणां चोल्लेखः छात्राणां जिज्ञासूनां च समस्यां निराकरिष्यतीति दृष्ट्वैव निर्णेतव्यम् । एवं गुणविशिष्टा 'भावबोधिनी' हिन्दीव्याख्याऽभिनवाऽस्मिन् प्रस्तुते संस्करणे प्रथमतया संयोज्य प्रकाश्यते । एवञ्च पूर्वोक्ताभ्यां समुत्कृष्टाभ्यां न्यास-पदमञ्जरीभ्यां भावबोधिन्या चेति व्याख्यानत्रयेण विभूषितमिदं काशिकासंस्करणं सर्वजनसमादरपात्रं भविष्यतीति भावयामि ।

प्रस्तुतोऽयम् 'अष्टमो भागः' भगवत्कृपया विदुषां समक्षमुपस्थाप्यते । इतः पूर्वं सप्तभागाः प्रकाशिताः सहृदयानां विदुषां छात्राणां च प्रशंसा-पात्रतामधिगताः । अस्मिन्नपि पूर्वसंस्करणानुरूपमेवापेक्षितं सर्वं विषयं यथास्थानं संयोज्य विदुषामभिमुखमुपस्थाप्य सन्तोषमतितरामनुभवामि । अस्मिन् भागे काशिकायां विचारितेषु सूत्रेषु विषये किञ्चिल्लेखनमावश्यकमिति मत्वाऽत्र संक्षेपेणैव प्रस्तौमि केषाञ्चन सूत्राणामभिप्रायबोधने सहायकं विषयजातम् ।

( १ ) **अलुगुत्तरपदे (पा० सू० ६।३।१)**—''उत्तरपदे' इत्यधिक्रियते । एकस्मिन्नपि समस्तसंज्ञके पदे पूर्वपदमुत्तरपदं च भवतीत्यभिप्रायेण इतोऽग्रे यानि कार्याणि विधास्यन्ते तानि समासविषयकाण्येवेति बोध्यम् । अयमधिकारः 'अङ्गस्य' (पा० सू० ६।४।१) इति सूत्रबोधिताङ्गाधिकारात् पूर्वं यावद् प्रवर्त्तते । तेन 'सम्प्रसारणस्य' (पा० सू० ६।३।१३९) इति षष्ठाध्याय-तृतीयपादसमाप्तिपर्यन्तं सर्वत्र 'उत्तरपदे' सत्येव विधयो प्रवर्त्तन्ते । अतोऽत्र षष्ठाध्यायस्य तृतीये पादे समाससम्बद्धान्येव सूत्राणीति बोध्यम् ।

( २ ) **संहितायाम् (६।३।११४)**—'संहितायाम्' इत्ययमधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामः, संहितायामित्येवं तद्वेदितव्यम् ।

षष्ठाध्याये प्रथमपादेऽपि 'संहितायाम्' ( ६।१।७२ ) इत्येकमधिकारसूत्रं वर्त्तते तच्च 'अनुदात्तं पदमेकवर्जम्' (६।१।१५८) इत्यतः पूर्वपर्यन्तं प्रवर्तते । आश्चर्यमिदं यत् प्रस्तुतस्य 'संहितायाम्' इत्यधिकारस्यावधिर्न केनापि व्याख्यात्रा निर्दिष्टः । किञ्च षष्ठाध्यायस्य तृतीयपादस्य प्रथमं सूत्रम् 'अलुगुत्तरपदे' (६।३।१) इति वर्त्तते । उत्तरपदत्वञ्च समास एव । तत्र च संहिताया नित्यत्वादस्य अधिकारसूत्रस्य किं प्रयोजनम् ? यत्रानुत्तरपदे कार्यं विधीयते तत्रैवास्य प्रयोजनं द्रष्टव्यम् । ''द्व्यचोऽतस्तिङः (६।३।१३५) द्व्यचस्तिङन्तस्यात ऋग्विषये दीर्घो भवति । तेन ''विद्मा हि त्वा गोपतिं शूर गोनाम्'' इत्यत्र यथा संहितायां दीर्घः श्रूयते तथैव पदपाठे 'विद्म हि त्वा' इत्यत्र दीर्घो न श्रूयते । अत एव बृहच्छब्देन्दुशेखरे नागेशेन स्पष्टीकृतम् ''एतदधिकारस्थान्यशास्त्राणामुत्तरपदाधिकारात् समास एव प्रवृत्त्या, तत्र च संहिताया नित्यत्वादन्यत्र न फलमिति बोध्यम् ।'' (बृहच्छब्देन्दुशेखरः भागः २, पृ० १२१०) ।

( ३ ) **अङ्गस्य (पा० सू० ६।४।१)**—'अधिकारोऽयम् आसप्तमाध्यायपरिसमाप्तेः । एवञ्च षष्ठाध्यायस्य चतुर्थे पादे सप्तमाध्यायस्य च चतुर्ष्वपि पादेषु यानि सूत्राणि सन्ति तानि सर्वाणि अङ्गाश्रितान्येव । अङ्गसंज्ञायाः स्वरूपं तु ''यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्'' (१।४।१३) इति सूत्रेण प्रदर्शितम् ।

''यस्मात् प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद् वा तदादि शब्दस्वरूपं प्रत्यये परतोऽङ्गं भवति ।···यस्मादिति संज्ञिनिर्देशार्थम्, तदादीति सम्बन्धात् । प्रत्ययग्रहणं किम् ? न्यविशत, व्यक्रीणीत । 'नेर्विशः' (१।३।१७) इत्युपसर्गाद् विधिरस्ति तदादेरङ्गसंज्ञा स्यात् । विधिग्रहणं किम् ? प्रत्ययपरत्वमात्रे मा भूत्—स्त्री इयती । *तदादिवचनं स्यादिनुमर्थम् ।* करिष्यावः करिष्यामः, कुण्डानि । पुनः प्रत्ययग्रहणं किमर्थम् ? लुप्तप्रत्यये मा भूत्—स्त्र्यर्थम् ।'' (काशिका द्वितीयभागः पृ० ११४) ।

प्रक्रियादृष्ट्या अङ्गाधिकारीयसूत्राणां परिज्ञानमतीवावश्यकम् । प्रातिपदिकशब्दरूपाणां धातुशब्दरूपाणां च सिद्धयेऽङ्गाधिकारीयानेकसूत्राणां पूर्वत्वं परत्वं चापि सम्यग्रूपेण ज्ञेयम् ।

( ४ ) असिद्धवदत्रा भात् (६।४।२२)—असिद्धवद्—इत्ययमधिकारो यदित ऊर्ध्वमनुक्रमिष्यामः आ अध्याय-परिसमासेस्तद् असिद्धवद् वेदितव्यम् । आ भात्—इति विषयनिर्देशः । आभसंशब्दनाद् यदुच्यते तत्र कर्त्तव्ये । अत्रेति समानाश्रयत्वप्रतिपत्त्यर्थम् । तच्चेदत्र भवति तदा भात् शास्त्रीयं विधीयते तदाश्रयमेव भवति । व्याश्रयं तु नासिद्धवद् भवतीत्यर्थः । असिद्धवद्वचनम्—उत्सर्गलक्षणभावार्थम् आदेशलक्षणप्रतिषेधार्थञ्च ।'' (काशिका पृ० १७५) ।

शब्दरूपाणां प्रक्रियादृष्टचा सूत्राणामसिद्धयानेकानि कार्याणि सम्भवन्ति, अनिष्टानि च न प्रवर्तन्ते । अस्मिन् विषये तत्रैव सूत्रे काशिकावृत्तिर्द्रष्टव्या ।

( ५ ) आर्द्धधातुके (६।४।४६)—अङ्गाधिकारस्यान्तर्गत एवायमधिकारः । 'आर्द्धधातुके' इत्यधिकारः ''न ल्यपि'' (६।४।६९) इत्यतः प्राग् वर्तते । आर्धधातुकत्वञ्च केषां केषां भवतीति ज्ञानायाधोलिखितानि सूत्राणि द्रष्टव्यानिः—

( क ) आर्धधातुकं शेषः (३।४।११४)—तिङः शितश्च वर्जयित्वा अन्यः प्रत्ययः शेषः धातुसंशब्दनेन विहित आर्धधातुकसंज्ञो भवति ।

( ख ) लिट् च (३।४।११५)—लिडादेशः तिङ् आर्धधातुकसंज्ञो भवति ।

( ग ) लिङाशिषि (३।४।११६)—आशिषि विषये यो लिङ् स आर्धधातुकसंज्ञो भवति ।

( घ ) छन्दस्युभयथा (३।४।११७)—छन्दसि विषये उभयथा भवति सार्वधातुकमार्धधातुकञ्च ।

**अस्मिन् अष्टमे भागे इमान्यपि सूत्राणि विशेषतो ध्येयानि**

( १ ) स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु । (६।३।३४) 'भाषितः पुमान् येन समानायामाकृतौ एकस्मिन् प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः । तदेतदेवं कथं भवति ? भाषितः पुमान् यस्मिन् अर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः । ऊङोऽभावोऽनूङ् भाषितपुंस्कादनूङ् यस्मिन् शब्दे 'स भाषितपुंस्कादनूङ् स्त्रीशब्दः । बहुव्रीहिरयम्, अलुग् निपातनात् पञ्चम्यास्तस्य भाषितपुंस्कादनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति, समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते ।'' (काशिका ६।३।३४ पृ० २९)

( २ ) पृषोदरादीनि यथोपदिष्टम् । (६।३।१०९) 'पृषोदरादीनि शब्दरूपाणि, येषु लोपागमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति । यानि यथोपदिष्टानि = शिष्टैरुच्चारितानि, प्रयुक्तानि तानि तथैवानुगन्तव्यानि ।'' (काशिका ६।३।१०९ पृ० १०९) ।

( ३ ) स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च । ( ६।४।६२ ) ''स्य, सिच्, सीयुट्, तासि—इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानां हन्, ग्रह, दृश्—इत्येतेषां च चिण्वत् कार्यं भवति वा । यदा चिण्वत् तदा इडागमो भवति । कस्य ? स्य सिच् सीयुट्तासीनामेवेति वेदितव्यम् । ते हि प्रकृताः । अङ्गस्य तु लक्ष्यविरोधान्न क्रियते ।'' (काशिका ६।४।६२ पृ० २२५) ।

( ४ ) तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य । ( ७।१।७४ ) तृतीयादिषु विभक्तिषु अजादिषु भाषितपुंस्कं नपुंसकलिङ्गमिगन्तं गालवस्याचार्यस्य मतेन पुंवद् भवति । यथा पुंसि ह्रस्वनुमौ न भवतस्तद्वदत्रापि न भवत इत्यर्थः ।''
(काशिका ७।१।७४ पृ० ४४३) ।

अस्मिन् अष्टमे भागे वेदविषयकाण्यपि द्वापञ्चाशत् (५२) सूत्राणि काशिकायां दृश्यन्ते तानि भूमिकायां द्रष्टव्यानि ।

**काशिकाकारस्य केचन प्रमादाः**

( १ ) महाभाष्ये ''आज्ञायिनि च'' (६।३।५) इति सूत्रोपरि ''आत्मनश्च पूरणे'' इति वचनं वार्त्तिकरूपेण पठितं किन्तु काशिकाकारेण 'आत्मनश्च पूरणे' (काशिका ६।३।६) इति स्वतन्त्रसूत्ररूपेण पठित्वा व्याख्यातम् । अस्मिन् विषये विशेषस्तु ९ पृष्ठे 'विमर्श' इत्यन्तर्गतो द्रष्टव्यः ।

( २ ) पाणिनिना 'प्रकृत्याशिषि' (६।३।८३) इत्येतावदेव सूत्ररूपेण पठितम् । वार्त्तिककारेण 'प्रकृत्याशिष्य-गवादिषु' इति पठितम्, भाष्यकारेण उदाहरणरूपेण 'सवत्साय सहलाय' इति प्रदर्शितम् । किन्तु काशिकाकारेण 'प्रकृत्या-शिष्यगोवत्सहलेषु' इति सम्मिलितं सूत्ररूपेण पठितम् । द्रष्टव्यः ९४ पृष्ठे 'विमर्शः' ।

( ३ ) "यजध्वैनमिति च" (काशिका ७।१।४३) ४०६ पृष्ठेऽपि विमर्शे काशिकाकारस्यानवधानता द्रष्टव्या ।

**मूलन्यासपदमञ्जरीणां केचन पाठभेदाः**

( १ ) "पृषोदरादीनि" (६।३।१०९) इति सूत्रे १०९ पृष्ठे न्यासे 'आदिशब्दः प्रकारवचन इति ।' इदं प्रतीकत्वेन पठितम् । किन्तु सम्प्रति प्रकाशितकाशिकामूले इदं नैव पठ्यते । एवमेव "पृषोदरप्रकाराणि" इदं न्यासे पदमञ्जर्यां च पठ्यते किन्तु मूलकाशिकायां 'पृषोदरादीनि' इत्येव पठ्यते ।

( २ ) १३९ पृष्ठे 'अङ्गस्य' (६।४।१) इति सूत्रे मूले 'प्रातिपदिकार्थमात्रविवक्षित-विभक्त्यर्थमधिक्रियते ।" किन्तु न्यासे "अविवक्षितविभक्त्यर्थमिति' इदं दृश्यते । एवमेव तत्रैवाग्रे मूले "तदुरत्र यथायोगं विपरिणम्यते' इत्ययं पाठः । किन्तु पदमञ्जर्यां "यथायोगं विभक्तिषु विपरिणम्यते" इति पाठः ।

( ३ ) "नृ च" (६।४।६) इति सूत्रे १४६ पृष्ठे मूले 'केचिदेतत् 'छन्दसि' इति नानुवर्त्तयन्ति' इत्ययं पाठः । न्यासे तु 'केचिदत्र' इति पाठः ।

एवमेवान्यत्रापि बहुत्र मूले न्यासे पदमञ्जर्यां च पाठभेदाः दृश्यन्ते । एतेन सुस्पष्टं प्रतीयते यत् न्यासकारस्य पद-मञ्जरीकारस्य च समक्षं काशिकायाः यः पाठ आसीत् स साम्प्रतं भ्रष्टतां गतः । अतोऽस्मिन् विषये शोधकार्यमत्यावश्यकम् ।

**प्रस्तुत संस्करणस्य केचन विशेषाः**

(१) काशिकावृत्तौ निर्दिष्टानामुद्धरणानां तत्तन्मूलग्रन्थेभ्यो यथासम्भवं संशोधनं विधाय तेषां मूलस्थाननिर्देश-पुरःसरं संयोजनम् ।

(२) वैदिकोद्धरणानां स्वराङ्कननिर्देशपूर्वकमुल्लेखः ।

(३) मूलस्य, न्यासस्य पदमञ्जर्याश्च प्रकाशितपाठानां यथामति यथासम्भवं शास्त्रानुरूपं संशोधनम् । अत्र विषयेऽधुना बहु कार्यमवशिष्टं विधातुम् ।

(४) सम्पूर्णायाः काशिकायाः वृत्तेर्हिन्द्यां प्रामाणिकोऽनुवादः, अपेक्षितं व्याख्यानं च **'भावबोधिनी'** इति व्याख्यायां विहितम् ।

(५) पाठसंशोधने भाष्यस्य प्रामाण्यम् ।

**सङ्ख्यानिर्देशः**

अस्मिन् संस्करणे काशिकायाः प्रतिसूत्रं त्रिविधः संख्यानिर्देशः । (१) तत्र सूत्रेषु प्रथममुल्लिखिता '२८९२' इत्यादिका संख्या अष्टाध्यायीसूत्रक्रमानुसारिणी । अनया तस्य सूत्रस्य अष्टाध्याय्यां का संख्येति ज्ञातुं शक्यते । (२) सूत्रस्या-नन्तरं ॥ १ ॥ इत्यादिरूपेण निर्दिष्टा संख्या अष्टाध्यायीक्रमागत-तत्पादस्यान्तर्गतसूत्रस्य विशेषां संख्यां बोधयति । (३) तदनन्तरं कोष्ठके (९५८) इत्यादिरूपेण निर्दिष्टा संख्या निर्णयसागरमुद्रणालयतः प्रकाशित-'सिद्धान्तकौमुदी'-स्थसूत्रस्य संख्याविशेषं बोधयति । एवञ्चानया त्रिविधया संख्यया सामान्यच्छात्राणामनुसन्धित्सूनां च सौविध्यं भविष्यतीति । अत्र विषये पूज्यपादगुरुकल्पाः प्रोफेसर—आर्येन्द्रशर्ममहाशया ममोपजीव्यत्वेनाश्रिता इति तान् प्रति हार्दिकीं कृतज्ञतां प्रकटयामि ।

**आभारप्रदर्शनम्**

संस्कृतभाषाया व्याकरणस्य गाम्भीर्यं सूक्ष्मत्वं दुर्बोधत्वञ्च न कस्माच्चिदपि संस्कृतज्ञात्तिरोहितम् । अतो व्याकरण-ग्रन्थानां साधुसम्पादनमथ च हिन्दीमाध्यमेन शास्त्रानुसारि व्याख्यानं साहसमात्रमेव तथापि साम्प्रतिकानां सुकोमलमतीनां

छात्राणां कष्टं विलोक्य, शास्त्रसंरक्षणं स्वकर्त्तव्यमिति मत्वा च हिन्दीमाध्यमेन यथामति किञ्चिद् व्याख्यातम् । तच्च व्याख्यानं 'भावबोधिनी' इति हिन्दी-व्याख्यारूपेण प्रस्तुते संस्करणे समायोजितम् । अत्र काशिकायाः सम्पूर्णाऽनुवादं सामान्यरूपेण विदधता कोष्ठकेषु अपेक्षितव्याख्यानं विधाय 'विमर्श' इत्यन्तर्गतं गूढविषयाणां स्पष्टीकरणं कृत्वा प्रायशः सर्वेषां विषयाणां सुगमत्वं प्रदर्शितम् । अतोऽनया व्याख्यया यदि च्छात्राणां स्वल्पमपि साहाय्यं स्यात्तदा स्वपरिश्रमस्य साफल्यं मन्ये ।

प्रस्तुते संस्करणे सम्पादनविषयेऽथ च भावबोधिन्यां हिन्दी-व्याख्यायां ये प्रमादा दृश्यन्ते ते मदज्ञानमूलका एव, यानि च वैशिष्ट्यानि तानि श्रीमद्गुरुचरणप्रसादसमधिगतान्येव । अतोऽत्र परमश्रद्धास्पदानां गुरुपादानां स्मरणं कृतज्ञता-प्रकाशनं च मम प्रथमं कर्त्तव्यम् । तत्र सकल-शास्त्र-पारङ्गतेभ्यः समधिगत-शब्दब्रह्मसायुज्येभ्यः श्रीसम्पूर्णानन्द-संस्कृतविश्व-विद्यालये नव्यव्याकरण-विभागाध्यक्षचरेभ्यो गुरुचरणेभ्यः श्रीमन्मुरलीधरमिश्रमहोदयेभ्यः स्वहार्दिकीं कृतज्ञतां प्रकटयामि । ततस्तत्रैव विभागेऽध्यक्षपदे प्रतिष्ठितचरेभ्यो विविधशास्त्रनिष्णातेभ्यः पण्डितप्रवरेभ्यः स्वर्गीयेभ्यः श्रीमद्भूपेन्द्रपतित्रिपाठि-चरणेभ्यः आभारं प्रदर्शयामि । तस्मिन्नेव विभागे प्राध्यापकचरेभ्यः शास्त्रार्थधुरन्धरेभ्यः सकलशास्त्रस्वैरविहारिभ्यः स्वर्गीयेभ्यः श्रीमद्भूपनारायणझा-महोदयेभ्यः, महाभाष्यादिनिखिलग्रन्थरहस्यमर्मज्ञेभ्यः श्रीमद्देवदत्तशर्ममहोदयेभ्यश्च स्वश्रद्धासुमनांसि समर्पयामि । तत्रैव विश्वविद्यालयेऽध्यक्षचरेभ्यः शब्दशास्त्ररक्षणपरेभ्यः शास्त्रार्थधुरन्धरेभ्यः पाणिन्यवतार-भूतेभ्यः श्रीमद्रामप्रसादत्रिपाठिगुरुचरणेभ्योऽथ च पण्डितप्रकाण्डेभ्यः विभागाध्यक्षचरेभ्यः शब्दशास्त्रमर्मोद्घाटननिपुणेभ्यः श्रीमत्कालिकाप्रसादशुक्लगुरुचरणेभ्यः सादरं स्वकार्तज्ञ्यं प्रकटयामि ।

काशी-हिन्दू-विश्वविद्यालये कलासङ्कायान्तर्गते संस्कृतविभागेऽध्यक्षपदे सुदीर्घकालं प्रतिष्ठितचरेभ्यः प्राच्य-पाश्चात्योभयविधशास्त्रमर्मज्ञेभ्यः स्वर्गतेभ्यः श्रीमत्सिद्धेश्वरभट्टाचार्यमहोदयेभ्य अथ च तत्रैव विभागे उपाचार्यचरेभ्यः पण्डित-प्रवरेभ्यः स्वर्गीयेभ्यम् श्रीमत्कान्तानाथशास्त्रितैलङ्गमहोदयेभ्यः स्वहार्दिकीं कृतज्ञतां प्रदर्शयामि ।

काशी-हिन्दू-विश्वविद्यालये कलासङ्कायान्तर्गते संस्कृतविभागेऽध्यक्षचराः प्राच्यपाश्चात्योभयविधविद्यानिष्णाताः सूक्ष्मसमीक्षकाः सम्माननीयाः श्रीमद्विश्वनाथभट्टाचार्यमहोदयाः प्रस्तुतसंस्करणस्य प्रास्ताविकं विलिख्य मामतीवानुगृहीतवन्त इति तान् प्रति स्वाभारं प्रकटयामि । तत्रैव विभागेऽध्यक्षपदमलङ्कुर्वाणाः विविधशास्त्रावगाहनप्रौढमतिकाः सर्वशास्त्रेष्व-व्याहतगतिकाः श्रीमन्तः श्रीनारायणमिश्रमहोदया अस्मिन् गुरुतरकर्मणि सदैव प्रेरितवन्त इति तान् प्रति कृतज्ञताज्ञापनं न विस्मर्तुं शक्नोमि ।

काशीस्थ-तारा-मुद्रणालयाधिपतीनां सामान्यप्रकाशकैः प्रकाशयितुमशक्यानां दुर्लभानां संस्कृतग्रन्थानां प्रकाशने समासक्तानां श्रीमद्रमाशङ्करपण्ड्यामहोदयानाम्, अथ च, स्वपितृपदानुयायिनां तदुद्देश्यपूर्तिपराणामतिविनतानां श्रीमद्रवि-प्रकाशपण्ड्यामहोदयानामाभारो हृदयेनोररीक्रियते । अनयोर्महाशययोः सत्प्रयासेनौदार्येण चेदं संस्करणं हृदयावर्जकं सत् सत्वरमेव विपश्चितां पुरतः प्रकाशितमित्येतदर्थमाभ्यां महोदयाभ्यां पुनः पुनः धन्यवादान् वितरामि । श्रीमत्कृपासिन्धुशर्म-महोदयेभ्योऽपि धन्यवादान् वितरामि यैर्हि प्राग्रूपस्य (प्रूफ) संशोधने महत् साहाय्यमाचरितम् ।

अयमष्टमभागोऽपि विदुषां सन्तोषाय छात्राणां लाभाय भविष्यतीति मे विश्वास इति शम् ।

रामनवमी २०४८
ई० २४-३-१९९१

विदुषामाश्रवः
**—जयशङ्करलालत्रिपाठी**

संस्कृतविभागः, कलासंकायः
काशी-हिन्दू-विश्वविद्यालयः, वाराणसी ।

वागेवार्थं पश्यति वाग् ब्रवीति
वागेवार्थं निहितं सन्तनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं
तदेतदेकं प्रविभज्योपभुङ्क्ते ॥

# काशिकाया अष्टमभागस्य विषयाः


| क्र० सं० | विषयाः | सूत्राङ्काः |
|---|---|---|
| | ( षष्ठाध्यायस्य तृतीयपादे ) | |
| १. | उत्तरपदे, अलुक् | १–१२, २१, २३ |
| २. | विभाषा, अलुक्, उत्तरपदे | १३–१८, २२, २४ |
| ३. | अलुकः प्रतिषेधः | १९–२० |
| ४. | पूर्वपदस्यानङ् आदेशः | २५, २६ |
| ५. | अग्नेरीकारादेशः | २७ |
| ६. | अग्नेरिकारादेशः | २८ |
| ७. | दिवो द्यावादेशः | २९ |
| ८. | दिवो द्यावादिवसावादेशौ | ३० |
| ९. | उषसः उषासादेशः | ३१ |
| १०. | मातरापितरौ निपातनम् | ३२ |
| ११. | पितरामातरा निपातः | ३३ |
| १२. | पुंवद्भावः | ३४–३६, ४२ |
| १३. | पुंवद्भावस्य प्रतिषेधः | ३७–४१ |
| १४. | ङी-प्रत्ययान्तस्य ह्रस्वादेशः | ४३ |
| १५. | नद्याः शेषस्य विभाषा ह्रस्वादेशः | ४४ |
| १६. | नद्याः विभाषा ह्रस्वादेशः | ४५ |
| १७. | महतः आकारादेशः | ४६ |
| १८. | द्वि-अष्टन्-इत्येतयोराकारादेशः | ४७ |
| १९. | त्रेस्त्रयसादेशः | ४८ |
| २०. | द्वि-अष्टन्-त्रि-इत्येतेषां विभाषा पूर्वोक्तादेशाः | ४९ |
| २१. | हृदयस्य हृदादेशः | ५० |
| २२. | हृदयस्य विभाषा हृदादेशः | ५१ |
| २३. | पादस्य पद-इत्यादेशः | ५२ |
| २४. | पादस्य पद्-इत्यादेशः | ५३–५५ |
| २५. | पादस्य विभाषा पद्-इत्यादेशः | ५६ |
| २६. | उदकस्य उद—इत्यादेशः | ५७–६० |
| २७. | उत्तरपदे इगन्तस्य ह्रस्वादेशः | ६१, ६२, ६५, ६६ |
| २८. | बहुलं ह्रस्वादेशः | ६३, ६४ |
| २९. | उत्तरपदे मुमागमः | ६७, ७०, ७१ |
| ३०. | उत्तरपदे अमागमः | ६८ |
| ३१. | वाचंयम–पुरन्दरौ–इत्येतयोर्निपातनम् | ६९ |
| ३२. | विभाषा मुमागमः | ७२ |
| ३३. | उत्तरपदे नञो नकारलोपः | ७३ |
| ३४. | लुप्तनकारान्नञः परस्याजादेर्नुडागमः | ७४ |
| ३५. | नञ् प्रकृतया (=लोपाभावः) | ७५, ७६ |
| ३६. | विभाषा प्रकृत्या नञ् | ७७ |
| ३७. | सहस्य स—इत्यादेशः | ७८–८१ |
| ३८. | सहस्य विभाषा स—इत्यादेशः | ८२ |
| ३९. | सहशब्दः प्रकृत्या | ८३ |
| ४०. | समानस्य 'स'—इत्यादेशः | ८४–८७, ८९ |
| ४१. | समानस्य विभाषा 'स'—इत्यादेशः | ८८ |
| ४२. | इदंकिमोः ईश् की—इत्येतावादेशौ | ९० |
| ४३. | सर्वनाम्न आकारान्तादेशः | ९१ |
| ४४. | विष्वग्देवसर्वनाम्नां टेरद्रि—इत्यादेशः | ९२ |
| ४५. | समः समि—इत्यादेशः | ९३ |
| ४६. | तिरसः तिरि—इत्यादेशः | ९४ |
| ४७. | सहस्य सध्रि—इत्यादेशः | ९५ |
| ४८. | सहस्य सध—इत्यादेशः | ९६ |
| ४९. | अप ईद् आदेशः | ९७ |
| ५०. | अप ऊद् आदेशः | ९८ |
| ५१. | अन्य शब्दस्य दुगागमः | ९९ |
| ५२. | विभाषा दुगागमः | १०० |
| ५३. | कोः कदादेशः | १०१–१०३ |
| ५४. | कोः का—इत्यादेशः | १०४–१०५ |
| ५५. | विभाषा कोः का—इत्यादेशः | १०६ |
| ५६. | कोः कव्-का-कत्-इति त्रय आदेशाः | १०७ |
| ५७. | कोः विभाषा कव्-का-इत्येतावादेशौ | १०८ |
| ५८. | पृषोदरादीनां निपातनम् | १०९ |
| ५९. | अहन् शब्दस्य विभाषा अहन् इत्यादेशः | ११० |
| ६०. | पूर्ववर्तिन अणो दीर्घः | १११ |
| ६१. | सहिवहोर्धात्वोरकारस्य ओकारादेश | ११२ |
| ६२. | साढ्यै, साढ्वा साढा–एतेषां निपातनम् | ११३ |
| ६३. | संहितायाम्—इत्यधिकारः | ११४ |

| क्र० सं० | विषयाः | सूत्राङ्काः |
|---|---|---|
| ६४. | पूर्वपदस्य दीर्घत्वम् | ११५–१३९ |
| | ( षष्ठाध्यायस्य चतुर्थपादे ) | |
| ६५. | अङ्गस्य—इत्यधिकारः | १–१७५ |
| ६६. | अङ्गस्य दीर्घत्वम् | २, ३ |
| ६७. | अङ्गस्य दीर्घत्वप्रतिषेधः | ४ |
| ६८. | अङ्गस्य दीर्घत्वविकल्पः | ५, ६ |
| ६९. | अङ्गस्योपधाया दीर्घत्वम् | ७, ८, १०–१६ |
| ७०. | अङ्गस्योपधाया दीर्घत्वविकल्पः | ९, १७, १८, ९३ |
| ७१. | च्छ्वोः श्-ऊठ्-इत्येतावादेशौ | १९ |
| ७२. | ज्वरादीनां वकारस्योपधायाश्च ऊठ् इत्यादेशः | २० |
| ७३. | रेफादुत्तरयोः छ्वोर्लोपः | २१ |
| ७४. | असिद्धवद्—इत्यधिकारः | २२–१७५ |
| ७५. | नलोपः | २३–२९ |
| ७६. | नलोपप्रतिषेधः | ३०, ३१ |
| ७७. | नलोपविकल्पः | ३२, ३३ |
| ७८. | शास उपधाया इद्—आदेशः | ३४ |
| ७९. | शासः 'शा' इत्यादेशः | ३५ |
| ८०. | हन् धातोः 'ज' इत्यादेशः | ३६ |
| ८१. | अनुदात्तोपदेशानां वनत्यादीनां चानुनासिकलोपः | ३७, ४० |
| ८२. | पूर्वोक्तनलोपविकल्पः | ३८ |
| ८३. | पूर्वोक्तनलोपप्रतिषेधः | ३९ |
| ८४. | अनुनासिकान्तस्य आकारादेशः | ४१, ४२, ४५ |
| ८५. | पूर्वोक्ताकारादेशविकल्पः | ४३, ४४ |
| ८६. | आर्धधातुके—इत्यधिकारः | ४६–६८ |
| ८७. | भ्रस्जो रेफस्योपधायाश्च रम् आदेशः | ४७ |
| ८८. | अतो लोपः | ४८ |
| ८९. | 'य' शब्दस्य लोपः | ४९ |
| ९०. | क्यस्य (यशब्दस्य) लोपविकल्पः | ५० |
| ९१. | णेर्लोपः | ५१–५४ |
| ९२. | णेः अय्–इत्यादेशः | ५५–५६ |
| ९३. | णेः विभाषा अय्—इत्यादेशः | ५७ |
| ९४. | युप्लुवोर्दीर्घत्वम् | ५८ |
| ९५. | क्षियः दीर्घत्वं वैकल्पिकत्वञ्च | ५९–६१ |
| ९६. | अजन्तानां हनादीनां च चिण्वत्कार्यम् | ६२ |
| ९७. | दीङो युडागमः | ६३ |

| क्र० सं० | विषयाः | सूत्राङ्काः |
|---|---|---|
| ९८. | आकारान्ताङ्गस्य आतो लोपः | ६४ |
| ९९. | आकारान्ताङ्गस्य ईद्—आदेशः | ६५ |
| १००. | घु-मास्थादीनाम् ईद्—आदेशः | ६६ |
| १०१. | घुमास्थादीनां लिङि एकारादेशः | ६७ |
| १०२. | संयोगादेराकारान्तस्य विभाषा एत्वम् | ६८ |
| १०३. | ल्यपि परे घ्वादीनामुक्तादेश-निषेधः | ६९ |
| १०४. | मयतेः इद्—आदेशविकल्पः | ७० |
| १०५. | लुङ्-लङ्-लृङ्क्षु अङ्गस्य अडागमः | ७१ |
| १०६. | अजादेरङ्गस्य आडागमः | ७२ |
| १०७. | वेदे अडाडागमयोर्विकल्पः | ७३ |
| १०८. | अडाडागम-प्रतिषेधः | ७४ |
| १०९. | वेदे अडाडागमविकल्पः | ७५ |
| ११०. | इरे-इत्यस्य 'रे' इत्यादेशः | ७६ |
| १११. | इयङुवङावादेशौ | ७७, ७८ |
| ११२. | इयङादेशः | ७९ |
| ११३. | इयङादेशविकल्पः | ८० |
| ११४. | यणादेशः | ८१–८४, ८७ |
| ११५. | यणादेश-प्रतिषेधः | ८५ |
| ११६. | यणादेशविकल्पः | ८६ |
| ११७. | वुगागमः | ८८ |
| ११८. | ऊकारादेशः | ८९, ९० |
| ११९. | विकल्पेन ऊकारादेशः | ९१ |
| १२०. | उपधाह्रस्वत्वम् | ९२, ९४–९७ |
| १२१. | उपधाया विकल्पेन दीर्घः | ९३ |
| १२२. | उपधाया लोपः | ९८, १०० |
| १२३. | हेर्धिरादेशः | १०१–१०३ |
| १२४. | चिणः परस्य प्रत्ययस्य लुक | १०४ |
| १२५. | हेर्लुक् | १०५, १०६ |
| १२६. | प्रत्ययस्य विभाषा लुक् | १०७ |
| १२७. | उकारप्रत्ययस्य नित्यं लुक | १०८, १०९ |
| १२८. | अकारस्य उकारादेशः | ११० |
| १२९. | श्नसोः अल्लोपः | १११ |
| १३०. | श्नाऽभ्यस्तयोः आलोपः | ११२ |
| १३१. | आकारस्य ईकारादेशः | ११३ |
| १३२. | इकारादेशः | ११४ |
| १३३. | विकल्पेन इकारादेशः | ११५–११७ |

| क्र० सं० | विषयाः | सूत्राङ्काः |
|---|---|---|
| १३४. | आकारलोपः | ११८ |
| १३५. | एत्वाभ्यासलोपौ | ११९–१२३ |
| १३६. | विकल्पेन एत्वाभ्यासलोपौ | १२४, १२५ |
| १३७. | एत्वाभ्यासलोपयोः प्रतिषेधः | १२६ |
| १३८. | अर्वणः तृ-इत्यादेशः | १२७ |
| १३९. | मघवन्-इत्यस्य बहुलं तृ-इत्यादेशः | १२८ |
| १४०. | भ-इत्यधिकारः | १२९–१७५ |
| १४१. | पादः पद्-इत्यादेशः | १३० |
| १४२. | वस्वन्तस्य सम्प्रसारणम् | १३१ |
| १४३. | वाह इत्यस्य ऊठ्-इति सम्प्रसारणम् | १३२ |
| १४४. | श्वन्, युवन्, मघवन्-इत्येषां सम्प्रसारणम् | १३३ |
| १४५. | अनः अल्लोपः | १३४–१३५ |
| १४६. | अल्लोपविकल्पः | १३६ |
| १४७. | अल्लोपप्रतिषेधः | १३७ |
| १४८. | अञ्चतेः अकारलोपः | १३८ |
| १४९. | अञ्चतेः अकारस्य ईद्-आदेशः | १३९ |
| १५०. | अकारान्तस्य धातोर्लोपः | १४० |
| १५१. | आत्मनः आदेः आकारलोपः | १४१ |
| १५२. | विंशतेः तिशब्दस्य लोपः | १४२ |
| १५३. | टेर्लोपः | १४३–१४५ १५५, १७१–१७३ |
| १५४. | उवर्णान्तस्य गुणः | १४६ |
| १५५. | उवर्णान्तस्य लोपः | १४७ |
| १५६. | ईवर्णस्य अवर्णस्य च लोपः | १४८ |
| १५७. | यकारस्य लोपः | १४९–१५२ |
| १५८. | छस्य लोपः | १५३ |
| १५९. | तृ-शब्दस्य लोपः | १५४ |
| १६०. | यणादिपरस्य लोपः पूर्वस्य च गुणः | १५६ |
| १६१. | प्रिय-इत्यादीनां प्र-इत्याद्यादेशाः | १५७ |
| १६२. | बहोः भू-इत्याद्यादेशः इष्ठादीनां लोपश्च | १५८ |
| १६३. | बहोः भू-इत्यादेशः इष्ठस्य यिडागमश्च | १५९ |
| १६४. | ईयस आकारादेशः | १६० |
| १६५. | ऋकारस्य र-इत्यादेशः | १६१ |
| १६६. | ऋजोः ऋकारस्य विभाषा र-इत्यादेशः | १६२ |
| १६७. | एकाचः प्रकृतिवद्भावः | १६३–१६९ |
| १६८. | प्रकृतिवद्भाव-प्रतिषेधः | १७० |
| १६९. | टिलोपः | १७१–१७३ |
| १७०. | दाण्डिनायन-इत्यादीनां निपातनम् | १७४ |
| १७१. | ऋत्व्यादीनां निपातनम् | १७५ |
| | ( सप्तमाध्यायस्य प्रथमे पादे ) | |
| १७२. | योः वोश्च अन-अक-इत्यादेशौ | १ |
| १७३. | फादीनाम् आयनादय आदेशाः | २ |
| १७४. | झ-इत्यस्य अन्त-इत्यादेशः | ३ |
| १७५. | झ-इत्यस्य अत्-इत्यादेशः | ४–५ |
| १७६. | शीङः अतः रुडागमः | ६ |
| १७७. | वेत्तेर्विभाषा रुडागमः | ७ |
| १७८. | बहुलं रुडागमः | ८ |
| १७९. | भिसः ऐसादेशः | ९ |
| १८०. | बहुलम् ऐस् आदेशः | १० |
| १८१. | ऐसादेशनिषेधः | ११ |
| १८२. | टादीनाम् इनाद्यादेशाः | १२ |
| १८३. | ङेः य आदेश | १३ |
| १८४. | ङेः स्मै-इत्यादेशः | १४ |
| १८५. | ङसि-ङ्योः स्मात् स्मिन्-इत्यादेशौ | १५ |
| १८६. | विभाषा स्मात्स्मिनौ आदेशौ | १६ |
| १८७. | जसः शी-इत्यादेशः | १७ |
| १८८. | औङः शी-इत्यादेशः | १८–१९ |
| १८९. | जश्शसोः शि-इत्यादेशः | २० |
| १९०. | जश्शसोः औश्-इत्यादेशः | २१ |
| १९१. | जश्शसोर्लुक् | २२–२३ |
| १९२. | सु-अमोः अम्-आदेशः | २४ |
| १९३. | सु-अमोः अद्ड् आदेशः | २५ |
| १९४. | अद्ड्आदेशनिषेधः | २६ |
| १९५. | ङसः अश् आदेशः | २७ |
| १९६. | ङे प्रथमयोः अम् आदेशः | २८ |
| १९७. | शसो न इत्यादेशः | २९ |
| १९८. | चतुर्थ्याः भ्यसः भ्यम्-इत्यादेशः | ३० |
| १९९. | पञ्चम्याः भ्यसः अत्-इत्यादेशः | ३१ |
| २००. | ङसेः अत्-इत्यादेशः | ३२ |
| २०१. | साम आकम् आदेशः | ३३ |
| २०२. | णलः औ आदेशः | ३४ |
| २०३. | तुह्योस्तातङ् आदेशः विभाषा | ३५ |
| २०४. | शतुः वसुः आदेशः | ३६ |

| क्र० सं० | विषयाः | सूत्राङ्काः |
| --- | --- | --- |
| २०५. | क्त्वः ल्यप् आदेशः | ३७ |
| २०६. | ल्यबादेशविकल्पः | ३८ |
| २०७. | सुपां सु-प्रभृतय आदेशाः वेदे | ३९ |
| २०८. | अमः मश् आदेशः | ४० |
| २०९. | आत्मनेपदेषु तलोपः | ४१ |
| २१०. | ध्वमः ध्वात् इत्यादेशः | ४२ |
| २११. | यजध्वैनम्-इति निपातनम् | ४३ |
| २१२. | त-इत्यस्य तात् इत्यादेश | ४४ |
| २१३. | त-इत्यस्य तप्-आदय आदेशाः | ४५ |
| २१४. | मस् इत्यस्य 'मसि' इदन्त आदेशः | ४६ |
| २१५. | क्त्वः यगागमः | ४७ |
| २१६. | इष्ट्वीनम्-इति निपातनम् | ४८ |
| २१७. | स्नात्वी-इत्यादि-निपातनम् | ४९ |
| २१८. | जसेः असुक् आगम | ५० |
| २१९. | क्वचि अश्वादीनाम् असुक् आगमः | ५१ |
| २२०. | आमः सुड् आगमः | ५२ |
| २२१. | आमः नुट् आगमः | ५३–५७ |
| २२२. | नुमागमः— | ५८–६१, ६३–६७, ७०–७३, ८०–८३ |
| २२३. | नुमागमप्रतिषेधः | ६२, ६८, ७८ |
| २२४. | विभाषा नुमागमः | ६९, ७९ |
| २२५. | पुंवद्भावः | ७४ |
| २२६. | अस्थ्यादीनाम् अनङ् आदेशः | ७५, ७६, ९३–९४ |
| २२७. | अस्थ्यादीनाम् ईकारादेशः | ७७ |
| २२८. | सोः औत्—इत्यादेशः | ८४ |
| २२९. | पथ्यादीनाम् आकार आदेशः | ८५ |
| २३०. | इकारस्य अकार आदेश | ८६ |
| २३१. | थ इत्यस्य न्थ—इत्यादेशः | ८७ |
| २३२. | टेर्लोपः | ८८ |
| २३३. | असुङ् इत्यादेशः | ८९ |
| २३४. | णिद्वद्भावः | ९०, ९२ |
| २३५. | णलः वा णिद्वद्भावः | ९१ |
| २३६. | अनङ् आदेशः | ९३–९४ |
| २३७. | तृज्वद्भावः | ९५, ९६ |
| २३८. | वा तृज्वद्भावः | ९७ |
| २३९. | आम् आगमः | ९८ |
| २४०. | अम् आगमः | ९९ |
| २४१. | ऋकारस्य इकारादेशः | १००, १०१ |
| २४२. | ऋकारस्य उकारादेशः | १०२ |
| २४३. | वेदे बहुलम् ऋकारस्य उकारादेशः | १०३ |


—: ० :—

# भूमिका

शब्दार्थसम्बन्धनिमित्ततत्त्वं वाच्याविशेषेऽपि च साध्वसाधून् ।
साधुप्रयोगानुमितांश्च शिष्टान्न वेद यो व्याकरणं न वेद ॥

विश्व की भाषाओं में संस्कृतभाषा तथा पाणिनीय व्याकरण का महत्त्व सर्वस्वीकृत है । भारत के ही नहीं अपि तु विश्व के समस्त भाषाशास्त्री पाणिनि की प्रतिभा से चमत्कृत हैं । आचार्य पाणिनि के समान सूक्ष्मनिरीक्षण-शक्तिसम्पन्न भाषातत्त्वज्ञ सर्वथा अज्ञात है । सूत्रशैली का आदर्शरूप पाणिनि के सूत्रों में ही दृष्टिगोचर होता है । पाणिनि ने अपने व्यापक अनुभव, विभिन्न स्थानों के भ्रमणादि से उपार्जित प्रयोगविषयक सूक्ष्मज्ञान तथा सूक्ष्म निरीक्षण-शक्ति के बल से स्वकालीन बृहत्तर भारत में प्रयुक्त संस्कृत शब्दों के रूपभेदों का सम्यक् परिशीलन करके अपने सूत्रों का प्रणयन किया है ।

पाणिनि के पूर्व अनेक वैयाकरण हो चुके थे । कुछ के नामों का स्पष्ट संकेत पाणिनि की अष्टाध्यायी में मिलता है और कुछ के लिए सांकेतिक शब्द अथवा विकल्पों का आश्रयण किया गया है । अपने पूर्ववर्ती आचार्यों की अनेक मान्यताओं को पाणिनि ने स्वीकार नहीं किया है । कुछ प्राचीन पारिभाषिक शब्दों को स्वीकार करते हुए, अनेक नवीन पारिभाषिक शब्दों की भी कल्पना की है । इस दिशा में पाणिनि ने शब्दलाघव पर सर्वाधिक ध्यान दिया है । यह शब्दलाघव उनकी एक विलक्षणता है । अष्टाध्यायी के सूत्रों में प्रयुक्त पद भी लाघव के आधार पर ही हैं ।

लाघव की सम्पन्नता के लिए पाणिनि ने अनुवृत्ति की कल्पना की है । कहीं किसी एक शब्द की, कहीं अनेक की अनुवृत्ति स्वीकार की है । जो पद या पदसमूह कुछ अधिक दूर तक सूत्रों से सम्बद्ध होनेवाला है उसे 'अधिकार' माना गया है । अष्टाध्यायी के अनेक अधिकार सूत्र कई अध्यायों या पादों तक सम्बद्ध देखे जाते हैं ।

पाणिनि के शब्दलाघव के कारण सूत्रार्थ का अपेक्षित ज्ञान कर सकना एक समस्या रही होगी । सम्भवतः पाणिनि ने स्वयं भी इस काठिन्य का अनुभव करने के पश्चात् ही स्वोपज्ञ सूत्रवृत्ति लिखी होगी । अपने सूत्रों के सर्वप्रथम वृत्तिकार स्वयं पाणिनि हैं । यह महाभाष्य से स्पष्ट ज्ञात हो जाता है । पाणिनि के पश्चात् अनेक आचार्यों ने वृत्तिग्रन्थ लिखे होंगे । इस बात का संकेत महाभाष्य तथा अन्य ग्रन्थों एवं व्याख्याओं में प्राप्त होता है ।

सम्प्रति पाणिनीय सूत्रों पर सर्वाधिक प्रामाणिक और उपयोगी वृत्ति 'काशिका' है । इसकी रचना काशी में होने से इसका नाम काशिका रखा गया । वर्तमान काशिका लेखकद्वय 'वामन—जयादित्य' का सम्मिलित प्रयास माना जाता है । परन्तु व्याख्यानों से ऐसा प्रतीत होता हैं कि इन दोनों ने सम्भवतः अलग-अलग वृत्तियाँ लिखीं थीं । इस विषय का विशद विवेचन प्रस्तुत संस्करण के प्रथम भाग की भूमिका में किया जा चुका है ।

पदमञ्जरीकार हरदत्त मिश्र ने वृत्ति का लक्षण किया है—"सूत्रार्थप्रधानो ग्रन्थो वृत्तिः ।" अतः वृत्ति ग्रन्थों में सूत्रार्थ की स्पष्टता प्रमुख उद्देश्य माना जाता है । इसके लिए सूत्र का सामान्य अर्थ, उदाहरण तथा प्रत्युदाहरण का प्रतिपादन करना आवश्यक होता है । इस दृष्टि से काशिका एक अत्यन्त सफल और उपयोगी वृत्तिग्रन्थ है ।

पाणिनीय व्याकरण के अध्ययन की सम्प्रति दो धारायें हैं । एक में अष्टाध्यायीक्रमानुसारी व्याख्यानग्रन्थ आते हैं । इसे लक्षणप्रधान अध्ययन कहा जा सकता है । दूसरी पद्धति में लक्ष्यों को महत्त्व देकर उनकी रूपसिद्धि-सम्बन्धी प्रक्रिया का अध्ययन किया जाता है । इस दिशा में भट्टोजिदीक्षित की सिद्धान्तकौमुदी तथा उसी प्रकार के अन्य ग्रन्थ पढ़े जाते हैं । इसे लक्ष्यप्रधान अध्ययन कहा जा सकता है । किन्तु लक्ष्यप्रधान रीति से अध्ययनकर्त्ता सूत्रों के रहस्य से प्रायः अपरिचित रहता है । अतः उसका वह ज्ञान केवल सामान्य कार्यनिर्वाहक ही होता है । इस तथ्य को निर्मत्सर विद्वानों को स्वीकार करना चाहिए ।

काशिका की दो अत्यन्त महत्त्वपूर्ण तथा उपयोगी व्याख्यायें हैं—१. जिनेन्द्रबुद्धि-विरचित 'न्यास' और २. हरदत्तमिश्रविरचित 'पदमञ्जरी'। इन दोनों व्याख्याओं की सहायता के विना काशिका का अध्ययन दुष्कर और अपूर्ण रहता है। अतएव अति प्राचीनकाल से इन दोनों व्याख्याओं के साथ ही काशिका का अध्ययन-अध्यापन प्रचलित है।

कुछ विद्वानों ने काशिका के सूत्रों का सामान्य अनुवादमात्र हिन्दी में लिखा है। इससे जिज्ञासु छात्रों की समस्या का समाधान नहीं हो पा रहा था। अतः मैंने सम्पूर्ण मूल काशिका की विशद व्यख्या लिखने का विचार किया और 'भावबोधिनी' नामक हिन्दी-व्याख्या लिखनी प्रारम्भ की। अब तक न्यास-पदमञ्जरी और भावबोधिनी हिन्दी-व्याख्यात्रयी के साथ काशिका के सात भाग प्रकाशित किये जा चुके हैं। छात्रों की सन्तुष्टि तथा निर्मत्सर शाब्दिकों के प्रश्रय के फलस्वरूप शेष अंश भी शीघ्र प्रकाशित हो जायेंगे। प्रस्तुत अष्टमभाग में काशिका के षष्ठ अध्याय के तृतीय-चतुर्थपाद और सप्तम अध्याय का प्रथम पाद है। इस अष्टम भाग में अनेक महत्त्वपूर्ण सूत्रों का विवेचन किया गया है। उनमें निम्नलिखित अधिकार सूत्रों का परिज्ञान अनुपयोगी नहीं होगा।

**(१) अलुगुत्तरपदे। ( पा० सू० ६।३।१)**—इस सूत्र में 'उत्तरपदे' 'अलुक्' इन दोनों का अधिकार है। इसमें 'उत्तरपदे' इसका उल्लेख है। पूर्वपद तथा उत्तरपद इनका प्रयोग समास-स्थल में ही देखा जाता है। इसलिए यह स्पष्ट है कि इस अधिकार सूत्र के आगे जो सूत्र हैं वे समास से सम्बद्ध ही हैं और उत्तरपद परे रहते कार्य होते हैं। यह अधिकार आगे 'अङ्गस्य' (६।४।१) से पहले तक चलता है। अतः स्पष्ट है कि षष्ठ अध्याय तृतीयपाद के सूत्र सामान्य रूप से समास से सम्बद्ध ही हैं।

**(२) संहितायाम्। (पा० सू० ६।३।११४)**—यह अधिकार सूत्र है। इसके आगे जो सूत्र हैं उनके द्वारा होने वाले कार्य संहिता-विषय में ही होते हैं।

षष्ठ अध्याय के प्रथम पाद में भी 'संहितायाम्' ( ६।१।७२ ) यह एक अन्य भी अधिकार सूत्र उल्लिखित है। और उसकी अनुवृत्ति ( सम्बन्ध ) उसके 'अनुदात्तं पदमेकवर्जम्' ( ६।१।१५८ ) इससे पहले तक है।

प्रस्तुत 'संहितायाम्' यह अधिकार कहाँ तक जाता है इसका स्पष्ट उल्लेख प्रसिद्ध व्याख्याओं में नहीं मिलता है। षष्ठ अध्याय के तृतीयपाद का प्रथम सूत्र 'अलुगुत्तरपदे' (६।३।१) है। 'उत्तरपद' यह व्यवहार समास में ही होता है। और समास में संहिता नित्य ही मानी जाती है। तब इस अधिकार सूत्र का क्या प्रयोजन ? जहाँ अनुत्तरपद में कार्य किया जाता है वहीं इस सूत्र का उपयोग समझना चाहिए। इसी कारण 'द्व्यचोऽतस्तिङः'' ( ६।३।१३५ ) इस सूत्र से संहितापाठ में ही दीर्घ होता है—''विद्मा हि त्वा गोपतिं शूर गोनाम्।'' और पदपाठ में दीर्घ नहीं होता है—''विद्म हि त्वा।''

**(३) अङ्गस्य। (६।४।१)**—यह अधिकार सूत्र है। सप्तम अध्याय की समाप्ति तक अर्थात् सम्पूर्ण अध्याय में इसका अधिकार चलता है। अतः षष्ठ अध्याय चतुर्थपाद और सप्तम अध्याय के चार पादों के सभी सूत्रों में अङ्ग संज्ञा से सम्बद्ध कार्य होते हैं। अङ्ग संज्ञा का स्वरूप पाणिनि ने 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्'' (१।४।१३) सूत्र द्वारा स्पष्ट किया है। काशिकाकार ने प्रस्तुत सूत्र का अर्थ लिखा है—''जिस धातु अथवा प्रातिपदिक से प्रत्यय का विधान किया जाता है उस प्रत्यय के परे रहते तदादि शब्दस्वरूप की अङ्गसंज्ञा होती है। इसका विशेष व्याख्यान उसी सूत्र की व्याख्या में (द्वितीय भाग में) देखना चाहिए। प्रक्रियाक्रम की दृष्टि से अङ्गाधिकारीय सूत्रों का बहुत अधिक महत्त्व है। इनमें पूर्वत्व-परत्व की भी उपयोगिता है।

**(४) असिद्धवदत्रा भात्। (६।४।२२)**—यह अधिकार सूत्र भी अत्यन्त उपयोगी है। इसका सम्बन्ध षष्ठ अध्याय के चतुर्थपाद की समाप्ति तक है। अतः चतुर्थपाद के सूत्रों में इसके द्वारा 'असिद्धवद्भाव' का अतिदेश होता है। यह समानाश्रय वाले कार्यों में असिद्धत्व का बोध कराता है। इससे कहीं पर उत्सर्गशास्त्र की प्रवृत्ति होती है और कहीं पर आदेशलक्षण का प्रतिषेध होता है। प्रक्रिया की दृष्टि से इसके अन्तर्गत आने वाले सूत्रों का अत्यन्त महत्त्व है।

(५) आर्धधातुके। (६।४।४६)—'अङ्गस्य' इस अधिकार के अन्तर्गत ही प्रस्तुत अधिकार है। इसका सम्बन्ध "न ल्यपि" ( ६।४।६९ ) सूत्र तक है। अतः इसके अन्तर्गत आने वाले सूत्र आर्धधातुक के विषय में उनके परे रहते ही कार्य करते हैं। आर्धधातुक एक संज्ञा है। इसका प्रत्ययों से सम्बन्ध है। इसके लिए चार सूत्रों को देखना चाहिए— (१) आर्धधातुकं शेषः। (२) लिट् च। (३) लिङाशिषि। (४) छन्दस्युभयथा।" (पा० सू० ३।४।११४–११७)।

**कुछ अन्य महत्त्वपूर्ण सूत्र**

(१) स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणप्रियादिषु (६।३।३४ काशिका पृ०२९ )।

(२) पृषोदरादीनि यथोपदिष्टम्। (६।३।१०९ काशिका पृ० १०९)।

(३) स्यसिच्-सीयुट्तासिषु भावकर्मणोरुपदेशऽज्झनग्रहदृशां चिण्वदिट् च। (६।४।६२ काशिका पृ० २२५)।

(४) तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य (७।१।७४ काशिका पृ० ४४३)।

**अष्टम भाग में वैदिकसूत्र**

पाणिनि ने लौकिक प्रयोगों के साथ जहाँ वैदिक प्रयोगों में अन्तर है उन शब्दों के विषय में भी नियम ( सूत्र ) बनाये हैं। इस अष्टम भाग में निम्नलिखित ५२ वैदिक सूत्रों पर काशिका में विचार किया गया है—

१. पितरामातरा च छन्दसि (६।३।३६)।
२. ङ्याापोः संज्ञाच्छन्दसोर्बहुलम्। (६।३।६३)
३. त्वे च। (६।३।६४)
४. समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु। (६।३।८४)
५. सध मादस्थयोश्छन्दसि (६।३।९६)
६. पथि च छन्दसि। (६।३।१०८)
७. साढ्यै साढ्वा साढेति निगमे। (६।३।११३)
८. छन्दसि च। (६।३।१२६)
९. मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ। (६।३।१३१)
१०. ओषधेश्च विभक्तावप्रथमायाम्। (६।३।१३२)
११. ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्। (६।३।१३३)
१२. इकः सुञि। (६।३।१३४)
१३. द्व्यचोऽतस्तिङः। (६।३।१३५)
१४. निपातस्य च। (६।३।१३६)
१५. छन्दस्युभयथा (६।४।५)
१६. वा सपूर्वस्य निगमे। (६।४।९)
१७. जनिता मन्त्रे। (६।४।५३)
१८. शमिता यज्ञे। (६।४।५४)
१९. युप्लुवोर्दीर्घश्छन्दसि। (६।४।५८)
२०. छन्दस्यपि दृश्यते। (६।४।७३)
२१. बहुलं छन्दस्यमाङ्योगेऽपि। (६।४।७५)
२२. इरयो रे। (६।४।७६)
२३. छन्दस्युभयथा। (६।४।८६)
२४. तनिपत्योश्छन्दसि (६।४।९९)
२५. घसिभसोर्हलि च। (६।४।१००)
२६. श्रु शृणु पॄ कृ वृभ्यश्छन्दसि। (६।४।१०२)
२७. अङितश्च। (६।४।१०३)
२८. मन्त्रेष्वाङ्यादेरात्मनः। (६।४।१४१)
२९. विभाषर्जोश्छन्दसि। (६।४।१६२)
३०. ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि। (६।४।१७५)
३१. बहुलं छन्दसि। (७।१।८)
३२. बहुलं छन्दसि। (७।१।१०)
३३. नेतराच्छन्दसि। (७।१।२६)
३४. क्त्वापि छन्दसि। (७।१।३८)
३५. सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः (७।१।३९)
३६. अमो मश्। (७।१।४०)
३७. से ४६. लोपस्त आत्मनेपदेषु। ध्वमो ध्वात्। यजध्वैनमिति च। तस्य तात्। तप् तनप् तन थनाश्च। इदन्तो मसि। क्त्वो यक्। इष्ट्वीनमिति च। स्नात्व्यादयश्च। आज्जसेरसुक्। (७।१।४१–७।१।५०)
४७. श्रीग्रामण्योश्छन्दसि। (७।१।५६)
४८. गोः पादान्ते। (७।१।५७)
४९. छन्दस्यपि दृश्यते। (७।१।७६)
५०. ई च द्विवचने। (७।१।७७)
५१. दृक्स्ववस्स्वतवसां छन्दसि। (७।१।८३)
५२. बहुलं छन्दसि। (७।१।१०३)

**काशिकाकार की कुछ अनवधानतायें**

इस अष्टम भाग में भी काशिकाकार की कुछ अनवधानतायें दिखाई देती हैं। इन्होंने कुछ सूत्रों के स्वरूपों में परिवर्तन कर दिया है और कुछ वार्त्तिकों को भी सूत्र के रूप में पढ़ दिया है :—

महाभाष्य में "आज्ञायिनि च" (६।३।५) इस सूत्र पर 'आत्मनश्च पूरणे' यह वार्त्तिक पठित है। परन्तु काशिकाकार ने 'आत्मनश्च पूरणे' (काशिका ६।३।६) को सूत्ररूप में ही पढ़ा है। (द्रष्टव्य 'विमर्श' पृ० ९)।

पाणिनि ने 'प्रकृत्याशिषि' (६।३।८३) इतना ही सूत्र पढ़ा है। उस पर वार्त्तिककार ने "प्रकृत्याशिष्यगवादिषु' यह वार्त्तिक पढ़ा है। उस पर भाष्यकार ने 'सवत्साय सहलाय' इत्यादि को उदाहरण के रूप में पढ़ा है। किन्तु काशिकाकार ने "प्रकृत्याशिष्यगोवत्सहलेषु" (काशिका ६।३।८३) इस रूप में सूत्र बनाकर पढ़ा है। (द्रष्टव्य 'विमर्श' पृ० ९४)।

"यजध्वैनमिति च" (काशिका ७।१।५३) की वृत्ति भी परम्पराविरुद्ध है। (द्रष्टव्य 'विमर्श' पृ० ४०६)।

**मूल, न्यास तथा पदमञ्जरी में पाठभेद**

इस अष्टम भाग में भी कुछ मूल काशिका के पाठ और न्यास तथा पदमञ्जरी के प्रकाशित पाठों में कहीं-कहीं भिन्नता दिखाई देती है :—

"पृषोदरादीनि यथोपदिष्टम्" (काशिका ६।३।९) पृष्ठ १०९) पर न्यास में यह प्रतीक है—"आदिशब्दः प्रकारवचन इति।" परन्तु प्रकाशित काशिका में ऐसा कोई पाठ मूल में नहीं है। यहीं पर पदमञ्जरी में यह पाठ है—"पृषोदरप्रकाराणि"। परन्तु प्रकाशित काशिका मूल में 'पृषोदरादीनि' इतना ही दिखाई देता है।

"अङ्गस्य" (६।४।१ पृ० १०९ में) सूत्रवृत्ति में "प्रातिपदिकार्थमात्रविवक्षित-विभक्त्यर्थमधिक्रियते" ऐसा पाठ है। परन्तु न्यास में "अविवक्षितविभक्त्यर्थमिति" ऐसा प्रतीक दिखाई देता है। इसी सूत्रवृत्ति में आगे यह पाठ है "तदुत्तरत्र यथायोगं विपरिणम्यते"। परन्तु पदमञ्जरी में "यथायोगं विभक्तिषु विपरिणम्यते" ऐसा पाठ है। "नृ च" (६।४।६) सूत्र काशिका मूल (पृ० १४६) में यह पाठ है—"केचिदेतत् 'छन्दसि' इति नानुवर्त्तयन्ति।" किन्तु न्यास में 'केचिदत्र' ऐसा प्रतीक उल्लिखित है।

मूल काशिकावृत्ति तथा न्यास और पदमञ्जरी के पाठों में अनेक स्थलों पर अन्तर उपलब्ध होता है। अतः ऐसा कहा जा सकता है कि न्यासकार तथा पदमञ्जरीकार के समय तक काशिका का पाठभेद पर्याप्त रूप से प्रचलित हो चुका था। इस दिशा में गम्भीर शोधकार्य की अत्यन्त आवश्यकता है।

**प्रस्तुत संस्करण की कुछ विशेषताएँ**

यद्यपि काशिकावृत्ति के कई संस्करण विभिन्न सम्पादकों ने प्रकाशित किए हैं। तथापि उनमें अनेक संशोधन और परिवर्द्धन आवश्यक प्रतीत होते थे। इसीलिये इस प्रस्तुत संस्करण में अब तक उपलब्ध समस्त सामग्री का यथोचित उपयोग करने का प्रयास किया गया है। इस विषय में निम्न विशेषताएँ द्रष्टव्य हैं :—

(१) काशिकाकार द्वारा उदाहरण रूप में प्रदर्शित उद्धरणों के मूल स्थान देखकर उनका संशोधित रूप प्रस्तुत करने का पूरा प्रयास किया गया है।

(२) वैदिक उदाहरणों में यथासम्भव स्वरांकन किया गया है।

(३) मूल काशिकावृत्ति के पाठ की शुद्धि के साथ-साथ न्यास और पदमञ्जरी के प्रकाशित पाठ का भी यथासम्भव संशोधन किया गया है किन्तु इस विषय में अभी बहुत कुछ कार्य अवशिष्ट है।

(४) सम्पूर्ण काशिकावृत्ति का व्याख्यासहित अनुवाद 'भावबोधिनी' हिन्दी-व्याख्या द्वारा सर्वप्रथम प्रकाशित किया जा रहा है। दुरूह स्थल भी 'विमर्श' के अन्तर्गत स्पष्ट किए गए हैं।

(५) विवादित पाठ में महाभाष्य को ही प्रामाणिक माना गया है।

**सङ्ख्यानिर्देश**

प्रस्तुत संस्करण में प्रत्येक सूत्र के साथ ३ संख्यायें उल्लिखित हैं; जैसे—"२८६३ अलुगुत्तरपदे" ॥ १ ॥ (९५८)। इनमें सूत्र से पूर्ववर्त्ती संख्या अष्टाध्यायी-क्रम में उस सूत्र की संख्याविशेष को सूचित करती है। अतः उपर्युक्त सूत्र अष्टाध्यायी या काशिका में २८६३वाँ समझना चाहिए। सूत्र के आगे वाली प्रथम संख्या उसके उस पाद की संख्या सूचित करती है। अतः उक्त सूत्र षष्ठ अध्याय—तृतीय पाद का १ (पहला) सूत्र है। इसके बाद की तीसरी संख्या प्रक्रिया-दृष्टि से उपयोगी (निर्णयसागर से प्रकाशित) सिद्धान्तकौमुदी के सूत्र की संख्या सूचित करती है। अतः उक्त सूत्र उस सिद्धान्तकौमुदी में ९५८वाँ समझना चाहिए। इन संख्याओं के द्वारा अनुसन्धान-कर्त्ताओं को विशेष सहायता प्राप्त होगी।

**आभार-प्रदर्शन**

काशिका वृत्ति न्यास तथा पदमञ्जरी इन दोनों संस्कृत व्याख्याओं के साथ 'भावबोधिनी' हिन्दी व्याख्या-सहित ११ भागों में प्रकाशित करने की महती योजना के अन्तर्गत यह अष्टम भाग प्रकाशित हो रहा है। 'भावबोधिनी' हिन्दी व्याख्या तथा मूल, न्यास, पदमञ्जरी के पाठसंशोधन आदि में जो भी प्रामाणिक तथा लोकोपयोगी है वह प्रातः स्मरणीय गुरुजनों के शुभाशीः और स्नेह का ही सुपरिणाम है। अतः उनके प्रति कृतज्ञताज्ञापन एक औपचारिकतामात्र है। इस संस्करण में जो दोष या त्रुटियाँ हैं वे मेरे अज्ञान के कुफल हैं। सुधीजन उन्हें सूचित कर मुझ पर असीम कृपा करेंगे।

प्रोफेसर विश्वनाथ भट्टाचार्य भूतपूर्व अध्यक्ष संस्कृतविभाग, कलासंकाय, का० हि० वि० वि० वाराणसी, ने प्रस्तुत संस्करण का 'प्रास्ताविक' लिख कर मुझ पर महान् अनुग्रह किया है। अतः उनके प्रति अपनी हार्दिक कृतज्ञता ज्ञापित करता हूँ। सम्प्रति उक्त विभागाध्यक्ष पद पर समासीन विविधशास्त्रपारङ्गत प्रोफेसर श्रीयुत श्रीनारायण मिश्र महोदय ने इस कार्य को शीघ्र ही सम्पन्न करने के लिये मुझे प्रोत्साहित करते हुए अनेक सत्परामर्श प्रदान किये, अतः उनके प्रति भी अपना आभार व्यक्त करना नहीं भूल सकता।

इस अत्यन्त महर्घता के युग में भी संस्कृत के दुर्लभ, महान् तथा शास्त्रीय ग्रन्थों के पुनः प्रकाशन में अग्रणी 'तारा बुक एजेंसी वाराणसी' के अधिपति श्रीयुत् रमाशङ्कर पण्ड्या महोदय के प्रति जितनी भी कृतज्ञता प्रकट करूँ कम है। उनके दृढ संकल्प का ही सुपरिणाम यह महती प्रकाशन-योजना है। इस प्रसङ्ग में चिरञ्जीवी रविप्रकाश पण्ड्या महोदय का सत्प्रयास, निष्ठा और सहयोग भुला पाना मेरे लिए असम्भव है। वास्तव में उन्हीं की लगन का फल है अल्प समय में सुन्दर, सुव्यवस्थित रूप में शीघ्र प्रकाशित होना। अतः मैं उन्हें कोटिशः आशीर्वाद प्रदान करते हुये यही प्रत्याशा करता हूँ कि वे भी अपने पूज्य पिता के श्रीचरणों का अनुसरण करते हुए देववाणी के दुर्लभ उपयोगी ग्रन्थों के प्रकाशन में पूर्ण मनोयोग से लगे रहेंगे। काशीपुराधीश्वर विश्वनाथ जी उन्हें जीवन में सदैव सफलता प्रदान करें।

ग्रन्थ का पुनर्मुद्रण या प्रथम प्रकाशन तभी निर्दोष तथा महत्त्वपूर्ण हो पाता है जब उसमें अशुद्धियाँ न रहें। इस गुरुतर कार्य में सहयोग के लिये मैं मित्रवर श्री कृपासिन्धु शर्मा (प्राचार्य, ब्रह्मर्षि बलदेव संस्कृत विद्यालय, लक्ष्मीकुण्ड, वाराणसी) को हार्दिक धन्यवाद देना चाहता हूँ। श्रीयुत शर्मा जी ने बड़े मनोयोग से प्रूफ संशोधन कर इस ग्रन्थ का महत्त्व बढ़ाया है।

मनुष्य अपूर्ण है। अतः उसके कार्य भी कहीं न कहीं से अपूर्ण ही रहते हैं। इस कारण इस ग्रन्थ में यत्र-तत्र मुद्रण-सम्बन्धी या अन्य कुछ त्रुटियाँ रह जाना अस्वाभाविक नहीं है। विद्वज्जन निर्मत्सरभाव से क्षमा करेंगे।

रामनवमी २०४८
ई० २३-३-१९९१

विनीत
—जयशङ्कर लाल त्रिपाठी

संस्कृत-विभाग, कलासंकाय
काशी हिन्दू विश्वविद्यालय, वाराणसी—५

समुद्रवद् व्याकरणं महेश्वरे
तदर्द्धकुम्भोद्धरणं बृहस्पतौ ।
तद्भागभागाच्च गतं पुरन्दरे
कुशाग्रबिन्दूत्पतितं हि पाणिनौ ॥

# अथ षष्ठाध्याये तृतीयः पादः

## २८६३. अलुगुत्तरपदे ॥ १ ॥ (९५८)

'अलुक्' इति च 'उत्तरपदे' इति च एतदधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येवं तद्वेदितव्यम् । वक्ष्यति—'पञ्चम्याः स्तोकादिभ्यः' (६.३.२) । स्तोकान्मुक्तः । 'अल्पान्मुक्तः' ।

उत्तरपद इति किम् ? निष्क्रान्तः स्तोकाद् निःस्तोकः ।

**न्यासः**

**अलुगुत्तरपदे ॥ स्तोकान्मुक्तः, अल्पान्मुक्त इति ।** 'करणे स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इति पञ्चमी, 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः । ननु च 'वनं समासे' इत्यतः समासग्रहणमनुवर्तिष्यते, समासे च नियतं सन्निहितमुत्तरपदम्, अतोऽन्तरेणाप्युत्तरपदग्रहणमुत्तरपदं लभ्यत इत्यभिप्रायेणाह—**उत्तरपदमिति किमिति । निःस्तोक इति ।** 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति प्रादिसमासः । एवं मन्यते—असत्युत्तरपदग्रहणे समासे ये स्तोकादय उत्तरपदभूताः पूर्वपदभूता वा, तेभ्य उत्तरस्याः पञ्चम्या अलुग्भवतीत्येतावन्मात्रं लभ्यते, न तूत्तरपदे परतो ये स्तोकादय इत्येष विशेषः । ततश्च निःस्तोक इत्यत्राप्यलुक् स्यात् । भवति ह्यत्रापि समासवर्तिनः स्तोकादेः शब्दादुत्तरा पञ्चमीति ।

नन्वेवमपि न कर्तव्यमेवोत्तरपदग्रहणम्, लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदम् 'स्तोकादिभ्यः करणे च' इत्यादिसूत्रेण या पञ्चमी विहिता, तस्या एव ग्रहणम् । न तु 'अपादाने पञ्चमी' इत्यनेन सामान्यलक्षणेन या

**पदमञ्जरी**

**अलुगुत्तरपदे ॥ अलुगिति चेत्यादि ।** प्रत्येकं स्वरितत्वप्रतिज्ञानं दर्शयति, अस्य प्रयोजनम्—एकस्य निवृत्तावपरस्य निवृत्तिर्मा भूदिति । **स्तोकान्मुक्त इति ।** 'करणे च स्तोकाल्पकृच्छ्र' इत्यादिना पञ्चमी, 'स्तोकान्तिक' इत्यादिना समासः । **उत्तरपद इति किमिति ।** लुक् तावत्समास एव प्राप्तः प्रतिषिध्यते इति सामर्थ्यादुत्तरपद इत्येतल्लभ्यते । 'नलोपो नञः' इत्यादौ च 'न[1]समासे' इत्यतो हि समासग्रहणानुवृत्तेरुत्तरपदलाभात् नतरामित्यादौ नञो नलोपाद्यभावः सिद्ध इति प्रश्नः । **निःस्तोक इति ।** अत्रोत्तरपदभूतेभ्योऽपि स्तोकादिभ्यः परस्याः पञ्चम्या अलुक्प्रसङ्गः ।

**भावबोधिनी**

साम्बं शिवं नमस्कृत्य ध्यात्वा गुरुपदाम्बुजम् ।
षष्ठे तृतीयं पादं वै व्याचष्टे जयशङ्करः ॥

'अलुक्' (लुक् नहीं होता है) और 'उत्तरपदे' (उत्तरपद परे रहते)—इनका अधिकार समझना चाहिए । इसके आगे जिनका उल्लेख करेंगे उन्हें 'उत्तरपद परे अलुक्' होता है—ऐसा समझना चाहिए । आगे कहेंगे—'पञ्चम्याः स्तोकादिभ्यः' (६।३।२) (स्तोक आदि से परे पञ्चमी का अलुक् = लुक् नहीं होता है ।) उदा० स्तोकान्मुक्तः । अल्पान्मुक्तः । [इनकी प्रक्रिया आगे सूत्र में लिखी जायगी । ]

उत्तरपद परे रहते—इसका क्या फल है ? निष्क्रान्तः स्तोकात्—इस विग्रह में [समास करने के बाद]

---

१. अत्र 'वनं समासे' (६–२–१७८) इति पाठ उचितः ।

**अप्रियादिष्विति किम् ? कल्याणीप्रियः ।**

**प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । अम्बा । कान्ता । क्षान्ता ।**

**न्यासः**

पुंवदिति योगविभागः कर्तव्यः । अथ वा—'कर्तव्योऽत्र यत्नः' इत्यनेनेदं दर्शयति—यद्यपि स्त्रियां व्रीहौ च गर्भत्वभेदः, तथापि स नाश्रयितव्यः । यत् तु तत्रावयवानवयवभेदमुत्सृज्य सामान्येनान्तर्वर्तिवस्तुविशेषसम्बन्धमात्रं तदेवाश्रयितव्यम् । अतस्तदपेक्षया स्त्रियां व्रीहौ च वर्तमानस्य गर्भशब्दस्य तुल्यमेव प्रवृत्तिनिमित्तमिति । एवं प्रसूतप्रजातशब्दयोरप्यपत्याधानविमोक्षणभेदं त्यक्त्वाऽयमपत्यवानियमपत्यवतीत्यपत्यवत्सम्बन्धमात्रमाश्रितमित्येतद्व्याख्यानमिति प्रयत्नः कर्तव्य इति ।

**ब्रह्मबन्धूभार्य इति ।** ब्रह्मबन्धूशब्दाद् 'ऊङुतः' इत्यूङ् । **कल्याणीपञ्चमा इति ।** 'अप् पूरणीप्रमाण्योः' इत्यप्समासान्तः, पञ्चानां पूरणीति डट्, तस्य 'नान्तादसंख्यादेर्मट्', ततः 'टिड्ढाणञ्' इति ङीपि कृते पञ्चमी भवति ।

**प्रधानपूरणीग्रहणं कर्तव्यमिति ।** प्रधानं पूरणी गृह्यते येन व्याख्यानेन तद्व्याख्यानं प्रधानपूरणीग्रहणम्, तत् कर्तव्यम्—प्रधानं या पूरणी तस्यां प्रतिषेधो यथा स्यात्, अप्रधानभूतायां तस्यां मा भूदिति । तत्रेदं व्याख्यानम्—इह 'द्वन्द्वे घि' इति प्रियादिशब्दस्य पूर्वनिपाते प्राप्ते परनिपातलक्षणव्यभिचारचिह्नेन सूचितं—व्यभिचार्ययं प्रतिषेधः क्वचिदेव वर्तते, न सर्वत्रेति । तेन यत्रैव प्रधानभूता पूरणी तत्रैव भवति,

**पदमञ्जरी**

अनूङिति पर्युदासे सति 'नञिवयुक्तन्यायेन (व्या० पा० ६५) ऊङ्सदृशस्य टाबादेर्ग्रहणादैडविडवृन्दारिकेत्यादौ स्त्रीप्रत्ययाभावान्न स्यादिति प्रसज्यप्रतिषेधं दर्शयति—**ऊङोऽभावोऽनूङिति । भाषितपुंस्कादनूङिति ।** यद्ययमसमासः स्यात्—अनूङिति, तदा प्रथमा स्यात्, लुप्तषष्ठीकं वा । षष्ठीपक्षेऽयमर्थो भवति—भाषितपुंस्कात्परस्य स्त्रीशब्दस्येव रूपं भवति, ऊङन्तस्य तु नेति । ततश्च पुंवद्भावभाजः स्त्रीशब्दस्य भाषितपुंस्कत्वं विशेषणं न स्यात्, तत्र को दोषः ? इह च प्रसज्येत—अङ्गारका नाम शकुनयः तेषां कालिकाः स्त्रियः तत एताः कालिकावृन्दारिका इति । एतच्छब्दाद्भाषितपुंस्कात्परः कालिकाशब्द इति तस्य स्त्रीविषयस्याप्यङ्गारकशब्दता स्यात् । शक्यन्ते हि ताः साहचर्यादङ्गारकशब्देनाभिधातुम् । तथा—अश्वस्य वडवा, पुरुषस्य योषित्, हंसस्य वरटा, कच्छपस्य डुलीत्यादावपि प्रसङ्गः । दर्शनीयभार्य इत्यादौ च न स्यात्, न ह्यत्र दर्शनीयशब्दो भाषितपुंस्कात्परः । प्रथमायां तु भाषितपुंस्कादित्यनेन सामानाधिकरण्यात्स्त्रिया इति पञ्चमी; षठ्यां कस्यचिदर्थस्यासम्भवात् । ततश्च भाषितपुंस्कात् स्त्रीलिङ्गात्पर ऊङोऽन्यः प्रत्ययः पुंवदित्यर्थो भवति, तत्र स एव दोषो यः प्रथमपक्षे । तदेवं समासे दोषप्रसङ्गाद्व्यधिकारणपदो बहुव्रीहिराश्रयणीय इत्याह—**भाषितपुंस्कादनूङित्यादि । अलुक्च निपातनात्पञ्चम्या इति ।** अलौकिकत्वादस्य निपातनादित्यपरिहारः । लुगपि तर्हि न प्राप्नोति ? अलौकिकत्वादेवेति यत्किञ्चिदेतत् । 'अनूङ्' इति षष्ठ्यर्थे प्रथमा, तदायमर्थोऽत्रस्थितः—भाषितपुंस्कात्स्त्रसमादूङोऽभावो यस्मिन् । कोऽर्थः ? यस्मिन् स्त्रीशब्दे भाषिपुंस्कात्पर ऊङ् न कृत इत्यर्थ इति । अपर आह—भाषितपुंस्कादिति षष्ठ्यर्थे पञ्चमी, सर्वमन्यत्पूर्ववत् । भाषितपुंस्कस्य स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति, ऊङन्तस्य तु नेति ।

नन्वेवमाश्रीयमाणे यत्र भाषितपुंस्कस्यैवानन्तरमुत्तरपदं तत्रैव स्यात्—दर्शनीयभार्य इत्यादौ, अत्र हि भाषितपुंस्कस्य दर्शनीयशब्दस्य टापश्चैकादेशः पूर्वं प्रत्यन्तवद्भावाद्भाषितपुंस्कग्रहणेन गृह्यते; गार्गी चासौ वृन्दारिका च गार्ग्यवृन्दारिकेत्यादौ न स्यात्, योऽत्र भाषितपुंस्को गार्ग्यशब्दो न तस्यानन्तरमुत्तरपदम्; ङीपा

**भावबोधिनी**

प्रिया आदि में नहीं—इसका क्या फल है ? कल्याणीप्रियः । [कल्याणी प्रिया यस्य सः—इस विग्रह में पुंवद्भाव नहीं होता है । समास के बाद ह्रस्व होने से रूप बनता है ।]

**समा। चपला। दुहिता। वामा। प्रियादिः। दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयम् ॥**

**न्यासः**

नाप्यत्रेति। तेन यत्रासौ भवति तत्र तस्या एव प्रधानभूताया पूरण्या ग्रहणं युक्तम्। क्व पूरण्याः प्राधान्यम्? यत्र तस्याः समासेऽभिधेयत्वेनान्तर्भावः यथानन्तरोक्तप्रत्युदाहरणे। तत्र ह्यवयवेन विग्रहः। समुदायस्त्ववयवभेदादभिन्नः, समासार्थ एव। **तत्रेति।** यथैवं प्रथमा, द्वितीया, तृतीया, चतुर्थी चाभिधीयते, तथा पञ्चम्यपि। **कल्याणपञ्चमीकः पक्ष इति।** अत्र तु तिरोहितावयभेदः पक्ष एवान्यपदार्थः प्रधानम्, पञ्चमी तु रात्रिः। अस्मिन् पक्षेऽन्यपदार्थेऽनुमेयैव, न त्वभिधेया। यथा वृक्षशब्दे मूलादयः, ततस्तद्वदर्थमप्यनभिधेयत्वादर्थोऽप्रधानम्। अथाप् समासान्तः कस्मान्न भवति? इत्याह—**अप्पूरणीप्रमाण्योरित्यादि।**

अथ दृढभक्तिः, शोभनभक्तिरित्यादौ कथं पुंवद्भावः, यावता प्रियादित्वात् प्रतिषेधेन भवितव्यम्? इत्याह—**दृढभक्तिरित्येवमादिष्वित्यादि।** अस्त्रीवाचिनः पूर्वपदस्य विवक्षितत्वाद् दृढभक्तिरित्येवमादि लक्ष्यं

**पदमञ्जरी**

व्यवधानात्। यस्य चानन्तरं गार्गीशब्दस्य नासौ भाषितपुंस्कः? स्यादेतदेवम्, प्रयोगान्तरे भाषितपुंस्कस्य सम्प्रति स्त्रियां वर्तमानस्य पुंवद्भाव उच्येत। स्त्रियां वर्तमानस्य तदैव भाषितपुंस्कस्य पुंवद्भावं ब्रूमः, सम्भवति च स्त्रियां वर्तमानस्य तदैव भाषितपुंस्कत्वं भाषितपुंस्केन प्रवृत्तिनिमित्तेन युक्तां स्त्रियमाहेति कृत्वा। एवं च स्त्रीशब्दस्यैवान्तर उत्तरपदे पुंवद्भाव इति सर्वत्र सिध्यति।

**ग्रामणि दृष्टिरस्येति।** अत्र ग्रामणिशब्दोऽपरित्यक्तस्वलिङ्ग एव दृष्टिशब्देन समानाधिकरणो भवति। अत्र यदि पुंवद्भावः स्यान्नपुंसकह्रस्वत्वं निवर्तेत।

**कथमित्यादि।** अनवयवभूतगर्भसम्बन्धः स्त्रियां गर्भिणीशब्दस्य प्रवृत्तिनिमित्तम्, पुंसि त्ववयवभूतगर्भसम्बन्धः। प्रसूत-प्रजातशब्दयोरपि स्त्रियां गर्भमोचननिमित्तम्, पुंसि तु गर्भाधानम्। **कर्तव्योऽत्र यत्न इति।** अन्तर्वर्तिवस्तुसम्बन्धमात्रं गर्भिणीशब्दस्य प्रवृत्तिनिमित्तमवयवत्वानवयवत्वेन[1] तन्त्रम्। एवं प्रसूत-प्रजातशब्दयोरपि आधानविमोचनत्यागेनापत्यसम्बन्धमात्रं निमित्तमाश्रीयत इत्ययमत्र यत्नः।

**ब्रह्मबन्धूभार्य इति।** ऊङो निवृत्तिर्न भवति। 'न कोपधायाः' इत्यत्रैवोङ्ग्रहणे कर्तव्ये पृथक्प्रतिषेधादस्य वैलक्षण्यं ज्ञायते। तेन ब्रह्मबन्धूवृन्दारिकेति 'पुंवत्कर्मधारय' इति निषेधविषये विधीयमानोऽपि पुंवद्भावो न भवति। एष चार्थोऽनूङित्यस्य तत्रानुवृत्तेर्लभ्यते। अपूरणीप्रियादिष्वित्ययं तु प्रतिषेधस्तत्रैव कर्तव्यः, न ह्यस्य 'पुंवत्कर्मधारय' इत्यत्रानुवृत्तिरिष्यते; महानवमी, महाद्वादशी, अक्षयतृतीया, कृष्णचतुर्दशीत्यादौ पूरण्यामपि कर्मधारये पुंवद्भावस्येष्टत्वात्।

**प्रधानपूरणीग्रहणं कर्तव्यमिति।** प्रधानं या पूरणी तस्यामेव प्रतिषेधो भवतीति वक्तव्यमित्यर्थः। एतच्च प्रधाने कार्यसम्प्रत्ययाल्लभ्यते। **कल्याणपञ्चमीकः पक्ष इति।** अत्र तिरोहितावयवभेदः पक्षोऽन्यपदार्थ इति तत्र पूरण्या अननुप्रवेशान्नास्ति प्राधान्यम्, कल्याणपञ्चमा रात्रय इत्यादावुद्भूतावयवभेदा रात्रयोऽन्यपदार्थः, तत्र यथा प्रथमाद्या रात्रयः समासाभिधेया, एवं पञ्चम्यपीति पूरण्याः प्राधान्यम्।

अथ दृढभक्तिः, शोभनभक्तिरित्यत्र कथं पुंवद्भावः, यावता प्रियादिषु भक्तिशब्दः पठ्यते। अत आह—**दृढभक्तिरित्येवमादिष्विति।** स्त्रीवाचित्वं पूर्वपदस्याविवक्षितम्, अतो दृढभक्तिरित्येवमादिसिद्धिरित्येवं

**भावबोधिनी**

प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्ति। सचिवा। अम्बा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। ये प्रिया आदि हैं। [दृढा भक्तिः यस्य सः आदि में निष्पन्न] दृढभक्तिः—आदि शब्दों में स्त्रीवाचक पूर्वपद की अविवक्षा करके सिद्ध हो जाता है। ऐसा समाधान करना चाहिये। [यहाँ दृढ शब्द स्त्रीलिङ्ग नहीं है। अपितु दृढ

---

१. "······वयवत्वे न तन्त्रमि"ति पाठो युक्त प्रतिभाति।

## २८९७. तसिलादिष्वाकृत्वसुचः ॥ ३५ ॥ (८३६)

**'पञ्चम्यास्तसिल्'** (५.३.७) इत्यतः प्रभृति **'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'** (५.४.१७) इति प्रागेतस्माद् ये प्रत्ययास्तेषु भाषितपुंस्कादनूङ्स्त्रियाः पुंवद्भवति। तस्याः शालायाः = ततः। तस्यां = तत्र। यस्या = यतः। यस्यां = यत्र।

**तसिलादिषु परिगणनं कर्तव्यम्—त्रतसौ (५.३.१०), (५.३.७)। तरप्तमपौ (५.३.५७) (५.३.५५)। चरट्जातीयरौ (५.३.५३), (५:३.६९)। कल्पब्देश्यदेशीयरः (५.३.६७)। रूपप्पाशपौ (५.३.६६), (५.३.४७)। थम्थालौ (५.३.२४), (५.३.३३)। दार्हिलौ (५.३.१५-१६)। तिल्तातिलौ (५.४.४१)।**

**न्यासः**

सिद्धमित्येवं समाधेयम्। द्वेष्यं परिहर्त्तव्यमित्यर्थः। दृढशब्दोऽत्रादाढर्यनिवृत्तिपरः प्रयुक्तः। अत्रादाढर्यनिवृत्तिपरायां चोदनायां लिङ्गविशेषोपादानमनुपकारकमेवेति। अतः स्त्रीत्वमिह न विवक्षितम्। तस्मादस्त्रीलिङ्गस्य दृढशब्दस्यायं प्रयोग इत्यभिप्रायः ॥ ३४ ॥

**तसिलादिष्वाकृत्वसुचः** ॥ अनुत्तरपदार्थोऽयमारम्भः। **तत इति**। 'पञ्चम्यास्तसिल्'। तस्य 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञकत्वात् त्यदाद्यत्वम्, टाप्, अनेन पुंवद्भावः। **तत्रेति**। 'सप्तम्यास्त्रल्'। शेषं पूर्ववत्।

**तसिलादिष्वित्यादि**। 'तसिलादिष्वाकृत्वसुचः' इत्युच्यमाने तसिलादिष्वनन्तर्भूतेष्वपि क्वचित् पुंवद्भाव इष्यते, स न प्राप्नोति। तत्रान्तर्भूतेऽपि क्वचिन्नेष्यते, एवं सत्यनिष्टमपि प्राप्नोति। तस्मात् परिगणनं कर्त्तव्यम्। तत्र त्रतसोरुदाहरणमुक्तम्। शेषाणां तूच्यते-इयं पट्वी, इयं पट्वी इयमनयोरतिशयेन पट्वी-'द्विवचन'

**पदमञ्जरी**

चोद्यसमाधानं कर्तव्यमित्यर्थः। दृढशब्दोऽत्र [1]दाढर्यनिवृत्तिपरः, तत्र दाढर्यनिवृत्तिपरायां चोदनायां स्त्रीलिङ्गोपादानमकिञ्चित्करमिति भावः। न चैवं सूत्रस्यानादरणीयत्वम्; लिङ्गविशेषविवक्षायां दर्शनीयभार्य इत्याद्यनिष्टप्रसङ्गात्। अथेह कथं भवितव्यम्—पट्वीमृद्व्यौ भार्ये अस्येति, पट्वीमृदुभार्यं इति भवितव्यम्? यस्योत्तरपदमनन्तरं तस्य पुंवद्भावो नेतरस्येति ॥ ३४ ॥

**तसिलादिष्वाकृत्वसुचः** ॥ अनुत्तरपदार्थमारम्भः। **ततस्तत्रेति**। 'प्राग्दिशो विभक्तिः' इति विभक्तित्वात्त्यदाद्यत्वम्, टाप्, अनेन पुंवद्भावः।

इह केचित्तसिलादिषु पठ्यन्ते, येषु पुंवद्भावो नेष्यते, केचिच्चान्यत्र पठ्यन्ते, येषु पुंवद्भाव इष्यते, तस्मादाह—**परिगणनमिति**। त्रतसोरुदाहृतम्। तरप्तमपोः—दर्शनीयतरा, दर्शनीयतमा। चरट्जातीयरोः—पटुचरी, पटुजातीया। कल्पब्देशीयरोः—दर्शनीयकल्पा, दर्शनीयदेशीया। देश्यप्रत्ययस्य नास्ति पाठः।

**भावबोधिनी**

शब्द को अदाढर्य की निवृत्ति का वाचक मान लेना चाहिए। इसलिए उसे किसी विशेष लिङ्ग में नहीं समझना चाहिये। फलतः पुंवद्भाव की कोई आवश्यकता नहीं है।] ॥ ३४ ॥

"पञ्चम्यास्तसिल्" (५।३।७) इससे लेकर "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७) इस सूत्र से पहले तक जो प्रत्यय हैं उनमें भाषितपुंस्क से परे अनूङ् स्त्रीवाचक शब्द पुंवद् हो जाते हैं। उदा० तस्या शालायाः—इसमें ततः। तस्यां शालायाम्—इसमें तत्र। यस्याः—इसमें यतः, यस्याम्—इसमें यत्र। [शाला का विशेषण होने से तत् शब्द स्त्रीलिङ्ग है। 'पञ्चम्यास्तसिल्' तथा 'सप्तम्यास्त्रल्' इन सूत्रों से पञ्चम्यन्त से तसिल् और सप्तम्यन्त से त्रल् प्रत्यय होते हैं। 'प्राग्दिशो विभक्तिः' (५।३।१) के अन्तर्गत होने से ये भी विभक्तिसंज्ञक हैं। अत "त्यदादीनामः" सूत्र से अत्व, 'अतो गुणे' सूत्र से पररूप स्त्रीलिङ्ग में टाप् करने के बाद प्रस्तुत सूत्र से पुंवद्भाव हो जाता है। अतः त+तस्, त+त्र रूप रहते हैं।]

---

१. अत्र "दृढशब्दोऽत्रादाढ्यंनिवृत्तिपरः" इति पाठः समीचितः प्रतीयते औचित्यात् न्यासेऽपि तथैव पाठाच्च।

**❀ शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः ❀ (म० भा०) । बह्वीभ्यो देहि, अल्पाभ्यो देहि = बहुशो देहि, अल्पशो देहि ।**

**❀ त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः ❀ (म० भा०) । पट्व्या भावः पटुत्वम् । पटुता । गुणवचनस्येति किम् ? कठ्या भावः कठीत्वम्, कठीता ।**

**न्यासः**

इत्यादिना तरप्—पटुतरा । इयमासामतिशयेन पट्वी—'अतिशायने' इत्यादिना तमप्—पटुतमा । पट्वी भूतपूर्वा—'भूतपूर्वे चरट्', ङीप्, पटुचरी । पट्वीप्रकारा—'प्रकारवचने जातीयर्'—पटुजातीया । ईषदसमाप्ता पट्वी—'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' पटुकल्पा, पटुदेश्या, पटुदेशीया । प्रशस्ता पट्वी—'प्रशंसायां रूपप्'—पटुरूपा । याप्या पट्वी—'याप्ये पाशप्'पटु—पाशा । अजायै हिता—'अजाविभ्यां थ्यन्'—अजथ्या । थ्यंस्त-सिलादिभ्यः पूर्वं पठ्यते । सर्वप्रकारैः सर्वथा, 'प्रकारवचने थाल्' तस्यां रात्रौ तदा—'सर्वैकान्यकियत्तदः काले दा' । अस्यां रात्रौ एतर्हि—'इदमोर्हिल्' । तत्रेदमः 'एतेतौ रथोः' इत्येतादेशः प्रशस्ता वृकी वृकतिः । प्रशस्ता ज्येष्ठा ज्येष्ठतातिः—'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि' इति तिल्तातिलौ । एतौ च कृत्वसुचः परौ पठ्येते ।

तसिलादिषु परिगणनं कर्त्तव्यमिति **भाष्यकारस्य** मतमेतत्, न तु **सूत्रकारस्य** । न चासति परिगणने किञ्चिदनिष्टमापद्यते । येषु हि तसिलादिष्वनन्तर्भूतेषु पुंवद्भाव इष्यते, तेषूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् भविष्यति । येषु तसिलादिष्वन्तर्भूतेषु नेष्यते, तत्र 'न कोपधायाः' इति नेति योगविभागान्न भविष्यतीति ।

**पदमञ्जरी**

रूपप्पाशपोः—दर्शनीयरूपा, पटुपाशा । थम्थालोः—'इदमस्थमुः', 'किमश्च' इति विहितस्थमुः, 'प्रकारवचने थाल्'; अनया प्रकृत्या इत्थम्, कया प्रकृत्या कथम्, तया तथा । दार्हिलोः—तस्यां वेलायां तदा, तर्हि । तिल्थ्यनोः—'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि', वृकी प्रशस्ता वृकतिः । तातिलो नास्ति पाठः । 'अजाविभ्यां थ्यन्', अजायै हिता अजथ्या । अत्र घरूपकल्पेषु ङ्यन्तस्य परत्वात् ह्रस्वः—पट्वितरा, पट्वितमा, पट्विकल्पा, पट्विरूपा ।

**शसि बह्वल्पार्थस्येति** । 'बह्वल्पार्थात्' इत्ययमपि शस् तसिलादिषु द्रष्टव्य इत्यर्थः ।

**हास्तिकमिति** । यद्यत्र पुंवद्भावो न स्यात्, तदा हस्तिनीशब्दस्य यस्येतिलोपे कृते तस्य स्थानिवत्त्वाद् 'असिद्धवदत्राभात्' इत्यसिद्धत्वाच्च 'नस्तद्धिते' इति टिलोपो न स्यादिति पुंवद्भावो विधीयते । 'ठक्छसोश्च' इत्यनेन पुंवद्भावो न लभ्यते; छसा सहचरितस्य ठको ग्रहणात् । **श्यैनेयः, रौहिणेय इति** । श्येतरोहिताभ्याम् 'वर्णादनुदात्तात्' इति ङीब्नकारौ । अत्र पुंवद्भावे सति—श्यैतेयः, रौहितेय इति स्यात् ।

**भावबोधिनी**

तसिलादि में परिगणन करना चाहिए—त्र, तस् । तरप् तमप् । चरट् जातीयर् । कल्पप् देश्य देशीयर [महाभाष्य में केवल 'कल्पब्देशीयरौ' यह पाठ है । काशिकाकार ने 'देश्य' का भी उल्लेख किया है ।] रूपप् पाशप् । थम् थाल् । दा, हिल् । तिल् तातिल् । [ता और तिल् का पाठ भाष्य में नहीं ।]

❀ शस् प्रत्यय परे बह्वर्थक तथा अल्पार्थक का पुंवद्भाव कहना चाहिए । ❀ उदा० बह्वीभ्यः देहि । अल्पाभ्यो देहि । [इनमें 'बह्वल्पार्थाच्छस्'' से शस् प्रत्यय करने पर प्रस्तुत वचन से पुंवद्भाव होता है ।] बहुशः देहि । अल्पशः देहि ।

❀ त्व, तल् परे रहते गुणवाचक का पुंवद्भाव कहना चाहिए । ❀ उदा० पट्व्याः भावः—इसमें पटुत्वम्, पटुता । [पट्वी से त्व, तल् करने के बाद प्रस्तुत वचन से पुंवद्भाव होने पर रूप बनते हैं ।] गुणवाचक का—इसका क्या फल है ? कठ्याः भावः—कठीत्वम्, कठीता । [यहाँ गुणवाचक नहीं जातिवाचक है । पुंवद्भाव नहीं होता है ।]

**कथमाग्नायो देवताऽस्य आग्नेयः स्थालीपाक इति ? कर्तव्योऽत्र यत्नः ।**
**[1]❀ भस्याढे तद्धिते पुंवद्भावो वक्तव्यः ❀ (म० भा०) । हस्तिनीनां समूहो हास्तिकम् ।**
**अढ इति किम् ? श्यैनेयः । रौहिणेयः ।**

**न्यासः**

दोषः खल्वपि परिगणने—दरच्छब्दात् कप्रत्यये कृते दारदिकेत्यत्र पुंवद्भावो न प्राप्नोति; कप्रत्ययस्यापरिगणितत्वात् ।

**शसि बह्वल्पार्थस्येति ।** शसि प्रत्यये परतः बह्वर्थस्याल्पार्थस्य च पुंवद्भावो वक्तव्यः, व्याख्येय इत्यर्थः । व्याख्यानं तु तस्यैव चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम् ।

**भस्याढे तद्धित इत्यादि । हास्तिकमिति ।** 'अचित्तहस्तिधेनोष्ठक्' इति ठक् । यद्यत्र पुंवद्भावो न स्यात्, तदा यस्येतीकारलोपे कृते तस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावात् 'नस्तद्धिते' इति टिलोपो न स्यात् । पुंवद्भावे तु सति हस्तिशब्द एवायं भवति । ननु च ठक्छसोरित्यनेनैवात्र सिध्यति पुंवद्भावः ? न सिध्यति; छसा साहचर्याद् 'भवतष्ठक्छसोः' इत्यनेनैव विहितस्य तत्र ठको ग्रहणात्, न सर्वस्य ।

**कथमित्यादि ।** यदि च ढे परतः पुंवद्भावस्य प्रतिषेधः क्रियते, तदाग्नायी देवतास्येति 'अग्नेर्ढक्' इति ढकि कृत आग्नायेय इति भवितव्यम्, तत् कथमाग्नेय इति भवतीत्यभिप्रायः । अग्नेः स्त्री तस्यां विवक्षायाम् 'वृषाकप्यग्निकुसितकुसीदानामुदात्तः' इत्यनेनाग्निशब्दाद् ङीपि कृत ऐकारे चान्तादेशेऽग्नायीति भवति । **कर्त्तव्योऽत्र यत्न इति ।** यत्नः केन पुनः कर्त्तव्यः ? यो भस्याढे तद्धित इत्युपसङ्ख्यानमिच्छति । न तु यश्चकारमनुक्तसमुच्चयार्थमुत्तरसूत्रे करोति । स ह्येवमाह—यत्रैवेष्यते तत्रैव चकारः पुंवद्भावं समुच्चिनोति, नान्यत्रेति ।

**पदमञ्जरी**

**कथमित्यादि ।** यदि ढे पुंवद्भावः प्रतिषिध्यते, ततोऽग्नेः स्त्री 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' इति अग्निशब्दात् ङीपि कृते ऐकारे आयादेशे च अग्नायी, सा देवतास्य 'अग्नेर्ढक्' इति, 'सर्वत्राग्निकलिभ्यां ढक्' इति ढकि पुंवद्भावनिषेधादाग्नायेय इति प्राप्नोति, तत्कथमाग्नेय इति ? **कर्तव्योऽत्र यत्न इति ।** केचिदाहुः—'अढे' इत्यपनीयानपत्य इति वक्तव्यम् । इदमपि सिद्धं भवति—कुण्डिन्या अपत्यमिति 'गर्गादिभ्यो यञ्', तत्र पुंवद्भावाभावाद्यस्येति लोपे तस्य स्थानिवद्भावात् 'नस्तद्धिते' इत्यसति टिलोपे कौण्डिन्य इति भवति, पुंवद्भावे तु सति कौण्ड्य इति प्राप्नोति । तथा सपत्न्या अपत्यं शिवादित्वादण्, तत्र पुंवद्भावाभावात् सापत्न इति भवति, पुंवद्भावे तु सति 'नित्यं सपत्न्यादिषु' इति विहितयोर्ङीन्नकारयोर्निवृत्तयोः सापत्न इति स्यात् । तदेवम्, 'अनपत्ये' इति वचनाद् ढेऽप्यनपत्ये पुंवद्भवति स आग्नेय इति । अपत्ये तु न भवति—श्यैनेयः, रौहिणेय इति । यद्यनपत्य इत्युच्यते, गर्गस्यापत्यं स्त्री गार्ग्यायणी, तस्या अपत्यम् 'गोत्रस्त्रियाः कुत्सने ण च' इति णप्रत्यये कृते पुंवद्भावो न प्राप्नोति, ततश्च गार्ग्यायणो जाल्म इति स्यात्, गार्ग्यो जाल्म इति चेष्यते

**भावबोधिनी**

❀ भसंज्ञक का ढ से भिन्न तद्धित प्रत्यय परे रहते पुंवद्भाव कहना चाहिए । ❀ उदा० हस्तिनीनां समूहः—इस अर्थ में—हास्तिकम् । [हस्तिनी शब्द से समूह अर्थ में ठक् = इक होने पर पुंवद्भाव करने पर रूप बनता है ।] ढ—परे न रहने पर—इसका क्या फल है ? श्यैनेयः । रौहिणेयः । [श्येन्या अपत्यम्ः, रोहिण्या अपत्यम्—इनमें "स्त्रीभ्यो ढक्" सूत्र से ढक् = एय प्रत्यय करने पर पुंवद्भाव नहीं होता है । आदिवृद्धि, भ संज्ञा, ईलोप होने पर रूप पर बनते हैं ।]

---

१. अस्मिन् सूत्रे महाभाष्ये 'तसिलादी त्रतसौ' इत्यारभ्य 'भस्याढे तद्धिते' इति पर्यन्तम् एकादश-परिगणन-वार्तिकानि सन्ति । तान्यत्रापि बोध्यानीति तत्त्वम् ।

**❀ ठक्छसोश्च पुंवद्भावो वक्तव्यः ❀ (का० वा० १२) । भवत्याश्छात्रा भावत्काः । भवदीयाः ॥**

**२८९८. क्यङ्मानिनोश्च ॥ ३६ ॥ (८३७)**

**क्यङि परतो मानिनि च स्त्रिया भाषितपुंस्कादनूङ् पुंवद्भवति । एनी–एतायते । श्येनी–श्येतायते ।**

**न्यासः**

कः पुनरसौ यत्न इति ? कश्चिदाह—'अपत्यग्रहणं ढस्य विशेषणं कर्त्तव्यम्—योऽपत्येऽढे' इति । तेनायमर्थो भवति—ढस्य तद्धिते पुंवद्भावो भवत्यपत्यार्थप्रत्ययं वर्जयित्वा । न चाग्नेयः स्थालीपाक इत्यपत्यार्थे ढप्रत्ययः; किन्तु सास्य देवतेत्यर्थे, अतोऽत्र भवत्येव पुंवद्भाव इति ।

अन्यस्त्वाह—'भस्याढे तद्धिते' इति व्यधिकरणे सप्तम्यौ । यश्चात्र नञ् सोऽल्पार्थे वर्त्तते, यथा—अल्पलवणा यवागूरलवणेत्युच्यते । तत्रायमर्थो भवति—भस्य तद्धिते पुंवद्भावो वक्तव्योऽल्पे ढप्रत्यय इति । तेनाग्नेयः स्थालीपाक इत्यत्र पुंवद्भावो भवति । श्यैनेयः, रोहिणेय इत्यत्र तु न भवतीति ।

**ठक्छसोश्चेत्यादि ।** अथ ठग्ग्रहणं किमर्थम्, यावता ठस्येकादेशे कृते 'भस्याढे तद्धिते' इत्यनेनैव सिद्धः । ठावस्थायामेव यथा स्यादित्येवमर्थम् । किमेवं सति भवति ? 'इसुसुक्तान्तात् कः' इति कः सिद्धो भवति; अन्यथा हि यदीकादेशे कृते पुंवद्भावः स्यात् ततो यथा माथितिक इत्यत्रेकादेशो न भवति, तथा भावत्का इत्यत्रापि न स्यात् । **भावत्काः, भवदीया इति ।** 'भवतष्ठक्छसौ' इति ठक्छसौ ॥ ३५ ॥

**क्यङ् मानिनोश्च ॥ एतायते, श्येतायत इति ।** एतश्वेतशब्दाभ्याम् 'वर्णादनुदात्तात् तोपधात् तो नः'

**पदमञ्जरी**

तस्मादनपत्य इति न शक्यं वक्तुम् । कथं कौण्डिन्यः ? 'आगस्त्यकौण्डिन्ययोः' इति निपातनात् सिद्धम् । कथं सापत्नः ? शत्रुपर्यायः सपत्नशब्दोऽस्ति; 'व्यन्सपत्ने' इति लिङ्गात् । स शार्ङ्गरवादिषु पठितव्यः, ततः शिवाद्यण्, तस्मात् 'स्त्रीभ्यो ढक्' इत्यत्रैव पुंवद्भावप्रतिषेध इति ? व्याख्यानमेवात्र शरणम् ।

**ठक्छसोरिति ।** छसः सित्त्वात् 'सिति च' इति पदसंज्ञाविधानाद्भत्वाभावाद् वचनम्, ठग्ग्रहणं किमर्थम्, इकादेशे कृते 'भस्याढे' (वा० ७३१) इत्येव सिद्धे ठावस्थायामेव यथा स्यात् ? किमेवं सति भवति ? 'इसुसुक्तान्तात्कः' इति कादेशः सिद्धो भवति; अन्यथा यदीकादेशे कृते पुंवद्भावः स्यात्, ततो यथा माथितिके इत्यत्रेकादेशे कृते कादेशो न भवति, एवं भावत्क इत्यत्रापि न स्यात् ॥ ३५ ॥

**भावबोधिनी**

[यदि ढ = एय परे रहते पुंवद्भाव नहीं होता है तो] आग्नायी देवता अस्य—इस अर्थ में 'आग्नेयः स्थालीपाकः' यह किस प्रकार होता है [क्योंकि अग्नायी से ढ होने पर 'आग्नायेयः' ऐसा ही होना चाहिए] ? इस विषय में यत्न करना चाहिए । [यहाँ 'अनपत्ये' का ग्रहण करना चाहिए । अपत्यभिन्न अर्थ में ढ होने पर भी पुंवद्भाव होता है । अतः यहाँ पुंवद्भाव कर देने पर—'अग्नि' ही रह जाता है । अतः 'आग्नेयः' रूप बनने में बाधा नहीं है । परन्तु अपत्यार्थक 'ढ' परे पुंवद्भाव नहीं होने से 'श्यैनेयः' में नत्व की निवृत्ति नहीं होती है ।]

❀ ठक् तथा छस् प्रत्ययों के परे रहते भी पुंवद्भाव कहना चाहिए । ❀ उदा० भवत्याः छात्राः—इस अर्थ में 'भावत्काः, भवदीयाः' रूप होते हैं । [भवती शब्द से ठक् करने पर पुंवद्भाव होने से भवत् बन जाने से 'इसुसुक्तान्तात्कः' सूत्र से 'ठ' का 'क' होता है । इसी प्रकार भवती + छस् यहाँ भी पुंवद्भाव होने पर छ का ईय होता है । सित् मान कर पद होवे 'सिति च' सूत्र से पद संज्ञा द्वारा भ संज्ञा का बाध हो जाने पर जश्त्व हो जाता है—भवद् + ईय होता है । इन रूपों में "ठक् छसोश्च" सूत्र से ठक् और छस् प्रत्यय होते हैं ।] ॥ ३५ ॥

क्यङ् तथा मानिन् के परे रहते भाषितपुंस्क अनूङ् स्त्रीलिङ्गवाचक का पुंवद्भाव होता है । उदा०—एनी-

**मानिनि—दर्शनीयमानी अयमस्याः । दर्शनीयमानिनीयमस्याः ॥**

**❀ मानिनोग्रहणमस्त्र्यर्थम्, असमानाधिकरणार्थं च ❀ (का० वा० १) । इह तु दर्शनीयमात्मानं मन्यते दर्शनीयमानिनीति पूर्वेणैव सिद्धम् ॥**

**न्यासः**

इत्यनेन ङीप्, तकारस्य नकारः । एनीवाचरति, श्येनीवाचरति—'कर्तुः क्यङ् सलोपश्च' इति क्यङ्, 'अकृत्सार्वधातुकयोः' इति दीर्घत्वम् । **अयमस्या दर्शनीयमानीति** । दर्शनीयामिमां मन्यतेऽयमिति । 'मनः' इति णिनिः । **दर्शनीयमानिनीयमस्या इति** । दर्शनीयामिमां मन्यत इति पूर्ववण्णिनिः 'ऋन्नेभ्यो ङीप्' इति ङीप् ।

किं पुनः कारणं स्त्रियां समानाधिकरण इत्यनुवर्त्तमानेऽस्त्रियामसमानाधिकरणे च मानिन्युत्तरपदे पुंवद्भाव उदाह्रियत इत्याह—**मानिनो ग्रहणमित्यादि** । कथमेतज् ज्ञायते ? इत्याह—**इह त्वित्यादि** । यद्युत्तरपदं स्त्रियां वर्त्तते समानाधिकरणञ्च भवति—दर्शनीयामात्मानं मन्यते दर्शनीयमानिनीत्येवमादौ । तत्र 'यस्मात् स्त्रियाः पुंवत्' इत्यनेनैव सिद्धम्, अतो मानिनोग्रहणमस्त्र्यर्थम् । असमानाधिकरणाच्चेत्येतदवसीयते; अन्यथा हि तदनर्थकं स्यात् ॥ ३६ ॥

**पदमञ्जरी**

**क्यङ्मानिनोश्च ॥** अयमस्याः, इयमस्या इति वैयधिकरण्यप्रदर्शनार्थमिदमुक्तम् । **पूर्वेणैव सिद्धमिति** । एकस्या एव कर्मत्वात्कर्तृत्वाच्च सामानाधिकरण्यस्य भावात् ॥ ३६ ॥

**भावबोधिनी**

एतायते । श्येनी—श्येनायते । एनी इवाचरति तथा श्येनीव आचरति—इन अर्थों में "कर्तुः क्यङ् सलोपश्च" सूत्र से क्यङ् = य करने पर प्रस्तुत सूत्र से पुंवद्भाव करने पर ङीप् और नत्व की निवृत्ति हो जाने से एत + य, दीर्घ, लकारादि करने पर रूप बनता है । इसी प्रकार श्येनी + क्यङ् = श्येनी + य, पुंवद्भावादि होता है । ] मानिन् परे रहते का उदा०—दर्शनीयमानी अयम् अस्याः—[दर्शनीयाम् इमाम् अयं मन्यते—इस अर्थ में 'मनः' सूत्र से णिनि = इन्, उपधावृद्धि करने पर—दर्शनीया मानिन्, पुंवद्भाव से दर्शनीयमानी रूप होता है । ] दर्शनीयमानिनी इयम् अस्याः । [दर्शनीयमानिनीम् इमां मन्यते इयम्—इस अर्थ में मन् से णिनि, पुंवद्भाव करने पर दर्शनीयमानिन्, ङीप् करने पर रूप बनता है ।]

*मानिन् का ग्रहण स्त्री से भिन्न अर्थ के लिए तथा असमानाधिकरण के लिए है । * क्योंकि इन पूर्वोक्त उदाहरणों में तो—दर्शनीयाम् आत्मानं मन्यते—इस—दर्शनीयमानिनी में पूर्ववर्ती सूत्र से ही पुंवद्भाव सिद्ध हो जाता है ।

**विमर्श**—दर्शनीयाम् आत्मानं मन्यते इयम्—यहाँ तो एक ही स्त्री कर्म और कर्ता के रूप में हैं । अतः सामानाधिकरण्य है क्योंकि वास्तव में भेद नहीं है । अतः इसमें तो 'स्त्रियाः पुंवत्' सूत्र से ही पुंवद्भाव हो सकता है । अतः जब अपने से भिन्न को कर्म मान कर प्रयोग हो वहाँ सामानाधिकरण्य न सम्भव होने से इस मनिन् के ग्रहण की आवश्यकता है । अतः पदमञ्जरी का पाठ "....सामानाधिकरण्यस्याभावात्" शुद्ध नहीं है, "सामानाधिकरण्यस्य भावात्" ऐसा ही होना चाहिए । इसीलिए कैयट ने लिखा है—"स्त्रीलिङ्गे समानाधिकरणे उत्तरपदे पूर्वेण सिद्धम् । यथा—दर्शनीयामात्मानं मन्यते दर्शनीयमानिनी देवदत्तेति । अत्र ह्येकस्या एव कर्मत्वात् कर्त्रीत्वाच्चास्ति सामानाधिकरण्यम् ।"

बृहच्छन्देन्दुशेखर में नागेश ने लिखा है—"या त्वात्मानमेव दर्शनीयां मन्यते, तत्र एकस्या एव रूपभेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि वास्तवाभेदेन सामानाधिकरण्यमाश्रित्य 'स्त्रियाः' इति सूत्रेणैव सिद्धमिति भावः ।" [ प्रस्तुत सूत्र पर बृहच्छन्देन्दुशेखर पृ० ११०७ ]

न्यास से भी पूर्वोक्त भाव स्पष्ट है । अतः पदमञ्जरीकार का पाठ भ्रष्ट प्रतीत होता है ॥ ३६ ॥

**२८९९. न कोपधायाः ॥ ३७ ॥ (८३८)**

**कोपधायाः स्त्रियाः पुंवद्भावो न भवति । पाचिकाभार्यः । कारिकाभार्यः । मद्रिकाभार्यः । वृजिकाभार्यः । मद्रिकाकल्पा । वृजिकाकल्पा । मद्रिकायते । वृजिकायते । मद्रिकामानिनी । वृजिकामानिनी । विलेपिकाया धर्म्यं वैलेपिकम् (म० भा०) ।**

**❀ कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् ❀ (का० वा० १) । इह मा भूत्—पाकभार्यः, भेकभार्य इति ॥**

**न्यासः**

**न कोपधायाः ॥** पूर्वेण प्रकरणेन प्राप्तस्य पुंवद्भावस्यायं प्रतिषेधः । **पाचिकाभार्यः, कारिकाभार्य इति ।** पाचककारकशब्दाभ्यां ण्वुलन्ताभ्यां टाप् । 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः' इतीत्वम् । अत्र 'स्त्रियाः पुंवत्' इत्यादिना प्राप्तिः । **मद्रिकाभार्यः, वृजिकाभार्य इति ।** मद्रेषु भवा, वृजिषु भवेति 'मद्रवृज्योः कन्' इति कन् । अत्रापि 'स्त्रियाः पुंवत्' इत्यादिना प्राप्तिः । मद्रिकाकल्पा । वृजिकाकल्पेति । अत्र 'तसिलादिष्वाकृत्वसुचः' इत्यनेन प्राप्तिः । मद्रिकायते इत्यादौ 'क्यङ्मानिनोश्च' इति प्राप्तिः । **विलेपिकाया धर्म्यमिति ।** 'लिप उपदेहे' इत्यस्माण्ण्वुल् । **वैलेपिकमिति ।** 'अण् महिष्यादिभ्यः' इत्यण् । अत्र 'भस्याढे तद्धिते' इति वा प्राप्तिः ।

**कोपधप्रतिषेधे** इत्यादि । अस्मिन् कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यम् । तद्धितसम्बन्धी वुसम्बन्धी ककार उपधा यस्य तत्रैव प्रतिषेधो यथा स्यात् । इह मा भूत्—पाकभार्य इति । पाकशब्दोऽम् 'अर्भकपृथुकपाका वयसि' इत्यनेन कन्प्रत्ययान्तो निपातितः । अत्रासति वुग्रहण इहापि प्रतिषेधः स्यात् ।

यदि तद्धितवुग्रहणं क्रियते, तर्हि 'पूर्वत्रासिद्धम्' इत्यत्र यद्वक्ष्यति—"शुष्कजङ्घ' इत्यत्र—'शुषेः कः' इत्यस्यासिद्धत्वात् 'न कोपधायाः' इति प्रतिषेधो न प्राप्नोतीत्यसिद्धाधिकारस्य प्रयोजनम्" इति, तन्नोपपद्यते, असत्यपि 'शुषः कः' इत्यस्यासिद्धत्वेनैवात्र 'न कोपधायाः' इति प्रतिषेधेन भवितव्यम्, न ह्यत्र तद्धितसम्बन्धी ककारः, नापि वुसम्बन्धी ? दर्शनभेदमाश्रित्य तथाभिधानाददोषः । इदं हि वार्त्तिककारमतमाश्रित्योक्तम् । तत् पुनः श्लोकवार्त्तिककारस्य सूत्रकारमतानुसारिणो दर्शनमाश्रित्य वक्ष्यति ॥ ३७ ॥

**पदमञ्जरी**

**न कोपधाया ॥** मद्रेषु भवा मद्रिका, वृजिका, 'मद्रवृज्योः कन्' । **वैलेपिकमिति ।** 'अण्महिष्यादिभ्यः', अत्र 'भस्याढे तद्धिते' (वा० ७३१) इति ह्यौपसंख्यानिकी प्राप्तिः प्रतिषिद्ध्यते । पूर्वेषु तु सौत्री । **तद्धितवुग्रहणमिति ।** तद्धितस्य यः ककारः वोश्च यः ककारः तस्येति वक्तव्यमित्यर्थः । **'पाकभार्य' इति ।** पाकशब्दः प्रथमवयोवाची, ततो ङीबपवादोऽजादित्वाट्टाप् ॥ ३७ ॥

**भावबोधिनी**

क जिसकी उपधा में है ऐसे स्त्रीवाचक शब्द का पुंवद्भाव नहीं होता है । उदा०—पाचिकाभार्यः । कारिकाभार्यः । वृजिकाभार्यः । [इनमें ण्वुल् का अक् होने से ककारोपध है । पुंवद्भाव नहीं होता है । ] मद्रिकाकल्पा । वृजिकाकल्पा । [ यहाँ 'तसिलादिषु' से प्राप्त का निषेध है । ] मद्रिकायते । वृजिकायते । मद्रिकामानिनी । वृजिकामानिनी । [ इनमें "क्यङ्मानिनोश्च" से प्राप्त का निषेध है । ] विलेपिकाया धर्म्यम्—इस अर्थ में—वैलेपिकम् । [ यहाँ पुंवद्भाव का प्रतिषेध होने से "अण् महिष्यादिभ्यः" सूत्र से अण् होता है । ]

* ककारोपध के प्रतिषेध में तद्धित वु = अक का ही प्रतिषेध कहना चाहिए (अन्य का नहीं) । * जिससे यहाँ हो—पाकभार्यः, भेकभार्यः । ["पोतः पाकोऽर्भको डिम्भः" अमरकोष २।५।३८ के अनुसार पाक शब्द बालकवाची है । यहाँ—कन् प्रत्यय है । अतः निषेध न होकर पुंवद्भाव हो जाता है । "भेकी वर्षाम्वी" अमरकोष १।१०।२४ के अनुसार 'भेकी' छोटी मेढकी का वाचक है । यहाँ भी तद्धित वु = अक नहीं है । प्रतिषेध नहीं होता है] ॥ ३७ ॥

**२९००. संज्ञापूरण्योश्च ॥ ३८ ॥ (८३९)**

**संज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति । दत्ताभार्यः । गुप्ताभार्यः । दत्तापाशा । गुप्तापाशा । दत्तायते । । गुप्तायते । दत्तामानिनी । गुप्तामानिनी ।**

**पूरण्याः—पञ्चमीभार्यः । दशमीभार्यः । पञ्चमीपाशा । दशमीपाशा । पञ्चमीयते । दशमीयते । पञ्चमीमानिनी । दशमीमानिनी ॥**

**न्यासः**

**संज्ञापूरण्योश्च** ॥ कथं पुनः संज्ञाशब्दस्य पुंवद्भावस्य प्राप्तिः, यावता भाषितपुंस्कस्य पुंवद्भाव उक्तः, न च यः संज्ञाशब्दः स्त्रियां वर्त्तते स भाषितपुंस्को भवति, एकद्रव्यनिवेशित्वात् संज्ञाशब्दानाम् ? नैतदस्ति; न ह्ययं नियोग एकद्रव्यनिवेशिभिरेव संज्ञाशब्दैर्भवितव्यमिति । तथा हि—देवदत्तादिशब्दोऽनेकद्रव्यदानक्रियादि-सम्बन्धाद् नैकवस्तुसंज्ञाभूत एव लोके प्रयुज्यमान उपलभ्यते, शास्त्रेष्वपि स्वादिशब्दः । या त्वेकद्रव्यनिवेशिनी संज्ञा तां प्रति नैवायं प्रतिषेधः क्रियत इत्यसारञ्चोद्यम् । ननु भवन्तु संज्ञाशब्दा अनेकार्थवृत्तयः, भाषितपुंस्कास्त्वे-कस्यामाकृतौ, कथं तर्हि तेषां किञ्चित् प्रवृत्तिनिमित्तमस्ति, यदृच्छाशब्दत्वात् ? एतदप्यसारम्; यतस्तेषामपि केषाञ्चित् किञ्चित् प्रवृत्तिनिमित्तमस्त्येव, सप्तपर्णादिशब्दवत् । यत्राप्येतन्नास्ति, तत्रापि स्वरूपमेव प्रवृत्तिनिमित्त-मुपादायाभिधेये वर्त्तन्ते । तत्राभिन्ने प्रवृत्तिनिमित्ते यैर्भाषितः पुमान् ते भाषितपुंस्का इति किमत्रानुपपन्नम् ? **दत्ताभार्य इति** । अत्र यासौ दानक्रियाकृतिस्तस्यामेव दत्ताशब्दो भाषितपुंस्कः । **गुप्ताभार्य इति** । अत्रापि गुप्ता-शब्दो गोपनक्रियाकृतौ स्वरूपे वा प्रवृत्तिनिमित्ते । उभावपि भाषितपुंस्कशब्दौ—**दत्तायते, गुप्तायत इति** । कथमेते प्रतिषेधस्योदाहरणे उपन्यस्ते, यावता सत्यपि पुंवद्भावे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घत्वेनोभयमप्येतत् सिद्धम् ? एवं मन्यते—'संज्ञापूर्वो विधिरनित्यः' इति, तत्र यदि पुंवद्भावप्रतिषेधो न स्यात् तदा दीर्घत्वाभावोऽ-नुमीयते । तस्मिन् पक्षे दत्तयते गुप्तयत इत्यपि स्यादिति । 'न कोपधासंज्ञापूरणीनाम्' इत्येकस्मिन्नेव योगे कर्त्तव्ये योगविभागः 'न कोपधायाः' इत्यस्य प्रतिषेधस्यानित्यत्वज्ञापनार्थः कृतः । तेन यदुक्तम्—कोपधप्रतिषेधे तद्धितवु-ग्रहणं कर्त्तव्यमिति, तन्न कर्त्तव्यं भवति ॥ ३८ ॥

**पदमञ्जरी**

**संज्ञापूरण्योश्च** ॥ संज्ञाशब्दा ये दानादिक्रियानिमित्ताः पुंसि च स्त्रियां च लोके प्रयुज्यन्ते तदर्थः संज्ञाप्रतिषेधः । ये त्वेकद्रव्यनिमित्ता देशनिमित्ता वा संज्ञाशब्दास्तत्राभाषितपुंस्कत्वादेवाप्रसङ्गः । **दत्तायते, गुप्तायते इति** । अत्र यद्यपि सत्यसति वा प्रतिषेधे विशेषाभावः, तथापि वस्तुतः प्रतिषेधस्य विषय इत्येता-वताऽस्योपन्यासः ॥ ३८ ॥

**भावबोधिनी**

संज्ञावाची तथा पूरणप्रत्ययान्त स्त्रीलिङ्ग शब्द का पुंवद्भाव नहीं होता है । उदा०—दत्ताभार्यः । गुप्ताभार्यः । दत्तापाशा । गुप्तापाशा । दत्तायते । गुप्तायते । दत्तामानिनी । गुप्तामानिनी । [ इन सभी में पूर्वोक्त सूत्रों से प्राप्त पुंवद्भाव का निषेध हो जाता है । यद्यपि क्यङ् प्रत्यय में पुंवद्भाव होने या न होने पर रूप में कोई भेद नहीं है, क्योंकि—'अकृत्सार्वधातुकयोः' सूत्र से दीर्घ होता ही है । तथापि वह प्रतिषेध का विषय है—ऐसा मान कर उदाहरण लिखा गया । ]

पूरणप्रत्ययान्त का उदा०—पञ्चमीभार्यः । दशमीभार्यः । पञ्चमीपाशा । दशमीपाशा । पञ्चमीयते । दशमीयते । पञ्चमीमानिनी । दशमीमानिनी । [ इनमें पूर्वोक्त सूत्रों से पुंवद्भाव प्राप्त होता है । किन्तु प्रस्तुत सूत्र से निषेध हो जाता है । पञ्चमी भार्या यस्य सः आदि बहुव्रीहि हैं ] ॥ ३८ ॥

## २९०१. वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ३९ ॥ (८४०)

**'न' इति वर्तते। वृद्धेर्निमित्तं यस्मिन् स वृद्धिनिमित्तस्तद्धितः स यदि रक्तेऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद्भवति। स्रौघ्नीभार्यः। माथुरीभार्यः। स्रौघ्नीपाशा। स्रौघ्नीयते। माथुरीयते। स्रौघ्नीमानिनी। माथुरीमानिनी।**

**वृद्धिनिमित्तस्येति किम्? मध्यमभार्यः। तद्धितस्येति किम्? काण्डलावभार्यः। बहुव्रीहिपरिग्रहः किमर्थः? तावद्भार्यः। यावद्भार्यः।**

### न्यास

**वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** ॥ वृद्धिनिमित्तं ञणकाः। **स्रौघ्नीभार्य इति**। स्रुघ्ने भवा, 'तत्र भव' इत्यण्। 'टिड्ढाणञ्' इति ङीप्। एवं **माथुरीभार्य** इत्यत्रापि।

**मध्यमभार्य इति**। मध्ये भवा, 'मध्यान्मः' इति मप्रत्ययः। **काण्डलावभार्य इति**। काण्डं लुनातीति 'कर्मण्यण्', पूर्ववन्ङीप्। **तावद्भार्य इति**। तावच्छब्दात् तत्परिमाणमस्या इति 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुप्, 'आ सर्वनाम्नः' इति दकारस्याकारः, 'उगितश्च' इति ङीप्। तावती भार्यास्य तावद्भार्यः, यदि वृद्धिनिमित्तस्येति तत्पुरुषो गृह्येत तदात्रापि प्रतिषेधः स्यात्, भवति हि वतुब् वृद्धेराकारस्य निमित्तम्। बहु-

### पदमञ्जरी

**वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** ॥ वृद्धेर्निमित्तं णकारः। इह निमित्तग्रहणं न कर्तव्यम्, 'वृद्धेस्तद्धितस्य' इत्येव वक्तव्यम्—वृद्धेर्यस्तद्धितः, कश्च वृद्धेस्तद्धितः? यस्तस्या निमित्तमेवं सिद्धे निमित्तग्रहणाद्व्यधिकरणपदो बहुव्रीहिः। अपर आह—षष्ठीसमासादर्शआद्यच्प्रत्यय इति। यद्वा—निमित्तग्रहणद्बहुवचनान्तस्य समासः—वृद्धीनां तिसृणामपि निमित्तं वृद्धिनिमित्तमिति। वतुस्त्वाकारस्यैव निमित्तम्। इह तु सर्वस्मै हिता सार्वा सा भार्या यस्य स सार्वभार्य इति यद्यपि "सार्वपुरुषाभ्याम्' इति णप्रत्यये आकार एव वृद्धिर्भवति, तथापि नासौ स्वरूपेण वृद्धेर्निमित्तम्, किं तर्हि? णित्त्वेन। तच्च तिसृणामपि निमित्तम्।

### भावबोधिनी

'न' इसकी अनुवृत्ति होती है। वृद्धि का निमित्त है जिसके परे रहते वह वृद्धिनिमित्त तद्धित है, यदि वह तद्धित प्रत्यय रक्त अर्थ में और विकार अर्थ में नहीं किया गया है, ऐसे तद्धितप्रत्ययान्त स्त्रीशब्द का पुंवद्भाव नहीं होता है। उदा०—स्रौघ्नीभार्यः। माथुरीभार्यः। स्रौघ्नीपाशा। माथुरीपाशा। स्रौघ्नीयते। माथुरीयते। स्रौघ्नीमानिनी। माथुरीमानिनी। [इनमें स्रुघ्ने भवा, मथुरायां भवा—इन अर्थों में 'तत्र भवः' से अण् होता है। ण् वृद्धि का निमित्त है। अतः पूर्वसूत्रों से प्राप्त पुंवद्भाव का प्रतिषेध हो जाता है।]

वृद्धिनिमित्तवाले तद्धित प्रत्ययान्त का—इसका क्या फल है—मध्यमभार्यः। [मध्यमा भार्या यस्य सः—इस अर्थ में "मध्यान्मः" सूत्र से तद्धित प्रत्यय तो है किन्तु उसमें वृद्धि का निमित्त ण् आदि नहीं है। अतः पुंवदभाव का निषेध न होने से पुंवद्भाव हो ही जाता है।]

तद्धितान्त का—इसका क्या फल है? काण्डलावभार्यः। [काण्डलावा भार्या यस्य सः। काण्डं लुनाति—इस अर्थ में "कर्मण्यण्" से कृत् अण् है। अतः वृद्धिनिमित्त होने पर भी तद्धित न होने से निषेध न होकर पुंवद्भाव हो जाता है।]

[वृद्धिनिमित्तस्य-इसमें] बहुव्रीहि का ग्रहण किस लिए है? तावद्भार्यः, यावद्भार्यः। [तत् परिमाणम् अस्याः—इस अर्थ में वतुप् प्रत्यय, 'आसर्वनाम्नः' से आत्व तथा 'उगितश्च' से ङीप् होने पर 'तावती' बनता है। यहाँ आकार वृद्धिसंज्ञक है किन्तु यह वृद्धिनिमित्त जिसमें है ऐसे प्रत्यय के परे नहीं होता है क्योंकि ण, ञ, क कोई नहीं है। यदि तत्पुरुष लिया जाता तो वतुप् यह आकार (वृद्धि) आदेश का निमित्त हो जाता और पुंवद्भाव का निषेध हो जाता। इसलिए 'वृद्धेर्निमित्तं यस्मिन् स वृद्धिनिमित्तः तद्धितः—ऐसा बहुव्रीहि करना पड़ा।]

**अरक्तविकार इति किम् ? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायबृहतिकः । लोहस्य विकारो लौही, लौही ईषा यस्य रथस्य स लौहेषः । खादिरेषः[1] ॥**

## २९०२. स्वाङ्गाच्चेतोऽमानिनि[2] ॥ ४० ॥ (८४१)

**स्वाङ्गादुत्तरो य ईकारस्तदन्तायाः स्त्रिया न पुंवद्भवति अमानिनि परतः । दीर्घकेशीभार्यः । श्लक्ष्णकेशीभार्यः । दीर्घकेशीपाशा । श्लक्ष्णकेशीपाशा । दीर्घकेशीयते । श्लक्ष्णकेशीयते ।**

### न्यासः

व्रीहिपरिग्रहे तु न दोषः; न हि वतुपि ञकारादिकं वृद्धेर्निमित्तमस्ति । **काषायीति** । 'तेन रक्तम्' इत्यण् । **लौहीति** । 'प्राणिरजतादिभ्योऽञ्' इत्यञ्, पूर्ववन् ङीप् । **खादिरेष इति** । 'पलाशादिभ्यो वा' इत्यञणोरन्यतरः । खादिरी ईषा यस्य स खादिरेषः ॥ ३९ ॥

**स्वाङ्गाच्चेतोऽमानिनि ॥ दीर्घकेशीति** । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । **पट्वीति** । पटुशब्दाद् 'वोतो गुणवचनात्' इति ङीष् ।

### पदमञ्जरी

मध्ये भवा मध्यमा, 'मध्यान्मः' । काण्डं लुनातीति काण्डलावी, 'कर्मण्यण्' 'टिड्ढाणञ्' इति ङीप्; 'यत्तदेतेभ्यः परिमाणे वतुप्', 'आ सर्वनाम्नः' 'उगितश्च' ङीप्, तावती । तत्पुरुषाश्रयणेऽस्यापि प्रतिषेधः स्यात्, बहुव्रीहौ तु णकारदेराभावान् न भवति । **काषायीति** । 'तेन रक्तं रागात्' इत्यण् । **लौहीति** । 'प्राणिरजतादिभ्योऽञ्' । खदिरशब्दः पलाशादिः, ईषा = रथावयवविशेषः ॥ ३९ ॥

**स्वाङ्गाच्चेतोऽमानिनि ॥ अमानिनीति** वार्तिके दर्शनात्सूत्रे प्रक्षिप्तम् । 'स्वाङ्गाच्चोपसर्जनात्' इति

### भावबोधिनी

रक्त (रंगा हुआ) तथा विकार—इनसे भिन्न अर्थों में—इसका क्या फल है ? कषायेण रक्ता—काषायी, काषायी बृहतिका यस्य सः—काषायबृहतिकः । [यहाँ कषायेण रक्ता—अर्थ में अण् है । यहाँ रंगा हुआ = रक्त अर्थ है । पुंवद्भाव का निषेध नहीं होता है । ] लोहस्य विकारः—लौही, लौही ईषा यस्य सः—लौहेषः । खादिरेषः । [खादिरी ईषा यस्य सः । इनमें लोहस्य विकारः—इस अर्थ में "प्राणिरजतादिभ्योऽञ्" सूत्र से अञ्, ङीप् करने के बाद 'लौही' के साथ बहुव्रीहि होता है, पुंवद्भाव होने पर रूप बना है । 'ईषा' यह रथ के अवयव हिस्सा का वाचक है । "ईषा लाङ्गलदण्डः स्यात्" अमरकोष २।९।१४ के अनुसार हरिश कहा जाता है ] ॥ ३९ ॥

स्वाङ्गवाचक से उत्तरवर्ती जो ईकार तदन्त (ईकारान्त) स्त्री शब्द का पुंवद्भाव नहीं होता है मानिन् से भिन्न के परे रहते [अर्थात् मानिन् के परे रहते ही पुंवद्भाव होता है अन्यथा नहीं] । उदा० दीर्घकेशीभार्यः । [दीर्घाः केशाः यस्याः सा—इस बहुव्रीहि में समास के बाद "स्वाङ्गाच्चोपसर्जनात्" सूत्र से ङीप् करने पर 'दीर्घकेशी' होता है । दीर्घकेशी भार्या यस्याः सः—इस बहुव्रीहि में पुंवद्भाव प्राप्त होता है । किन्तु प्रस्तुत सूत्र से निषेध हो जाता है । समासान्त का ह्रस्व होता है—"गोस्त्रियोरुपसर्जनस्य" इस सूत्र से । ] दीर्घकेशीपाशा । श्लक्ष्णकेशीभार्यः । [श्लक्ष्णकेशी भार्या यस्य सः—यहाँ भी उपर्युक्त रीति से पुंवद्भाव का निषेध होता है । अन्त का ह्रस्व होता है । ] कुत्सिता दीर्घकेशी—इस अर्थ में "याप्ये पाशप्" (भा० सू० ५।३।४७) से पाशप् प्रत्यय होता है । यहाँ भी पुंवद्भाव नहीं होता है । ] श्लक्ष्णकेशीपाशा । [यहाँ भी कुत्सित अर्थ में पाशप् प्रत्ययान्त का प्रयोग है । पुंवद्भाव का निषेध होता है । इनमें "तसिलादिष्वा-

---

१. 'खादिरेषः' इति मुद्रितपुस्तके नास्ति ।

२. 'स्वाङ्गाच्चेतोऽमानिनि' इदं वार्त्तिकरूपेण पठ्यते । अतो भाष्यमते 'स्वाङ्गाच्चेतः' इत्येव सूत्रस्वरूपम् । 'अमानिनी'ति वार्तिकांशः सूत्रे प्रक्षिप्तः काशिकाकारेणेति बोध्यम् ।

स्वाङ्गादिति किम् ? पटुभार्यः । ईत इति किम् ? अकेशभार्यः । अमानिनीति किम् ? दीर्घकेश-मानिनी ॥

## २९०३. जातेश्च ॥ ४१ ॥ (८४२)

जातेश्च स्त्रिया न पुंवद्भवति अमानिनि परतः । कठीभार्यः । बह्वृचीभार्यः । कठीपाशा । बह्वृचीपाशा । कठीयते । बह्वृचीयते ।

अमानिनीत्येव—कठमानिनी । बह्वृचमानिनी ।

अयं प्रतिषेध औपसङ्ख्यानिकस्य पुंवद्भावस्य नेष्यते । [म० भा० ६.३.३५.११] हस्तिनीनां समूहो हास्तिकम् ॥

### न्यासः

अकेशभार्य इति । अविद्यमानाः केशा अस्या अकेशा । 'सहनञ्विद्यमानपूर्वाच्च' इति ङीपि प्रतिषिद्धे टाबेव भवति ॥ ४० ॥

जातेश्च ॥ कठीभार्य इति । कठशब्दात् 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । जातित्वं त्वस्य 'गोत्रञ्च चरणैः सह' इति लक्षणेन ।

अयमित्यादि । 'भस्याढे तद्धिते' इत्यौपसङ्ख्यानिको यः पुंवद्भावस्तस्यायं प्रतिषेधो नेष्यते । यस्मादस्य प्रतिषेधस्य बाधनार्थमुत्तरसूत्रे पुंवदिति योगविभागः कर्त्तव्य इत्यभिप्रायः ॥ ४१ ॥

### पदमञ्जरी

ङीष्, दीर्घकेशी ।

'सहनञ्विद्यमानपूर्वाच्च' इति प्रतिषेधादकेशा ॥ ४० ॥

जातेश्च ॥ कठबह्वृचयोः 'गोत्रं च चरणैः सह' (म० भा० ४.१.६३) इति जातित्वान् ङीष् ।

अयमित्यादि । व्याख्यानमत्र शरणम् ॥ ४१ ॥

### भावबोधिनी

कृत्वसुचः" सूत्र से पुंवद्भाव की प्राप्ति है । ] दीर्घकेशीयते । श्लक्ष्णकेशीयते । [इनमें दीर्घकेशी इव आचरति, श्लक्ष्णकेशी इव आचरति इन अर्थों में "क्यङ्मानिनोश्च" सूत्र से प्राप्त होने वाले पुंवद्भाव का निषेध होता है । ]

स्वाङ्गवाचक से परे इसका क्या फल है ? पटुभार्याः । [पट्वी भार्या यस्य सः—इसमें 'पटवी' स्वाङ्गवाचक नहीं अपि तु गुणवाचक है । अतः पुंवद्भाव का निषेध नहीं होता है ।] ईकार = ईकारान्त का—इसका क्या फल है ? अकेशभार्यः । [अविद्यमानाः केशाः यस्याः सा—इस अर्थ में समास के बाद प्राप्त ङीप् का प्रतिषेध "सहनञ्विद्यमानपूर्वाच्च" सूत्र से होता है । अतः टाप् होकर 'अकेशा' बनता है । अकेशा भार्या यस्य सः—इसमें प्राप्त पुंवद्भाव होता ही है क्योंकि स्त्री वाचक होने पर भी इकारान्त नहीं है ।]

मानिन् परे न होने पर—इसका क्या फल है ? दीर्घकेशमानिनी । [दीर्घकेशाम् आत्मानं मन्यते—इस अर्थ में दीर्घकेशाम् उपपद मन् धातु, से णिनि प्रत्यय, उपपद समास, ङीप् होता है । मानिनी परे हैं । अतः पुंवद्भाव का प्रतिषेध नहीं होता है । 'दीर्घकेशी' का पुंवद्भाव होकर—'दीर्घकेश-मानिनी' बनता है । ] ॥ ४० ॥

जातिवाचक स्त्रीलिङ्ग शब्द का भी पुंवद्भाव नहीं होता है, मानिनी से भिन्न शब्द के परे रहते । [यहाँ पारिभाषिक जाति का ग्रहण है । ] उदा० कठीभार्यः । बह्वृचीभार्यः । कठीपाशा । बह्वृचीपाशा । कठीयते । बह्वृचीयते । [ इन सभी में पूर्व सूत्र के उदा० के समान प्राप्त पुंवद्भाव का निषेध हो जाता है । ]

मानिनी परे न होने पर—इसका क्या फल है ? कठमानिनी । बह्वृचमानिनी । [ यहाँ से कठीम् आत्मानं मन्यते इस अर्थ में पूर्वोक्त रीति से णिनि करने पर 'मानिनी' बनता हैं । पुंवद्भाव हो जाता है । ]

औपसंख्यानिक पुंवद्भाव का प्रतिषेध यह नहीं इष्ट है अर्थात् वहाँ होता है । [ "भस्याढे तद्धिते" सूत्र से प्राप्त पुंवद्भाव का प्रतिषेध इससे नहीं होता है । उसमें पुंवद्भाव होता ही है— ] हस्तिनीनां समूहः—हास्तिकम् ।

## २९०४. पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥ (८४६)

**कर्मधारये समासे जातीय, देशीय—इत्येतयोश्च प्रत्यययोर्भाषितपुंस्कादनूङ् स्त्रियाः पुंवद्भवति । प्रतिषेधार्थोऽयमारम्भः[1] ।**

**'न कोपधायाः' (६.३.३७) इत्युक्तम्, तत्रापि भवति । पाचकवृन्दारिका । पाचकजातीया । पाचकदेशीया ।**

**'संज्ञापूरणयोश्च' (६.३.३८) इत्युक्तम्, तत्रापि भवति । दत्तवृन्दारिका । दत्तजातीया । दत्तदेशीया । पूरण्याः—पञ्चमवृन्दारिका । पञ्चमजातीया । पञ्चमदेशीया ।**

### न्यासः

**पुंवत् कर्मधारयजातीयदेशीयेषु** ॥ ननु च कर्मधारये 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः सिद्धः, जातीयदेशीयशब्दयोरपि 'तसिलादिष्वाकृत्वसुचः' इत्यादिना, तत् किमर्थोऽयमारम्भः ? इत्यत आह—**प्रतिषेधार्थोऽयमारम्भ इति** । प्रतिषेधविषयः प्रतिषेधशब्देनोक्तः । साहचर्यात् प्रतिषेधोर्थः प्रयोजनं यस्येति स तथोक्तः । यत्र विषये प्रतिषेध उक्तस्तत्र पुंवद्भावः प्रयोजनमित्यर्थः । अथवा—अर्थशब्दो निवृत्ताविह वर्त्तते, यथा—मशकार्थो धूम इति । तेनायमर्थो भवति—प्रतिषेधनिवृत्त्यर्थोऽयमारम्भ इति ।

### पदमञ्जरी

**पुंवत् कर्मधारयजातीयदेशीयेषु** ॥ ननु कर्मधारये 'स्त्रियाः पुंवत्' इत्यादिना सिद्धः पुंवद्भावः जातीयदेशीययोरपि तसिलादिष्विति, किमर्थोऽयमारम्भः ? इत्यत आह—**प्रतिषिद्धार्थोऽयमिति** । प्रतिषिद्धोऽपि पुंवद्भावो यथा स्यादित्येवमर्थमित्यर्थः । **प्रतिषेधार्थोऽयमिति** पाठे प्रतिषेधविषयः प्रतिषेधशब्देनोक्तः । निवृत्तिवचनो वार्थशब्दः ।

### पदमञ्जरी

[ पुंवद्भाव होने से "अचित्तहस्तिधेनोष्ठक् ( ४।२।४७ ) सूत्र से ठक् करने पर पुंवद्भाव हो जाने से हस्तिन्—ठ = इक, वृद्धि, टिलोप करने पर रूप बनता है । इसलिये हस्तिनीनां समूहः, हस्तिनां समूहः—दोनों में एक ही रूप बनता है ] ॥ ४१ ॥

कर्मधारयसमास में तथा जातीय और देशीय इन प्रत्ययों के परे रहने पर भाषितपुंस्क से अनूङ् स्त्री शब्द का पुंवद्भाव नहीं होता है, प्रतिषेध के लिये यह सूत्र बनाया गया है । [ भाव यह है कि जिनमें पुंवद्भाव का प्रतिषेध कहा गया है वहाँ भी पुंवद्भाव का विधान करने के लिये यह सूत्र बनाया गया है । यह बात आगे के उल्लेख से स्पष्ट । ]

"न कोपधायाः" (ककारोपध स्त्री शब्द का पुंवद्भाव नहीं होता है । पा० सू० ६।३।३७) यह कहा गया है, वहाँ भी (प्रस्तुत स्थिति में) पुंवद्भाव होता है । उदा० पाचकवृन्दारिका । [पाचिका चासौ वृन्दारिका—इस कर्मधारय में पुंवद्भाव होता है । निषेध नहीं होता है ।] पाचकजातीया । पाचकदेशीया । [ इनमें भी प्रतिषेध न होकर पुंवद्भाव होता ही है । ]

"संज्ञापूरण्योश्च" (संज्ञावाचक तथा पूरण प्रत्ययान्त स्त्री शब्द का पुंवद्भाव नहीं होता है । ६।३।३८) यह कहा गया है किन्तु इनमें भी होता है । उदा० दत्तवृन्दारिका । [ दत्ता चासौ वृन्दारिका च । यहाँ संज्ञा शब्द का भी पुंवद्भाव हो जाता है । ] पूरणप्रत्ययान्त के उदा० पञ्चमवृन्दारिका । [ पञ्चमी चासौ वृन्दारिका—यहाँ पुंवद्भाव होता है । पञ्चमजातीया । पंचमदेशीया । [ इनमें भी पुंवद्भाव हो जाता है । ]

---

१. भाष्ये तु 'प्रतिषिद्धार्थोऽयमारम्भः' इति पाठः । पदमञ्जर्यामपि भाष्यानुसारी पाठः । न्यासे काशिकानुसारी पाठ इति बोध्यम् ।

**'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' (६.३.३९) इत्युक्तम्, तत्रापि भवति। स्रौघ्नजातीया। स्रौघ्नदेशीया।**

**'स्वाङ्गाच्चेतोऽमानिनि' (६.३.४०) इत्युक्तम्, तत्रापि भवति। श्लक्ष्णमुखवृन्दारिका। श्लक्ष्णमुखजातीया। श्लक्ष्णमुखदेशीया।**

**'जातेश्च' (६.३.४१) इत्युक्तम्, तत्रापि भवति। कठवृन्दारिका। कठजातीया। कठदेशीया।**

**भाषितपुंस्कादित्येव—खट्वावृन्दारिका।**

**अनूङित्येव—ब्रह्मबन्धूवृन्दारिका॥**

*** कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः * (का० वा० १)। कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। मृग्याः क्षीरं मृगक्षीरम्। काक्याः शावः काकशावः।**

**न्यासः**

**भाषितपुंस्कादित्येवेति।** यदि 'भाषितपुंस्कादनूङ्' इति च नानुवर्त्तते, तदाऽभाषितपुंस्कार्थमनूङर्थञ्चेदं वचनं स्यात्, न प्रतिषेधार्थम्। एवञ्च खट्वावृन्दारिका, ब्रह्मबन्धूवृन्दारिकेत्यत्रापि पुंवद्भावः स्यात्। तस्माद् भाषितपुंस्कादनूङित्यनुवर्त्तनीयम्।

**कुक्कुट्यादीनामित्यादि।**[1] उत्तरपदस्यान्तादेरस्त्रीत्वादसामानाधिकरण्याच्च पुंवद्भावो न प्राप्नोतीत्युपसङ्ख्यायते। न वेत्यनेनोपसङ्ख्यानं प्रत्याचष्टे—न वा वक्तव्यः, कस्मात्? अस्त्रीपूर्वपदस्य विवक्षितत्वात्।

**पदमञ्जरी**

**कुक्कुट्यादीनामित्यादि।** अस्त्र्यर्थमसमानाधिकरणार्थं वचनम्। **न वेत्यादि।** उपसंख्यानं प्रत्याचष्टे। एवं न वा वक्तव्यम्, किं कारणम्? स्त्रीपूर्वपदस्याविवक्षितत्वात्। नात्र स्त्रीलिङ्गं पूर्वपदं विवक्षितम्; उभयोरण्डमुभयोः पदम्, तत्र प्रकरणादिना स्त्रीत्वावसायः आरभ्यमाणेऽपि पुंवद्भावे समाश्रयणीयः, अनारम्भेऽपि तथा भविष्यति। यदि तर्हि स्त्रीलिङ्गेन समासः क्रियते तदा स्त्रीप्रत्ययस्य श्रवणं प्राप्नोति? एवं तर्ह्यनभिधानात् स्त्रीलिङ्गेन समासो न भविष्यति। यद्यपि तावदत्रैतच्छक्यते वक्तुम्, इह तु कथं मृग्या क्षीरं मृगक्षीरमिति,

**भावबोधिनी**

'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' (वृद्धि का निमित्त है जिसमें ऐसा तद्धित प्रत्यय यदि रक्त (रंगा हुआ) अर्थ में और विकार अर्थ में नहीं किया गया है, तो तदन्त स्त्री शब्द का पुंवद्भाव नहीं होता है (६।३।३९) यह कहा है, वहाँ भी पुंवद्भाव होता है। उदा० स्रौघ्नजातीया। स्रौघ्नदेशीया। [यहाँ स्रुघ्ने भवा—इस अर्थ में अण् प्रत्यय वाले 'स्रौघ्नी' का पुंवद्भाव हो जाता है।] "स्वाङ्गाच्चेतोऽमानिनि" (स्वाङ्गवाचक से उत्तरवर्त्ती जो ईकार तदन्त स्त्री शब्द का पुंवद्भाव नहीं होता है, मानिन् से भिन्न के परे रहते। ६।३।४०) यह कहा है, इसमें भी होता है श्लक्ष्णमुखवृन्दारिका। श्लक्ष्णमुखजातीया श्लक्ष्णमुखदेशीया। [श्लक्ष्णमुखी चासौ वृन्दारिका—यहाँ भी पुंवद्भाव होता है।]

"जातेश्च" (और जातिवाचक स्त्रीशब्द का पुंवद्भाव नहीं होता है। ६।३।४१) यह कहा है, वहाँ भी होता है। उदा०—कठवृन्दारिका। कठजातीया। कठदेशीया। [कठी चासौ वृन्दारिका—यहाँ पुंवद्भाव होता है।]

भाषितपुंस्क से ही (होता है)—खट्वावृन्दारिका। [यहाँ खट्वा भाषितपुंस्क नहीं है क्योंकि यह नित्य स्त्रीलिङ्ग है। अतः पुंवद्भाव नहीं होता है।] अनूङ् का नहीं—ब्रह्मबन्धूवृन्दारिका। [यहाँ ऊङ् प्रत्ययान्त है। अतः पुंवद्भाव नहीं होता है।]

* कुक्कुटी आदि का अण्डादि परे पुंवद्भाव कहना चाहिए। * उदा०—कुक्कुट्या अण्डम्—कुक्कुटाण्डम्। [कुक्कुटी का पुंवद्भाव करने पर कुक्कुट + अण्ड = कुक्कुटाण्डम्। इसी प्रकार आगे भी समझना चाहिए।] मृग्याः

---

१ "उत्तरपदस्याण्डादे" रित्युचितः पाठः।

**❀ न वाऽस्त्रीपूर्वपदस्य विवक्षितत्वात् (का० वा० २)। ❀ स्त्रीत्वेन विना पूर्वपदार्थोऽत्र जातिः सामान्येन विवक्षितः।**

**❀ पुंवद्भावाद् ह्रस्वत्वं खिद्घादिषु भवति विप्रतिषेधेन ❀ (म० भा०)। खित्—कालिम्मन्या। हरिणिम्मन्या। घादि—पट्वितरा। पट्वितमा। पट्विरूपा। पट्विकल्पा। क—पट्विका। मृद्विका।**

**इहेडबिड्, दरद्, पृथ, उशिजित्येते जनपदशब्दाः क्षत्रियवचनाः। तत्र तद्राजप्रत्ययस्य स्त्रियाम्**

**न्यासः**

अस्त्रीलिङ्गस्य पूर्वपदस्य विवक्षितत्वादित्यभिप्रायः। अस्यैवार्थं विस्पष्टीकर्तुमाह—**स्त्रीत्वेन विनेत्यादि**। अत्र हि मयूरादिजात्यन्तरस्य निवृत्तिर्विवक्षिता। जात्यन्तरनिवृत्तिः शक्यत एव कर्तुम्। तथा हि मृगमांसमित्युक्ते, अन्तरेणापि लिङ्गविशेषोपादानं जात्यन्तरस्य व्यवच्छेद उपपद्यते—मृगजातिसम्बन्धि मांसम्, नान्यजातिसम्बन्धीति। तस्मात् स्त्रीत्वमत्रानुपकारित्वान्न विवक्षितम्। अतः स्त्रीत्वेन विना पूर्वपदस्यार्थोऽत्र कुक्कुटाण्डादौ जातिसामान्येन स्त्रीत्वाद्विशेषविहितो विवक्षित इत्यर्थः। ततश्चास्त्रीलिङ्गा एवात्र कुक्कुटादयः शब्दा अण्डादिभिः शब्दैः समस्यन्त इति भावः। कः पुनरसौ पूर्वपदार्थः? कुक्कुटादिजात्या व्यवच्छिन्नं द्रव्यमात्रम्।

**पुंवद्भावादित्यादि**। अत्र खिति पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेन भवतीति पूर्वमेव व्याख्यातम्। घादिषु तु व्याख्यायते। घादिषु ङ्यो ह्रस्वो भवतीत्यस्यावकाशः—नर्त्तकितरा, नर्त्तकितमा; नर्त्तकिरूपा, नर्त्तकिकल्पेति; पुंवद्भावस्यावकाशः—दर्शनीयतरा, दर्शनीयतमा; दर्शनीयरूपा, दर्शनीयकल्पेति; इहोभयं

**पदमञ्जरी**

नहि पुंसः क्षीरेण सम्बन्धोऽस्ति? अत्रापि जात्यन्तरनिवृत्तिपरत्वाच्चोदनायाः स्त्रीत्वमकिञ्चित्करत्वादविवक्षितम्। यत्र तु लिङ्गविशेष उपकारकस्तत्रासौ विवक्षित एव यथा—अजामूत्रेण पर्युक्षितं दातव्यमिति। **पूर्वपदार्थोऽत्र जातिरिति**। कुक्कुटाण्डादौ पूर्वपदार्थो जातिः, स च सामान्येन स्त्रीत्वादिविशेषरहितेन रूपेण विवक्षित इत्यर्थः।

**खिद्घादिष्विति**। तत्र खिति विप्रतिषेधः 'स्त्रियाः पुंवत्' इत्यत्रैवोदाहृतः। घादिषु नद्या ह्रस्वो भवतीत्यस्यावकाशः—नर्तकितरा, नर्तकितमा, नर्तकिरूपा, नर्तकिकल्पा; यत्र पुंवद्भावः प्रतिषिध्यते 'न कोपधायाः' इति—तसिलादिष्विति। पुंद्भावस्यावकाशः यद् ङ्यन्तं न भवति—दर्शनीयतरेत्यादि। पट्वितरेत्यादावुभयप्रसङ्गे विप्रतिषेधः। केऽणो ह्रस्वो भवतीत्यावकाशः—नर्तकिका, पुंवद्भावस्यावकाशः—दरदोऽ-

**भावबोधिनी**

पदम्—मृगपदम्। मृग्याः क्षीरम्-मृगक्षीरम्। काक्याः शावः—काकशावः। [ इनमें मृगी और काकी का पुंवद्भाव हो जाता है। ]

❀ अथवा पूर्वोक्तवचन की आवश्यकता नहीं है क्योंकि अस्त्री पूर्वपद की विवक्षा की जाती है। ❀ वहाँ लक्ष्यों में स्त्रीत्व को छोड़ कर पूर्व पदार्थ जाति सामान्य रूप से विवक्षित है। [ अतः स्त्री का पुंवद्भाव करने की आवश्यकता नहीं है। इनमें कुक्कुटादि जाति से व्यवच्छिन्न केवल द्रव्य ही विवक्षित रहता है। ]

❀ खित् तथा घ आदि के परे रहते पुंवद्भाव की अपेक्षा ह्रस्वत्व विप्रतिषेध से होता है। अर्थात् पुंवद्भाव न होकर ह्रस्व ही होता है। ❀ उदा०—खित्—कालिम्मन्या। हरिणिम्मन्या। [ कालीम् आत्मानं मन्यते, (काली एवाहमिति मन्यते)—इस अर्थ में "आत्ममाने खश्च" सूत्र से 'खश्' = अ प्रत्यय "दिवादिभ्यः श्यन्" से श्यन् = य प्रत्यय करने पर—कालीम् मन्य, उपपद समास, टाप् आदि करने पर पुंवद्भाव तथा ह्रस्व की प्राप्ति होने पर ह्रस्व ही होता है। मुम् आगम, तथा टाप् प्रत्यय करने पर कालिम्मन्या इसी प्रकार हरिणिम्मन्या भी होता है। ]

**'अतश्च' (४.१.१७७) इति लुकि कृते इडबिट्वृन्दारिकेति विगृह्य समासः क्रियते। ततः पुंवद्भावेन ऐडबिडादयः पुंशब्दाः क्रियन्ते। ऐडबिडवृन्दारिका। औशिजवृन्दारिका। दारदवृन्दारिका। पार्थवृन्दारिका॥**

**न्यासः**

प्राप्नोति—पट्वितरा, पट्वितमा; पट्विरूपा, पट्विकल्पेति, विप्रतिषेधेन ह्रस्वत्वं भवति। 'केऽणः' इति ह्रस्वस्यावकाशः—नर्तकिकेति, अज्ञातादावर्थे 'प्रागिवात् कः' पुंवद्भावस्यावकाशः—दारदिकेति। दरच्छब्दस्यात्र के परतः 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावेन दारदशब्दो भवति। अतष्टापि कृते 'प्रत्ययस्थात्, कात्' इत्यादिनेत्त्वमिहोभयं प्राप्नोति। **पट्विकेति**। अत्र विप्रतिषेधेन ह्रस्वत्वं भविष्यति। के न पुनः पुंवद्भावः, यावता तसिलादिषु परिगणनं कृतम्, न च तत्र कप्रत्ययः परिगणितः? एतद् **भाष्यकारः** प्रष्टव्यो यः परिगणनं करोति, न तु **सूत्रकारः**।

पूर्वं यस्य सिद्धयेऽनूङिति प्रसज्यप्रतिषेध आश्रितस्तद्दर्शनार्थमाह—**इहेत्यादि। तत्र तद्राजप्रत्ययस्येत्यादि।** तत्रेडविट्, पृथु—इत्येताभ्याम् 'जनपदशब्दात् क्षत्रियादञ्' इति विहितस्याञस्तद्राजप्रत्ययस्य **'अतश्च'** इति लुक्। दरद्, उशिजित्येताभ्यां तु 'द्व्यञ्मगध' इत्यादिना विहितस्याणः। इडविट् चासौ वृन्दारिका चेति विगृह्य समास इति। **विशेषणेत्यादिना। अत्रैडविडादय** इति आदिशब्देन दारदः, पार्थः, औशिज इत्येते गृह्यन्ते॥ ४२॥

**पदमञ्जरी**

पत्यं स्त्री, 'द्व्यञ्मगध' इत्यण्, तस्य 'अतश्च' लुक्, ततः 'प्रागिवात्कः', तसिलादिष्विति पुंवद्भावाद्दारदशब्दः, 'प्रत्ययस्थात्' इतीत्वं दारिदिका। ननु च परिगणितास्तसिलादयः, न च कप्रत्ययस्तेषु समस्ति? एवं तर्हि विप्रतिषेधादेव कप्रत्ययोऽपि तत्राभ्युपगम्यत इति अनुमीयते, पट्विका मृट्विकेत्यादावुभयप्रसङ्गे परत्वाद् ह्रस्वः, सर्वत्र चात्र सकृदित्याश्रयणाद् पुंवद्भावाभावः।

अनूङिति यदुक्तं तस्य प्रयोजनं दर्शयति—**इहेत्यादि। तद्राजप्रत्ययस्येति।** ये द्व्यचस्तेषु 'द्व्यञ्मगध' इत्यण्, शेषेषु 'जनपदशब्दात्' इत्यञ्, पृथ इति थकारान्तः॥ ४२॥

**भावबोधिनी**

घ (तरप्, तमप्) आदि परे रहते भी ह्रस्व ही होता है। उदा०—पट्वितरा। पट्वितमा। [ पट्वी का पुंवद्भाव न होकर ह्रस्व होता है। आदि—शब्द से रूपप् कल्पप् तथा क प्रत्यय लिये जाते हैं। ] पट्विरूपा। पट्विकल्पा। पट्विका। मृद्विका। [ इनमें ह्रस्व ही होता है। ]

**विमर्श**—भाष्य में "पुंवद्भावात् ह्रस्वत्वं खिद्घादिकेषु" ऐसा वचन है। काशिकाकार ने 'आदि' शब्द से ही 'क' प्रत्यय का भी ग्रहण मानकर वार्तिक में 'क' का उल्लेख नहीं किया है। तसिलादि में 'क' प्रत्यय का परिगणन नहीं किया गया है। अतः इसमें पुंवद्भाव की प्राप्ति नहीं है। तब विप्रतिषेध का प्रसङ्ग नहीं है। अतः 'क' प्रत्यय के ग्रहण का भी अनुमान करना चाहिए—यह प्रदीप, न्यास तथा पदमञ्जरी सभी का कथन है।

(अनु०)—वहाँ इडविड्, दरद्, पृथ, उशच्—ये जनपदवाचक क्षत्रियवाचक शब्द हैं। इनमें तद्राजप्रत्यय का स्त्रीलिङ्ग में "अतश्च" सूत्र से लोप (लुक्) कर देने पर—इडविड् वृन्दारिका—ऐसा विग्रह करके समास किया जाता है। इसके बाद पुंवद्भाव से ऐडविड् आदि शब्द पुंल्लिङ्ग किये जाते हैं। ऐडविडवृन्दारिका। दारदवृन्दारिका। पार्थवृन्दारिका। [ यहाँ कर्मधारय में पुंवद्भाव किया जाता है। ]॥ ४२॥

## २९२१. एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ५९ ॥ (९९७)

'उदकस्योदः' इति वर्त्तते । एकः = असहायः तुल्यजातीयेनानन्तरेण हलादिना । हल् आदिर्यस्योत्तरपदस्य तदेकहलादिः, तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्यामुदकस्य 'उद' इत्ययमादेशो भवति । उदकुम्भः, उदककुम्भः । उदपात्रम् । उदकपात्रम् ।

एकहलादाविति किम् ? उदकस्थालम् । पूरयितव्य इति किम् ? उदकपर्वतः ॥

**न्यासः**

**एकहलादौ पूरयितव्येऽन्यतरस्याम्** ॥ यद्येकशब्दः सङ्ख्यावचन इह गृह्यते, तदानर्थकं तस्य ग्रहणं स्यात् । न हि क्वचित् द्वौ बहवो वा हल आदिभूताः सम्भवन्ति, यद्व्यवच्छेदार्थमेकग्रहणं क्रियते । तस्मादसहायवचनोऽयमेकशब्दः । एवमपि यः कश्चिदविशिष्ट एकोऽसहायो हल् आदिर्यस्य तदेकहलाद्युत्तरपदं गृह्येत, तदोदकस्थानमित्यत्रापि स्यात् । अत्रापि हि सकारोऽसहाय एव एकहल् । यद्यनेके वर्णा युगपदुच्चार्येरन्, उच्चारिता वा वर्णा न प्रध्वंसेरन्, तदा ससहायस्यापि स्यादादित्वम् । न चैवम्; यतो वर्णा न युगपदुच्चार्यन्ते, ते चोच्चारितप्रध्वंसिनः । तस्मान्नास्त्येव क्वचित् किञ्चिदनेकहलादित्वं यद्व्यवच्छेदार्थमेकहलादावित्युच्यते । उक्तञ्चेदम् । अतोऽस्मादेव वचनाद् विशिष्टमात्रैकहलादित्वं विवक्षितमित्येतत् सर्वं चेतसि कृत्वा तदेव विशिष्टं दर्शयितुमाह—**एकोऽसहाय इत्यादि** । यश्चातुल्यजातीयेनाप्यचा विनैको हल् स आदिर्यस्येति तदेकहलादि । तुल्यजातीयेन चाव्यवहितेनापि यस्य तदेकहलादोहाश्रीयेत तदा न क्वचित् स्यात्; तथाविधस्योत्तरपदस्य पूरयितव्यवाचिनोऽभावात्, उच्यते चेदम् । तस्माद् वचनप्रामाण्यात् तुल्यजातीयेन हलाऽनन्तरेणाव्यवहितेन विना यो वर्त्तते सोऽसहाय एवेहैकशब्देनासहायवाचिना विवक्षित इति गम्यते । एवंविधो हलादिर्यस्य तदेकहलादि । न चैवंविधः स्थानशब्दस्यादिर्हल्स्तीत्येकहलादिग्रहणेन स्थानशब्दो निवर्त्तते । **पूरियतव्यवाचिनीति** । उदकादिना द्रव्येणान्तर्व्याप्तव्यः पूरयितव्य इत्युच्यते । तद्वक्तुं शीलमस्येति ताच्छीलिको णिनिः ॥ ५९ ॥

**पदमञ्जरी**

**एकहलादौ पूरयितव्येऽन्यतरस्याम्** ॥ **एकोऽसहाय इति** । यद्ययमेकशब्दः संख्यावचनः स्यात्, तर्ह्येकेत्यनर्थकं स्यात्, न हि द्वौ च बहवो वा आदिभूताः क्वचित्सम्भवन्ति, तस्मादसहायवचन एकशब्दः । नन्वेवमप्यस्य व्यावर्त्यं न सम्भवति, कथम् ? एकैकवर्णवशवर्तित्वाद्वाचः, यदि ह्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्तदा स्थालीशब्दोऽनेकहलादिः; यदि वा क्रमेणोच्चारिता अपि वर्णा अवतिष्ठेरन्, तदापि युगपद्वर्णयोरुपलम्भादादित्वं स्यात्, यतस्तु नोच्चारणे युगपदुलब्धौ वा वर्णानां यौगपद्यम्, तस्मादेकस्यैवादित्वमिति न किञ्चिदेकग्रहणेन शक्यं व्यवच्छेत्तुम् ? एवं तर्ह्येकग्रहणसामर्थ्याद्विशिष्टमसहायत्वमाश्रीयते । किं पुनस्तत् ? आनन्तर्यम् । तदेतदाह—**तुल्यजातीयेनानन्तरेणेति** । हल्त्वेन तुल्यजातीयत्वेन तुल्यस्थानादिभिर्भिन्नजातीये व्यवहिते च सहायत्वाप्रसिद्धेरेवमुक्तम् ॥ ५९ ॥

**भावबोधिनी**

'उदकस्योदः' (उदक का उद आदेश होता है)—इसकी अनुवृत्ति होती है । एक = असहाय, तुल्यजातीय अव्यवहित हलादि से । हल् आदि है जिस उत्तरपद का वह एकहलादि है, ऐसे एकहलादि पूरयितव्यवाची के परे रहते उदक का 'उद' यह आदेश विकल्प से होता है । उदा० उदकुम्भः, उदककुम्भः । उदपात्रम्, उदकपात्रम् । [इनमें कुम्भ और पात्र में एक हल् आदि में है । अतः विकल्प से 'उद' आदेश होता है ।]

एकहलादि में—इसका क्या फल है ? उदकस्थालम् । [यहाँ स्थाल में दो हल् आदि में हैं ।] पूरयितव्य—इसका क्या फल है ? उदकपर्वतः । [पर्वत पूरणीय नहीं होता है । अतः उदक का उद आदेश नहीं होता है ।] ॥ ५९ ॥

## २९२२. मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥ ६० ॥ (९९८)

**मन्थ, ओदन, सक्तु, बिन्दु, वज्र, भार, हार, वीवध, गाह—इत्येतेषूत्तरपदेषूदकस्य 'उद' इत्ययमादेशो भवति अन्यतरस्याम्। उदकेन मन्थ उदमन्थः, उदकमन्थः। ओदन—उदकेनौदनः उदौदनः, उदकौदनः। सक्तु—उदकेन सक्तुः उदसक्तुः, उदकसक्तुः। बिन्दु—उदकस्य बिन्दुः उदबिन्दुः उदकबिन्दुः। वज्र— उदकस्य वज्रः उदवज्रः, उदकवज्रः। भार—उदकं बिभर्तीति उदभारः, उदकभारः। हार—उदकं हरतीति उदहारः, उदकहारः। वीवध—उदकस्य वीवधः उदवीवधः, उदकवीवधः। गाह—उदकं गाहत इति उदगाहः, उदकगाहः ॥**

## २९२३. इको ह्रस्वोऽङ्यो गालवस्य ॥ ६१ ॥ (९९९)

### न्यासः

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥** द्रवद्रव्यसंपृक्ताः सक्तवो मन्थ इत्युच्यते। तत्र मन्थशब्दोऽयं यद्यव्युत्पन्नं प्रातिपदिकम्, तदोदकेन मन्थ इति 'तृतीया' इति योगविभागात् समासः। अथ व्युत्पाद्यते—मथ्यत इति मन्थः, तदा 'कर्तृकरणे कृता बहुलम्' इति समासः। सक्त्वोदनाभ्याम् 'अन्नेन व्यञ्जनम्' इति समासः। बिन्दुवज्रवीवधैः षष्ठीति भारहारगाहैरणन्तैः 'उपपदमतिङ्' इति ॥ ६० ॥

**इको ह्रस्वोऽङ्यो गालवस्य ॥ ग्रामणिपुत्र इति।** ग्रामं नयतीति 'सत्सूद्विष' इत्यादिना क्विप्। 'अग्रग्रामाभ्याञ्च नयतेः' इति णत्वम्। **गार्गीपुत्र इति।** 'यञश्च' इति गार्ग्यशब्दात् ङीप्, 'यस्येति च' इत्यकारस्य लोपः, 'हलस्तद्धितस्य' इति यकारस्य च।

### पदमञ्जरी

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥** द्रवद्रव्यसंयुक्ताः सक्तवः = मन्थः। **उनकेन मन्थ इति।** तृतीयेति योगविभागात्समासः। अथ तु मथ्यत इति क्रियाशब्दः, तदा 'कर्तृकरणे कृता बहुलम्' इति समासः, सक्त्वौदनाभ्याम् 'अन्नेन व्यञ्जनम्' इति, बिन्दुवज्रवीवधैः षष्ठीति भारहारगाहैः कर्मण्यणन्तैः 'उपपदमतिङ्' इति समासः; उदकस्य वज्रं क्रूरम्, यदपां क्रूरमिति दर्शनात्। अन्येऽपि यथासम्भवं समासाः भवन्त्येव—[1]उदकं वज्रमिव भिन्दानो हृदयमसाहि नोदवज्रः ॥ ६० ॥

**इको ह्रस्वोऽङ्यो गालवस्य ॥ ग्रामणिपुत्र इति।** 'सत्सूद्विष' इत्यादिना क्विप्, 'अग्रग्रामाभ्यान्नयतेः' (का०वा० ५०६४) इति णत्वम्। **गार्गीपुत्र इति।** गार्ग्यशब्दाद् 'यञश्च' इति ङीप्, 'यस्येति च', 'हलस्तद्धितस्य'।

### भावबोधिनी

मन्थ, ओदन, सक्तु, बिन्दु, वज्र, भार, हार, वीवध, गाह—ये उत्तरपद रहने पर उदक का 'उद' यह आदेश विकल्प से होता है। उदा०—(१) उदकेन मन्थः—उदमन्थः उदकमन्थः [ तृतीया-समास में उदक का उद आदेश होता है। ] (२) ओदन—उदकेन ओदनः—उदौदनः। उदकौदनः। (३) सक्तु—'उदकेन सक्तुः—उदसक्तुः, उदकसक्तुः। (४) बिन्दु—उदकस्य बिन्दुः—उदबिन्दुः, उदकबिन्दुः। (५) वज्र—उदकस्य वज्रः—उदवज्रः, उदकवज्रः। (६) भार—उदकं बिभर्त्ति—इसमें उदभारः, उदकभारः। (७) हार—उदकं हरति इसमें—उदहारः, उदकहारः। (८) वीवध—उदकस्य वीवधः—उदवीवधः उदकवीवधः। (९) गाह—उदकं गाहते—इस अर्थ में उदगाहः, उदकगाहः। [ सभी में विकल्प से उद आदेश होने से दो-दो रूप होते हैं। ] ॥ ६० ॥

इगन्त अङ्यन्त का ह्रस्व होता है उत्तरपद परे रहते गालव आचार्य के मत में विकल्प से। उदा०—ग्रामणिपुत्रः, ग्रामणीपुत्रः। [ षष्ठीसमास के बाद विकल्प से ह्रस्व होने से दो रूप होते हैं। ] ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः।

---

१. अत्र 'उदकं वज्रमिव' इत्यर्थकथनं विग्रहवाक्येनोदवज्रशब्दस्य, शेषं तु 'भिन्दानो हृदयमसाहि नोदवज्रः' इत्युद्धरणं बोध्यमिति केचित्।

**इगन्तस्याङ्यन्तस्योत्तरपदे ह्रस्वो भवति गालवस्याचार्यस्य मतेनान्यतरस्याम् । ग्रामणिपुत्रः, ग्रामणीपुत्रः । ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः ।**

**इक इति किम् ? खट्वापादः । मालापादः । अङ्य इति किम् ? गार्गीपुत्रः । वात्सीपुत्रः ।**

**गालवग्रहणं पूजार्थम्, 'अन्यतरस्याम्' इति हि वर्तते ।**

**व्यवस्थितविभाषा चेयम् । तेनेह न भवति—कारीषगन्धीपुत्र इति ।**

**❀इयङुवङ्भाविनामव्ययानां च न भवति❀—श्रीकुलम्, भ्रूकुलम् । काण्डीभूतम्, वृषलीभूतम् ।**

**भ्रुकुंसादीनां तु भवत्येव—भ्रुकुंसः, भ्रुकुटिः ।**

**अपर आह—❀ भ्रुकुंसादीनामकारो भवतीति वक्तव्यम् ❀ (म० भा०) भ्रकुंसः । भ्रकुटिः ॥**

**न्यासः**

अथ विकल्पार्थमेव गालवग्रहणं कस्मान्न भवति ? इत्याह—**अन्यतरस्यामित्यादि ।**

**कारीषगन्धीपुत्र इति ।** कारीषगन्ध्यायाः पुत्र इति षष्ठीसमासः, 'ष्यङः सम्प्रसारणम्' इत्यादिना सम्प्रसारणम्, 'सम्प्रसारणाच्च' इति परपूर्वत्वम्, 'हलः' सम्प्रसारणस्य इति दीर्घः ।

**इयङुवङ्भाविनामित्यादि ।** इयङुवङौ भाविनौ येषां ते तथोच्यन्ते । **श्रीकुलमिति ।** इयङ्भाविन उदाहरणम् । **भ्रूकुलमिति ।** उवङ्भाविनश्च । **काण्डीभूतम्, वृषलीभूतमिति ।** अव्ययानाम् । काण्डवृषल-शब्दाभ्याम् 'अभूततद्भावे' इत्यादिना च्विः, 'अस्य च्वौ' इतीत्वम् ।

**भ्रुकुंस इति ।** भ्रूश्चासौ कुंसश्चेति विशेषणसमासः । एवं भ्रुकुटिरित्यत्रापि । **वक्तव्यमिति** व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पृषोदरादित्वाद् भ्रकुंसादीनामकारो भविष्यतीति ॥ ६१ ॥

**पदमञ्जरी**

**कारीषगन्धीपुत्र इति ।** 'ष्यङः संप्रसारणम्' 'संप्रसारणस्य' इति दीर्घः ।

**काण्डीभूतमिति ।** 'ऊर्यादिच्विडाचश्च' इति निपातसंज्ञायामव्ययत्वम् । स्त्रीवेषधारी नर्तकः पुरुषः = भ्रुकुंसः ।

इहालाबुकर्कन्धुजम्बुफलमिति फलशब्द उत्तरपदे जम्ब्वा ह्रस्वत्वम्, द्वन्द्वे जम्ब्वामुत्तरपदे कर्कन्ध्वा ह्रस्वत्वम्; अलाब्वास्तु न प्राप्नोति, कर्कन्ध्वा अनुत्तरपदत्वात् ? एवं तर्ह्येवं विग्रहः करिष्यते—अलाबूश्च अलाबुकर्कन्ध्वौ, ते च जम्बूश्च अलाबुकर्कन्धुजम्ब्वः, तासां फलमलाबुकर्कन्धुजम्बुफलमिति, एवमपि जम्ब्वाः पूर्वनिपातः प्राप्नोति । एवं कर्कन्धुजम्ब्वोरपि द्वन्द्वे द्रष्टव्यम् । जम्बुशब्दो राजदन्तादिषु द्रष्टव्यः ॥ ६१ ॥

**भावबोधिनी**

इगन्त का—इसका क्या फल है ? खट्वापादः । मालापादः । [ यहाँ इगन्त न होने से ह्रस्व नहीं होता है । ] अङ्यन्त—इसका क्या फल है ? गार्गीपुत्रः, वात्सीपुत्रः । [ ये ङ्यन्त हैं । अतः ह्रस्व नहीं होता है । ]

गालव का ग्रहण पूजा अर्थात् उनके प्रति सम्मान प्रकट करने के लिये है क्योंकि 'अन्यतरस्याम्' की अनुवृत्ति होती ही है । [अतः विकल्प के लिए नहीं है ।]

यह व्यवस्थित विभाषा है । इस कारण यहाँ ह्रस्व नहीं होता है—कारीषगन्धीपुत्रः ।

* इयङ् तथा उवङ् आदेश जिनके होने वाले हैं उनका तथा अव्ययों का ह्रस्व आदेश नहीं होता है । * उदा० श्रीकुलम् । भ्रूकुलम् । काण्डीभूतम् । वृषलीभूतम् । [ अभूततद्भाव अर्थ में च्वि प्रत्यय होता है "ऊर्यादिच्विडाचश्च" से निपात संज्ञा के कारण अव्यय हो जाता है । ]

परन्तु भ्रुकुंस आदि का तो ह्रस्व होता ही है—भ्रुकुंसः, भ्रुकुटिः ।

अन्य आचार्य कहते हैं— *भ्रुकुंस आदि का अकार आदेश कहना चाहिए ।* भ्रकुंसः । भ्रकुटिः । इस प्रकार तीन रूप हो जाते हैं । ] ॥ ६१ ॥

## २६२४. एक तद्धिते च ॥ ६२ ॥ (१०००)

**एकशब्दस्य तद्धिते उत्तरपदे च ह्रस्वो भवति । एकस्या आगतमेकरूप्यम् । एकमयम् । एकस्या भाव एकत्वम् । एकता । उत्तरपदे—एकस्याः क्षीरम् एकक्षीरम् । एकदुग्धम् ।**

**न्यासः**

**एक तद्धिते च ॥ एकरूप्यमिति ।** 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' इति रूप्यः । **एकमयमिति ।** 'मयट् च' इति मयट् । एकत्वम्, एकतेति । 'तस्य भावस्त्वतलौ' इति त्वतलौ । यदैकशब्दः संख्यापरो भवति तदैतदुदाहरणम् । यदा संख्येयपरो भवति, तदा 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावेनैव सिद्धम् । ननु च गुणमुक्तवान् गुणवचनः, यश्च गुणमात्रमभिधाय तद्विशिष्टं द्रव्यमाह स गुणवचनो भवति । तद्यथा—कृष्णः पटः, शुक्लः पट इति; अयं पुनरेकशब्दो न क्वचिदपि द्रव्यव्यतिरिक्तं गुणमाह, सर्वदा संख्येये द्रव्ये वर्तत इति कृत्वा, तत् कुतोऽस्य पुंवद्भावः ? अयुक्तमिदमभिधीयते; तथा हि—प्रसिद्धिमाश्रित्यैकादयः संख्येयवचना इत्युच्यन्ते, न त्वेषां संख्याने वृत्तिर्नाभ्युपेयेति । तथा हि—'द्व्येकयोर्द्विवचनैकवचने' इत्यत्र त्वेकशब्दः संख्यायामेव प्रयुक्तो न संख्येये द्रव्ये ।

**लिङ्गविशिष्टस्येत्यादि ।** पुंल्लिङ्गो य एकशब्दः स स्वभावत एव ह्रस्वान्त इति न तद्ग्रहणं प्रयोजयति, अपि तु स्त्रीलिङ्गविशिष्टस्यैव । तस्यैव हि ह्रस्वत्वं विधीयमानमर्थवद् भवति । ननु नैतस्याप्येकशब्दस्य य एकारस्तस्य ह्रस्वत्वं विधीयमानमर्थवद्भवति, तत् किमुच्यते लिङ्गविशिष्टस्यैकशब्दस्य ग्रहणं प्रयोजयति ? इत्याह—**अचा गृह्यमाणमित्यादि ।** विशेषविशेष्यभावं प्रति कामचारः । तथा ह्युक्तम्—विशेषणविशेष्यभावयोर्यथेष्टत्वादिति । तत्र यदि गृह्यमाणेनैकशब्देनाज् विशिष्यते—एकाशब्दस्य योऽजिति, तदैकसम्बन्धिन एकारस्य ह्रस्वत्वं विधीयमानमर्थवद्भवति । पुंल्लिङ्गस्याप्येकशब्दस्य ग्रहणं प्रयोजयति । न चात्र गृह्यमाणेनाज् विशिष्यते; एकारस्य ह्रस्वस्यानिष्टत्वात् । न ह्यनिष्टार्था शास्त्रे प्रवृत्तिर्युक्ता, तस्मादचा गृह्यमाण एकशब्दोऽत्र विशिष्यते । तेन लिङ्गविशिष्टस्य ग्रहणम् । एकशब्दस्य ह्रस्वो भवति, किंविशिष्टस्याचः ? अजन्तस्येत्यर्थः । तत्रालोऽन्त्यस्यैव

**पदमञ्जरी**

**एक तद्धिते च ॥** 'एक' इत्यविभक्तिको निर्देशः; समानाधिकरणे हि स्त्रियाः पुंवद्भावेनैव सिद्धत्वात् । व्यधिकरणार्थमिदम् । **एकत्वमिति ।** असहायादिवचनोऽयमेकशब्दः । संख्यावचनस्य तु 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावेनैव सिद्धम् । किं पुनः कारणं स्त्रीलिङ्ग एवोदाह्रियते, न पुनर्यथाश्रुतः पुंल्लिङ्गो नपुंसकलिङ्गो वेति ? तत्राह—**लिङ्गविशिष्टस्येति ।** स्त्रीलिङ्गस्यैव ह्रस्वविधानमर्थवद् भवति, नेतरस्य; तस्य स्वत एव ह्रस्वान्तत्वात् । ननु चास्तु स्वत एवान्तो ह्रस्वः, यस्त्वसावादिरेकारः, तदर्थमितरस्यापि ग्रहणमर्थवत् ? अत आह—**अचेति ।** स्यादेतदेवम्, यदि गृह्यमाणेनैकशब्देन 'अचश्च' इत्युपस्थापितोऽज्विशेष्येत—एकशब्दस्य योऽच्

**भावबोधिनी**

तद्धित और उत्तरपद रहने पर 'एक' शब्द का ह्रस्व होता है । उदा० एकस्या आगतम् ऐकरूप्यम् । [ एक शब्द से 'हेतुमनुष्येभ्योऽन्यतरस्याम्' सूत्र से रूप्य प्रत्यय करने पर प्रस्तुत सूत्र से ह्रस्व होने पर एकरूप्यम् बनता है । ] एकमयम् । [ मयट् तद्धित प्रत्यय है । ] एकस्या भाव—एकत्वम् । [ इसमें त्व तद्धित है । ] एकता । [ यहाँ तल् + टाप् प्रत्यय हैं । ] एकस्याः क्षीरम्—एकक्षीरम् । एकस्या दुग्धम् । [ जब 'एक' शब्द संख्यावाचक होता है तब इसकी आवश्यकता है । संख्येयवाचक होने पर तो 'त्वतलोर्गुणवचनस्य' सूत्र से पुंवद्भाव हो जाता है । ]

एक शब्द का ह्रस्व होना 'प्रातिपदिक के ग्रहण में लिङ्गविशिष्ट का ग्रहण होता है'—इसका प्रयोजक बनता है । यहाँ अच् से गृह्यमाण को विशेषित किया जाता है न कि गृह्यमाण से अच् को । [ अतः अजन्त एका का ही ह्रस्व

**लिङ्गविशिष्टस्य ग्रहणमेकशब्दह्रस्वत्वं प्रयोजयति। अचा हि गृह्यमाणमत्र विशेष्यते, न पुनरच् गृह्यमाणेनेति ॥**

**२९२५. ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६३ ॥ (१००१)**

**ङ्यन्तस्याबन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वो भवति। ङ्यन्तस्य संज्ञायाम्—रेवतिपुत्रः, रोहिणिपुत्रः, भरणिपुत्रः। न च भवति—नान्दीकरः, नान्दीघोषः, नान्दीविशालः। ङ्यन्तस्य छन्दसि—कुमारिदा[1], उर्विदा[1] [कुमारिदा प्रफर्विदा। काठ० ३९.९]। न च भवति—फाल्गुनीपौर्णमासी, जगतीच्छन्दः।**

**आबन्तस्य संज्ञायाम्—शिलवहम्, शिलप्रस्थम्। न च भवति—लोमकागृहम्। लोमकाषण्डम्। आबन्तस्य छन्दसि—अजक्षीरेण जुहोति, ऊर्णमृदा [ऊर्णम्रदा] पृथिवीं विश्वधायसम्। न च भवति—ऊर्णासूत्रेणकवयो वयन्ति ॥**

**न्यासः**

ह्रस्वत्वेन भवितव्यम्, तच्च टाबन्तस्यैव सार्थकम्, न पुंल्लिङ्गस्य; न हि ह्रस्वस्यैव ह्रस्वे विधीयमाने कश्चिदर्थः सिध्यति। इतिकरणो हेतौ। यत एवाचा गृह्यमाण एकशब्दोऽत्र विशिष्यते, तेन लिङ्गविशिष्टस्य ग्रहणमेकशब्दस्य प्रयोजयति ॥ ६२ ॥

**ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ॥ रेवतिपुत्र** इति षष्ठीसमासः। एव **रोहिणिपुत्र** इत्यादावपि। कुमारीं ददातीति **कुमारिदा**। उर्वीं ददातीति **उर्विदा**। 'आतोऽनुपसर्गे कः'। **फाल्गुनीत्यादि**। फाल्गुनी चासौ पौर्णमासी चेति फाल्गुनीपौर्णमासी, 'विशेषणम्' इत्यादिना समासः। एवं **जगतीच्छन्द** इत्यत्रापि।

**शिलवहम्, शिलप्रस्थमिति**। शिलाशब्दस्य वहप्रस्थशब्दाभ्याम् 'षष्ठी' इत्यनेन समासः। **लोमकागृहम्, लोमकाषण्डमिति**। अत्रापि लोमकाशब्दस्य गृहषण्डशब्दाभ्याम्। **अजक्षीरेणेति**। अत्राप्यजाशब्दस्य क्षीरशब्देन। **ऊर्णमृदिति**। ऊर्णासहिता मृद् ऊर्णमृत्। शाकपार्थिवादित्वादुत्तरपदलोपी समासः ॥ ६३ ॥

**पदमञ्जरी**

यत्र कुत्र स्थित इति, इह तूपस्थापितेनाचा गृह्यमाण एकशब्दो विशेष्यते—एकस्य ह्रस्वो भवति। किंविशिष्टस्य अचः? अजन्तस्येति। तत्र 'अलोन्त्यस्य' इत्यन्त्यस्य ह्रस्वेन भाव्यम्, तच्च टाबन्तस्यैवार्थवत्, नेतरस्य। इतिकरणो हेतौ ॥ ६२ ॥

**ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥** बहुलग्रहणात्क्वचिदुत्तरपदेऽपि भवति—अनुगायन्ति नयो गर्भिणय इति। एवं कृत्वा फाल्गुनीपौर्णमासीति प्रत्युदाहरणोपपत्तिः, कर्मधारये पुंवद्भावः प्राप्नोति।

**भावबोधिनी**

होता है नकि 'एक' के एक का। क्योंकि ए का भी ह्रस्व होना सम्भव है। इसलिये यहाँ विशेष्यविशेषणभाव की भी व्यवस्था करनी आवश्यक है। ] ॥ ६२ ॥

ङ्यन्त और आबन्त का संज्ञा तथा छन्दः = वेद में बहुलरूप से ह्रस्व होता है। उदा०—ङ्यन्त का संज्ञा में—रेवतिपुत्रः। रोहिणिपुत्रः। भरणिपुत्रः। ह्रस्व नहीं भी होता है—नान्दीकारः। नान्दीघोषः। नान्दीविशालः। ङ्यन्त का वेद में उदा० कुमारिदा प्रफर्विदा। ह्रस्व नहीं भी होता है—फाल्गुनीपौर्णमासी, जगतीच्छन्दः। [ 'प्रफर्विदा' के स्थान पर कहीं कहीं 'उर्विदा' पाठ है। न्यास में भी यही है। परन्तु काठकसंहिता में 'कुमारिदा प्रफर्विदा।" ( काठ० ३९.९ ) यही पाठ है। ]

आबन्त का संज्ञा में उदा०, शिलवहम् शिलप्रस्थम्। ह्रस्व नहीं भी होता है—लोमकागृहम्, लोमकाषण्डम्। आबन्त का वेद में उदा० अजक्षीरेण जुहोति। 'ऊर्णमृदा पृथिवी दक्षिणावत। ( अ० १८.३.४९ ) ह्रस्व नहीं भी होता है—'ऊर्णासूत्रेण कवयो वयन्ति।' ( वा० सं० १९.८० ) ॥ ६३ ॥

---

१–१. 'कुमारिदारा, प्रदार्विदा' इति मुद्रितः पाठः।

**२९२६. त्वे च ॥ ६४ ॥ (१००२)**

त्वप्रत्यये परतो ङ्यापोर्बहुलं ह्रस्वो भवति । तदजाया भावः अजत्वम् । अजात्वम् । तद्रोहिण्या भावो रोहिणित्वम् । रोहिणीत्वम् (काठ० सं० ८.१) संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति ॥

**२९२७. इष्टकेषीकामालानां चिततूलभारिषु ॥ ६५ ॥ (१००६)**

इष्टकेषीकामालानां चित, तूल, भारिन् — इत्येतेषूत्तरपदेषु यथासंख्यं ह्रस्वो भवति । इष्टकचितम् । इषीकतूलम । मालभारिणी कन्या ।

❀ इष्टकादिभ्यस्तदन्तस्यापि ग्रहणं भवति ।❀ पक्वेष्टकचितम् । मुञ्जेषीकतूलम् । उत्पलमालभारिणी कन्या ॥

**न्यासः**

**त्वे च ॥ संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्तीति ।** एवकारेण संज्ञाया व्यवच्छेदः क्रियते । न हि त्वप्रत्यये ङ्यापोर्ह्रस्वत्वे कृते कस्यचित् संज्ञा गम्यते । तेन संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति ॥ ६४ ॥

**इष्टकेषीकामालानां चिततूलभारिषु ॥ इष्टकचितमिति ।** 'कर्तृकरणे' इत्यादिना समासः । **इषीकतूलमिति** षष्ठीसमासः । **मालभारिणीति ।** मालां भर्तुं शीलमस्या इति ताच्छील्ये णिनिः, 'उपपदमतिङ' इति समासः ।

**इष्टकादिभिस्तदन्तस्यापि ग्रहणं भवतीति ।** बहुलग्रहणानुवृत्तेरित्यभिप्रायः ॥ ६५ ॥

**पदमञ्जरी**

**ऊर्णम्रदा इति ।** ऊर्णावन् म्रदीयसीति यावत्, छान्दस ईयसीशब्दस्याकारः । **तैतिरीयास्तु** दीर्घमधीयते—'ऊर्णाम्रदसं चास्तृणामीति' (तै० सं० १.१.११.१) ॥ ६३ ॥ ६४ ॥

**इष्टकेशीकामालानां चिततूलभारिषु ॥ इष्टकचितमिति ।** 'कर्तृकरणे कृता बहुलम्' इति समासः । **इषीकतूलमिति ।** षष्ठीसमासः । मालाम्बिभर्तीति मालभारिणी, 'सुप्यजातौ' इति णिनिः । प्रायेण तु हरतिमधीयते, प्रयोगस्तु बिभर्तेः, मल्लिका मालभारिण्य इति ।

**इष्टकादिभिस्तदन्तस्यापि ग्रहणं भवतीति ।** यथा तु भवति, तथा अलुक्प्रकरण एवोक्तम् ॥ ६५ ॥

**भावबोधिनी**

त्व प्रत्यय परे रहते ङी और आप् का बहुलरूप से ह्रस्व होता है । उदा० तदजाया भावः—अजत्वम्, अजात्वम् । तद्रोहिण्याः भावः रोहिणित्वम्, रोहिणीत्वम् । [ ह्रस्व होने न होने से दो दो रूप होते हैं । तद् शब्द का अजा के साथ नहीं अजात्व के साथ सम्बन्ध है । ] संज्ञा में सम्भव न होने से केवल वेद में ही उदा० होते हैं । [ वे ही यहाँ दिये गये हैं ] ॥ ६४ ॥

इष्टका, इषीका, माला—इनका क्रमशः चित, तूल, भारिन् शब्द परे रहते ह्रस्व होता है । उदा० इष्टकचितम् । [ इष्टकाभिः चितम्—यहाँ तृतीया समास करके ह्रस्व होता है । ] इषीकतूलम् । [ इषीकायाः तूलम्—यहाँ षष्ठी समास में ह्रस्व होता है । ] मालभारिणी कन्या । [ मालां भर्तुं शीलमस्याः—इस अर्थ में णिनि प्रत्ययान्त के साथ उपपद समास है । माला का ह्रस्व हो जाता है । ]

❀ इष्टकादि से तदन्तों का भी ग्रहण होता है । ❀ उदा० पक्वेष्टकचितम् । मुञ्जेषीकतूलम् । उत्पलमालभारिणी । [ यहाँ तीनों शब्द अन्त में हैं फिर भी ह्रस्व होता है । ] ॥ ६५ ॥

## २९२८. खित्यनव्ययस्य ॥ ६६ ॥ (२९४३)

**खिदन्ते उत्तरपदेऽनव्ययस्य ह्रस्वो भवति । कालिम्मन्या । हरिणिम्मन्या । मुमा ह्रस्वो न बाध्यते; अन्यथा हि ह्रस्वशासनमनर्थकं स्यात् ।**

### न्यासः

**खित्यनव्ययस्य ॥ कालिम्मन्या, हरिणिम्मन्येति ।** कालीमात्मानं मन्यते, हरिणीमात्मानं मन्यत इति 'आत्ममाने खश्च' इति खश्, दिवादित्वाच्छ्यन्, अनेन ह्रस्वत्वम्, उत्तरसूत्रेण मुम् । इहाजन्तस्य ह्रस्वत्वमभ्युपगम्यम्; अन्यथा वाङ्मन्य इत्यत्रापि स्यात् । अजन्तस्य ह्रस्वविधाने सति परत्वात् मुमि कृतेऽनजन्तत्वाद् ह्रस्वो न प्राप्नोतीति यो मन्येत, तं प्रत्याह—**मुमा ह्रस्वो न बाध्यत इति ।** अत्रैव हेतुमाह—**अन्यथा हीत्यादि ।** ह्रस्वः शिष्यते = विधीयते येन तद् ह्रस्वशासनम् 'खित्यनव्ययस्य' इत्येतद् वचनम् । यदि हि मुमा ह्रस्वो बाध्येत, ततो ह्रस्वशासनमिदमनवकाशं स्यात्; ततस्तस्यानर्थक्यमेव स्यात् । तस्मान्मा भूदेष दोष इति मुमा ह्रस्वो न बाध्यते । तेन विरोधाभावादुभयं भवति—ह्रस्वः, मुम् च । कथं पुनर्मुमा ह्रस्वस्य बाधा शङ्किता ? कथं वा ह्रस्वशासनस्यानवकाशत्वम्, यावता खित्यजन्तस्याविशेषेण मुम विधीयते, ह्रस्वत्वं तु सामर्थ्याद् दीर्घस्य, न हि ह्रस्वस्य ह्रस्वविधानमर्थवत् भवति, एवं च स्तनन्धयादिषु कृतार्थत्वात् मुमेव ह्रस्वेनापवादेन कालिम्मन्यादिषु बाध्येत ? एवम्मन्यते—अपवादविषयेऽपि मुमो विधानार्थं मुम्शास्त्रस्यावश्यमावृत्तिः कर्त्तव्या; अन्यथा कालिम्मन्येत्यत्र मुम् न स्यात् । ततश्चापवादविषयेऽपि मुमा प्रवर्त्तमानेन ह्रस्वस्य बाधा सम्भाव्येत । अनवकाशत्वं चात एवापवादविषयेऽपि मुम्प्रवृत्तेरिति । अथ कथमत्र खिदन्तस्य ग्रहणम्, यावता ज्ञापितमेतदुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्ति ? इत्यत आह—**अनव्ययस्येत्येतदेवेत्यादि ।**

### पदमञ्जरी

**खित्यनव्ययस्य ॥** इह ह्रस्वश्रुत्या 'अचः' इत्युपस्थाप्यते । तत्र यदि पूर्वपदेनाज्विशेष्येत पूर्वपदस्याचो ह्रस्वो भवति यत्र तत्र स्थितस्येति, ततो वाङ्मन्य इत्यादावपि प्राप्नोति; तस्मादचा पूर्वपदं विशेष्यते—अजन्तस्य पूर्वपदस्येति । तत्र कालिम् मन्येत्यादावपि मुमि कृतेऽजन्तत्वाभावाद् ह्रस्वाभाव इत्यत आह—**मुमा ह्रस्वो न बाध्यत इति ।** कुतः ? इत्यत आह—**अन्यथा हीति ।** उच्यते चेदम्—अजन्तस्य ह्रस्व इति, यदि पूर्वं मुम् स्याद्वचनमिदमनर्थकं स्यात् । तस्मान्मुमा ह्रस्वो न बाध्यते । कथं पुनर्मुमा ह्रस्वबाधः शङ्कितः, यावता स्तनन्धयादौ चरितार्थस्य मुमः कालिम्मन्येत्यादौ ह्रस्वेनैव बाधः शङ्कनीयः ? तस्मादयमस्यार्थः—यथा पूर्वं मुमा ह्रस्वो न बाध्यते, तथा सूत्रस्यार्थो वर्णनीयः—अजन्तस्य ह्रस्वो न विधेयः, न तु पूर्वपदसम्बन्धिनोऽचो ह्रस्व इति । तस्मिन्पक्षे मुमि कृतेऽपि ह्रस्वप्रवृत्तिसम्भवादनवकाशत्वाभावात् मुमि कृते पश्चाद्ध्रस्वः स्यात्, पूर्वं तु मुमा बाध्येतेति । यत्पुनरुक्तम्—मुम एव ह्रस्वेन बाधः शङ्कनीय इति ? अत्र परिहारमुत्तरसूत्रे वक्ष्यति ।

### भावबोधिनी

खिदन्त उत्तरपद रहनेपर अनव्यय का ह्रस्व होता है । उदा०—कालिम्मन्या । हरिणिम्मन्या । [ आत्मानं कालीं मन्यते, आत्मानं हरिणीं मन्यते—इन अर्थों में "आत्ममाने खश्च" सूत्र से खश् = अ, प्रत्यय दिवादिगणीय होने से मन् धातु से श्यन् = य विकरण, मुम् आगम, प्रस्तुत सूत्र से मुम् आगम ] मुम् आगम से ह्रस्व का बाध नहीं होता है, अन्यथा ह्रस्व करने वाला सूत्र ही अनर्थक हो जायगा ।

अनव्यय का—इसका क्या फल है ? दोषामन्यम् अहः । दिवामन्या रात्रिः । [ यहाँ दोषा तथा दिवा अव्ययों का ह्रस्व नहीं होता है । ] 'अनव्ययस्य' यही इस सूत्र में खिदन्त के ग्रहण का ज्ञापक है । [ भाव यह है कि इस सूत्र में यदि खित् प्रत्यय मात्र ही लिया जाता खिदन्त नहीं, तब तो 'अनव्ययस्य' यह प्रतिषेध व्यर्थ हो जाता क्योंकि अव्यय

**अनव्ययस्येति किम् ? दोषामन्यमहः । दिवामन्या रात्रिः ।**
**'अनव्ययस्य' इत्येतदेव ज्ञापकमिह खिदन्तग्रहणस्य ॥**

## २६२९. अरुर्द्विषदजन्तस्य मुम् ॥ ६७ ॥ (२९४२)

**अरुस्, द्विषत्—इत्येतयोरजन्तानां च खिदन्त उत्तरपदे मुमागमो भवति अनव्ययस्य । अरुन्तुदः । द्विषन्तपः । अजन्तानाम्—कालिम्मन्या ।**

**अरुर्द्विषदजन्तस्येति किम् ? विद्वन्मन्यः ।**

### न्यासः

यद्यत्र खित्प्रत्ययमात्रं गृह्येत न तदन्तम्, ततोऽनव्ययस्येति प्रतिषेधोऽपार्थकः स्यात् । न ह्यव्ययात् परः खित् प्रत्ययः सम्भवति; धातोरेव तस्य विधानात् । ततश्चानर्थकत्वादनव्ययस्येत्येतन्नोक्तं स्यात् । उक्तञ्च—तस्मादेतदेवैतज्ज्ञापयति—खिदन्तस्यात्र ग्रहणमिति ॥ ६६ ॥

**अरुर्द्विषदजन्तस्य मुम् ॥ अरुन्तुद इति ।** अरुस्तुदतीति 'विध्वरुषोस्तुदः' इति खश्, संयोगान्तलोपः, तुदादित्वाच्छः, अतो गुणे पररूपत्वम् । **द्विषन्तप इति ।** द्विषन्तं तापयतीति 'द्विषत्परयोस्तापेः' इति खच्, 'खचि ह्रस्वः' इति ह्रस्वत्वम् ।

**विद्वन्मन्य इति ।** विद्वांसमात्मानं मन्यत इति, 'आत्ममाने खश्च' इति खश्, 'वसुस्रंसुध्वंस्वनडुहां दः' इति सकारस्य दकारः, 'यरोऽनुनासिकेऽनुनासिको वा' इति तस्य नकारः । अथान्तग्रहणं किमर्थम्, यावता 'येन विधिस्तदन्तस्य' इत्यनेन तदन्तस्यैव भविष्यति ? इत्याह—अन्तग्रहणमित्यादि । कृतमजन्तकार्यं यस्य स

### पदमञ्जरी

**कथं** पुनरत्र खिदन्तस्य ग्रहणम्, यावता ज्ञापितमेतदुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्न भवति ? तत्राह—**अनव्ययस्येत्येतदेवेति ।** धातोरेव खितो विधानान्नाव्ययात्परः खित्प्रत्ययः सम्भवति । तस्मादव्ययप्रतिषेधादत्र तदन्तग्रहणमित्यर्थः ॥ ६६ ॥

**अरुर्द्विषदजन्तस्य मुम् ॥ अरुन्तुद इति ।** 'विध्वरुषोस्तुदः' इति खश्, तुदादित्वाच्छः, सकारात्पूर्वं मुमि कृते सकारस्य संयोगान्तलोपः । **द्विषन्तप इति ।** 'द्विषत्परयोस्तापे' इति खच्, 'खचि ह्रस्वः', मुमादि पूर्ववत् ।

**विद्वन्मन्य इति ।** 'वसुस्रंसुध्वंसु' इति दत्वम्, 'यरोऽनुनासिकेऽनुनासिको वा' ।

### भावबोधिनी

से परे खित् प्रत्यय सम्भव ही नहीं है, क्योंकि खित् प्रत्यय का विधान केवल धातु से ही होता है । अतः अनर्थक होने से कहने की आवश्यकता नहीं थी । परन्तु कहा गया है । अतः यही ज्ञापक होता है—प्रस्तुत सूत्र में खिदन्त का ग्रहण होता है । ] ॥ ६६ ॥

अरुस्, द्विषत् तथा अजन्तों का खिदन्त उत्तरपद परे रहते मुम् आगम होता है, अव्यय का नहीं होता है । उदा०—अरुन्तुदः । द्विषन्तपः । [ अरुः तुदति—इस अर्थ में "विध्वरुषोस्तुदः" सूत्र से खश् – अ प्रत्यय, तुदादि होने से धातु से श = अ विकरण अरुष् + तुद, प्रस्तुत सूत्र से अच् के बाद मुम् = म् आगम अरुमुष् + तुद, संयोगान्तलोप, म् का अनुस्वार, परसवर्ण—अरुन्तुदः । द्विषन्तं तापयति—इस अर्थ में "द्विषत्परयोस्तापे" सूत्र से खच् = अ प्रत्यय "खचि ह्रस्वः" से धातु का ह्रस्व —द्विषत् तपि + अ, णिलोप, मुम् = म् अन्त्य अच् के बाद द्विषम् त् + तप, संयोगान्तलोप म् का अनुस्वार, परसवर्ण—द्विषन्तपः ] अजन्त का उदा०—कालिम्मन्या । [ इसकी प्रक्रिया पूर्वसूत्र पर देखनी चाहिए । ]

**अनव्ययस्येत्येव—दोषामन्यमहः। दिवामन्या रात्रिः।**

**अन्तग्रहणं किम्? कृताजन्तकार्यप्रतिपत्त्यर्थम्। अतो ह्रस्वे कृते मुम्भवति॥**

**२९३०. इच एकाचोऽम्प्रत्ययवच्च ॥ ६८ ॥ (२९९४)**

**इजन्तस्य एकाचः खिदन्ते उत्तरपदेऽमागमो भवति, अम्प्रत्ययवच्च द्वितीयैकवचनवच्च स भवति।**

**न्यासः**

कृताजन्तकार्य आगमी, तस्यैवंविधस्य प्रतिपत्तिः = प्रतीतिर्यथा स्यादित्येवमर्थमन्तग्रहणम्। अन्तग्रहणेन हि कार्यान्तरस्यान्तेऽवसाने मुम् कर्त्तव्य इत्येषोऽर्थः सूच्यते। अतोऽजन्तकार्ये ह्रस्वत्वे कृते पश्चान्मुम् भवति। ननु च मुमा ह्रस्वो न बाध्यत इत्यनेनैव भविष्यतीति सोपपत्तिकोऽयमर्थः प्रतिपादितः, तत् किमर्थमेतदन्तग्रहणम्? नैतदस्ति; तेन हि निरवकाशाद् ह्रस्वशासनस्य मुमा ह्रस्वो न बाध्यत इत्येतावन्मात्रं प्रतिपादितम्, न तु कृताजन्तकार्यस्य मुम् भवतीत्येषोऽर्थः, ततः परत्वान्मुमि कृते सत्यनजन्तस्यापि ह्रस्वत्वं प्रसज्येत। अत्र को दोषः? खित्यन्तह्रस्वभावी नास्तीति। यथा कालिम्मन्य इत्यत्र मुमि कृते सत्यनजन्तस्यापि ह्रस्वत्वं भवति, तथा वाङ्मन्य इत्यत्र स्यादिति। तस्मादन्तग्रहणं कर्त्तव्यम्॥ ६७॥

**इच एकाचोऽम्प्रत्ययवच्च॥** अत्र यदि 'प्रत्ययवच्च' इत्येतावदुच्येत, तदा गाम्मन्य इत्यत्र 'औतोऽम्शसोः' इत्यात्त्वं न स्यात्, इह च स्त्रीम्मन्य इति—अत्रापि 'अमि पूर्वः' इति पूर्वसवर्णः, इह च नरम्मन्य इति नृशब्दस्य 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः। सामान्यातिदेशे विशेषस्यानतिदेशाद् वचनं त्वियङुवङर्थमेव केवलं स्यात्, इयङुवङावजादौ प्रत्ययमात्रसामान्येन विधीयमानौ सामान्यातिदेशेऽपि भवत इति कृत्वा।

**पदमञ्जरी**

अन्तग्रहणमनर्थकम्, वर्णग्रहणे सर्वत्र तदन्तविधेर्भावादित्यत आह—**अन्तग्रहणमित्यादि।** समीपवचनोऽन्तशब्दः, अच्चासावन्तश्चेति अजन्तः, निपातनाद्विशेषणस्य परनिपातः। कः पुनरसौ पूर्वसूत्रे विहितो ह्रस्वः, तेन पूर्वपदस्य तदन्तविधिः? एतदुक्तं भवति—योऽयमस्य सूत्रस्य समीपभूतो यः पूर्वसूत्रे विहितो ह्रस्वस्तदन्तस्य मुम इति, यतो ह्रस्वे कृते मुम् भवतीति। एतेनैदपि निरस्तम्—मुम एव ह्रस्वेन बाधप्रसङ्ग इति। कथं तन्निमित्तकत्वान्मुमः? ह्रस्वनिमित्तको ह्येष मुम् भवति। यद्येवम्, स्तनन्धयादौ यत्र ह्रस्वो न तत्र मुम् न प्राप्नोति? किं पुनः कारणमत्र ह्रस्वो न क्रियते? प्रयोजनाभावात्। अस्ति प्रयोजनम्, किम्? मुम् यथा स्यादिति। इदानीमेव ह्युक्तम्—ह्रस्वनिमित्तको मुमिति॥ ६७॥

**इच इकाचोऽम्प्रत्ययवच्च॥ अमागमो भवतीति।** कथमस्यागमत्वम्? मित्त्वात्। यद्येवम्, मकार इत्संज्ञकः प्रयोगे श्रवणं न प्राप्नोति—श्रियम्मन्यः, भ्रुवम्मन्य इति? नैवास्य मकारस्य श्रवणम्, किं तर्हि? मुमः। ननु च नाप्राप्ते मुम्यारभ्यमाणोऽयमागमस्तं बाधेत? न बाधेत; उक्तं तत्र—अन्तग्रहणं कृताजन्त-

**भावबोधिनी**

अरुष्, द्विषत् तथा अजन्तों का—इसका क्या फल है? विद्वन्मन्यः। [ आत्मानं विद्वांसं मन्यते—इस अर्थ में खश् प्रत्यय आदि होता है। परन्तु उक्त तीनों में न होने से मुम् आगम नहीं होता है। ]

अनव्यय का ही—दोषामन्यम् अहः। दिवामन्या रात्रिः। [दोषा तथा दिवा अव्यय ही हैं। अतः मुम् नहीं होता है। ]

अन्तग्रहण किसलिये है? किये गये अजन्त कार्य का ज्ञान कराने के लिये। इसलिए ह्रस्व करने के बाद मुम् होता है॥ ६७॥

इजन्त एकाच् का खिदन्त उत्तरपद परे रहते अम् आगम होता है और वह अम्प्रत्यय के समान = द्वितीया एकवचन के समान होता है, क्योंकि अम् इसकी दो बार आवृत्ति होती है। उदा०—गाम्मन्यः। [ आत्मानं गां मन्यते—इस अर्थ में खश् आदि के बाद अम् आगम और द्वितीया एकवचन के समान मान लेने से "औतोम्शसोः" सूत्र से आत्व

**अमिति हि द्विरावर्तते। गाम्मन्यः। स्त्रीम्मन्यः, स्त्रियम्मन्यः। नरम्मन्यः। श्रियम्मन्यः। भ्रुवम्मन्यः।**
**'अम्प्रत्ययवच्च'—इत्यतिदेशादात्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति।**

**न्यासः**

'अम्प्रत्ययवच्च' इत्येवमुच्यमाने सत्यात्वादयो भवन्ति, तेषामप्यम्प्रत्यय इष्टत्वात्। एतत् सर्वं बुद्धौ कृत्वाह—**अम्प्रत्ययवच्चेति**। एतदेव विवृणोति—**द्वितीयैकवचनवच्चेति**। कथं पुनरयमर्थो लभ्यते, यावतैकमम्ग्रहणम्, तेन चामागमो निर्दिश्यते, प्रत्ययवच्चेत्येतदनिष्टं स्यात्। अथ प्रत्ययस्तेन विशिष्यत आगमो न निर्दिष्टः स्यादित्यत आह—**अमिति हीत्यादि**। एकमप्यम्ग्रहणमारभ्यमाणं यस्मादुभयमेतत् सम्पादयति तस्मादयमर्थो लभ्यत इत्यभिप्रायः। **श्रियम्मन्यः। भ्रुवम्मन्य इति**। 'अचि श्नुधातु' इत्यादिनेयङुवङौ। **लेखाभ्रुम्मन्य इति**। पूर्वसूत्रेण मुमागमः।

**अथेहेत्यादि**। श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य = प्रस्तुत्य खश्प्रत्यये विहिते कथं भवितव्यम्—किं श्रियम्मन्यमिति भवितव्यम्, उत श्रिमन्यमिति? कथं पुनरेतत् पक्षद्वयं सम्भाव्यते, यत एवं पृच्छति? शब्दानां द्विधा प्रवृत्तिदर्शनात्। तथा हि— केषाञ्चित् स्वलिङ्गापरित्यागेणाप्यर्थान्तरे प्रवृत्तिर्दृष्टा, यथा भूतशब्दस्य—भूतमियं ब्राह्मणीति; केषाञ्चित् स्वलिङ्गपरित्यागेनापि सा दृष्टा, यथा प्रष्ठशब्दस्य—प्रष्ठीति। तत्र श्रीशब्दो ब्राह्मणकुले वर्त्तमानो यदा स्वलिङ्गं न परित्यजति, तदा श्रियम्मन्यमिति

**पदमञ्जरी**

कार्यप्रतिपत्त्यर्थमिति, तेनास्मिन्नपि प्रकृते। भविष्यति वयन्तु ब्रूमः—नैवायमित्संज्ञको मकारः; अम्प्रत्ययवद्भावेन 'न विभक्तौ तुस्माः' इति प्रतिषेधात्। यद्येवम्, आदेशः प्राप्नोति? अम्प्रत्ययवद्भावात्परो भविष्यति। आगमव्यपदेशस्तु यौगिकः समीप आगच्छतीति, यथा 'न य्वाभ्यां पदान्ताभ्याम्' इत्यत्रैचः। द्वितीयोऽपि वा मकारः संयोगान्तलोपेन लुप्तनिर्दिष्टो द्रष्टव्यः।

यद्यत्र प्रत्ययवच्चेत्येतावदुच्येत गाम्मन्य इत्यत्र 'औतोऽम्शसोः' इत्याकारो न स्यात्, शसा सहचरितस्यामस्तत्र ग्रहणात्। इह च स्त्रीम् मन्य इति 'अमि पूर्वः' इति पूर्वरूपं न स्यात्; 'प्रथमयोः इति तत्रानुवृत्तेः। इह च नरम्मन्य इति 'ऋतो ङिसर्वनामस्थानयोः' इति गुणो न स्यात्; सामान्यातिदेशे विशेषानतिदेशात्। यत्र हि सामान्यशब्देनातिदेशस्तत्र विशेषाणामशब्दार्थत्वात्सामान्यनिबन्धनमेव कार्यं प्राप्यते; यथा—ब्राह्मणवदस्मिन् क्षत्त्रिये वर्तितव्यमिति ब्राह्मणमात्रप्रयुक्तं कार्यमतिदिश्यते, न माठरादिविशेषप्रयुक्तम्; तद्वदत्रापि प्रत्ययमात्रप्रयुक्तयोरियङुवङोरेवातिदेशः स्यात्, न त्वाकारादेरिति मत्वाऽऽह—**अम् प्रत्ययवच्चेति**। एतदेव विवृणोति—**द्वितीयैकवचनवच्चेति**। ननु चात्रैकमम्ग्रहणं यदि तेनागमो निर्दिष्टः प्रत्ययो न विशेषितः स्यात्; अथ प्रत्ययो विशेष्यते, आगमो न निर्दिष्टः स्यात्? इत्यत आह—**अमिति हीत्यादि**। नन्वत्रापि पक्षे अम्प्रत्ययप्रयुक्तयोरात्वपूर्वत्वयोरेवातिदेशः स्यात्, न गुणस्य सर्वनामस्थानमात्रनिमित्तस्य, नतरामियङुवङोः प्रत्ययमात्रनिमित्तयोः? स्यादेतदेवम्, यद्यमित्येतदाहत्य विहितं तस्यैवातिदेशः स्यात्। वयं तु—अमि यद् दृष्टं सामान्यनिबन्धनं विशेषनिबन्धनं वा तत्सर्वमतिदिशामः।

**भावबोधिनी**

हो जाने से—गाम्मन्यः रूप बनता है।] स्त्रीम्मन्यः स्त्रिम्मन्यः। [ "वाऽम्शसोः" (६।४।८०) सूत्र से वैकल्पिक इयङ् होने से पक्ष में पूर्वरूप भी होता है। अतः इयङ् होने पर—स्त्रियम्मन्यः, पूर्वरूप में—स्त्रीम्मन्यः—दो रूप बनते हैं।] नरम्मन्यः। नरम् मन्यते आत्मानम्—इसमें नृ + अम् + मन्य, में गुण रपर होता है। नर शब्द से तो अजन्त मानकर मुम् आगम से ही रूप बन सकता है।] श्रियम्मन्यः, भ्रुवम्मन्यः। [ श्रियमात्मानं मन्यते, भ्रुवमात्मानं मन्यते—इनमें अम् करने पर इयङ् तथा उवङ् आदेश होते हैं।]

'और अम् प्रत्यय के समान होता है'—इस अतिदेश के कारण आत्व, पूर्वसवर्ण, गुण, इयङ् और उवङ् आदेश होते हैं।

इच इति किम् ? त्वङ्मन्यः । **एकाच इति किम् ? लेखाभ्रुम्मन्यः ।**

**अथेह कथं भवितव्यम्—श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य ? 'श्रिमन्यमिति भवितव्यम्' इति भाष्ये स्थितम् । तत्रेदं भाष्यकारस्य दर्शनम्—अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले**

**न्यासः**

भवितव्यम्; अथ स्वलिङ्गं परित्यज्य नपुंसकलिङ्गं गृह्णाति तदा 'स्वमोर्नपुंसकात्' इत्यमो लुकि कृते 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे च श्रिमन्यमिति भवितव्यम् ? एवमिमौ द्वावपि पक्षौ सम्भाव्येते । अत उभयपक्षसम्भवे न ज्ञायते—कथं भवितव्यमिति ? अतस्तत्परिज्ञानार्थं प्रश्नः । **श्रिमन्यमिति भवितव्यमिति भाष्ये व्यवस्थितमिति ।** ननु च श्रीशब्दोऽयं स्त्रीलिङ्गोऽर्थान्तरेऽपि वर्त्तमानः स्वलिङ्गमजहदेव वर्त्तते, तथा च प्रयोगोऽपि दृश्यते—शिरो मे श्रीः, यशो मे श्रीरिति; तत् कथं श्रिमन्यमिति भाष्ये व्यवस्थापितम् ? इत्याह—**तत्रेत्यादि ।** यथा प्रष्ठादयः शब्दाः पुंयोगात् स्त्रियां वर्त्तमानाः परित्यक्तस्वलिङ्गा एव वर्त्तन्ते—प्रष्ठी, प्रवरी, गणकीति; तथा श्रीशब्दोऽप्यत्र कुलविषये वर्त्तमान इति **भाष्यकारस्य** मतम् । अतस्तन्मतेन 'स्वमोर्नपुंसकात्' इत्यमो लुकि कृते—श्रिमन्यमिति । ननु च नाप्राप्ते लुक्ययमारभ्यते, यथैव 'सुपो धातुप्रातिपदिकयोः' इतीमं लुकं बाधते, तथा 'स्वमोर्नपुंसकात्' इतीममपि लुकं बाधेत ? अपि च लुगेकपदाश्रयत्वादन्तरङ्गो विपर्ययाच्चामागमो बहिरङ्गः, ततः 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यन्तरङ्गे लुकि कर्तव्ये बहिरङ्गोऽमागमो नास्त्येव, तत् कुतोऽत्र लुक् ? नैष दोषः; 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति । एवमयममागमः 'सुपो धातुप्रातिपदिकयोः' इतीमं लुकं बाधिष्यते, न 'स्वमोर्नपुंसकात्' इतीमम् । बहिरङ्गपरिभाषाप्यत्राशक्याऽऽश्रयितुम्, इह हि दोषः स्याद्—अरुन्तुद इति । तदाश्रयेण तु

**पदमञ्जरी**

**त्वङ्मन्य इति ।** अत्र त्वचंमन्य इति प्राप्नोति, येषामेको मकारः प्रत्ययवद्भावात्तु परोऽयमिति पक्षः । येषामपि द्वितीयस्तेषामचः परोऽम् प्राप्नोति, येषां त्वित्संज्ञको मकारस्तेषामत्रापि को दोष इति चिन्त्यम् । नन्वज्ग्रहणानुवृत्तेरेवात्र न भविष्यति, उपसमस्तस्य पृथगनुवृत्तिर्दुर्ज्ञानेति मन्यते । **लेखाभ्रुम् मन्य इति ।** पूर्ववद् ह्रस्वत्वं मुमागमश्च ।

**अथेहेत्यादि ।** भाष्ये अथेह कथमित्यारभ्य **श्रिमन्यमिति भवितव्यमिति स्थितम्,** स्थापितमित्यर्थः । तेन भिन्नकर्तृकत्वं नाशङ्कनीयम् । ननु च स्त्रीलिङ्गः श्रीशब्दस्तत्कथं श्रिमन्यमिति रूपमित्याशङ्क्योपपादयति—**[1]तच्चेदमिति ।** अर्थान्तरे हि वर्तमानाः शब्दाः केचित्स्वलिङ्गत्यागेन वर्तन्ते, यथा—यष्ट्यादयः शब्दाः पुंयोगात्स्त्रियां वर्तमानाः यष्टी, प्रचरी, गणिकेति । केचित्तु स्वलिङ्गोपादानेन यष्टीः पुरुषान् प्रवेशयेति । तत्रेह प्रथमा विधा **भाष्यकारस्या**भिप्रेता, तेन **'स्वमोर्नपुंसकात्'** इत्यमो लुकि कृते श्रिमन्यमिति भवति । यद्येवम्, 'सुपो धातुप्रातिपदिकयोः' इत्यस्यापि लुकोऽतिदेशः प्राप्नोति; तस्याप्यमि दृष्टत्वात्, अथाम्विधानसामर्थ्यादस्य लुको नातिदेशः, 'स्वमोर्नपुंसकात्' इत्यस्यापि न स्यात् ? उच्यते; 'येन नाप्राप्ते' (व्या० प० ४९) इति वा, 'मध्येऽपवादाः' (व्या० प० १०) इति वा 'सुपो धातुप्रातिपदिकयोः' इत्यस्यैव लुको विधानसामर्थ्याद्बाधः, न 'स्वमोर्नपुंसकात्' इत्यस्य । एवमप्येकपदाश्रयत्वाल्लुगन्तरङ्गो विपर्ययादागमो बहिरङ्ग इत्यन्तरङ्गे लुकि कर्तव्ये बहिरङ्गोऽमागमो नास्त्येव, तत्कुतो लुक् ? नात्र बहिरङ्गपरिभाषा (व्या० प० ४३) शक्याऽऽश्रयितुम् ।

**भावबोधिनी**

इच्—इसका क्या फल है ? त्वङ्मन्यः । [ त्वच् इजन्त न होने से अम् नहीं होता है । ] एकाच्—इसका क्या फल है ? लेखाभ्रुम्मन्यः । [ यहाँ अम् न होकर मुम् होता है । क्योंकि एकाच् नहीं अनेकाच् है । ]

अच्छा तो यहाँ कैसा होना चाहिए—"श्रियमात्मानं ब्राह्मणकुलं मन्यते" यह उपक्रम करके—'श्रिमन्यम्' ऐसा होना चाहिए "ऐसा भाष्य में लिखा है । इसमें भाष्यकार का यह विचार है—ऐसे विषय में अपने लिङ्ग को छोड़

---

१. तत्रेदम्—इदं काशिकायाम् ।

**❀ गिलेऽगिलस्य मुम्वक्तव्यः ❀ (का० वा० ७) तिमिङ्गिलः । अगिलस्येति किम् ? गिलगिलः ।**

**❀ गिलगिले चेति वक्तव्यम् ❀ (का० वा० ८) तिमिङ्गिलगिलः ।**

**❀ उष्णभद्रयोः करणे मुम्वक्तव्यः ❀ (का० वा० ९) उष्णङ्करणम् । भद्रङ्करणम् ।**

**❀ [1]सूतोग्रराजभोजमेरुभ्य इत्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यः ❀ (का० वा० १०) सूतपुत्री । सूतदुहिता । उग्रपुत्री । उग्रदुहिता । राजपुत्री । राजदुहिता । भोजपुत्री । भोजदुहिता । मेरुपुत्री । मेरुदुहिता ।**

**केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति, तस्य पुत्रीति भवति ।**

**न्यासः**

**गिलगिले चेति ।** गिलं गिलतीति गिलगिलः । 'आतश्चोपसर्गे' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् कः । पूर्वत्राप्येवं कविधाने न दोषः । तिमीनां गिलगिल इत्यस्मिन्नर्थे विवक्षित इदं वक्तव्यम् । अथ तिमिं गिलतीति तिमिङ्गिलः, तिमिङ्गिलं गिलतीत्येषोऽर्थो यदा विवक्ष्यते तदा पूर्वेणैव सिद्धमिति नार्थं एतेन ।

**उष्णङ्करणम्, भद्रङ्करणमिति ।** षष्ठीसमासौ । **पुत्रडिति ।** टकारो ङीबर्थः ।

**केचित् तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्तीति ।** तान् प्रति नेदमुपसङ्ख्यानं कर्त्तव्यम् ।

**पदमञ्जरी**

**तिमिङ्गिल इति ।** मत्स्यविशेषः । तिमिङ्गिलतीति पूर्ववत्कः, इत्वम् । 'अचि विभाषा' इति लत्वम् । **तिमिङ्गिलगिलः ।** अयमपि मत्स्यविशेष एव ।

**गिलगिले चेति ।** यदा गिलं गिलतीति गिलगिलः [तिमेर्गिलगिलः–] तिमिङ्गिलगिल इति व्युत्पत्तिस्तदेदमुपसंख्यानम् । यदा हि तिमिङ्गिलं गिलतीति तिमिङ्गिलगिल इति व्युत्पाद्यते, तदा नार्थं एतेन । **उष्णङ्करणम्, भद्रङ्करणमिति ।** षष्ठीसमासौ ।

**पुत्रड्वेति ।** टकारो ङीबर्थः ।

**केचित्त्वित्यादि ।** तेषां पक्ष उपसंख्यानमिदं नारब्धव्यम् ।

**भावबोधिनी**

उदा० तिमिङ्गिलः । [ तिमिं गिलति—इस विग्रह में निगरणार्थक 'गॄ' धातु से क = अ प्रत्यय, इत्व, रपर "अचि विभाषा" सूत्र से रेफ का लत्व—तिमिङ्गिलः । ]

अगिल का—इसका क्या फल है ? गिलगिलः । [ गिलं गिलति—यहाँ पूर्ववत् समासादि करने पर मुम् = म् नहीं होता है क्योंकि गिल शब्द ही है । ]

❀ गिलगिल शब्द परे रहते भी मुम् का आगम कहना चाहिए । उदा० तिमिङ्गिलगिलः । [ गिलं गिलति—गिलगिलः, तिमेर्गिलगिलः—इस विग्रह में ही इस वचन से मुम् होता है । यदि तिमिङ्गिलं गिलति—ऐसा विग्रह किया जाय तो अतिरिक्त वचन की आवश्यकता नहीं है । उद्योतकार के अनुसार दशयोजन लम्बी मछली 'तिमि' है, उसे खाने वाला—तिमिङ्गिलः । तिमिङ्गिलगिलः—यह भी एक विशेष प्रकार की मछली होती है । ]

❀ उष्ण तथा भद्र को करण शब्द परे रहते मुम् आगम होता है । ❀ उदा० उष्णङ्करणम् भद्रङ्करणम् । [ उष्णस्य करणस्य, भद्रस्य करणम्—ये षष्ठीसमास हैं । समास के बाद मुम् आगम, अनुस्वार परसवर्ण होता है । ]

❀ सूत, उग्र, राज, भोज तथा मेरु—इनसे उत्तरवर्ती दुहितृ शब्द का पुत्रट् आदेश विकल्प से कहना चाहिए ।

❀ उदा० सूतपुत्री । सूतदुहिता । [ सुतस्य दुहिता—इस षष्ठी समास के बाद दुहितृ का पुत्रट् आदेश करने पर टित् होने से ङीप् होता है । पक्ष में दुहिता ही रहता है । अतः सर्वत्र दो दो रूप होते हैं । ] उग्रपुत्री, उग्रदुहिता । राजपुत्री, राजदुहिता । भोजपुत्री, भोजदुहिता । मेरुपुत्री, मेरुदुहिता ।

---

१. 'अस्तुसत्यागदस्य कार उपसंख्यानम्' इत्यारभ्य एतद्वार्तिकं यावत् दशवचनानि भाष्येवार्त्तिकरूपेण पठितानीति बोध्यम् ।

अन्यत्रापि हि दृश्यते—शैलपुत्रीति ॥

## २९३३. श्येनतिलस्य पाते ञे ॥ ७१ ॥ (१२६८)

श्येन, तिल—इत्येतयोः पातशब्द उत्तरपदे ञप्रत्यये परे मुमागमो भवति । श्येनपातोऽस्यां क्रीडायाम् श्यैनम्पाता मृगया । तैलम्पाता ।

ञ इति किम् ? श्येनपातः ॥

## २९३४. रात्रेः कृति विभाषा ॥ ७२ ॥ (१००८)

**न्यासः**

अन्यत्रापि दृश्यत इति । अनेन शार्ङ्गरवादिषु पुत्रशब्दस्य पाठं द्रढयति ॥ ७० ॥

**श्येनतिलस्य पाते ञे ॥ ञप्रत्यये पर इति ।** ञः प्रत्ययो यस्मादुत्तरपदात् तत् तथोक्तम् । **श्यैनम्पातेति ।** पतनं पातः, भावे घञ्, श्येनस्य पातः श्येनपातः । 'कृद्योगा च षष्ठी समस्यते' इति समासः, ततः 'घञः सास्यां क्रियेति ञः' ॥ ७१ ॥

**रात्रेः कृति विभाषा ॥ कृदन्त उत्तरपद इति ।** कथं पुनस्तदन्तविधिर्लभ्यते, यावता ज्ञापितमेतत्—

**पदमञ्जरी**

अन्यत्रापि हीत्यादिना शार्ङ्गरवादिपाठमेव द्रढयति । अन्ये तु शार्ङ्गरवादिपाठं नेच्छन्ति ॥ ७० ॥

**श्येनतिलस्य पाते ञे ॥ श्येनपातोऽस्यां[1] क्रियायामिति ।** यद्यपि 'घञः सास्यां क्रियेति ञः' इत्यतः क्रियाग्रहणं प्रकृत्यर्थविशेषणम्, न प्रत्ययार्थः, श्येनपातोऽस्यां तिथौ श्येनपाता तिथिरिति तत्रोदाहृतत्वात्; तथाप्यस्यामिति स्त्रीलिङ्गमात्रस्य प्रत्ययार्थत्वात्क्रियाया अपि प्रत्ययार्थत्वमविरुद्धम् । **श्यैनम्पातेति ।** पतनं पातः, श्येनस्य पातः, कर्तरि षष्ठ्या समासः, ततः 'घञः सास्याम्' इति ञः ॥ ७१ ॥

**रात्रेः कृति विभाषा ॥ कृदन्त उत्तरपद इति ।** यद्यप्याचारक्विबन्तस्य रात्रिशब्दस्यानन्तरस्तृ-

**भावबोधिनी**

कुछ लोग शार्ङ्गरवादिगण में पुत्र शब्द का पाठ करते हैं । [उससे ङीन् करने पर] उसका 'पुत्री' यह रूप हो जाता है । [इनके लिये 'पुत्रट्' आदेश की कोई आवश्यकता नहीं है ।]

अन्यत्र भी [ पुत्री शब्द का प्रयोग] देखा जाता है—शैलपुत्री । [ अतः शार्ङ्गरवादि गण में पुत्र का पाठ और ङीन् करके 'पुत्री' शब्दरूप मानना चाहिए । ] ॥ ७० ॥

श्येन और तिल—इनको मुम् आगम होता है पात शब्द उत्तरपद ञ प्रत्यय परे रहते । उदा० श्येनपातः अस्यां क्रीडायाम्—श्यैनम्पाता मृगया । [ पत् से घञ् करने पर 'पातः' श्येनस्य पातः = श्येनपातः । श्येनपातः अस्यां क्रियायाम्—इस अर्थ में 'घञः सास्यां क्रियेति "ञः" इससे 'ञ' प्रत्यय, आदि-वृद्धि करने पर—श्यैनपाता, मुम्, अनुस्वार परसवर्ण—श्यैनम्पाता । ] तैलम्पाता । [तैलपातः अस्यां क्रियायां सा—तैलम्पाता यहाँ भी पूर्ववत् सभी कार्य करने के बाद मुम् होता है । ]

ञ परे रहते—इसका क्या फल है ? श्येनपातः । [ यह सामान्य कथन है । ञ प्रत्यय नहीं हुआ है । अतः मुम् नहीं होता । ] ॥ ७१ ॥

कृदन्त उत्तरपद रहने पर रात्रि को विकल्प से मुम् आगम होता है । उदा० रात्रिञ्चरः, रात्रिचरः । रात्रिमटः,

१. क्रीडायाम्—इति काशिका ।

**रात्रेः कृदन्ते उत्तरपदे विभाषा मुमागमो भवति । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः, रात्र्यटः । अप्राप्तविभाषेयम् ।**

**खिति हि नित्यं मुम् भवति—रात्रिम्मन्यः ॥**

## २९२५. नलोपो नञः ॥ ७३ ॥ (७५७)

**नञो नकारस्य लोपो भवत्युत्तरपदे । अब्राह्मणः । अवृषलः । असुरापः । असोमपः ।**

**न्यासः**

उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्तीति, रात्रिशब्दादनन्तरस्य कृत्प्रत्ययस्यासम्भवात् तदन्तविधिर्विज्ञायत इति चेत्? आयुक्तमेतत्; सम्भवति हि रात्रेरनन्तरः कृत्प्रत्ययः। रात्रिरिवाचरतीति 'आचारे सर्वप्रातिपदिकेभ्यः क्विब् वा' इति क्विप्, 'सनाद्यन्ता धातवः' इति धातुसंज्ञा, तृच्, इट्, गुणायादेशौ—रात्रयितेति। तदेवं सम्भवत्यनन्तरे कृत्प्रत्यये तत्रैव स्यात्, न तदन्ते? नैष दोषः; 'अरुर्द्विषदजन्तस्य' इत्यतोऽन्तग्रहणमनुवर्त्तते, तेन तदन्त एव कार्यं विज्ञायत इति। एवं तर्ह्याचारक्विबन्तस्यापि रात्रिशब्दस्य कृदन्त उत्तरपदे स्यात्। भवतु। अथ तु नेष्यते? व्यवस्थितविभाषाङ्गीकर्त्तव्या। गौणत्वाद्वा रात्रिशब्दस्य न भविष्यति। गौणत्वं पुनः प्राथमकल्पिकादर्थादपेतत्वात्, यथा—वाहीको गौरित्यत्र गोशब्दस्य। **रात्रिञ्चर इति**। रात्रौ चरतीति 'चरेष्टः' इति टः, उपपदसमासः। **रात्रिमट इति**। अटतीत्यटः, पचाद्यच्, रात्रावट इति 'सप्तमी' इति योगविभागात्समासः। **अप्राप्तविभाषेयमिति**। ननु च खिदपि कृदस्ति—रात्रिम्मन्यमिति, अत्र हि 'अरुर्द्विषदजन्तस्य' इति नित्यं प्राप्नोति रात्रिञ्चर इत्यादौ न केनचित् प्राप्नोति; एवञ्च प्राप्ते चाप्राप्ते इयं विभाषा युक्तेत्यत आह—**खिति हि नित्यं मुम् भवतीति**। पूर्वविप्रतिषेधेनेत्यभिप्रायः। अत्र हि पूर्वविप्रतिषेध आश्रीयते, खिति पूर्वेण नित्यम् मुम्भवति। एवञ्च खितोऽन्यदेव कृदन्तमस्य वचनस्यावकाशः। न च केनचित् तत्र प्राप्नोतीति युक्तमस्याप्राप्तविभाषात्वम् ॥ ७२ ॥

**नलोपो नञः** ॥ नञः सानुबन्धकग्रहणमिह मा भूत्—पामनपुत्र इति। पामान्यस्य सन्तीति 'लोमादि-

**पदमञ्जरी**

जादिः कृत्सम्भवति, तथापि तस्य गौणार्थत्वादग्रहणमिति सामर्थ्यादुत्तरपदाधिकारेऽप्यत्र तदन्तविधिर्भवति। **रात्रिञ्चर इति**। रात्रौ चरतीति 'चरेष्टः'। **रात्रिमट इति**। अटतीत्यटः, पचाद्यच्, साधनं कृतेति समासः।

**अप्राप्तविभाषेयमिति।**

ननु चोभयत्रविभाषेयं युक्ता, रात्रिम्मन्येत्यादौ खिदन्ते प्राप्ते, अन्यत्राप्राप्ते? इत्यत आह—**खिति हि नित्यं मुम् भवतीति**। पूर्वविप्रतिषेधेनेति भावः ॥ ७२ ॥

**नलोपो नञः** ॥ नञः सानुबन्धकस्य ग्रहणम्, पामादिभ्यो नः—पामनपुत्र इत्यादौ मा भूत्। अथ

**भावबोधिनी**

रात्र्यटः [ रात्रिषु चरति, रात्रिषु अटति—इन विग्रहों में उपपद समास के बाद मुमु = म् आगम, अनुस्वार परसवर्ण—रात्रिञ्चरः, पक्ष में रात्रिचरः। रात्रिमटः, पक्ष में यण् करने पर रात्र्यटः—दो दो रूप होते हैं। ]

यह अप्राप्तविभाषा है। [क्योंकि इनमें किसी सूत्र से प्राप्ति नहीं है। फिर विकल्प से मुम् किया जाता है। ] क्योंकि खित् परे तो नित्य ही मुम् आगम होता है—रात्रिम्मन्यः। [ इसमें खच् प्रत्यय में "अरुर्द्विषदजन्तस्य मुम्" सूत्र से मुम् आगम होता है। ] ॥ ७२ ॥

नञ् के नकार का लोप होता है उत्तरपद परे रहते। उदा० अब्राह्मणः। अवृषलः। असुरापः। असोमपः।

**❀ नञो नलोपोऽवक्षेपे तिङ्युपसंख्यानं कर्तव्यम् ❀ (का० वा० १) । अपचसि त्वं जाल्म । अकरोषि त्वं जाल्म ॥**

## २९३६. तस्मान्नुडचि ॥ ७४ ॥ (७५८)

**तस्माल्लुप्तनकारान्नञः नुडागमो भवति अजादावुत्तरपदे । अनजः । अनश्वः ।**

### न्यास:

पामादि' इत्यादिना नप्रत्ययः । तदन्तस्य पुत्रशब्देन षष्ठीसमासः । अथ क्रियमाणे सानुबन्धकग्रहणे स्त्रिया अयमिति 'स्त्रीपुंसाभ्याम्' इत्यादिना नञ्—स्त्रैणः, स्त्रैणश्चासावर्थश्चेति स्त्रैणार्थ इत्यत्र कस्मान्न भवति ? पूर्वपदभूतस्य नञो ग्रहणात् । कुत एतत् ? उत्तरपदस्य सम्बन्धिशब्दत्वात् । पूर्वपदं ह्यपेक्ष्योत्तरपदं सम्भवति । अत उत्तर-पदाधिकारात् पूर्वपदभूतस्यात्र नञो ग्रहणम् । अथ वा—विभाषाग्रहणमनुवर्त्तते, तस्य व्यवस्थितविभाषात्व-विज्ञानान्न भविष्यति । यद्येवम्, पामनपुत्र इत्यत्राप्यत एव न भविष्यतीति नार्थः सानुबन्धकग्रहणेन ? एवं तर्हि विस्पष्टार्थं सानुबन्धकग्रहणम् । न च 'नस्य' इत्युच्यमाने कश्चिल्लाघवकृतो विशेषो भवति ।

**अवक्षेपे तिङ्युपसंख्यानं कर्त्तव्यमिति ।** अवक्षेपः = निन्दा । उत्तरपदे नलोपो विधीयमानस्तिङन्ते न प्राप्नोति, तस्मात् तस्योपसंख्यानं कर्त्तव्यम् । ननु चास्त्येवाकारः प्रतिषेधवाची, 'अ मा नो नाः प्रतिषेधवचनाः' इति वचनात्, ततश्च तस्यैवावक्षेपे तिङि प्रयोगो भविष्यतीति किमुपसंख्यानेन ? नञोऽपि तर्ह्यवक्षेपे तिङि परतः प्रयोगः प्राप्नोति । तस्मादवक्षेपे नञोऽकृतनलोपस्य प्रयोगनिवृत्त्यर्थमुपसंख्यानं कर्त्तव्यमिति । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—'वाचंयमपुरन्दरौ च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेन तिङन्तेऽप्यवक्षेपे गम्यमाने नञो नलोपो भविष्यतीति ॥ ७३ ॥

**तस्मान्नुडचि ॥ नञ् एव हि स्यादिति ।** अचीति सप्तमीनिर्देशात्, 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात् । नञो नुडागमे सत्यनिष्टं रूपं स्यात् । तस्माद्ग्रहणे तु सति 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्'

### पदमञ्जरी

क्रियमाणेऽपि सानुबन्धकग्रहणे स्त्रैणपुत्र इत्यत्र कस्मान्न भवति ? प्रत्ययञित्त्वस्य वृद्धिस्वरयोश्चरितार्थत्वात्, निपातञित्त्वस्य चाचरितार्थत्वात्, पूर्वपदेन वा नञ् विशेष्यत इति अपूर्वपदत्वान्न भविष्यति । एवं च कृत्वाऽनु-बन्धोच्चारणमपि न कर्त्तव्यम्, अपूर्वपदत्वादेव पामनपुत्रे न भविष्यति ।

**अवक्षेपे तिङीति ।** अवक्षेपः = निन्दा । नञोऽशिति वा नञोऽनिति वा सिद्धे लोपवचनं साकच्कार्थ-मित्याहुः ॥ ७३ ॥

**तस्मान्नुडचि ॥ नञ एव हि स्यादिति ।** 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात् । नञश्च नुटि सत्यनिष्टं रूपं स्यात्, नलोपविधानमनजाद्यर्थं स्यात्, तस्माद्ग्रहणे तु सति पञ्चमीनिर्देशस्य बलीयस्त्वादुत्तर-स्यैव भवति । ननु यदि तत्रैव स्यान्नाचीति नलोपमेव प्रतिषेधेत् । तद्वचनं तूत्तरपदस्यैव भविष्यति । तस्मादेवं

### भावबोधिनी

[ न ब्राह्मणः—इस अर्थ में नञ् तत्पुरुष के बाद न् का लोप हो जाने पर अ बचता है—अब्राह्मणः । इसी प्रकार न वृषलः, न सुरापः, न सोमपः—इनमें भी न् का लोप होता है । ]

❀ नञ् के नकार का लोप अवक्षेप अर्थ में तिङ् में कहना चाहिए । ❀ उदा० अपचसि त्वं जाल्म । अकरोषि त्वं जाल्म । [ यहाँ अवक्षेप = निन्दा अर्थ की प्रतीति होती है । ] ॥ ७३ ॥

उस लुप्त नकारवाले नञ् से अजादि उत्तरपद को नुट् आगम होता है । उदा० अनजः । अनश्वः । [ न अजः, न अश्वः —इनमें नञ् समास के बाद पूर्व सूत्र से न् का लोप कर देने पर अ अजः, अ अश्वः इनमें अजादि उत्तरपद को नुट् = न आगम होता है—अनजः, अनश्वः ।

तस्मादिति किम् ? नञ एव हि स्यात् । पूर्वान्ते हि 'ङमो ह्रस्वादचि ङमुण्नित्यम्' [८.३.३२] इति ङमुट् प्राप्नोति ॥

**२९३७. नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसक-नक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७५ ॥ (७५९)**

**नभ्राट्, नपात्, नवेदाः, नासत्याः, नमुचि, नकुल, नख, नपुंसक, नक्षत्र, नक्र, नाक—इत्येतेषु नञ् प्रकृत्या भवति । न भ्राजत इति नभ्राट्—भ्राजतेः क्विबन्तस्य नञ्समासः । न पातीति नपात्—पातिः**

**न्यासः**

इत्युत्तरपदस्यैव भवति, अतो न भवत्यनिष्टप्रसङ्गः । ननु च यदि नञो नुट् स्यात् नलोपवचनमनर्थकं स्यात् ? नानर्थकम्; अब्राह्मणः, अवृषल इत्यनजादौ नकारश्रवणं मा भूदित्येवमर्थत्वात् ।

यदि नञो मा भूदित्येवमर्थं 'तस्मात्' इत्युच्यते, तर्हि न वाच्यम्, पूर्वान्तो ह्ययं नुक् करिष्यते ? इत्याह—**पूर्वान्ते हीत्यादि** । पूर्वान्ते नुटि क्रियमाणे ङमन्तस्य पदस्य विधीयमानः 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति नुट् प्राप्नोति, ततश्च स एवानिष्टप्रसङ्गः । तस्मानुडेव कर्त्तव्यः । अस्मिंस्तु क्रियमाणे नञ एव मा भूदित्येवमर्थं तस्माद्ग्रहणम् ॥ ७४ ॥

**नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ नभ्राडिति ।** 'भ्राजृ दीप्तौ'—अस्माद् 'भ्राजभ्रास' इत्यादिना क्विप्, जकारस्य 'व्रश्च' इत्यादिना षकारः, तस्य जश्त्वम्—डकारः,

**पदमञ्जरी**

वक्तव्यम्—नाप्राप्ते नलोपे आरभ्यमाणो नुट् तस्य बाधकः स्यात्, तस्माद् ग्रहणे तु सति निमित्तमेव नुटो नलोपो भवति ।

अथ नुगिति पूर्वान्त एवायं कस्मान्न कृतः, एवं हि नञ एव स्यादित्येवमपि दोषो न भविष्यति; तत्रायमप्यर्थः—'तदोः सः सौ' इत्यत्र 'तदोः' इत्यपनीय 'तोः' इति वर्गग्रहणमेव कर्त्तव्यम्; परादौ ह्यनेष करोतीत्यत्र नुटो नकारस्यापि प्रसङ्गादशक्यं वर्गग्रहणम् ? तत्राह—**पूर्वान्ते हीति । ङमुट् प्राप्नोति ।** 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो विधानसामर्थ्यान्न भवतीति भावः । अत्रापि पक्षे इदं कर्तव्यम्—नाप्राप्ते नलोपे आरभ्यमाणो नुक् तस्य बाधकः स्यादिति ॥ ७४ ॥

**नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ नभ्राडिति ।** 'भ्राजभास' इत्यादिना क्विप् , व्रश्चादिषत्वम्, जश्त्वम्—डकारः, तस्य 'वावसाने' इति पक्षे चर्त्वम्—टकारः । **पादिति**

**भावबोधिनी**

तस्मात्—इसका क्या फल है ? नञ् को ही नुट् आगम होने लगता । क्योंकि पूर्व का अन्त आगम करने में तो "ङमो ह्रस्वादचि ङमुण् नित्यम्" इससे ङमुट् (नुट्) आगम भी प्राप्त होता है ।

**विमर्श**—'तस्मात् नुट् अचि' इसमें पञ्चमी और सप्तमी दोनों के श्रवण में पञ्चम्यन्त निर्देश के बलवत्तर होने से नञ् से परे अजादि को ही नुट् आगम होता है । यदि 'तस्मात्' इसका ग्रहण नहीं रहता तो अच् परे पूर्ववर्ती अर्थात् नञ् का ही नुट् होने लगता । फलस्वरूप अन् + अश्वः, अन् + अजः आदि में 'ङमो ह्रस्वादचि ङमुण् नित्यम्" सूत्र से नुट् आगम भी होने लगता और अन्नश्वः, अन्नजः ऐसा अनिष्ट रूप प्रसक्त होता । परन्तु 'तस्मात्' पञ्चम्यन्त के कारण उस लुप्त नकार वाले से परे अजादि को ही नुट् होता है । इष्टरूप सिद्ध होता है ॥ ७४ ॥

नभ्राट्, नपात्, नवेदाः, नासत्याः, नमुचि, नकुल, नख, नपुंसक, नक्षत्र, नक्र और नाक—इनमें नञ् का प्रकृति-भाव रहता है, लोप नहीं होता है । उदा० न भ्राजते—इस अर्थ में नभ्राट्, क्विप्प्रत्ययान्त भ्राज् का नञ् समास होता

शत्रन्तः[1]। न वेत्तीति नवेदाः—वेत्तिरसुन्प्रत्ययान्तः। नासत्याः—सत्सु साधवः सत्याः, न सत्या असत्याः, न असत्याः नासत्याः। न मुञ्चतीति नमुचिः—मुचेरौणादिकः किप्रत्ययः। नास्य कुलमस्ति नकुलः। नख—नास्य खमस्तीति नखम्। नपुंसक—न स्त्री न पुमान्नपुंसकम्—स्त्रीपुंसयोः पुंसकभावो निपात्यते। नक्षत्र—न क्षरते क्षीयत इति वा नक्षत्रम्—क्षियः, क्षरतेर्वा क्षत्रमिति निपात्यते। नक्र—न क्रामतीति नक्रः—क्रमेर्डप्रत्ययो निपातनात्। नाक—नास्मिन्नकमस्ति नाकम्।

**न्यासः**

तस्यापि चर्त्वम्—टकारः। **नपादिति**। नपुंसकत्वादसत्यां सर्वनामस्थानसंज्ञायामुगिल्लक्षणो नुम् न भवति। **नवेदा इति**। 'अत्वसन्तस्य चाधातोः' इति दीर्घः। **सत्सु साधवः सत्या इति**। अनेन 'तत्र साधुः' इति सच्छब्दात् प्राग्घितीयं यतं दर्शयति। **औणादिकः किप्रत्यय इति**। 'इगुपधात् कित्' इति किप्रत्ययः। **क्षिय इति**। 'क्षिष् हिंसायाम्', 'क्षि निवासगत्योः' इति। **क्षरतेर्वेति**। 'क्षर सञ्चलने'। नक्षत्रमिति निपात्यते। किमत्र निपात्यते ? यदि क्षियः, तदा त्रप्रत्यय इकारस्यात्त्वम्; यदि क्षरतेस्तदापि त्रप्रत्ययो रेफलोपश्च। **नास्मिन्नकमस्तीति नाकमिति**। कमिति सुखमुच्यते। न कम् = दुःखम्। नास्मिन्नकमस्तीति नाकः = स्वर्गः। रूढिशब्दा ह्येते यथाकथञ्चिद् व्युत्पाद्यन्ते ॥ ७५ ॥

**पदमञ्जरी**

**शत्रन्तमिति**। तनूनपादुच्यते, अपान्नपादित्यादावनपुंसकेऽपि दर्शनाद् 'उभे वनस्पत्यादिषु' इत्यत्र पातेः क्विपि निपातनात्तुगित्यभिधानाच्चापपाठोऽयम्। पादिति क्विबन्तमिति पाठः। शत्रन्तमित्यस्य वानन्तरं नरैर्न मन्तव्यमित्यध्याहार्यम्। **औणादिकः किप्रत्यय इति**। 'इगुपधात्किः' (द० उ० १.४८) इत्यनेन। कम् = सुखम्, अकम् = दुःखम्, तद्यत्र नास्ति स नाकः स्वर्गः।

दुःखेन यन्न सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्[2] ॥

इति हि पठन्ति। अत्र नपुंसकादित्रये निपात्यमस्तीति ते तथैव ग्राह्याः। इतरेषु तूत्तरपदमात्राणि गृहीत्वा नञ् प्रकृत्येत्येव वाच्यम्। एवं सिद्धे सति समुदायपाठः प्रसिद्ध्युपसंग्रहार्थः। तेन नासत्यावित्याश्विनोरेव भवति, अन्यत्रानसत्या इत्येव। एवमन्यत्रापि यथासम्भवं द्रष्टव्यम्।

**प्रकृत्येति** वचनमुत्तरार्थम्, इह तु निपातनादेव सिद्धम् ॥ ७५ ॥

**भावबोधिनी**

है। [भाज् के ज् का "व्रश्चभ्रस्ज" आदि सूत्र से 'ष्' करके जश्त्व से ड् और चर्त्व से ट् होता है।] न पाति—इस अर्थ में नपात्। पा धातु का शतृ-प्रत्ययान्त [क्विबन्त] रूप पात् है। न वेत्ति—इस अर्थ में—न वेदाः। विद् धातु का असुन् प्रत्ययान्त रूप है। ("अत्वसन्तस्य चाधातोः" सूत्र से उपधादीर्घ हो जाता है—वेदाः, नवेदाः, नवेदाः। एकवचनान्त है।] नासत्याः—सत्सु साधवः—इस अर्थ में सत्याः रूप होता है ['तत्र साधुः' अर्थ में यत् प्रत्यय होता है।] न सत्याः—असत्याः, न असत्याः—नासत्याः। [प्रथम नञ् समास में न् लोप होता है किन्तु द्वितीय समास में नुलोप नहीं होता है।] न मुञ्चति—इस अर्थ में—नमुचिः, यहाँ 'मुच्' धातु से औणादिक कि = इ प्रत्यय होता है। [कित् होने से गुण नहीं होता है। न मुचिः—नमुचिः।] न अस्य कुलम् अस्ति—इस अर्थ में नकुलः। नख—न अस्य खम्—इस अर्थ में नखम्। नपुंसक—न स्त्री न पुमान्—नपुंसकम्। स्त्रीपुंस दोनों का पुंसक आदेश निपातित होता है। नक्षत्र—न क्षरते, अथवा न क्षीयते—इस अर्थ में क्षर् अथवा क्षि धातु का 'क्षत्र' यह निपातित होता है। नक्र—न क्रामति—इस अर्थ में नक्रः, क्रम् धातु से ड = अ प्रत्यय, [टि = अम् का लोप] निपातन से होता है। नाक—न अस्मिन् अकम् अस्ति—इस अर्थ में नाकम्। [कम् = सुख, अकम् = दुख, अक नहीं है जिसमें वह नाक है।

---

१. पादिति क्विबन्तमितिपदमंजरी। २. वाचस्पतिमिश्रास्तु—'यन्न दुःखेन सम्भिन्नं तत्सुखं स्वःपदास्पदम्' इति पठन्ति।

## २९३८. एकादिश्चैकस्य चादुक् ॥ ७६ ॥ (८११)

**एकादिश्च नञ्प्रकृत्या भवति एकशब्दस्य चादुगागमो भवति। एकेन न विंशतिः एकान्नविंशतिः। एकान्नत्रिंशत्। 'तृतीया' इति योगविभागात्समासः।**

**पूर्वान्तोऽयमादुक् क्रियते। पदान्तलक्षणोऽत्रानुनासिको विकल्पेन यथा स्याद् इति॥**

### न्यास

**एकादिश्चैकस्य चादुक्॥** एकादिरिति बहुव्रीहिः। **एकान्नविंशतिरिति।** पूर्वं नञो विंशतिशब्देन समासं कृत्वा ततस्तृतीयासमासः कर्त्तव्यः।

किमर्थं पुनरयं पूर्वान्त आदुक् क्रियते, न परादिरेवादुट् क्रियेत? तत्राप्ययमर्थः—एकस्य चेत्येष आगमिनो निर्देशो न कर्त्तव्यो भवति। परादौ हि क्रियमाणे नञेवागमो भवति, स च प्रकृतत्वादेव लभ्यते; तत्रायं वाक्यार्थो भवति—एकादिश्च नञ् प्रकृत्या भवति, आदुट् च तस्यागमो भवति—इति सिद्धमिष्टम्? इत्याह—**पूर्वान्तोऽयमित्यादि।** 'यरोऽनुनासिकेऽनुनासिको वा' इत्यत्र हि **'न पदान्ताट्टोरनाम्'** इत्यतः पदान्तादित्यनुवर्त्तते। तत्र यदि परादिः क्रियते पदान्तताऽस्य न स्यात्, ततश्च पदान्तलक्षणोऽनुनासिकविकल्पो न स्यात्, इष्यते च। तस्माद् विकल्पेन यथा स्यादित्येवमर्थं पूर्वान्त आदुक् क्रियते।

अथ किमर्थमादुक् क्रियते? अदुगेव नोच्येत, अदुक्यपि क्रियमाणेऽकः सवर्णे दीर्घत्वेन सिध्यति? न सिध्यति; 'अतो गुणे' पररूपत्वं प्राप्नोति, तदप्यकारोच्चारणसामर्थ्यान्न भविष्यति, यदि ह्यत्र पररूपत्वं स्याद् दुकमेव विदध्यात्, तर्हि सवर्णदीर्घत्वमप्यकारोच्चारणसामर्थ्यान्न स्यात्? नैतदस्ति; तथा हि—यं

### पदमञ्जरी

**एकादिश्चैकस्य चादुक्॥** एकादिरिति बहुव्रीहिः। आदिशब्दो व्यवस्थावचनः। **एकान्नविंशतिरिति।** पूर्वं नञो विंशत्यादिभिः समासं कृत्वा पश्चात् तृतीयासमासः कर्तव्यः।

किमर्थं पुनः पूर्वान्तोऽयमादुक् क्रियते, न परादिरादुट् क्रियेत्, एवमेकस्येत्यागमिनिर्देशार्थं न कर्तव्यं भवति, प्रकृतस्य नञ एवागमित्वात्? इत्यत आह—**'पूर्वान्तश्चायमिति।** 'यरोऽनुनासिकेऽनुनासिको वा' इत्यत्र 'न पदान्ताट्टोरनाम्' इत्यतः पदान्तग्रहणमनुवर्तते, अविघ्नः, बध्नातीत्येवमादिषु मा भूदिति। परादौ सति दकारः पदान्तो न स्यादिति अनुनासिको न स्यात्। अथानुट् क्रियेत, एवमपि पक्षे दकारश्रवणं न स्यात्? तदिदमुक्तम्—**अनुनासिको विकल्पेन यथा स्यादिति।** किमर्थं पुनरादुक् क्रियते, अदुगेव नोच्येत,

### भावबोधिनी

[ये सभी रूढ़ शब्द हैं किसी प्रकार व्युत्पत्ति करके इनको समझना चाहिए।] ॥ ७५ ॥

एक जिसका आदि है ऐसा नञ् शब्द प्रकृति से रहता है और एक शब्द को आदुक् आगम होता है। उदा० एकेन न विंशतिः—एकान्नविंशतिः। [समास के बाद एक न विंशतिः इसमें आदुक् = आद्। एक आद् न विंशतिः, सवर्णदीर्घ, परसवर्ण करने पर एकान्नविंशतिः। इसी प्रकार एकेन न त्रिंशत्—एकान्नत्रिंशत्। इसमें भी एक न त्रिंशत् में आदुक् = आद् आगम, परसवर्ण होता है।]

[पहले नञ् का विंशति शब्द के साथ समास होता है, नञ् का प्रकृतिभाव होता है, तब 'आदुक्' आगम होता है।] यहाँ "तृतीया" (२।१।३०) इस योगविभाग से समास होता है।

---

१. पूर्वान्तोऽयम्—इदं काशिकायाम्।

**२९३९. नगोऽप्राणिष्वन्यतरस्याम् ॥ ७७ ॥ (७६०)**

नञ्प्रकृत्या भवत्यन्तरस्याम् । नगा वृक्षाः, अगा वृक्षाः । नगाः पर्वताः, अगाः पर्वताः । न गच्छन्तीति नगाः । गमेर्डप्रत्ययः (उणादि २३५) ।

अप्राणिष्विति किम् ? अगो वृषलः शीतेन ॥

**२९४०. सहस्य सः संज्ञायाम् ॥ ७८ ॥ (१००९)**

सहशब्दस्य स इत्ययमादेशो भवति संज्ञायां विषये । साश्वत्थम् । सपलाशम् । सशिंशपम् ।

संज्ञायामिति किम् ? सहयुध्वा । सहकृत्वा ।

**न्यासः**

विधिं प्रत्युपदेशोऽनर्थकः स्यात् स विधिर्बाध्यते, यस्य तु विधेस्तदेव निमित्तं नासौ विधिर्बाध्यते । पररूपत्वं च प्रत्यकारोच्चारणमनर्थकम्, सवर्णदीर्घत्वं तु प्रति निमित्तमेव । एवं तह्यदुगेवायम् । तुल्या हि संहिता ॥ ७६ ॥

**नगोऽप्राणिष्वन्यतरस्याम्** ॥ **गमेर्डप्रत्यय इति** । 'डप्रकरणे अन्यत्रापि दृश्यते' इति वचनात् ॥ ७७ ॥

**सहस्य सः संज्ञायाम्** ॥ **साश्वत्थमिति** । सहाश्वत्थेनेति 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । **सहयुध्वा, सहकृत्वेति** । 'दृशेः क्वनिप्' इत्यनुवर्त्तमाने 'राजनि युधिकृञः', 'सहे च' इति क्वनिप्, उपपद-समासः, 'सर्वनामस्थाने' इति दीर्घः ।

**पदमञ्जरी**

सवर्णदीर्घत्वे तावत् सिद्धम्, 'अतो गुणे' इति पररूपत्वं चकारोच्चारणसामर्थ्यादेव न भविष्यति, यदि स्याद् दुकमेव विदध्यात् । सवर्णदीर्घत्वं तु 'यं विधिं प्रत्युपदेशोऽनर्थकः' (व्या० प० ५६) इति न्यायाद्भविष्यति । **वृत्तिकारेण** तु प्रतिपत्तिलाघवार्थमादुगयं व्याख्यातः ॥ ७६ ॥

**नगोऽप्राणिष्वन्यतरस्याम्** ॥ **गमेर्डप्रत्यय इति** । 'डप्रकरणे अन्यत्रापि दृश्यते' (वा० २५६) इति ॥७७॥

**सहस्य सः संज्ञायाम्** ॥ **सहयुध्वेति** । युध्यतेः क्वनिप् 'राजनि युधि कृञः', 'सहे च' इति सादेशः ।

**भावबोधिनी**

यह आदुक् आगम पूर्व का अन्त आगम किया जाता है जिससे कि पदान्त को मान कर होने वाला अनुनासिक विकल्प से हो सके । [कित् होने से पूर्व पद का अन्तावयव बनता है । अतः "वा पदान्तस्य" सूत्र से विकल्प से परसवर्ण होता है । यहाँ 'अदुक्' या 'आदुक्' आगम है । दोनों में समान स्थिति है । अतः सन्देह बना ही है ।] ॥ ७६ ॥

[प्राणिभिन्न अर्थ में] नञ् प्रकृतिरूप से रहता है विकल्प से । उदा० नगाः वृक्षा, अगाः वृक्षाः । नगाः पर्वताः, अगाः पर्वताः । इनमें 'न गच्छन्ति' इस अर्थ में √गम् धातु से ड = अ प्रत्यय होने पर टि = अम् का लोप हो जाता है ।

प्राणिभिन्न में—इसका क्या फल है ? अगो वृषलः शीतेन । [यहाँ वृषलरूप प्राणी है । अतः प्रकृतिभाव न होकर न् का लोप ही होता है ।] ॥ ७७ ॥

संज्ञाविषय रहने पर 'सह' का 'स' आदेश हो होता है । उदा० साश्वत्थम् । सपलाशम् । सशिंशपमु । [अश्वत्थेन सह, पलाशेन सह, शिंशपेन सह—इन अर्थों में "तेन सहेति तुल्ययोगे" इस सूत्र से समास के बाद सह का स आदेश हो जाता है ।

संज्ञामें—यह किसलिए है ? सहयुध्वा । सहकृत्वा । [सह योधितवान्, सह कृतवान्—इन अर्थों में 'सह' को मानकर युध् तथा कृ धातुओं से क्वनिप् = वन् प्रत्यय और तुगागम होता है । यहाँ संज्ञा की प्रतीति नहीं है । अतः स आदेश नहीं होता है ।]

सादेश उदात्तो निपात्यते (म० भा०)। उदात्तानुदात्तवतो हि सहशब्दस्यान्तर्यतः स्वरितः स्यात्। स च निपातस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र, तत्र उपयुज्यते। अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव—सेष्टि, सपशुबन्धमिति ॥

## २६४१. ग्रन्थान्ताधिके च ॥ ७९ ॥ (१०१०)

**ग्रन्थान्ते, अधिके च वर्त्तमानस्य सहशब्दस्य स इत्ययमादेशो भवति। सकलं ज्यौतिषमधीते।**

**न्यासः**

किं पुनः कारणं सादेश उदात्तो निपात्यते ? इत्यत आह—**उदात्तानुदात्तवतो** **हीत्यादि**। 'निपाता आद्युदात्ता भवन्ति' इति सहशब्द आद्युदात्त एव, शेषमनुदात्तम्। तेनासावुदात्तानुदात्तवान्, ततश्चान्तर्यतस्तस्य स्थाने सशब्दः स्वरितः। तस्मान्मा भूदेष दोष इत्युदात्तो निपात्यते। यद्येवम्, अव्ययीभावेऽपि उदात्त एव स्वरः प्राप्नोति ? इत्यत आह—**स च निपातस्वर इत्यादि**। **यत्रेत्यादि**। बहुव्रीहौ, तत्पुरुषे वा। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति सहेत्येतस्य समासान्तोदात्तत्वापवादः प्रकृतिस्वरत्वं भवति। तत्पुरुषेऽपि 'तत्पुरुषे तुल्यार्थ' इत्यादिना। तस्मात् तत्रैव स निपातस्वरः प्रसज्यते। अव्ययीभावे तु समासान्तोदात्तत्वापवादः प्रकृतिस्वरो न केनचिद्विहित इति तत्र समासान्तोदात्तत्वेनैव भवितव्यम्। अतस्तेन बाध्यत एव। **सेष्टि, सपशुबन्धमिति**। इष्टिरन्तो यस्य, पशुबन्धोऽन्तो यस्येति, 'अव्ययं विभक्ति' इत्यादिना समासः अन्तवचने। अत्र परत्वात् प्रथमस्तावन्निपातस्वरः, ततः समासान्तोदात्तत्वम्। तच्च सति निपातस्वरे शिष्यत इति सतिशिष्टम्, अतस्तेन निपातस्वरो बाध्यते; सतिशिष्टस्वरस्य बलीयस्त्वात् ॥ ७८ ॥

**ग्रन्थान्ताधिके च ॥ सकलमिति**। कला = कालविशेषः, तत्सहचरितो ग्रन्थस्तयोच्यते। सह कलया

**पदमञ्जरी**

**उदात्तो निपात्यत इति**। अन्यथा तु किं स्यात् ? इत्यत आह—**उदात्तानुदात्तवतो हीति**। सहशब्दे 'निपाता आद्युदात्ताः' (फि० सू० ४.१२) इति सशब्द उदात्तः, शेषनिघाते हशब्दोऽनुदात्तः, तेनासावुदात्तानुदात्तवान् तस्य स्थाने भवन् सशब्द आन्तर्यतः स्वरितः स्यात्, तन्मा भूदेष दोष इति उदात्तो निपात्यते। यद्येवम्, अव्ययीभावेऽपि तस्यैवोदात्तत्वं श्रूयते ? तत्राह—**स चेति**। अयमभिप्रायः—समासे कृते समासस्वरश्च प्राप्नोति, अयं चादेशः; तत्र परत्वादस्मिन्नादेशे उदात्तेऽभिनिर्वृत्ते पुनःप्रसङ्गविज्ञानात् समासस्वरः, स च सतिशिष्ट इति तस्यैव श्रवणम्। उदात्तनिपातनस्य तु यत्र पूर्वपदप्रकृतिस्वरत्वं बहुव्रीहितत्पुरुषयोस्तत्रैव श्रवणमिति। **सेष्टि, पशुबन्धमिति**। अन्तवचनेऽव्ययीभावः ॥ ७८ ॥

**ग्रन्थान्ताधिके च। सकलमिति**। कला = कालविशेषः, तत्सहचरितो ग्रन्थोऽपि कला। एवं **समुहूर्त-**

**भावबोधिनी**

स आदेश उदात्त निपातित होता है। [आदि] उदात्त वाले [अन्त] अनुदात्त वाले सह के स्थान पर सादृश्य के कारण स्वरित ही हो। और वह निपातस्वर, पूर्वपद का प्रकृतिस्वर जहाँ (बहुव्रीहि और तत्पुरुष में) होता है वहाँ उपयुक्त होता है। अन्य लक्ष्यों में तो समास के अन्तोदात्तत्व द्वारा बाधित ही कर लिया जाता है—सेष्टि, सपशुबन्धम्। [इष्टिः अन्तः यस्य, पशुबन्धः अन्तः यस्य सः—इनमें अन्तवचन में "अव्ययं विभक्तिः" सूत्र से अव्ययीभाव समास होता है)] ॥ ७८ ॥

"ग्रन्थान्त में और अधिक अर्थ में वर्तमान 'सह' शब्द का 'स' यह आदेश होता है। उदा० सकलं ज्यौतिषम् अधीते। [कला = यह समय विशेष का नाम है, इसके सहचरित ग्रन्थ को भी 'कला' कहा जाता है—कलया सह

**समुहूर्तम्**।[1] **ससंग्रहं व्याकरणमधीयते। कलान्तम्, मुहूर्त्तान्तम्, संग्राहन्तमिति 'अन्तवचने' (२.१.६)—अव्ययीभावः समासः। तत्र 'अव्ययीभावे चाकाले' (६.३.८१) इति कालवाचिन्युत्तरपदे सभावो न प्राप्नोतीत्ययमारम्भः।**

**अधिके—सद्रोणा खारी। समाषः कार्षापणः। सकाकिणीको माषः॥**

## २९४२. द्वितीये चानुपाख्ये ॥ ८० ॥ (१०११)

**द्वयोः सहयुक्तयोरप्रधानो यः स द्वितीयः। उपाख्यायते = प्रत्यक्षत उपलभ्यते यः स उपाख्यः,**

**न्यासः**

वर्त्तत इति सकलम्। एवं **समुहूर्त्तमित्येतदपि** वेदितव्यम्। **ससंग्रहमिति** एतदुदाहरणं प्रमादादिदानीन्तनैः [1]कुलेखकैर्लिखितम्, तत्र हि 'अव्ययीभावे चाकाले' इत्येवं सिद्धः सभावः। **अन्तवचनेऽव्ययीभावः समास इति।** यद्येवम्, ग्रन्थान्तेऽपार्थकोऽयं सभावस्यारम्भः, यावता 'अव्ययीभावे चाकाले' इत्येवं सभावः सिद्धः? इत्याह—**तत्रेत्यादि**। कथं पुनर्न प्राप्नोति, यावता कालमुहूर्त्तशब्दौ तावत् साहचर्यादत्र ग्रन्थे वर्तेते? एवं मन्यते—प्रकरणादिना वाक्येन ग्रन्थविषयता तयोर्गम्यते। मुख्यस्तु काल एवाभिधेय इति।

**सद्रोणा खारीत्यादि**। 'तेन सह' इत्यादिना बहुव्रीहिः॥ ७९॥

**द्वितीये चानुपाख्ये॥ द्वयोः सहप्रयुक्तयोरप्रधानो यः स द्वितीय इति।** प्रधानेतरसन्निपाते सत्यप्रधान एव द्वितीयशब्दस्य प्रयोगात्। तथा हि—स्वामिभृत्ययोः सहयुक्तयोर्भृत्य एव स्वामिनं प्रति द्वितीय

**पदमञ्जरी**

मित्यत्रापि। **ससंग्रहमिति**।[1] एतत्तु प्रमादाल्लिखितम्, अत्र हि 'अव्ययीभावे चाकाले' इति वक्ष्यमाणेनैव सिद्धः सभावः। **कालवाचिन्युत्तरपद इति**। कालादयः शब्दा यद्यपि तत्सहचरितग्रन्थपराः, तथाप्यधीत इति पदान्तरप्रयोजनसमधिगम्यत्वाद् ग्रन्थपरत्वं बहिरङ्गमिति कालाश्रयः प्रतिषेध एव स्यादिति मन्यते।

**सद्रोणेति**। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिरयम्। तेन 'वोपसर्जनस्य' इति विकल्पे प्राप्ते नित्यार्थं वचनम्॥ ७९॥

**द्वितीये चानुपाख्ये॥ अप्रधानो यः सः द्वितीया इति।** अत्रैव लोके द्वितीयाशब्दस्य प्रयोगात्, स्वामिभृत्ययोर्हि स्वामिनं प्रति भृत्यो द्वितीय इत्युच्यते, न विपर्ययेण। **उपाख्याये** इत्यस्य विवरणम्—

**भावबोधिनी**

वर्तते—इस अर्थ में समास के बाद 'सह' का 'स' आदेश, नपुंसकत्व, ह्रस्व होने पर रूप बनता है।] समुहूर्त्तम्। [मुहूर्त्तेन सह वर्तते—इस अर्थ में समास के बाद 'सह' का 'स' आदेश होता है। मुहूर्त शब्द भी मुहूर्त्तसहचरित ग्रन्थ का नाम है। ससंग्रहं व्याकरणम् अधीयते [संग्रहग्रन्थसहचरित व्याकरण का अध्ययन करते हैं।] कलान्त, मुहूर्तान्त और संग्रहान्त—इन अन्त वचनों में अव्ययीभाव समास होता है। इनमें "अव्ययीभावे चाकाले" सूत्र से कालवाची उत्तर पद रहने पर 'सह' का 'स' आदेश नहीं प्राप्त होता है, इस कारण प्रस्तुत सूत्र बनाया गया है। [ससंग्रहम्—उदा० प्रमादग्रस्त है।]

अधिक अर्थ में—सद्रोणा खारी। [द्रोणेन सहिता खारी—इस अर्थ में समास के बाद सह का स आदेश होता है।] समाषः कार्षापणः। [माषेण सहितः] सकाकिणीको माषः। [काकिणीकेन सहितः—यहाँ अधिक अर्थ में समास के बाद 'स' आदेश होता है।]॥ ७९॥

सह से युक्त दो में जो अप्रधान है वह द्वितीय है। उपाख्यायते = प्रत्यक्ष रूप से जो उपलब्ध होता है उसे 'उपाख्य' कहा जाता है। उपाख्य से भिन्न = अनुपाख्य = अनुमेय, उस द्वितीय अनुपाख्य में सह का स यह आदेश होता है। उदा० साग्निः कपोतः। सपिशाचा वात्या। सराक्षसीका शाला। [अग्निना सह वर्तते—इस अर्थ में समास के बाद

---

१. न्यासपदमञ्जर्याद्यनुरोदस्योल्लेखः प्रमादादेव बोध्यः।

**उपाख्यादन्योऽनुपाख्यः = अनुमेयस्तस्मिन् द्वितीयेऽनुपाख्ये सहस्य स इत्ययमादेशो भवति। साग्निः कपोतः। सपिशाचा वात्या। सराक्षसीका शाला। अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमानास्तदुपाख्या भवन्ति ॥**

**२८४३. अव्ययीभावे चाकाले ॥ ८१ ॥ (६६०)**

**अव्ययीभावे च समासेऽकालवाचिन्युत्तरपदे सहस्य स इत्ययमादेशो भवति। सचक्रं धेहि। सधुरं प्राज। अकाल इति किम्? सहपूर्वाह्णम् ॥**

**न्यासः**

उच्यते, न तु भृत्यं प्रति स्वामी। **उपाख्यायते यः स उपाख्य इति।** 'आतश्चोपसर्गे' इति कः, स च भवन् 'कृत्यल्युटो बहुलम्' इति कर्मणि भवति। **साग्निः कपोत इति।** पूर्ववद् बहुव्रीहिः। अत्राग्निसहयुक्तः कपोतः, तयोर्हि साहचर्यं लोके प्रसिद्धम्। तत्राग्निरप्रधानः। तथा ह्यग्निः कपोतमनुविधत्ते—यत्र हि कपोतस्तत्राग्निनावश्यं भवितव्यम्, न तु यत्राग्निस्तत्र कपोतेनेति नासावग्निमनुविधत्ते, तेन कपोतस्य प्राधान्यम्। अग्न्यादयः पुनरप्रधाना एव। **अग्न्यादय इति।** अत्रादिशब्देन **पिशाचादयो गृह्यन्ते।** ते हि न क्वचित् प्रत्यक्षेण उपलभ्यन्ते, अपि तु कपोतादिभिरविनाभाविभिरनुमीयन्ते इत्यनुपाख्या भवन्ति ॥ ८० ॥

**अव्ययीभावे चाकाले ॥ अकालवाचिनीति।** अनेन **'काले'** इति नेह स्वरूपस्य ग्रहणम्, अपि तु कालविशेषवाचिनां पूर्वाह्णादिशब्दानामिति दर्शयति। कुत एतत् पुनरवसितम्? 'ग्रन्थान्ताधिके च' इत्यत्र ग्रन्थान्तग्रहणात्। अनेन हि कालवाचिन्युत्तरपदे प्रतिषेधः प्राप्नोति, स मा भूदिति। तत्र ग्रन्थान्तग्रहणं क्रियते, यदि चात्र 'काले' इति स्वरूपग्रहणं स्यात्, ततस्तेनैव सकलम्, समुहूर्तमित्यत्र सभावः सिद्ध इति तत्र ग्रन्थान्तग्रहणमनर्थकं स्यात्। **सचक्रमिति।** 'अव्ययं विभक्ति' इत्यादिना यौगपद्येऽव्ययीभावः। **सधुरमिति।** 'ऋक्पूरब्धूः पथामानक्षे' इत्यकारः समासान्तः।

**सहपूर्वाह्णमिति।** तेनैव सूत्रेण साकल्येऽव्ययीभावः ॥ ८१ ॥

**पदमञ्जरी**

**[1]प्रत्यक्षेणोपलभ्यत इति।** 'घञर्थे कविधानम्' (वा० ३०६) इति कः कर्मणि। **साग्निरिति।** पूर्ववद्बहुव्रीहिः, इदमपि नित्यार्थं वचनम्। 'अग्न्यादयः' इत्यादिना अनुपाख्यत्वं दर्शयति, कपोतश्चेदगारमुपहन्यात्ततश्च कपोतेनाग्निरनुमीयते। विद्युद्वात्ययोश्च रक्षःपिशाचं वर्तत इति वार्त्ता ॥ ८० ॥

**अव्ययीभावे चाकाले ॥ अकालवाचिनीति।** स्वरूपग्रहणं न भवति; 'ग्रन्थान्ताधिके च' इत्यत्र ग्रन्थग्रहणात्, तद्धि समुहूर्तमित्यादौ यथा स्यादित्येवमर्थम्। यदि चात्र स्वरूपग्रहणं भवति, तदा मुहूर्त्तादौ निषेधाभावादनेनैव सिद्धत्वादनर्थकं तत्स्यात्। **सचक्रमिति।** यौगपद्येऽव्ययीभावः। **सपुरमिति।** 'ऋक्पूरब्धूः' इत्यकारः समासान्तः। **सहपूर्वाह्णमिति।** साकल्येऽव्ययीभावः ॥ ८१ ॥

**भावबोधिनी**

सह का स आदेश होता है। यहाँ अग्निसहयुक्तः कपोतः—इस स्थिति में अग्नि अप्रधान है। जहाँ कपोत होता है वहाँ अग्नि अवश्य होता है, जहाँ अग्नि है वहाँ कपोत होना अनिवार्य नहीं है। अतः अग्नि अप्रधान है। इसके साथ 'सह' का 'स' आदेश हो जाता है। अतः अग्नि का ज्ञान अनुमान से होता है। इसी प्रकार वात्या से पिशाच का अनुमान होता है। शाला से राक्षसी का अनुमान होता है। अग्नि आदि साक्षात् उपलब्ध न होते हुए कपोत आदि के द्वारा अनुमित होते हुए तदुपाख्य होते हैं।] ॥ ८० ॥

और अव्ययीभाव समास में काल से भिन्न अर्थवाचक उत्तरपद रहने पर सह का स यह आदेश होता है। उदा० सचक्रं धेहि। सधुरं प्राज। [ चक्रेण सह वर्त्तते। धुरा सह वर्तते—इन अर्थों में समास के बाद 'सह' का 'स'

१. प्रत्यक्षतः—इदं काशिकायाम्।

## २९४४. वोपसर्जनस्य ॥ ८२ ॥ (८४९)

**उपसर्जनसर्वावयवः समास उपसर्जनम्, यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहि-र्गृह्यते । तदवयवस्य सहशब्दस्य वा स इत्ययमादेशो भवति । सपुत्रः । सहपुत्रः । सच्छात्रः । सहच्छात्रः ।**

**उपसर्जनस्येति किम् ? सहयुध्वा । सहकृत्वा ।**

**न्यासः**

**वोपसर्जनस्य ॥** यदि 'उपसर्जनस्य' इत्येतत् सहशब्दस्य विशेषणं स्यात् तदातिप्रसङ्गः स्यात् । विशेषानुपादानादिहापि स्यात्—सहयुध्वा, सहकृत्वेति । अत्रापि सहशब्द उपसर्जनम्, 'उपपदमतिङ्' इति प्रथमानिर्देशात्, अप्राधान्याच्च । अनर्थकञ्च विशेषणं स्यात्; सर्वत्रैव हि समासे सहशब्दस्योपसर्जनत्वात् । समासश्चेहोत्तरपदेन सन्निधापितः, यस्मात् समासे ह्युत्तरपदं भवति, अतस्तस्यैवेदं विशेषणमिति मन्यमान आह—**उपसर्जनसर्वावयव इति ।** उपसर्जनं सर्वोऽवयवो यस्य स तथोक्तः; अवयवधर्मेण समुदायधर्मस्य तथा निर्देशात्, यथा—आढ्यमिदं नगरमिति । यदि कस्यचित्कश्चिदुपसर्जनमवयवः कश्चिदनुपसर्जनं सोऽप्युप-सर्जनमित्युच्यते, तदातिप्रसङ्गदोषस्तदवस्थः स्यादिति सर्वग्रहणम् । कः पुनरसौ सर्वोपसर्जनावयवः समासः ? बहुव्रीहिः । ननु द्वन्द्वोऽप्युपसर्जनसर्वावयव एव, तस्यापि ग्रहणं प्राप्नोति ? नैष दोषः; न हि सहपदेन सहान्यस्य द्वन्द्वोऽस्ति । स हि प्रधानानां समानकक्षाणामेव भवति । सहशब्दश्च यत्रैकस्य प्राधान्यम्, अपरस्य तु गुण-भावस्तत्रैव प्रयुज्यते । अथ वा—उभयगतिरिह शास्त्रे सम्भवतीति लौकिकमप्युपसर्जनमिह गृह्यते । तेन शास्त्रीयोपसर्जनेन लौकिकेन चोपसर्जनीभूताः सर्वेऽवयवा यस्य स एवोपसर्जनशब्देन विवक्षित इति विज्ञायते । न चैवंविधो द्वन्द्वः । तस्य ह्यवयवानां शास्त्रीयेणैवोपसर्जनेनोपसर्जनत्वम्, न तु लौकिकेन । बहुव्रीहिस्तु लौकि-केनापि । तस्मात् तस्यैवोपसर्जनग्रहणेन ग्रहणम् । **तदवयवस्येति ।** अनेनोपसर्जनस्येत्येषाऽवयवषष्ठीति दर्शयति । **सपुत्र इति ।** पूर्ववद्बहुव्रीहिः ।

**सहयुध्वा, सहकृत्वेति ।** तत्पुरुषोऽयमुत्तरपदार्थप्रधानः ।

**पदमञ्जरी**

**वोपसर्जनस्य ॥** उपसर्जनस्येत्यस्य सहशब्दे विशेष्ये सहयुध्वा, सहकृत्वेत्यत्रापि स्यात्, अनर्थकञ्च विशेषणं स्यात्, सहशब्दस्य चासत्त्ववाचित्वाद् द्वन्द्वो न सम्भवति, समासान्तरे च सह उपसर्जनमेव; तस्मा-दुत्तरपदेन सन्निधापितस्य समासस्यैवेदं विशेषणं विज्ञायते । तत्राप्यवयवद्वारा समासस्योपर्जनसंज्ञाया अभावात् सर्वत्र च समासे कश्चिदवयव उपसर्जनमेव । उच्यते चेदमुपसर्जनस्येति, ततश्च सर्वावयवद्वारा विज्ञायते, तदिदमुक्तम्—**उपसर्जनसर्वावयव इति । तदवयवस्येति ।** 'उपसर्जनस्य' इत्यवयवयोगे षष्ठीति दर्शयति । **सहकृत्वप्रिय इति ।** 'वा प्रियस्य' (वा० ११४) इति पूर्वनिपातविकल्पः । **इह बहुव्रीहौ यदुत्तरपदमिति ।** उत्तर-

**भावबोधिनी**

आदेश होता है । सचक्रम् में यौगपद्य अर्थ में अव्ययीभाव है । 'सधुरम्' 'सपुरम्' दोनों पाठ मिलते हैं । ] कालवाचक न होने पर—इसका क्या फल है ? सहपूर्वाह्णम् । [ यहाँ कालवाचक ही है । अतः सह का स नहीं होता है । ] ॥ ८१ ॥

उपसर्जन हैं सभी अवयव जिसके ऐसा समास उपसर्जन है, जिसके सभी अवयब उपसर्जनीभूत हैं वह सर्वोपसर्जन बहुव्रीहि लिया जाता है । उसके अवयव सह शब्द का 'स' यह आदेश विकल्प से होता है । उदा० सपुत्रः सहपुत्रः । सच्छात्रः, सहच्छात्रः । [ पुत्रैः सह, छात्रैः सह—इनमें समास के बाद सह का स आदेश होता है । उपसर्जन का—इसका क्या फल है ? सहकृत्वा । सहयुध्वा । [ इनमें उपसर्जन नहीं है । ]

सहकृत्वप्रियः, प्रियसहकृत्वेति, इह बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवतीति सभावो न भवति ॥

**२९४५. प्रकृत्याशिष्यगोवत्सहलेषु ॥ ८३ ॥ (८५०)**

प्रकृत्या सहशब्दो भवति आशिषि विषयेऽगोवत्सहलेषु । स्वस्ति देवदत्ताय सहपुत्राय सहच्छात्राय सहामात्याय ।

अगोवत्सहलेष्विति किम्? स्वस्ति भवते सहगवे, सगवे । सहवत्साय, सवत्साय । सहहलाय, सहलाय । 'वोपसर्जनस्य' (६.३.८२) इति पक्षे भवत्येव सभावः ॥

**न्यासः**

अथेह कस्मान्न भवति—सहकृत्वप्रियः, प्रियसहकृत्वेति, भवति ह्यत्रापि सहशब्दो बहुव्रीह्यवयवः? इत्याह—**इहेत्यादि** । 'वा प्रियस्य' इति प्रियशब्दस्य विकल्पेन पूर्वनिपातः । उत्तरपदाधिकारादिह बहुव्रीह्याश्रयणाच्च बहुव्रीहौ यदुत्तरपदं तत् परं यस्मात् सहशब्दात् तस्य सभावेन भवितव्यम् । न चेह बहुव्रीहौ यदुत्तरपदं तत् सहशब्दात् परम्, शब्दान्तरेण व्यवधानादिति न भवति सभावः ॥ ८२ ॥

**प्रकृत्याशिष्यगोवत्सहलेषु** ॥ पूर्वेणातिप्रसक्तस्य सभावस्य प्रकृतिभावेन निवृत्तिः क्रियते । नेति वक्तव्ये प्रकृत्येति वचनं वैचित्र्यार्थम् ॥ ८३ ॥

**पदमञ्जरी**

पदाधिकारात्, सर्वोपसर्जनस्य बहुव्रीहेराश्रयणाच्च तत्सम्बन्धिन्येवोत्तरपदे सहशब्दस्यानन्तरे सभावेन भाव्यमिति भावः । **तत्परः सहशब्दो न भवतीति** । पूर्वत्र तावन्न भवति, कृत्वशब्देन व्यवधानात्, उत्तरत्रापि सहकृत्वेत्येतदुत्तरपदम्, न कृत्वशब्दः ॥ ८२ ॥

**प्रकृत्याशिष्यगोवत्सहलेषु** ॥ 'प्रकृत्याशिषि' इत्येतावत्सूत्रम्, परशिष्टं भाष्यवार्त्तिकदर्शनात् सूत्ररूपेण पठितम् । 'न' इति वक्तव्ये प्रकृतिवचनं वैचित्र्यार्थम् ॥ ८३ ॥

**भावबोधिनी**

सहकृत्वप्रियः, प्रियसहकृत्वा—इनमें बहुव्रीहि में जो उत्तरपद है उससे परे सह शब्द नहीं है इसलिये 'स' आदेश नहीं होता है । [ प्रथम में 'कृत्व' का व्यवधान है । दूसरे में 'सहकृत्वा' यह पूरा उत्तरपद है केवल कृत्व नहीं । अतः इसमें भी 'स' आदेश नहीं होता है । ] ॥ ८२ ॥

आशीः अर्थ में गो, वत्स तथा हल से भिन्न में सह शब्द प्रकृतिरूप से रहता है । उदा० स्वस्ति देवदत्ताय सहपुत्राय, सहच्छात्राय, सहामात्याय । [ इनमें 'स' आदेश नहीं होता है । ]

गो, वत्स तथा हल—इनसे भिन्न में—इसका क्या फल है? स्वस्ति भवते—सहगवे सगवे । सहवत्साय, सवत्साय । सहहलाय सहलाय । इनमें "वोपसर्जनस्य" इस पूर्वोक्त सूत्र से विकल्प से 'स' आदेश होता ही है । [ अतः दो रूप बनते हैं । ]

**विमर्श**—पाणिनि ने "प्रकृत्याशिषि" इतना ही सूत्र बनाया है । वार्त्तिककार ने इस पर "प्रकृत्याशिष्यगवादिषु" यह वार्त्तिक लिखा है । भाष्यकार ने वार्त्तिकस्थ आदि शब्द के उदा० के रूप में 'स्वस्ति भवते सगवे सवत्साय सहलाय' यह लिखा है । अतः गो के साथ साथ वत्स और हल में भी 'सह' का 'स' नहीं होता है । परन्तु काशिकाकार ने सभी को मिला कर सूत्र का आकार लिखा है—"प्रकृत्याशिष्यगोवत्सहलेषु ।" इसलिये काशिकाकार की दृष्टि चिन्त्य तथा परम्पराविरुद्ध प्रतीत होती है ॥ ८३ ॥

**२९४६. समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ ८४ ॥ (१०१२)**

'सः' इति वर्तते। समानस्य 'स' इत्ययमादेशो भवति छन्दसि विषये मूर्द्धन्, प्रभृति, उदर्क—इत्येतान्युत्तरपदानि वर्ज्जयित्वा। अनुभ्राता सगर्भ्यः (वा० सं० ४.२०)। अनुसखा सयूथ्यः (वा० सं० ४.२०) यो नः सनुत्यः (ऋ० २.३०.९)। समानो गर्भः सगर्भः, तत्र भवः सगर्भ्यः। 'सगर्भसयूथसनुताद्यत्' (४.४.१३४) इति यत्प्रत्ययः।

अमूर्धप्रभृत्युदर्केष्विति किम्? समानमूर्धा। समानप्रभृतयः। समानोदर्काः।

'समानस्य' इति योगविभाग इष्टप्रसिद्ध्यर्थः क्रियते। तेन सपक्षः, साधर्म्यम्, सजातीयः—इत्येवमादयः सिद्धा भवन्ति॥

**२९४७. ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ८५ ॥ (१०१३)**

ज्योतिस्, जनपद, रात्रि, नाभि, नामन्, गोत्र, रूप, स्थान, वर्ण, वयस्, वचन, बन्धु—इत्येतेषूत्तर-

**न्यासः**

**समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु॥ सगर्भः, सयूथ्य इति।** समानो गर्भः, समानं यूथमिति विगृह्य 'पूर्वापरप्रथम' इत्यादिना कर्मधारयः। **साधर्म्यमिति।** बहुव्रीहेर्भावप्रत्ययः। **सजातीय इति।** अत्रापि बहुव्रीहेरेव 'जात्यन्ताच्छ बन्धुनि' इति च्छः। **सस्थानीय इति।** 'स्थानान्ताद्विभाषा सस्थानेनेति चेत्' इति च्छप्रत्ययः॥ ८४॥

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु॥ सज्योतिरिति।** समानं ज्योतिर-

**पदमञ्जरी**

**समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु॥ समानस्येति योगविभाग इति।** अपर आह—सहशब्दः सदृशवचनोऽस्ति, यथा—सदृशः सख्या ससखीति, तस्यायमस्वपदविग्रहो बहुव्रीहिः—समानो धर्मोऽस्य, समानः पक्षोऽस्य, समाना जातिरस्य, 'वोपसर्जनस्य' इति सभावः। समानशब्दस्य तु समानजातीय इत्यादि भवति। योगविभागे तु तस्य नित्यत्वान्नैतत्सिध्यति। अत एव **भाष्यवार्त्तिकयो**र्योगविभागस्य नोपन्यास इति॥ ८४॥

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोववचनबन्धुषु॥ सज्योतिरिति।** समानं ज्योतिर-

**भावबोधिनी**

'सः' इसकी अनुवृत्ति होती है। वेद-विषय में मूर्द्धन्, प्रभृति, उदर्क—इन उत्तर पदों को छोड़कर 'समान' का 'स' यह आदेश होता है। उदा० अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्यः। [इनमें समान का स आदेश हुआ है।] समानः गर्भः—इस अर्थ में [समास के बाद समान का स आदेश करने पर]—सगर्भः, सगर्भे भवः—इस अर्थ में—सगर्भ्यः। "सगर्भ-सयूथ-सनुताद् यत्" सूत्र से यत् = य प्रत्यय होता है।

मूर्द्धन्, प्रभृति तथा उदर्क—इनको छोड़कर—इसका क्या फल है? समानमूर्धा। [यहाँ मूर्द्धन ही उत्तरपद है। अतः 'स' आदेश नहीं होता है।] समानप्रभृतयः। समानोदर्काः। [इन सभी में 'स' आदेश नहीं होता है।]

इष्ट शब्दरूपों की सिद्धि के लिये 'समानस्य' यह योग-विभाग किया जाता है। इससे—सपक्षः, साधर्म्यम्, सजातीयः—आदि शब्दरूप सिद्ध होते हैं। [इनमें बहुव्रीहि के बाद समान का स आदेश हो जाता है।]॥ ८४॥

ज्योतिस्, जनपद, रात्रि, नाभि, नामन्, गोत्र, रूप, स्थान, वर्ण, वयस्, वचन, बन्धु—ये उत्तरपद रहने पर 'समान' का 'स' यह आदेश होता है। उदा० सज्योतिः। [समानं ज्योतिः अस्य] सजनपदः। [समानः जनपदः अस्य]

**पदेषु समानस्य 'स' इत्ययमादेशो भवति। सज्योतिः। सजनपदः। सरात्रिः। सनाभिः। सनामा। सगोत्रः। सरूपः। सस्थानः। सवर्णः। सवयाः। सवचनः। सबन्धुः॥**

## २९४८. चरणे ब्रह्मचारिणि॥ ८६॥ (१०१४)

**चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे समानस्य स इत्ययमादेशो भवति। समानो ब्रह्मचारी सब्रह्मचारी। ब्रह्म = वेदः, तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच्चरतीति ब्रह्मचारी। समानः, तस्यैव ब्रह्मणः**

### न्यासः

स्येति बहुव्रीहिः। एवं सजनपदादयो वेदितव्याः। तत्पुरुषेऽपि भवितव्यमेव; विशेषानुपादानात्। **सनामेति।** 'सर्वनामस्थाने च' इत्यादिना दीर्घः। **सवया इति।** अत्रापि 'अत्वसन्तस्य' इति दीर्घः॥ ८५॥

**चरणे ब्रह्मचारिणि॥** चरणशब्दोऽयमध्ययननिमित्तमुपादाय पुरुषादिषु वर्त्तते। ब्रह्म चरतीति ब्रह्मचारी, 'व्रते' इति णिनिः। **सब्रह्मचारीति।** पूर्ववत् कर्मधारयः। सब्रह्मचारीत्यस्यायमर्थोऽभिमतः—समाने ब्रह्मणि व्रतं चरतीति। एष चात्रार्थो यथोपपद्यते, तथा दर्शयितुमाह—**ब्रह्म वेद इत्यादि।** तदध्ययनार्थं यद् व्रतं तदपि ब्रह्मेति। तादर्थ्यात् ताच्छब्द्यम्, यथा—इन्द्रार्था स्थूणा इन्द्र इति। तच्चरतीति तत् सम्पादयति, परिपालयतीत्यर्थः। केन पुनरसौ समानः? इत्याह—**समानस्तस्यैवेत्यादि।** तस्यैवेति वेदाख्यस्य ब्रह्मणः। इतिकरणो हेतौ। यत एवमुपचारेण लब्धब्रह्मव्यपदेशं व्रतं यश्चरति ब्रह्मणश्च समानत्वाद् यः समानः स सब्रह्मचारी। तेन सब्रह्मचारीत्यस्यायमर्थो भवति—समाने ब्रह्मणि व्रतचारीति। यदि ह्यसमाने ब्रह्मणि व्रतं चरेत् तदा समानत्वं

### पदमञ्जरी

स्येति बहुव्रीहिः, यस्मिञ्ज्योतिष आदित्ये नक्षत्रे वा उपनिपतितमानस्यास्तमयादनुवर्तमानमाशौचं सज्योतिरित्युच्यते, 'सरूपाणामेकशेषः', 'स्थानान्ताद्विभाषा', 'सस्थानेन' इति निर्देशाद्बहुव्रीहावप्ययं सभावो भवति, न तु 'पूर्वापरप्रथमचरमजघन्यसमान' इति, प्रतिपदोक्त एव तत्पुरुषे॥ ८५॥

**चरणे ब्रह्मचारिणि॥** चरणशब्दः कठकलापादौ शाखाविशेषे मुख्यः, तदध्यायिषु पुरुषेषु गौणः, तदिह मुख्यो गृह्यते—समानो ब्रह्मचारी सब्रह्मचारीति, तच्चरति तदनुतिष्ठतीत्यर्थः। **ब्रह्मचारीति।** 'व्रते' इति णिनिः। एवं ब्रह्मचारिशब्दं निरूप्य सब्रह्मचारिशब्दं निर्वक्तुकामः समानशब्दस्यार्थमाह–**समानस्तस्यैव ब्रह्मणः समानत्वादिति। तस्यैवेति।** पूर्वमुक्तस्य। इतिकरणो हेतौ, यस्माद् ब्रह्मचारिणां समानत्वं तद्विवक्षितं तस्मादयं वक्ष्य-

### भावबोधिनी

सरात्रिः। [ समाना रात्रिः अस्य ] सनाभिः [ समानः नाभिः अस्य ] सनामा। [ समानं नाम अस्य ] सगोत्रः। [ समानं गोत्रमस्य ] सरूपः। [ समानं रूपम् अस्य ] सस्थानः। [ समानं स्थानम् अस्य ] सवर्णः। [ समानः वर्णः अस्य ] सवयाः। [ समानं वय अस्य ] सवचनः। [ समानं वचनम् अस्य ] सबन्धुः। [ समानः बन्धुः अस्य ]। इन सभी में 'समान' का 'स' होता है। ये बहुव्रीहि के अर्थ लिखे गये हैं। तत्पुरुष में भी बन सकते हैं क्योंकि सूत्र में ऐसा कोई विशेष उल्लेख नहीं किया गया है। अतः—समानं ज्योतिः—सज्योतिः, आदि भी हो सकते हैं। ]॥ ८५॥

चरण गम्यमान रहने पर ब्रह्मचारी उत्तरपद रहने पर 'समान' का 'स' यह आदेश होता है। उदा० समानः ब्रह्मचारी—सब्रह्मचारी। ब्रह्म = वेद है, इसके अध्ययन के लिये जो व्रत है वह भी ब्रह्म है, उसका अनुष्ठान जो करता है वह—ब्रह्मचारी है। वह उस वेदाख्य ब्रह्म के ही समान है, ब्रह्म के समान होने से यह अर्थ होता है। समान ब्रह्म में व्रतचरण करने वाला = सब्रह्मचारी है।

**विमर्श**—सूत्र में 'चरण' शब्द शाखावाची है। ब्रह्म का अर्थ वेद है। अतएव वार्तिककार ने "ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिव्रतलोपश्च" ऐसा लिखा है। भाष्यकार ने यह व्याख्या की है "ब्रह्मण्युपपदे समानपूर्वे व्रते

**समानत्वादित्ययमर्थो भवति । समाने ब्रह्मणि व्रतचारी = सब्रह्मचारीति ॥**

**२९४९. तीर्थे ये ॥ ८७ ॥ (१०१५)**

**तीर्थशब्दे उत्तरपदे यत्प्रत्ययपरे परतः समानस्य स इत्ययमादेशो भवति । सतीर्थ्यः । 'समानतीर्थे वासी' (४.४.१०७) इति यत्प्रत्ययः ॥**

**२९५०. विभाषोदरे ॥ ८८ ॥ (१०१६)**

**उदरशब्द उत्तरपदे यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययमादेशो भवति । सोदर्यः, समानोदर्यः । 'समानोदरे शयित ओ चोदात्तः' (४.४.१०८) इति यत् ॥**

**न्यासः**

न स्यात् । तथापि ब्रह्माख्यं व्रतं न चरेदेवमपि ब्रह्मचारित्वं न स्यात् । तस्माद् यः समाने ब्रह्मणि ब्रह्मचारी, सोऽवश्यं समाने ब्रह्मणि व्रतचारीति भवति । सब्रह्मचारीत्ययमस्यार्थः सम्पद्यते—**समाने ब्रह्मणि व्रतचारीति ।** अथ वा—तस्येवेत्युपचारेण लब्धब्रह्मव्यपदेशस्य व्रतस्यात्र पक्षे परामर्शः । समाने ब्रह्मणि इत्यत्र ब्रह्मशब्दो वेदे वर्त्तते, प्रतिवेदं हि भिद्यते, तदध्ययनार्थं यद् व्रतं तत्र यः समाने वेदेऽध्येतव्ये व्रतं चरति स एव सब्रह्मचारीत्युच्यते ॥ ८६ ॥

**तीर्थे ये ॥ सतीर्थ्य इति ।** पूर्ववत् कर्मधारयं कृत्वा तद्धितः कर्त्तव्यः । समाने तीर्थे वसतीति सतीर्थ्यः ॥ ८७ ॥

**विभाषोदरे ॥ ८८ ॥**

**पदमञ्जरी**

माणस्सब्रह्मचारिशब्दस्यार्थो भवति । तमेव दर्शयति—**समाने ब्रह्मणीति ।** समाने = साधारण इत्यर्थः । एकस्मिन्काले एकेन ब्रह्मणा एकशाखाध्ययनार्थं ययोर्व्रतमादिष्टं तावन्योऽयं सब्रह्मचारिणावित्यर्थः । एतच्च चरणग्रहणाल्लभ्यते, तद्धि चरणे 'समाने यथा स्यादाकारादौ मा भूदित्येवमर्थं कृतम् । एवं **चरणे गम्यमाने** इत्यस्यापि चरणे समानत्वेन गम्यमान इत्ययमर्थो द्रष्टव्यः ॥ ८६ ॥

**तीर्थे ये ॥** सतीर्थ्यः = एकगुरुकः ॥ ८७ ॥

**विभाषोदरे ॥ 'यप्रत्ययान्त इति ।** पूर्वसूत्रे 'ये' इति यकारादेः प्रत्ययस्य ग्रहणं यप्रत्ययोऽन्ते समीपे यस्य स तथोक्तः । तत्र यदा सभावः, तदा 'सोदराद्यः', यदा तु न तदा 'समानोदरे शयितः' इति यत् ॥ ८८ ॥

**भावबोधिनी**

"कर्मणि चरेर्णिनिः प्रत्ययो भवति व्रतलोपश्च निपात्यते । समाने ब्रह्मणि व्रतचारीति—सब्रह्मचारी ।" अतः एक ही शाखा के अध्ययन के लिये जो व्रतादि का अनुष्ठान करने वाला है वह सब्रह्मचारी कहा जाता है । इस विशिष्ट अर्थ की सिद्धि निपातन के द्वारा की गई है ] ॥ ८६ ॥

तीर्थ शब्द उत्तरपद रहने पर यत् प्रत्यय परे रहते 'समान' का 'स' यह आदेश होता है । उदा० सतीर्थ्यः । "समानतीर्थे वासी" सूत्र से यत् प्रत्यय होता है । [ तीर्थ शब्द गुरु अर्थवाचक है । अतः समान गुरुवाला शिष्य सतीर्थ्य कहा जाता है । ] ॥ ८७ ॥

यत्प्रत्ययान्त उदर शब्द उत्तरपद रहने पर 'समान' का 'स' यह आदेश विकल्प से होता है । उदा० समानोदर्यः, सोदर्यः । [समानोदरे शयितः—इस अर्थ में 'समानोदर' शब्द से यत् प्रत्यय करने के बाद प्रस्तुत सूत्र से समान का 'स' आदेश विकल्प से होता है । अतः समानोदर्यः तथा सोदर्यः—ये दोनों रूप बनते हैं । ] ॥८८॥

---

१. 'यत्-प्रत्ययान्ते'—काशिका ।

**२९५१. दृग्दृशवतुषु ॥ ८९ ॥ (१०१७)**

दृक्, दृश, वतु—इत्येतेषु परतः समानस्य स इत्ययमादेशो भवति । सदृक्, सदृशः । 'त्यदादिषु दृशोऽनालोचने कञ्च' (३.२.६०) इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' (का० वा०) इति कञ्क्विनौ प्रत्ययौ क्रियेते ।

❋ दृक्षे चेति वक्तव्यम् ❋ (का० वा० १) । सदृक्षः ॥

❋ दृशेः क्सप्रत्ययोऽपि तत्रैव वक्तव्यः ❋ (म० भा०) । वतुग्रहणमुत्तरार्थम् ॥

**२९५२. इदंकिमोरीश्की ॥ ९० ॥ (१०१८)**

इदम्, किम्—इत्येतयोरीश्, की—इत्येतौ यथासङ्ख्यमादेशौ भवतो दृग्दृशवतुषु । ईदृक्, ईदृशः,

**न्यासः**

**दृक्दृशवतुषु** ॥ समानमात्मानं पश्यतीति **सदृक्**, उपपदसमासः, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । कथं पुनरिह कञ्क्विनौ यावता त्यदादिषूपपदेषु तौ विहितौ, न च समानशब्दस्त्यदादिषु पठ्यते ? इत्यत आह—**त्यदादिष्वित्यादि** ।

**दृक्षे चेति वक्तव्यमिति** । दृक्षशब्दे चोत्तरपदे समानस्य सभावो भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वकाद् योगविभागाद् दृक्षेऽपि भविष्यतीति । अत एव तत्र (६.१.८४) **वृत्तिकृतोक्तम्**—एवमादयः सिद्धा भवन्तीति ।

केन पुनरत्र दृशेः क्सप्रत्ययो विहितो येन दृक्षशब्द उत्तरपदं भवति ? इत्यत आह—**दृशेः क्सप्रत्ययोऽपीत्यादि । तत्रैवेति** । 'त्यदादिषु' इत्यादौ सूत्रे । अथ वतुग्रहणं किमर्थम्, यावता समानशब्दादुत्तरो वतुप् न सम्भवत्येव, स हि 'यत्तदेतेभ्यः परिमाणे वतुप्' इति यदादिभ्य एव विहितः ? इत्याह—**वतुग्रहणमुत्तरार्थमिति** ॥ ८९ ॥

**इदंकिमोरीश्की** ॥ शकारः सर्वादेशार्थः । इदमिव पश्यतीति **ईदृक्, ईदृशः** । पूर्ववत् कञ्क्विनौ । किमिव पश्यतीति **कीदृक्, कीदृशः** । व्युत्पत्तिमात्रार्थो विग्रहः कृतः । नात्रावयवार्थो विग्रहवाक्योपदर्शितो

**पदमञ्जरी**

**दृग्दृशवतुषु । वतुग्रहणमुत्तरार्थमिति** । समानशब्देऽसम्भवात् ।

**दृक्षे चेति** । छान्दसमेतदिति केचित् । **भाष्ये** 'सदृक्षम्' इत्यनुदाहृतत्वात्तस्मिन्पक्षे क्सप्रत्ययोऽपि छन्दस्येव ॥ ८९ ॥

**इदंकिमोरीश्की** ॥ **इयान्कियानिति** । वस्येयादेशे कृते 'यस्येति च' इतीकारलोपः । **किमिदम्भ्यां वो**

**भावबोधिनी**

दृक्, दृश्, वतु—ये परे रहते पर 'समान' का 'स' यह आदेश होता है । उदा० सदृक्, सदृशः । इनमें "त्यदादिषु दृशोऽनालोचने कञ्च" इस सूत्र के अन्तर्गत "समानान्ययोश्च वक्तव्यम्" इस वार्तिक से कञ् = अ, तथा क्विन् प्रत्यय होते हैं । [ क्विन् का सर्वापहारी लोप हो जाने से कुछ नहीं बचता है । 'समान' का 'स' आदेश होता है । ]

"दृक्ष परे रहते भी समान का स कहना चाहिए ।" उदा० सदृक्षः । [ दृश् धातु से क्स प्रत्यय होता है षत्व, कत्व के बाद दृक् + ष—में मूर्धन्य और 'क्ष' कर देने पर 'दृक्ष' बनता है । समान का स होता है । क्स प्रत्यय किस वचन से होता है—यह लिख रहे हैं— ]

❋ दृश् से क्स प्रत्यय भी उस "त्यदादिषु" सूत्र के विषय में रहना चाहिए । ❋

प्रस्तुत सूत्र में 'वतु' का ग्रहण अग्रिम सूत्र के लिये है ॥ ८९ ॥

इदम् तथा किम् के स्थान पर क्रमशः 'ईश्' और 'की' ये आदेश दृक्, दृश तथा वतु परे रहते होते हैं । उदा० ईदृक्, ईदृशः, इयान् । कीदृक्, कीदृशः, कियान् । [ इदम् + दृक् तथा इदम् + दृश इनमें 'इदम्' का 'ईश्' सर्वादेश

**इयान्। कीदृक्, कीदृशः, कियान्। 'किमिदम्भ्यां वो घः' (५.२.४०) इति वतुप्।**

**❀ दृक्षे चेति वक्तव्यम् ❀ (म० भा०)। ईदृक्षः। कीदृक्षः॥**

**२९५३. आ सर्वनाम्नः॥ ९१॥ (४३०)**

**सर्वनाम्न आकारादेशो भवति दृग्दृशवतुषु। तादृक्, तादृशः, तावान्। यादृक्, यादृशः, यावान्।**

**❀ दृक्षे चेति वक्तव्यम् ❀ (म० भा०)। तादृक्षः। यादृक्षः॥**

**२९५४. विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये॥ ९२॥ (४१८)**

**विष्वक्, देव—इत्येतयोः सर्वनाम्नश्च टेः अद्रीत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्त उत्तरपदे।**

**न्यासः**

विद्यते। तथा हीदृग्, ईदृश इत्यनेन तुल्य इत्येषोऽर्थः समुदायादेव प्रतीयते। कीदृक्, कीदृश इत्यत्रापि केन तुल्य इति। **किं परिमाणमस्येति कियान्।** इदं परिमाणमस्येति **इयान्।** 'किमिदंभ्यां वो घः' इति वतुपो घत्वम्, तस्येयादेशे कृते 'यस्येति च' इतीकारलोपः। ननु च वतुपो वकारस्येयादेशोऽनेन विधीयते, न तु वतुप् किमिदम्भ्यां विधीयते? एवं मन्यते—वतुबस्मादादेशवचनाद् विज्ञायते, न ह्यन्यद् वतुपो लक्षणमस्ति। न चासतो वतुपो घादेशः शक्यो विज्ञातुमिति॥ ९०॥

**आ सर्वनाम्नः॥ दृक्षे चेति वक्तव्यमिति।** दृक्षशब्दे परतः सर्वनाम्न आत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—उत्तरसूत्रादिह सिंहावलोकितन्यायेन चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः। तेन

**पदमञ्जरी**

**घ इति वतुबिति।** नासतो वतुपो वकारस्य घकारः शक्यो विधातुमिति वतुपोऽप्यनेनैव विधानमिति भावः॥९०॥

**आ सर्वनाम्नः॥** अकारोच्चारणमतो गुणे पररूपत्वं मा भूत्। अकारविधानं त्वन्तस्य निवृत्त्यर्थं स्यात्, लोपविधौ तु गौरवं भवति॥ ९१॥

**विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये॥** व प्रत्ययो यस्मात्स वप्रत्ययः। **विष्वद्र्यङिति। अञ्चतेः** क्विनि लोपे 'उगिदचाम्' इति नुम्, संयोगान्तलोपः, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—नकारस्य ङकारः।

**भावबोधिनी**

होता है, श् लोप हो जाने पर रूप बनते हैं।] इदं परिमाणम् अस्य—इस अर्थ में इदम् से वतुप् करने पर इदम् + वतुप्, ईश् आदेश ई + वतुप्,] ''किमिदम्भ्यां वो घः'' [सूत्र से 'व' का घ = इय तथा] वतुप् भी इसी सूत्र से होता है। [ई + इयत्, भसंज्ञा ई का लोप। प्रत्ययमात्र से भी प्रातिपदिकसंज्ञा और विभक्तिकार्य होते हैं। किम् + वतुप् में भी 'की' आदेश, व का घ = इय करने पर की + इयत्, ईलोप—कियत्, विभक्तिकार्य करने पर कियान्।]

❀ 'दृक्ष'—परे रहते भी होता है। ❀ उदा० ईदृक्षः, कीदृक्षः। [इदम् का ईश् तथा किम् का 'की' आदेश होता है।]॥ ९०॥

दृक्, दृश् तथा वतु परे रहते सर्वनाम शब्दों का आकार [अन्त] आदेश होता है। उदा० तादृक्, तादृशः, तावान्। यादृक्, यादृशः, यावान्। [तत् + दृक् पूर्ववत् क्विन् प्रत्ययान्त है। तत् के त् का आ आदेश, दीर्घ करने पर—तादृक्। इसी प्रकार तत् + दृश, कञ् प्रत्ययान्त, आ आदेश, दीर्घ—तादृशः। तत् + वतुप्, आ आदेश, तावत्, विभक्तिकार्य—तावान्। इसी प्रकार यत् + दृश् आ आदेश, दीर्घ, यादृक्, यत् + दृशः, आत्व, दीर्घ, यादृशः। यत् + वतुप्, आत्व, यावत्, विभक्तिकार्य—यावान्।]

❀ दृक्ष परे भी सर्वनाम का आकार आदेश कहना चाहिए। ❀ तादृक्षः, यादृक्षः। [तत् + दृक्षः, यत् + दृक्षः, आत्व, दीर्घ करने पर रूप बनते हैं।]॥ ९१।

विष्वक् तथा देव शब्दों की और सर्वनाम शब्दों की टि का 'अद्रि' यह आदेश होता है। अञ्चति वप्रत्ययान्त

**विष्वगञ्चतीति विष्वद्र्यचङ् (७.२५.१)। देवद्र्यचङ्। सर्वनाम्नः—तद्र्यचङ् (तै० सं० ५.५.१.२)। यद्र्यचङ् (तै० सं० ५.५.१.१)।**

***अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम्* (का० वा० १)। तत्र यणादेशे कृते 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इत्येष स्वरो भवति।**

**विष्वग्देवयोरिति किम्? अश्वाची। अञ्चताविति किम्? विष्वग्युक्। वप्रत्यय इति किम्? विष्वगञ्चनम्।**

**न्यासः**

दृक्षशब्दे चोत्तरपदे भविष्यतीति। अथ किमर्थो दीर्घो विधीयते, न ह्रस्व एव विधीयताम्, ह्रस्वेऽप्यादेशे सवर्णदीर्घत्वेन सिध्यति? न; तस्माद् 'अतो गुणे' पररूपत्वं प्राप्नोति। न च शक्यते वक्तुम्—अकारोच्चारणसामर्थ्यान्न भविष्यतीति; अकारविधेर्दकारनिवर्त्तनार्थत्वात्, लोपविधौ हि गौरवं स्यात्। किञ्च—त्वादृक्, त्वादृश इत्यत्र दीर्घश्रवणं न स्यात्। तस्माद् दीर्घ एव विधेयः॥ ९१॥

**विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये॥ विष्वद्र्यचङिति।** विश्वगञ्चतीति ऋत्विगादिसूत्रेण क्विन्, 'उगिदचाम्' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्।

**अद्रिसध्र्योरन्तोदात्तनिपातनमित्यादि।** विष्वद्र्यङित्यत्रानेनाद्र्यादेशे कृते सध्र्यङित्यत्र सहस्य सध्र्यादेशे च 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरेणोत्तरपदस्यान्तोदात्तत्वं प्राप्नोति, स्वरितत्वं चेष्यते। तस्मादुत्तरपदान्तोदात्तत्वविधानार्थमिहाद्रिसध्र्योरन्तोदात्तत्वं निपात्यते। तेन शेषं भवत्यनुदात्तम्। तत्र यणादेशे कृते सति 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितत्वमुत्तरपदस्य सिद्धम्।

**पदमञ्जरी**

**अद्रिसध्र्योरिति।** वार्त्तिकस्य साधारणत्वादिह सध्रिशब्दोपादानम्, अश्वमञ्चतीति अश्वाची, 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घत्वम्। विष्वग्युनक्तीति **विष्वग्युक्,** 'सत्सूद्विष' इत्यादिना क्विप्। **विष्वगञ्चनमिति।** ल्युट्।

**भावबोधिनी**

उत्तरपद परे रहते। उदा०—विश्वग् अञ्चति—इस अर्थ में—विष्वद्र्यचङ्। देवद्र्यचङ्। [ विष्वक् अञ्चति—इस विग्रह में—"ऋत्विग्दधृग्" सूत्र से क्विन् प्रत्यय, सर्वापहारी लोप, न् = ञ् लोप—विष्वक् + अच्, टि = अक् का अद्रि आदेश विष्वद्रि + अच्, "उगिदचां सर्वनामस्थाने" सूत्र से नुम्, "संयोगान्तस्य लोपः" से च्लोप "क्विन् प्रत्ययस्य क्विः" सूत्र से न् का कुत्व ङ्—विष्वद्र्यचङ्। इसी प्रकार देव + अच्, टि का अद्रि यण्, नुम्, संयोगान्तलोप, कुत्व—देवद्र्यचङ्। ]

सर्वनाम की टि के अद्रि आदेश के उदा०—तद्र्यचङ्, यद्र्यचङ्। [ तद् अञ्चति, यद् अञ्चति—इन विग्रहों में क्विन्, सर्वपहारी लोप, ञ्लोप, टि = अद् का अद्रि आदेश—तदद्रि + अच्, यदद्रि + अच्, यण्, नुम्, संयोगान्तलोप, न् का कुत्व ङ्—तदद्र्यचङ्, यदद्र्यचङ्। ]

अद्रि तथा सध्रि आदेशों का अन्तोदात्तत्व का निपातन कृत्स्वर का बाध करने के लिए है। इनमें यणादेश कर देने पर "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इस सूत्र से स्वरित स्वर हो जाता है।

विष्वक् तथा देव का—इसका क्या फल है? अश्वाची। [ अश्वम् अञ्चति—यहाँ दोनों शब्द न होने से अद्रि आदेश नहीं होता है। ] अञ्चति परे—इसका क्या फल होता है? विष्वग्युक्। [ यहाँ अञ्च नहीं है। ] वप्रत्यय परे—इसका क्या फल है? विष्वगञ्चनम्। [विष्वग् + अञ्च् + ल्युट् है। यहाँ 'व' वाला प्रत्यय न होने से 'अद्रि' आदेश नहीं होता है। ]

वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम्। तेनायस्कृतम्, अयस्कार इत्यत्र 'अतः कृकमिकंसकुम्भपात्र' (८.३.४६) इति सत्वं भवति।

✽ छन्दसि स्त्रियां बहुलमिति वक्तव्यम् ✽ (म० भा०)। विश्वाची च घृताची च (ऋ० ७.४३.३)। ऋ० १.१६७.३) त्यत्र न भवति। कद्रीचीत्यत्र तु भवत्येव[1]॥

### न्यासः

अथ वप्रत्ययग्रहणं किमर्थम्, यावता 'अञ्चतौ' इत्युक्ते केवल एवाञ्चतावुत्तरपदे कार्येण भवितव्यम्। वप्रत्ययान्त एवाञ्चतिः केवलमुत्तरपदं भवति। तत्रैतद्वक्तव्यमञ्चतावित्याह—**वप्रत्ययग्रहणमित्यादि**। अन्यत्र धातुग्रहणे, धात्वादेः प्रकृतिप्रत्ययसमुदायस्य प्रतिपत्तिः=प्रतीतिर्यथा स्यादित्येवमर्थं वप्रत्ययग्रहणम्। अनेन ह्ययमर्थो विज्ञाप्यते—इतोऽन्यत्र धातुग्रहणे सति न केवलं धातुरेव गृह्यते, अपि तु धात्वादिः शब्द इति। तेनायस्कृतम्, अयस्कार इत्यत्र 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सकारः सिद्धो भवति। यदि पुनरयमर्थो न विज्ञाप्येत, तदा करोतेरेव केवलस्य ग्रहणं स्यात्, ततो यत्र करोतेः केवलस्य प्रत्ययरहितस्य प्रयोगस्तत्रैव स्याद्—अयस्कृदिति। अत्र तुगागमः करोतेरेव भक्तत्वात् तद्ग्रहणेनैव गृह्यत इति करोतेरेव केवलस्य प्रयोगः। **अश्वाचीति**। अश्वमञ्चतीति क्विन्, 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घः। **विष्वग्युगिति**। विष्वग् युनक्तीति 'सत्सूद्विष' इत्यादिना क्विप्। **विष्वगञ्चनमिति**। 'ल्युट् च' इति ल्युट्।

**छन्दसीत्यादि**। छन्दसि विषये स्त्रियामभिधेयायां बहुलमद्र्यादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'विभाषोदरे' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा। इह वा चकारोऽनुक्तसमुच्चयार्थः, तेन च्छन्दसि विषये विष्वगादेरन्यत्रापि क्वचिदद्र्यादेशो भवतीति, क्वचिन्न भवत्येव। ननु च सर्वनाम्नोऽनुकर्षणार्थश्चकारः? नैतदस्ति; स्वरितत्वादेव हि सर्वनाम्नोऽनुवृत्तिर्भविष्यति। **विश्वाचीत्यादि**। विश्वघृतकिंशब्देषूपपदेष्वञ्चतेः पूर्ववत् क्विन्, ङीबादिकार्यञ्च॥ ९२॥

### पदमञ्जरी

कथं पुनरत्र प्रसङ्गः, यावता 'उत्तरपदे' इत्युच्यते, न चात्राञ्चतिरुत्तरपदम्, किं तर्हि? ल्युडन्तम्, न च तदादिविधिरस्ति, अल्ग्रहण एव तदादिविधिः? इत्यत आह—**वप्रत्ययग्रहणमिति**। यदि धातुग्रहणे तदादिविधिर्न स्याद्वप्रत्ययग्रहणमकर्तव्यं स्यात्, कृतं तु तदादिविधिं ज्ञापयति। अत्र प्रयोजनमाह—**तेनेति**। **अयस्कृतमिति**। असति तु ज्ञापने अयस्कृदित्यादौ यत्र करोतिमात्रमुत्तरपदं तत्रैव स्यात्।

**विश्वाची च घृताची चेति**। वेदपाठोऽयं प्रदर्शितः, न तु घृताचीत्युदाहरणम्; प्राप्त्यभावात्। उपसंख्याने 'स्त्रियाम्' इत्येतेन नार्थः, पुंस्यपि हि क्वचिद्र्यादेशो न दृश्यते। तस्माद्विष्वञ्चौ प्राणापानाविति।

### भावबोधिनी

व प्रत्यय का ग्रहण अन्यत्र धातु के ग्रहण में तदादिविधि की प्रतिपत्ति कराने के लिये है। इस कारण 'अयस्कृतम्' 'अयस्कारः' इनमें भी "अतः कृकमिकंसकुम्भ०" सूत्र से विसर्ग का स् हो जाता है। [ अन्यथा जहाँ केवल कृ धातु उत्तरपद रहती है वहीं होता, जैसे—'अयस्कृत्' आदि। अतः यह ज्ञापन आवश्यक है।]

✽ वेदविषय में स्त्रीलिङ्ग में बहुलरूप से यह 'अद्रि' आदेश कहना चाहिए। ✽ उदा० "विश्वाची च घृताची च"—इसमें नहीं होता है। 'कद्रीची' इसमें तो होता ही है। [ किम् अञ्चति—इसमें किम् की टि = इम् का 'अद्रि' आदेश कर देने पर कद्रि + अच्, लोप, दीर्घ, ङीप् आदि होने पर रूप बनता है। ]॥ ९२॥

---

१. 'क्वचिदन्यत्रापि भवति—विश्वद्र्याचा' इत्यधिकमेकस्मिन्पुस्तके।

**२९५५. समः समि ॥ ९३ ॥ (४२१)**

**समित्येतस्य 'समि'–इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे। सम्यक्, सम्यञ्चौ, सम्यञ्चः ॥**

**२९५६. तिरसस्तिर्यलोपे ॥ ९४ ॥ (४२३)**

**'तिरस्' इत्येतस्य 'तिरि' इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदेऽलोपे = यदाऽस्य लोपो न भवति। तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः।**

अलोप इति किम् ? तिरश्चा। तिरश्चे। 'अचः' इत्यकारलोपः ॥

**२९५७. सहस्य सध्रिः ॥ ९५ ॥ (४२२)**

**सहेत्यस्य 'सध्रि' इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्ते उत्तरपदे। सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः। सध्रीचः। सध्रीचा।**

**२९५८. सध मादस्थयोश्छन्दसि ॥ ९६ ॥ (३५२९)**

छन्दसि विषये माद, स्थ—इत्येतयोरुत्तरपदयोः सहस्य 'सध'—इत्ययमादेशो भवति। सधमादो

**न्यासः**

समः समि ॥ ९३ ॥ **तिरसस्तिर्यलोपे** ॥ ९४ ॥ **सहस्य सध्रिः** ॥ **सध्रीचेति**। पूर्ववदकारलोपः, दीर्घत्वञ्च ॥ ९५ ॥

**सध मादस्थयोश्छन्दसि** ॥ **सधमाद इति**। सह मादेन वर्त्तत इति 'तेन सह' इत्यादिना बहुव्रीहिः,

**पदमञ्जरी**

**कद्रीचोति**। किंशब्दस्य टेरद्र्यादेशः, पूर्ववन्ङीब्लोपदीर्घत्वादि ॥ ९२ ॥ ९३ ॥

**तिरसः तिर्यलोपे** ॥ **यदाऽस्य लोपो न भवतीति**। अकारस्य लोपे सतीत्ययं त्वर्थो न भवति; व्याख्यानात् ॥ ९४ ॥ ९५ ॥

**सध मादस्थयोश्छन्दसि** ॥ 'सधमादो द्युम्नि' ( वास० सं० १०.७ ) इति केचिदाहुः। अस्मिन्मन्त्रे द्युम्निनरित्यादिकमपां विशेषणम्, सधमाद इत्यपि तत्समानाधिकरणं शसन्तम्, मादयतेः क्विबन्तस्य रूपम्।

**भावबोधिनी**

'सम्' इसके स्थान पर 'समि' यह आदेश होता है वप्रत्ययान्त अञ्च धातु उत्तरपद रहने पर। उदा० सम्यक्, सम्यञ्चौ, सम्यञ्चः। [ सम् अञ्चति इस अर्थ में क्विन् प्रत्यय, सर्वापहारी लोप, धातु के न् का लोप सम् + अच्, सम् का समि आदेश, यण्, कुत्व—सम्यक्। ] ॥ ९३ ॥

तिरस्—इसके स्थान पर 'तिरि' यह आदेश होता है वप्रत्ययान्त अञ्चति उत्तरपद रहने पर अलोप में = जब इसका लोप नहीं होता है। उदा० तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः। [ तिरः अञ्चति—इस अर्थ में क्विन् प्रत्यय तथा उसका लोप आदि करने के बाद प्रस्तुत सूत्र से 'तिरस्' का 'तिरि' आदेश—तिरि + अञ्च्, यण्, संयोगान्तलोप, कुत्व—तिर्यङ्। ]

अलोप में—इसका क्या अर्थ है—तिरश्चा तिरश्चे। इनमें "अचः" सूत्र से अकार का लोप हो जाता है। [ अतः 'तिरि' आदेश नहीं होता है। ] ॥ ९४ ॥

'सह' इसके स्थान पर 'सध्रि' यह आदेश होता है वप्रत्ययान्त अञ्चति उत्तरपद रहने पर। उदा० सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः। सध्रीचः। सध्रीचा। [ सह अञ्चति—इस अर्थ में क्विन् प्रत्यय तथा उसका लोप करने के बाद 'सह' का 'सध्रि' आदेश—सध्रि + अञ्च्, यण्, संयोगान्तलोप, कुत्व। शस् आदि परे भी यह आदेश होता है। इसीलिए उदा० दिये गये हैं क्योंकि 'अलोपे' का सम्बन्ध इसमें नहीं है। ] ॥ ९५ ॥

वेदविषय में 'माद' तथा 'स्थ' ये उत्तरपद रहने पर 'सह' का 'सध' यह आदेश होता है। उदा० सधमादो द्युम्निनीरापः। सधस्था। [ मादेन सह—इस अर्थ में घञन्त माद के साथ समास के बाद 'सध' आदेश होने पर—सधमादः

द्युम्न्य एकास्ताः [सधमादो द्युम्निनीरापः । वा० सं० १०.७] सधस्थाः (तै० सं० ५.७.७.१) ॥

**२९५९. द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९७ ॥ (९४१)**

द्वि, अन्तर्—इत्येताभ्यामुपसर्गाच्चोत्तरस्याबित्येतस्य ईकारादेशो भवति । द्वीपम् । अन्तरीपम् । उपसर्गात्—समीपम् । वीपम् । नीपम् ।

❀ समाप ईत्वे प्रतिषेधो वक्तव्यः ❀ (क० वा० १) । समापं नाम देवयजनम् ।

अपर आह— ❀ इत्वमनवर्णादिति वक्तव्यम् ❀ [म० भा०] । इह मा भूत्—प्रापम्, परापम् ।

**न्यासः**

मादशब्दो घञन्तः । ननु च—'मदोऽनुपसर्गे' इत्यपा भवितव्यम् ? नैष दोषः; तत्र हि 'स्वनहसोर्वा' इत्यतो वा ग्रहणमऽनुवर्त्तते, सा च व्यवस्थितविभाषा । तेन छन्दसि घञेव भविष्यति । अत एव निर्देशाद्वा । **सधस्थ इति ।** सह तिष्ठतीति 'सुपि स्थः' इति कः ॥ ९६ ॥

**द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ द्वीपमिति ।** द्विर्गता आपोऽस्मिन्नित्यस्वपदविग्रहो बहुव्रीहिः । यथा—शोभनं मुखमस्याः सुमुखीति । 'ऋक्पूरब्धूः' इत्यादिनाऽकारः समासान्तः । अन्तर्गता आपोऽस्मिन्नित्यन्तरीपम् । सङ्गता विगता निर्गता आपोऽस्मिन्निति **समीपम्, वीपम्, नीपम् ।**

**वक्तव्यमिति ।** व्याख्येयमित्यर्थः । उत्तरत्रापि वक्तव्यशब्दस्यायमेवार्थः । व्याख्यानं त्विहापि पूर्ववद् 'विभाषोदरे' इत्यतो विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यते । अन्यदपि चात्र व्याख्यानं करिष्यामः ।

**पदमञ्जरी**

मादः छन्दसि सधादेशो दृश्यते बहुलम्—'आ त्वा वृहन्तो हरयो युजानाः' (ऋ० ३.४६.६), 'अर्वागिन्द्रसधमादो वहन्तु' (ऋ० ३.४३.६) इत्यादावपीति । अपर आह—मदनं मादः, 'मदोऽनुपसर्गे' इत्यपि प्राप्ते छान्दसो घञ्, तेन सह वर्तत इति सधमाद इति । 'रेवतीर्नः सधमादः' (ऋ० १.३०.१३) इत्यादौ तु सधमादो यज्ञः, सह माद्यन्ति देवा अस्मिन्निति कृत्वा ॥ ९६ ॥

**द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥** उदाहरणेषु द्विर्गता आपोऽस्मिन्नित्यादिविग्रहः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः ।

**समापं नामेति ।** ईत्वे प्रतिषिद्धे 'अन्येषामपि दृश्यते' इत्यकारस्य दीर्घः । अपर आह—समशब्दस्यात्र प्रयोगः, समा आपोऽस्मिन्निति समाप इति ।

**भावबोधिनी**

बनता है । इसी प्रकार सह तिष्ठति—इस अर्थ में कप्रत्ययान्त स्थ के साथ 'सह' का 'सध' हो जाने पर 'सधस्थाः' बनता है । ] ॥ ९६ ॥

द्वि तथा अन्तर् इनके बाद वाले तथा उपसर्ग के बाद वाले 'आप्' इसका ईकार आदेश होता है । उदा० द्वीपम् । [ द्विर्गताः आपः अस्मिन् इस विग्रह में बहुव्रीहि समास के बाद—द्वि + आप्, ''ऋक्पूरब्धूः पथामानक्षे'' सूत्र से समासान्त अ प्रत्यय, प्रस्तुत सूत्र से 'आ' का 'ई' द्वि + ईप दीर्घ—द्वीपम् ] अन्तरीपम् । [ अन्तर्गताः आपः अस्मिन्—इस अर्थ में बहुव्रीहि के बाद, समासान्त प्रत्यय, आ का ई आदेश—अन्तर् + ईप, अन्तरीपम् । ] उपसर्ग से परे के उदा० समीपम् [ संगता आपः अस्मिन् ] वीपम् । [ विगता आपः अस्मिन् । ] नीपम् [ निगताः आपः अस्मिन् । निर्गता आपः अस्मिन्—इसमें तो 'निरीपम्' होना उचित है । ]

* समाप में ईत्व का प्रतिषेध कहना चाहिए । * उदा० समापं नाम देवयजनम् । [ समा आपः अस्मिन्—ऐसा विग्रह पदमंजरीकार मानते हैं । ]

**अप्शब्दं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणार्थम् ।**

## २९६०. ऊदनोर्देशे ॥ ९८ ॥ (९४२)

**अनोरुत्तरस्याप ऊकारादेशो भवति देशाभिधाने । अनूपो देशः ।**

**देश इति किम् ? अन्वीपम् ।**

**दीर्घोच्चारणमवग्रहार्थम् । अनु ऊपोऽनूप इति ॥**

### न्यासः

**अप्शब्दं प्रतीत्यादि ।** इह यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति अप्शब्दस्य तु क्रिया न सम्भवति; द्रव्यवाचित्वात् । तस्मात् तं प्रति नास्ति कस्यचिदुपसर्गसंज्ञेति । क्रियते चेदमुपसर्गग्रहणम् । तत्सामर्थ्याद् यत्र प्रादेरन्यत्रोपसर्गत्वं दृष्टं तदुपलक्षणार्थमुपसर्गग्रहणं विज्ञायते । यद्येवम्, अन्तःशब्दस्य ग्रहणं न कर्त्तव्यम्, यथैव हि प्रादय उपसर्गग्रहणेन लक्ष्यन्ते तथान्तःशब्दोऽपि, तस्याङ्किविधिणत्वेषूपसर्गत्वं दृष्टमेव ? एवं तर्ह्यन्तर्ग्रहणेन ज्ञाप्यते—उपसर्गग्रहणोपलक्षितमीत्त्वमनित्यमिति । तेन समापम्, परापम्, प्रापमिति सिद्धं भवति ॥ ९७ ॥

**ऊदनोर्देशे ॥ अनूप इति ।** अनुगता आपोऽस्मिन्निति विग्रहः, पूर्ववत् समासान्तः, सवर्णदीर्घः । अथ दीर्घोच्चारणं किमर्थम्, यावता ह्रस्वेऽपि विहितेऽकः सवर्णे दीर्घत्वेनानूप इति सिध्यत्येव ? अत आह—**दीर्घोच्चारणमित्यादि ।** असति दीर्घोच्चारणे संहितायामेव दीर्घत्वं स्यात्, नावग्रहे । तस्मादवग्रहेऽपि यथा स्यादित्येवमर्थं दीर्घोच्चारणम् ॥ ९८ ॥

### पदमञ्जरी

**अप्शब्दं प्रतीत्यादि ।** इह यत्क्रियायुक्ताः प्रादयस्तं प्रति तेषामुपसर्गत्वम्, अप्शब्दश्च न क्रियावचनः, तस्माद्यस्य प्रादेरन्यत्रोपसर्गत्वं तदुपलक्षणार्थमुपसर्गग्रहणं विज्ञायते ॥ ९७ ॥

**ऊदनोर्देशे ॥ अवग्रहार्थमिति ।** यत्र समासावयवानां रूपाणि प्रदर्श्यन्ते पदकारैः सः= अवग्रहः ॥ ९८ ॥

### भावबोधिनी

दूसरे व्याख्याकार कहते हैं—"अनवर्ण = अकार से भिन्न वर्ण से परे ईत्व कहना चाहिए । * जिससे कारण यहाँ न हो सके—प्रापम्, परापम् । [ इनमें अ से ही परे हैं अतः ईत्व नहीं होता है । ]

अप् शब्द के प्रति कियायोग नहीं है [ क्योंकि यह द्रव्यवाचक है ] अतः उपसर्ग का ग्रहण प्र आदि के उपलक्षणार्थ है । [ अतः 'प्र' आदि जो अन्यत्र उपसर्ग होते हैं उन्हें यहाँ भी उपसर्ग समझ लेना चाहिए । इस कारण 'समापम्, परापम्, प्रापम्' आदि रूप बन जाते है । इनमें ईत्व नहीं होता है क्योंकि अवर्ण से परे हैं । ] ॥ ९७ ॥

अनु से उत्तरवर्त्ती 'आप्' का ऊकारादेश होता है देश के अभिधान में । उदा० अनूपो देशः । [ अनुगता आपः अस्मिन्—इस अर्थ में समास के बाद समासान्त प्रत्यय, आ का ऊकार—अनु + ऊप, दीर्घ । यह किसी स्थान का नाम है । ] देश अर्थ में—इसका क्या फल है ? अन्वीपम् । [ यहाँ देश अर्थ न होने से ऊकार नहीं होता है । उपसर्ग से परे होने से आ का ई होने से अनु + ईप, यण् ]

दीर्घ ( ऊ ) का उच्चारण अवग्रह के लिये है—अनु ऊपोऽनूपः । [ अन्यत्र तो ह्रस्व होने पर अनु + उप में सवर्ण दीर्घ करके निर्वाह हो सकता है । ] ॥ ९८ ॥

## २९६१. अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ ९९ ॥ (१०२५)

अषष्ठीस्थस्य अतृतीयास्थस्य चान्यशब्दस्य दुगागमो भवति आशिस्, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ—इत्येतेषु परतः। अन्या आशीः अन्यदाशीः। अन्या आशा अन्यदाशा। अन्या आस्था अन्यदास्था। अन्य आस्थितः अन्यदास्थितः। अन्य उत्सुकः अन्यदुत्सुकः। अन्या ऊतिः अन्यदूतिः। अन्यः कारकः अन्यत्कारकः। अन्यो रागः अन्यद्रागः। अन्यस्मिन् भवः अन्यदीयः। गहादिष्वन्यशब्दो (४.२.१३८) द्रष्टव्यः।

अषष्ठ्यतृतीयास्थस्येति किम् ? अन्यस्य आशीः अन्याशीः। अन्येन आस्थितः अन्यास्थितः॥

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु॥

### न्यासः

**अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु॥ अन्या आशीरन्यदाशीरित्यादि।** विग्रहविशेषेण सर्वत्र विशेषणसमासं दर्शयति। **अन्येनास्थितोऽन्यदास्थित इति।** 'कर्तृकरणे कृता बहुलम्' इति समासः।

**दुगागमोऽविशेषेणेत्यादि।** कारकशब्दे छप्रत्यये परतोऽविशेषेण सामान्येन दुगागमः कर्त्तव्यः। अन्येष्वाशीरादिषु सप्तसूत्तरपदेषु षष्ठीतृतीयास्थयोर्नेष्टो = नाभिमतः।

### पदमञ्जरी

**अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु॥** उदाहरणेषु विशेषणसमासः। **गहादिष्वन्यशब्दो द्रष्टव्य इति।** तेषामवृत्कृतत्वात्।

**दुगागमोऽविशेषेणेत्यादि।** छप्रत्यये परतोऽविशेषेण सामान्येन दुक्कर्तव्यः, कीदृशे छे ? सकारके, कारकशब्दसहिते कारकशब्दे चेत्यर्थः। **कारकच्छयोरिति** पाठे पूर्वनिपातलक्षणस्यानित्यत्वात्तस्य परनिपातः। अन्येष्वाशीरादिषु सप्तसु षष्ठीतृतीययोर्नेष्टस्तेष्वेव प्रतिषेध इत्यर्थः।

### भावबोधिनी

षष्ठी से भिन्न में स्थित तथा तृतीया से भिन्न में स्थित 'अन्य' शब्द को 'दुक्' का आगम होता है—आशिस्, आशा, आस्थित, उत्सुक, ऊति, कारक, राग तथा छ = ईय प्रत्यय परे रहने पर। उदा० अन्या आशीः—अन्यदाशीः। [ समास के बाद पुंवद्भाव—अन्य आशिस् में दुक् = द् आगम अन्यदाशिस्, दीर्घादि करने पर—अन्यदाशीः ] अन्या आशा—अन्यदाशा। [ अन्य + द् + आशा ] अन्या आस्था—अन्यदास्था। अन्य आस्थितः—अन्यदास्थितः। अन्य उत्सुकः—अन्यदुत्सुकः। अन्या ऊतिः—अन्यदूति। अन्यः कारकः—अन्यत्कारकः। अन्यः रागः—अन्यद्रागः। [ इनमें कर्मधारय है। ] अन्यस्मिन् भवः—इस अर्थ में अन्यदीयः। [ अन्य + छ = ईय, दुक् = द् आगम ] अन्य शब्द गहादिगण में देखना चाहिए। [ अतः "गहादिभ्यश्च" से 'छ' = ईय होता है। ]

षष्ठी तथा तृतीया में स्थित न होनेपर—इसका क्या फल है ? अन्यस्य आशीः—अन्याशीः। अन्येन आस्थितः-अन्यास्थितः। [ यहाँ दुक् आगम नहीं होता है। सवर्णदीर्घ होता है। ]

कारक तथा छ प्रत्यय परे रहते सामान्यरूप से दुक् आगम कहना चाहिए। आशीः आदि सात परे रहते षष्ठी तथा तृतीया विभक्तियों में इष्ट नहीं है। [ अन्य में तो इष्ट ही है। ]

अतः अन्यस्य कारकम्—इसमें [ दुगागम होनेपर ] अन्यत्कारकम्, अन्यस्य इदम्—इसमें अन्यदीयम्—यह

अन्यस्य कारकम् अन्यत्कारकम् । अन्यस्येदम् अन्यदीयम् ।
अस्य च द्विर्नञ्ग्रहणं लिङ्गम् ॥

**२९६२. अर्थे विभाषा ॥ १०० ॥ (१०२६)**

अर्थशब्दे उत्तरपदे अन्यस्य विभाषा दुगागमो भवति । अन्यदर्थः, अन्यार्थः ॥

**२९६३. कोः कत्तत्पुरुषेऽचि ॥ १०१ ॥ (१०२७)**

'कु' इत्येतस्य कदित्ययमादेशो भवति तत्पुरुषे समासेऽजादावुत्तरपदे । कदजः । कदश्वः । कदुष्ट्रः । कदन्नम् ।

तत्पुरुष इति किम् ? कूष्ट्रो राजा । अचीति किम् ? कुब्राह्मणः । कुपुरुषः ।

**न्यासः**

किं पुनरस्यार्थस्य लिङ्गं यतोऽयमवसीयते ? इत्यत आह—**अस्य चेत्यादि** । अषष्ठीतृतीयास्थस्येत्येवं सिद्धे द्विर्नञुपादनमस्य प्रतिषेधस्यानित्यत्वे लिङ्गम् । तेन क्वचित् षष्ठीतृतीयास्थस्यापि समासे दुगागमो भवत्येव ॥ ९९ ॥

**अर्थे विभाषा ॥ अन्यार्थं इति** । अन्यस्मै इदमिति 'चतुर्थी तदर्थार्थ' इत्यादिना समासः ॥ १०० ॥

**कोः कत्तत्पुरुषेऽचि ॥ कदज इति** । कुत्सितोऽज इति 'कुगतिप्रादयः' इति समासः । **कूष्ट्रो राजेति** बहुव्रीहिः ।

**पदमञ्जरी**

कथमेतल्लभ्यते ? इत्याह—**अस्य चेति** । 'अषष्ठीतृतीयास्थस्य' इत्येव सिद्धे द्विर्नञ उपादानं प्रतिषेधस्यानित्यत्वज्ञापनार्थम्, व्याख्यानप्रकारश्चायम् । शक्यं हि वक्तुं द्विर्नञ उपादानं दार्ढ्यार्थमिति ॥ ९९ ॥ १०० ॥

**कोः कत्तत्पुरुषेऽचि ॥** उदाहरणेषु 'कुगतिप्रादयः' इति समासः । **कूष्ट्र इति** । एतदेव तत्पुरुषग्रहणं ज्ञापकम्—अस्मिन्प्रकरणेऽप्रतिपदोक्तोऽपि समासो गृह्यत इति, तेन 'ज्योतिर्जनपद' इति सभावो बहुव्रीहावपि भवति ।

**भावबोधिनी**

होता है । [ इन दोनों में षष्ठी तथा तृतीया में भी दुक् होता है—इसमें क्या प्रमाण है ? ] इस प्रतिषेध के अनित्य होने में [ अषष्ठी, अतृतीयास्थ—इस प्रकार से ] दो बार नञ् का ग्रहण करना प्रमाण है । [ यदि ऐसा इष्ट न होता तो 'अषष्ठी-तृतीयास्थयोः' यह एक बार ही नञ् से कार्य हो जाता । अतः दो बार नञ् का प्रयोग इसकी अनित्यता में लिङ्ग है । ] ॥ ९९ ॥

अर्थ शब्द उत्तरपद रहते अन्य शब्द को विकल्प से दुक् का आगम होता है । उदा०—अन्यार्थः, अन्यदर्थः । [ अन्यस्मै इदम्—इस तदर्थार्थ समास में वैकल्पिक दुक् होने से दो रूप बनते हैं । ] ॥ १०० ॥

'कु' इसके स्थान पर 'कद्' यह आदेश होता है तत्पुरुष समास में अजादि उत्तरपद रहनेपर । उदा०—कदजः । [ कुत्सितः अजः—इसमें समास के बाद कु + अज में 'कद्' आदेश करनेपर 'कदजः' बनता है । ] कदश्वः । [ कुत्सितः अश्वः ] कदुष्ट्रः । [ कुत्सित ऊष्ट्रः ] कदन्नम् । [ कुत्सितम् अन्नम् । ]

तत्पुरुष में—इसका क्या फल है ? कूष्ट्रो राजा । [ कुत्सित ऊष्ट्रः यस्य सः—यहाँ बहुव्रीहि में 'कद्' आदेश नहीं होता है । ] अच् परे रहते—इसका क्या फल है ? कुब्राह्मणः । [ कुत्सितः ब्राह्मणः—इसमें अच् परे नहीं है । अतः कद् आदेश नहीं होता है । ]

**❀ कद्भावे त्रावुपसंख्यानम् ❀ (का० वा० १)। कुत्सितास्त्रयः कत्त्रयः॥**

**२९६४. रथवदयोश्च ॥ १०२॥ (१०२८)**

**'रथ', 'वद'—इत्येतयोश्चोत्तरपदयोः कोः 'कत्' इत्ययमादेशो भवति। कद्रथः। कद्वदः॥**

**२९६५. तृणे च जातौ ॥ १०३ ॥ (१०२९)**

**तृणशब्दे उत्तरपदे जातावभिधेयायां कोः कदादेशो भवति। कत्तृणा नाम जातिः। जाताविति किम्? कुत्सितानि तृणानि कुतृणानि॥**

**२९६६. का पथ्यक्षयोः ॥ १०४ ॥ (१०३०)**

**पथिन्, अक्ष—इत्येतयोरुत्तरपदयोः कोः 'का' इत्ययमादेशो भवति। कापथः। काक्षः॥**

**न्यासः**

**कद्भाव इत्यादि।** अजादावुत्तरपदे कद्भाव उच्यमानस्त्रिशब्द उत्तरपदे न प्राप्नोति। तस्मात् त्रिशब्दादुत्तरपदात् पूर्वो यः कुशब्दस्तस्य कद्भावस्योपसंख्यानम् = प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्—उत्तरसूत्रे चकारः क्रियते, स चानुक्तसमुच्चयार्थः। तेन त्रिशब्देऽप्युत्तरपदे परतः कद्भावो भविष्यतीति॥ १०१॥

**रथवदयोश्च**॥ अनजाद्यर्थोऽयं योगः। एवमुत्तरत्रापि॥ १०२॥

**तृणे च जातौ**॥ १०३॥

**का पथ्यक्षयोः**॥ अनीषदर्थ आरम्भः। **कापथ इति।** कुत्सितः पन्थाः कापथः, 'ऋक्पूः' इत्यादिना-उकारः समासान्तः। **काक्ष इति।** कुत्सितोऽक्ष इति तत्पुरुषः। अथ वा—कुत्सिते अक्षिणी अस्येति बहुव्रीहिः, 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षच् समासान्तः॥ १०४॥

**पदमञ्जरी**

**त्रावुपसंख्यानमिति।** 'कत्र्यादिभ्यः' इति वचनात्सिद्धम्॥ १०१॥ १०२–१०३॥

**का पथ्यक्षयोः**॥ अनीषदर्थ आरम्भः। कुत्सितः पन्थाः कापथः। पूर्ववत्समासान्तः। **काक्ष इति।** अक्षशब्देन तत्पुरुषः, अक्षिशब्देन बहुव्रीहिर्वा, 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्॥ १०४॥

**भावबोधिनी**

* कद् आदेश करने में त्रि परे भी कहना चाहिए। * कुत्सितास्त्रयः-कत्त्रयः। [कु का कद्, चर्त्व।] ॥१०१॥

'रथ' तथा 'वद' ये उत्तरपद रहनेपर 'कु' के स्थान पर 'कत्', यह आदेश होता है। उदा०—कद्रथः। कद्वदः। [कुत्सितः रथः। कुत्सितः वदः—इनमें समास के बाद 'कद्' आदेश हो जाता है।] ॥ १०२॥

तृण शब्द उत्तर पद रहनेपर जाति अभिधेय होनेपर 'कु' का 'कत्' आदेश होता है। उदा०—कत्तृणा नाम जातिः।

जाति में—इसका क्या फल है? कुत्सितानि तृणानि—कुतृणानि। [यहाँ सामान्य निन्दा में—'कद्' नहीं होता है।] ॥ १०३॥

पथिन् और अक्ष—ये उत्तरपद रहनेपर 'कु' के स्थान पर 'का' यह आदेश होता है। उदा०—कापथः। [कुत्सितः पन्थाः—इस अर्थ में समास के बाद "ऋक्पूरब्धूः पथामानक्षे" सूत्र से समासान्त 'अ' प्रत्यय, टिलोप कु+पथ। 'का' आदेश कर देने पर कापथः।] काक्षः। [कुत्सितः अक्षः, अथवा कुत्सितम् अक्षि अस्य सः—इस अर्थ में षच् प्रत्ययान्त अक्ष के साथ समास हो जाने के बाद 'कु' का 'का' आदेश हो जाता है।] ॥ १०४॥

## २९६७. ईषदर्थे च ॥ १०५ ॥ (१०३१)

**ईषदर्थे वर्त्तमानस्य कोः 'का' इत्ययमादेशो भवति। कामधुरम्। कालवणम्। अजादावपि परत्वात् कादेश एव भवति। काम्लम्। कोष्णम् ॥**

## २९६८. विभाषा पुरुषे ॥ १०६॥ (१०३२)

**पुरुषशब्दे उत्तरपदे विभाषा कोः 'का' इत्ययमादेशो भवति। कापुरुषः। कुपुरुषः। अप्राप्त-विभाषेयम्।**

**ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं 'का' भवति। ईषत्पुरुषः कापुरुषः ॥**

### न्यासः

**ईषदर्थे ॥ ईषन्मधुरं कामधुरमिति।** 'कुगतिप्रादयः' इति समासः। 'कुशब्दः पापार्थः' इत्येतत् तु प्रायिकमुपाधिवचनमित्युक्तम्। तत्र प्रायिकत्वे चैतदेव कादेशवचनं ज्ञापकम्। **काम्लमिति।** ननु चात्र 'कोः कत्तत्पुरुषे' इति कदादेशेन भवितव्यम्? इत्यत आह—**अजादावपीत्यादि** ॥ १०५ ॥

**विभाषा पुरुषे ॥ अप्राप्ते विभाषेयमिति।** ईषदर्थस्य निवृत्तत्वात्। ननु चानीषदर्थे केनचिदप्राप्ते, ईषदर्थे पूर्वेण प्राप्त इत्युभयत्र विभाषेयं युक्तेत्याह—**ईषदर्थे तु पूर्वविप्रतिषेधेनेत्यादि।** 'ईषदर्थे च' इत्यस्यावकाश ईषन्मधुरं कामधुरम्, 'विभाषा पुरुषे' इत्यस्यावकाशः—कुत्सितः पुरुष कापुरुष इति; इह चोभयं प्राप्नोति—**ईषत्पुरुषः कापुरुष इति।** अत्रेषदर्थ इत्यनेनैव भवति पूर्वविप्रतिषेधेन ॥ १०६ ॥

### पदमञ्जरी

**ईषदर्थे ॥ कामधुरमिति।** 'कुगति' इति समासः। 'कुः पापार्थः' इत्येतत्तु प्रायिकम्। **काम्लमिति।** ननु चात्र 'कोः कत्तत्पुरुषेऽचि' इति कद्भावः प्राप्नोति, अस्य त्वनजादिरवकाशः? तत्राह—**अजादावपीति** ॥ १०५ ॥

**विभाषा पुरुषे ॥ अप्राप्तविभाषेयमिति।** 'ईषदर्थे' इत्यस्य निवृत्तत्वात्।

नन्वेवं सत्युभयत्रविभाषेयं युक्ता, ईषदर्थे प्राप्तत्वात्, अन्यत्र चाप्राप्तत्वाद्? अत आह—**ईषदर्थे त्विति।** 'ईषदर्थे च' इत्यस्यावकाशः—कामधुरमिति, 'विभाषा पुरुषे' इत्यस्यावकाशः—कुत्सितः पुरुषः कापुरुषः; ईषत्पुरुष इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ॥ १०६ ॥

### भावबोधिनी

'ईषद्' अर्थ में वर्तमान 'कु' का 'का' आदेश होता है। उदा०—कामधुरम्। कालवणम्। [ ईषद् मधुरम् इसमें तथा ईषल्लवणम् इस अर्थ में समास के बाद 'कु' का 'का' आदेश करने पर—कामधुरम्, कालवणम् ( = थोड़ा मीठा, थोड़ा नमकीन) यह होता है। ]

[ ईषत् अर्थ में ] अजादि परे रहते भी परवर्त्ती होने से 'का' आदेश ही होता है। काम्लम् कोष्णम्। [ ईषद् आम्लम्, ईषद् उष्णम्—इस अर्थ में समास के बाद 'का' आदेश होता है। ] ॥ १०५ ॥

'पुरुष' शब्द उत्तरपद रहने पर विकल्प से 'कु' का 'का' आदेश होता है। उदा०—कापुरुषः, कुपुरुषः। [ कुत्सितः पुरुषः—इसमें समास के बाद विकल्प से 'का' 'कु' के रूप होते हैं। ] यह अप्राप्तविभाषा है।

ईषदर्थ में—पूर्वविप्रतिषेध से नित्य 'का' आदेश होता है। उदा०—ईषत् पुरुषः—कापुरुषः ॥ १०६ ॥

**२९६९. कवञ्चोष्णे ॥ १०७ ॥ (१०३३)**

**उष्णशब्द उत्तरपदे कोः कवमित्ययमादेशो भवति, का च विभाषा। कवोष्णम्। कोष्णम्। कदुष्णम् ॥**

**२९७०. पथि चच्छन्दसि ॥ १०८ ॥ (३५३०)**

**पथिशब्द उत्तरपदे छन्दसि विषये कोः कव, का—इत्येतावादेशौ भवतो विभाषा। कवपथः। कापथः। कुपथः ॥**

**१९६१. पृषोदरादीनि यथोपदिष्टम् ॥ १०९ ॥ (१०३४)**

**पृषोदरादीनि शब्दरूपाणि, येषु लोपागमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति। यानि यथोपदिष्टानि = शिष्टैरुच्चारितानि, प्रयुक्तानि, तानि तथैवानुगन्त-**

**न्यासः**

**कवञ्चोष्णे ॥ १०७ ॥ पथि च च्छन्दसि ॥ १०८ ॥**

**पृषोदरादीनि यथोपदिष्टम् ॥ आदिशब्दः प्रकारवचन इति।** यद्यत्रादिशब्दो व्यवस्थावचन आश्रीयेत, ततो यान्येव गणे पठ्यन्ते तेषामेव साधुत्वं स्यात्, नान्येषाम्। प्रकारवचन आदिशब्द आश्रीयमाणे सत्यपरिपठितानामपि साधुभावो भवतीत्येतत् सर्वं चेतसि कृत्वाऽऽदिशब्दोऽयं प्रकारवचन इति दर्शयन्नाह—**पृषोदरप्रकाराणीत्यादिः।** प्रकारः = सादृश्यम्। अतस्तद्दर्शयितुमाह—**येष्वित्यादि।** यथा पृषोदरशब्दे लोपकार्यं शास्त्रेणाविहितं दृश्यते, तथान्यत्रापि लोपादिकार्यं शास्त्रेणाविहितं दृश्यते। तानि च पृषोदरप्रकाराणि भवन्ति। **यथोपदिष्टमिति।** 'यथासादृश्ये' इति वीप्सायामव्ययीभावः। अत एवास्य विवरणं करोति—**यानि यथोपदिष्टानीत्यादि।** दिशिरत्रोच्चारणक्रियः। उपदिष्टान्युच्चारितानीत्यर्थः। कैः पुनरु-

**पदमञ्जरी**

**कवञ्चोष्णे ॥** छन्दस्यन्यत्रापि दृश्यते—'न कवादिभ्यो न हि ते प्रणन्तीति', (ऋ० १०.१०७.३) कवाशब्दोऽपि दृश्यते केवलः—कवातिर्यदि वोपतिष्ठेतेति, ईषत्तिर्यङित्यर्थः ॥ १०७ ॥ १०८ ॥

**पृषोदरादीनि यथोपदिष्टम् ॥ निरुक्तादिशास्त्रसिद्धानामसमासपदानाम्** 'उणादयो बहुलम्' इति सिद्धिरुक्ता, अनेन तु समासपदानां जीमूतबलाहकादीनां सिद्धिरुच्यते। प्रकारवचनोऽयमादिशब्द इति दर्शयति—**पृषोदरप्रकाराणीति।** व्यवस्थार्थे त्वादिशब्दे यथोपदिष्टमित्यनर्थकमिति भावः। प्रकारमाह—**येष्विति। यथोप-**

**भावबोधिनी**

उष्ण शब्द उत्तरपद रहते 'कु' का 'कव' आदेश होता है और 'का' यह भी होता है विकल्प से। [ अतः पक्ष में 'कद्' भी होकर तीन रूप बनते हैं। ] उदा०—कवोष्णम्, कोष्णम्, कदुष्णम्। [ ईषदुष्णम्—इस अर्थ में ईषत् के 'कव, का, कद्' ये तीन आदेश होते हैं गुण करनेपर रूप बनते हैं। ] ॥ १०७ ॥

वेदविषय में पथि शब्द उत्तरपद रहते 'कु' के स्थान पर 'कव' और 'का' आदेश विकल्प से होते हैं। [ अतः पक्ष में 'कु' भी रह जाता है। ] उदा०—कवपथः। कापथः। कुपथः। [ कुत्सितः पन्थाः—इस अर्थ में समास के बाद समासान्त अप्रत्यय "ऋक्पूरब्धूः" सूत्र से करने पर प्रस्तुत सूत्र से 'कव' तथा 'का' करने पर—(१) कवपथः, (२) कापथः। पक्ष में 'कु' ही रहनेपर (३) कुपथः—ये तीन रूप होते हैं। ] ॥ १०८ ॥

पृषोदर जैसे शब्दरूप जिनमें लोप, आगम, वर्णविकार (आदेशादि) किसी अन्य शास्त्र द्वारा विहित नहीं हैं किन्तु प्रयोग में देखे जाते हैं, वे शब्दरूप यथोपदिष्ट ही साधु होते हैं। जो जिस प्रकार से उपदिष्ट हैं—शिष्टों द्वारा उच्चारित हैं, प्रयुक्त हैं, उन्हें उसी प्रकार से समझ लेना चाहिए। उदा०—पृषद् उदरं यस्य तत्—इसमें 'पृषोदरम्'।

**व्यानि । पृषदुदरं यस्य पृषोदरम् । पृषद् उद्वानं यस्य पृषोद्वानम् । अत्र तकारलोपो भवति । वारिवाहको बलाहकः । पूर्वशब्दस्य बशब्द आदेश उत्तरपदादेश्च लत्वम् । जीवनस्य मूतो जीमूतः । वनशब्दस्य लोपः । शवानां शयनं श्मशानम् । शवशब्दस्य श्मादेशः शयनशब्दस्यापि शानशब्द आदेशः । ऊर्ध्वं खमस्येति उलूखलम् । ऊर्ध्वंखशब्दयोरुलू, खल—इत्येतावादेशौ भवतः । पिशिताशः पिशाचः । पिशिताशशब्दयोर्यथायोगं पिशाचशब्दावादेशौ । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । सदेरधिकरणे डट् प्रत्ययः । ब्रुवच्छब्दस्य चोपपदस्य**

**न्यासः**

पदिष्टानि ? शिष्टैः । शिष्टाः पुनराचारनिवासादिना वेदितव्याः । **तानि तथैवानुगन्तव्यानीति** । यथा तैः प्रयुक्तानि तथैव तानि साधुत्वेनानुगन्तव्यानीत्यर्थः । यदि शिष्टाः शब्देषु प्रमाणं तदा किमनयाष्टाध्याय्या, शिष्टवचनादेव हि शब्दानां साधुत्वं विज्ञास्यते ? उच्यते; शिष्टपरिज्ञानार्थाष्टाध्यायी । अष्टाध्यायीमधीयानोऽनधीताष्टाध्यायीकमपि येऽस्यामष्टाध्याय्यां विहिताः शब्दास्तान् प्रयुञ्जानं पश्यन्नेवमध्यवस्यति—शिष्टोऽयमिति, न चासावष्टाध्यायीमधीतवान्, अथ च तस्यां ये व्युत्पादिताः शब्दास्तान् प्रयुङ्क्ते, नूनमयमन्यानपि जानाति—इत्येषा शिष्टपरिज्ञानार्थाऽष्टाध्यायी ।

**पदमञ्जरी**

**दिष्टमिति** । वीप्सायामयमव्ययीभाव इत्याह—**यानि यानीति** । दिशिरुच्चारणक्रियः, उच्चार्य हि वर्णानाह—'उपदिष्टा इमे वर्णाः' इति, कैः पुनरुपदिष्टानि ? **शिष्टैः** । शिष्टाः पुनरकामात्मानो यथार्थवेदिनो यथाविहितभाषिणश्च किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारगाः, यानधिकृत्येदमुच्यते ।

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान्वचनं तेषां नानुमानेन बाध्यते ॥ इति ॥ (वा० प० १.३७-३८)

यदि तर्हि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते ? शिष्टपरिज्ञानार्थाष्टाध्यायी । कथम् ? अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानम्, ये चानुविहितास्तान् प्रयुञ्जानम् । स पश्यति—नूनमस्य दैवानुग्रहः स्वभावो या यदसौ नाष्टाध्यायीमधीते, अथ चात्र तु विहिताः शब्दास्तान्प्रयुङ्क्ते, नूनमन्यानपि अयं जानाति । सैषा शिष्टपरिज्ञानार्थाष्टाध्यायी ।

जीवनस्य = जलस्य मूतो = भाजनं जीमूतः, यथा कुसूलो धान्यानाम्, खम् = बिलम् । पिशितम् =

**भावबोधिनी**

पृषद् उद्वानं यस्य तत्—पृषोद्वानम् । इनमें पृषत् के तकार का लोप होता है । [ गुणसन्धि करने पर रूप बनता है । ] वारि बाहकः—बलाहकः । पूर्वशब्द (वारि) का 'ब' आदेश तथा उत्तरपद (वाहक) के आदि (व) का लत्व [करनेपर ब + लाहक = बलाहकः रूप ] होता है । जीवनस्य मूतः—जीमूतः । इसमें [ जीवन के ] 'वन' शब्द का लोप हो जाता है । शवानां शयनम्—श्मशानम् । इसमें 'शव' का 'श्म' आदेश और 'शयन' का 'शान' आदेश होता है । [ शव = श्म, शयन = शान—मिलाने पर श्मशान ] ऊर्ध्वं खम् अस्य—इसमें उलूखलम् । ऊर्ध्व तथा ख इन शब्दों के स्थान पर उलू तथा खल—ये आदेश होते हैं । [ मिला देनेपर उलूखलम् । ] पिशिताशः—पिशाचः । यहाँ पिशित तथा अश इनकेस्थान पर क्रमशः पिश अच ये आदेश हो जाते हैं । ब्रुवन्तः अस्यां सीदन्ति—इस अर्थ में—बृसी होता है । सद् धातु से अधिकरण में डट् प्रत्यय होता है । और उपपद ब्रुवत् शब्द के स्थान पर 'बृ' यह आदेश होता है । [ सद् + डट् = अ, टिलोप, ङीप् करने से 'सी' होगा है । ] मह्यांरौति—इस अर्थ में मयूरः । 'रु' धातु से अच् करनेपर टि का लोप होता है । और 'मही' शब्द का 'मयू' आदेश हो जाता है । इसी प्रकार अश्वत्थ, कपित्थ आदि शब्दों

**वृशब्द आदेशो भवति। मह्यां रौतीति मयूरः। रौतेरचि टिलोपः। महीशब्दस्य मयूभावः। एवमन्येऽपि अश्वत्थकपित्थप्रभृतयो यथायोगमनुगन्तव्याः।**

**❀ दिक्शब्दस्य उत्तरस्य तीरस्य तारभावो वा भवति ❀ (का० वा० १)। दक्षिणतीरम्, दक्षिणतारम्, उत्तरतीरम्, उत्तरतारम्।**

**❀ वाचो वादेर्डत्वं च लभावश्चोत्तरपदस्येञि प्रत्यये भवति ❀ (का० वा० २)। वाचं वदतीति वाग्वादः। तस्यापत्यं वाड्वालिः।**

**❀ षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च भवति (का० वा० ३) ❀। षड् दन्ता अस्य षोडन्। षट् च दश च षोडश।**

**न्यासः**

**एवमन्येऽपीत्यादि।** कप्यश्वमहीशब्देषूपपदेषु 'सुपि स्थः' इति तिष्ठतेः कप्रत्ययः। सकारस्य तकारः क्रियते। महीशब्दस्यापि ह्रस्वत्वम्।

**दक्षिणतारमिति।** षष्ठीसमासः। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः' इति पुंवद्भावः। अथ वा—दक्षिणशब्दस्यायं तीरशब्देन षष्ठीसमासः, कर्मधारयो वा।

**वाचोवाद इति।** वाक्यशब्दस्य वादशब्द उत्तरपदे परतो डकारादेशो भवति। उत्तरपदस्य च वादशब्दस्य वल इत्ययमादेशो भवतीञि प्रत्यये परत इति। वाचं वदतीति 'कर्मण्यम्'—**वाग्वादः**, तस्यापत्यम् 'अत इञ्'—**वाड्वालिः।**

**षष उत्वमित्यादि।** षष्शब्दस्योत्वं भवति दतृ, दश—इत्येतयोरुत्तरपदयोः, उत्तरपदादेः ष्टुत्वञ्च। षड् दन्ता यस्येति बहुव्रीहिः। 'वयसि दन्तस्य दतृ'इति दत्रादेशः—**षोडन्।** षट् च दश चेति द्वन्द्वः—**षोडश।**

**पदमञ्जरी**

मांसम्। बृसी = तृणमयमासनम्। **एवमन्येऽपीत्यादि।** कप्यश्वमहीशब्देषूपपदेसु 'सुपि स्थः', सकारस्य तकारः, महीशब्दस्य ह्रस्वः।

**दक्षिणतारमिति।** विशेषणसमासः। **वाग्वाद इति।** कर्मण्यण्। **षोडन्निति।** 'वयसि दन्तस्य दतृ', उगित्वान्नुम्।

**भावबोधिनी**

को यथायोग (जिस प्रकार का सूत्र या कार्य हो वैसा) समझना चाहिए।

❀ दिशावाचक के उत्तरवर्ती तीर शब्द का 'तार' आदेश विकल्प से होता है। ❀ उदा० दक्षिणतारम्, दक्षिणतीरम्। उत्तरतारम्, उत्तरतीरम्। [दक्षिणं च तत् तीरम्, अथवा दक्षिणस्याः तीरम्—इनमें कोई विग्रह करके समास के बाद 'तीर' का 'तार' विकल्प से हो जाता है।]

❀ वाद शब्द परे रहते वाच् का ड् होता है और उत्तरपद (वाद) का ल हो जाता है इञ् प्रत्यय परे रहते। ❀ उदा० वाचं वदति—इस विग्रह में वाग्वादः। [ 'कर्मण्यम्' से कर्म उपपद मानकर अण् प्रत्यय होता है। ] वाग्वादस्य अपत्यम्—इस अर्थ में [''अत इञ्'' सूत्र से इञ् प्रत्यय करने पर वाच् के च् का ड् तथा 'वाद' के द् का ल् करने पर, भ संज्ञा अलोप कर देने पर—वाड्वालिः रूप बनता है।

❀ दत्, दश तथा धा उत्तरपद रहने पर षष् का उत्व तथा उत्तरपद के आदि वर्ण का ष्टुत्व होता है। ❀ उदा० षड् दन्ता अस्य —इस विग्रह में षोडन्। [बहुव्रीहि करने पर ''वयसि दन्तस्य दतृ'' सूत्र से दत् होता है, षष् दत्, प्रस्तुत सूत्र से 'ष्' का उ, गुण, द का ष्टुत्व ड करने पर षोडत्, नुमादि करने पर रूप होता है।] षट् च दश च—इसमें—षोडश। [षष् + दश, ष् का उ गुण षो + दश, द का ड—षोडश।]

❀ **धासु वा षष उत्वं भवति उत्तरपदादेश्च ष्टुत्वम्** ❀ [म० भा०]। **षोढा, षड्धा कुरु। बहुवचननिर्देशो नानाधिकरणवाचिनो धाशब्दस्य प्रतिपत्त्यर्थः। इह मा भूत्—षट् दधाति धयति वा षड्धेति॥**

❀ **दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम्**[1] ❀। [म० भा०] **कृच्छ्रेण दाश्यते नाश्यते दभ्यते च यः स दूडाशः। दूणाशः। दूडभः। दम्भेः खल्वनुनासिकलोपो निपातनात्। दुष्टं ध्यायतीति दूढ्यः। दुःशब्दोपपदस्य ध्यायतेः, 'आतश्चोपसर्गे' (३.१.१३६) इति कप्रत्ययः।**

**न्यासः**

**धासु वेति**। उत्वस्यैवायं विकल्पः। ष्टुत्वं तु नित्यमेव भवति। **षोढा, षड्धेति**। 'अधिकरणविचाले च' इति धाप्रत्ययः। अथ किमर्थं धास्विति बहुवचननिर्देशः क्रियते ? इत्याह—**बहुवचननिर्देश इत्यादिना। षड्धेति**। धाञो धेटो वा स्त्रियाम् 'आतोऽनुपसर्गे कः' इति कप्रत्ययः।

**दाश्यत इति**। 'दाशृ दाने', **नाश्यत इति** 'णश अदर्शने', **दभ्यत इति** 'दम्भ दम्भे'—एतेभ्यः कर्मणि घञ्। दुर्शब्दस्य दाशशब्दादिभिः प्रादिसमासे—दूडाशः, दूणाशः,दूडभः। **दम्भेरनुनासिकलोप इत्यादि**। यदेतद् 'दाशनाशदभध्येषु' इत्यत्र कृतानुनासिकलोपस्य दम्भेरुच्चारणं तन्निपातनम्, तत एवात्र दम्भेरनुनासिकलोपो भवति।

**पदमञ्जरी**

**धासु वेति**। उत्वस्यायं विकल्पः। उत्वपक्षे तु ष्टुत्वं नित्यमेव भवति, अत्रोत्तरपदशब्देन धाप्रत्ययोऽभिधीयते। पद्यते गम्यतेऽनेनार्थं इति पदम्, उत्तरं च तत्पदं च उत्तरपदम्। **षड्धेति**। 'न पदान्ताट्टोरनाम्' इति ष्टुत्वप्रतिषेधः। **नानाधिकरणवाचिन इति**। अर्थगतं बहुत्वं शब्दे समारोप्य धास्विति बहुवचननिर्देशः, तेन 'अधिकरणविचाले च' इति विहितस्य धाप्रत्ययस्येदं ग्रहणम्। **षड्धेति**। 'आतोऽनुपसर्गे कः', स्त्रियां टाप्प्रत्ययः। लाक्षणिकत्वादस्याग्रहणमिति चेत् ? एवमपि क्विबन्ते प्रसङ्गः।

**नाश्यत इति**। 'णश अदर्शने' (धा० पा० ११९४) ण्यन्तः। **दभ्यत इति। 'दम्भु दम्भे'** (धा० पा० १२७०)। **स्वो रोहावेति**। लोडुत्तमद्विवचने।

**भावबोधिनी**

❀ धा परे रहते षष् का उत्व विकल्प से होता है और उत्तरपद के आदि का ष्टुत्व हो जाता है। ❀ उदा० षोढा, षड्धा कुरु। ["अधिकरणविचाले च" सूत्र से 'धा' प्रत्यय करने पर षष् + दा, ष् का उ, गुण, ध का ष्टुत्व ढ करने पर—षोढा। न होने पर षष् + धा, जश्त्व, "न पदान्ताट्टोरनाम्" सूत्र से ष्टुत्व का निषेध होने से—षड्धा बनता है।]

[धा एक है तब 'धासु' यह बहुवचन का निर्देश किस लिए है ?] बहुवचन का निर्देश नाना अधिकरणवाचक 'धा' शब्द का ज्ञान कराने के लिए है। जिससे यहाँ न होने लगे—षट् दधाति, धयति वा—षड्धा। [धा अथवा धे धातु से 'क' प्रत्यय में रूप होता है।] यह धा प्रत्यय न होकर धातु का रूप है। अतः उत्व और ष्टुत्व दोनों नहीं होते हैं।]

❀ दुर् के बाद दाश, नाश, दभ तथा ध्य परे रहते 'र्' का उत्व तथा उत्तरपद के आदि का ष्टुत्व होता है।❀ उदा० कृच्छ्रेण दाश्यते, नाश्यते, दभ्यते च यः—इन अर्थों में क्रमशः—दूडाशः दूणाशः। दूडभः। [दुर् उपपद दाश् से कर्म में घञ्, उपपद समास, र् का ऊ, दीर्घ, द का ष्टुत्व—दूडाशः। इसी प्रकार दुर् + नाश, उत्व, दीर्घ, णत्व करने पर—दूणाशः।] दम्भ धातु के अनुनासिक (म्) का लोप भी निपातन से होता है। [दुर् + दभ, उत्व, दीर्घ, ष्टुत्व करने पर दूडभः।] दुष्टं ध्यायति—इस अर्थ में—दूढ्यः। दुर् शब्द उपपद रहते 'ध्यै' = ध्या धातु से 'आतश्चोपसर्गे कः" सूत्र से क = अप्रत्यय] आ लोप दुर् + ध्य, उत्व, दीर्घ, ष्टुत्व कर देने पर—दूढ्यः बनता है।]

---

१. भाष्यकारस्यैव एतद्वचनं न तु वार्तिककारस्येति बोध्यम्।

**❀ स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम् ❀ (का० वा० ५)। जाय एहि सुवो [स्वो]रोहाव (तै० सं० १.७.९.१)।**

**❀ पीवोपवसनादीनां च लोपो वक्तव्यः ❀ (का० वा० ६)। पीवोपवसनानां (ऋ० खि० ५.७.२) पयोपवसनानाम्।**

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥**

**न्यासः**

पीव उपवसनं येषां ते **पीवोपवसनाः**। एवं **पयोपवसनाः**। उभयत्र सकारलोपः।

**वर्णागम इति**। निरुक्तशास्त्रे ये शब्दा व्युत्पाद्यन्ते तेषां पृषोदरादित्वादेव साधुत्वमिष्यत इतीमं श्लोकमाह—**वर्णागम इत्यादि**। अपूर्वस्य वर्णस्यागमो **वर्णागमः** = नकारादेरपूर्वस्य वर्णस्य प्राप्तिः, यथा—कौ जीर्यते कुञ्जर इति। अत्र कुशब्दस्य नुगागमः क्रियते। **वर्णविपर्ययः** = वर्णस्थानव्यत्यासः, यथा—हिंसि हिंसायाम्', हिनस्तीति सिंह इत्यत्र पचाद्यचि कृते हकारसकारयोः स्थानव्यत्यासः। **वर्णविकारः** = वर्णस्य रूपान्तरापत्तिः, यथा—षोडन्निति। अत्र षकारस्योत्वरूपापत्तिः, दकारस्य च डकाररूपापत्तिः। **वर्णनाशः** = वर्णस्य लोपः, यथा—पृषोदर इति। अत्र तकारस्य लोपः। **अर्थातिशयः** = अर्थविशेषः, प्रसिद्धादर्थादर्थान्तरम्, तेन धातोर्योगः = सम्बन्धः, यथा—मह्यां रौतीति मयूरः। अत्र रोते रमणेनार्थेनातिशयेन योगः। एतत् **पञ्चविधं** =पञ्चप्रकारं **निरुक्तम्**, निश्चयेनोच्यतेऽर्थोऽनेनेति निरुक्तम्॥ १०९॥

**पदमञ्जरी**

**वर्णागम इत्यादि**। कौ जीर्यत इति कुञ्जर इत्यत्र नकारस्य वर्णस्यागमः। हिनस्तीति सिंह इत्याद्यन्तयोर्वर्णयोर्विपर्ययो व्यत्यासः। षोडन् इत्यत्र षकारस्योकाररूपापत्तिः, वर्णविकारः। पृषोदर इत्यादौ तकारादेर्वर्णस्य विनाशः। यस्य धातोर्योऽर्थः प्रसिद्धः, तस्मादर्थान्तरेण योगस्तदर्थातिशयेन योग इति। एतत्पञ्चविधं निरुक्तम् = निर्वचनप्रकारः, शब्दानां तदनेन सूत्रेणोच्यत इति श्लोकार्थः॥ १०९॥

**भावबोधिनी**

❀ रोह धातु परे रहते स्वर् के रेफ का उत्व कहना चाहिए वेदविषय में। ❀ उदा० एहि त्वं जाये स्वो रोहाव। [यहाँ स्वर् के बाद लोट् उत्तम पुरुष द्विवचन का 'रोहाव' परे है। अतः रेफ का उ तथा गुण कर देने पर 'स्वो' रूप बनता है।]

[अधिकांश प्रकाशित पाठ 'सुवो' यह है किन्तु यह अशुद्ध है। भाष्यसम्मत पाठ 'स्वो' ही यहाँ उद्धृत किया गया है।]

❀ पीवोपवसनादि का वेद में लोप कहना चाहिए।❀ उदा० पीवोपवसनानाम् पयोपवसनानाम्। [पीवस् + उपवसनानाम् में तथा पयस् + उपवसनानाम् में स् का लोप कर देने पर—पीव + उपवसनानाम् गुण होने पर रूप बनता है।]

[अब निरुक्त की प्रक्रिया का सूत्र से निर्वाह सूचित करने के लिए वचन प्रस्तुत किया जा रहा है—]

(१) [अपूर्व] वर्ण का आगम, (२) वर्णविपर्यय = (एक वर्ण का दूसरे वर्ण के स्थान पर जाना और दूसरे का पहले के स्थान पर आना) तथा (३) वर्णविकार ( = आदेशादि द्वारा दूसरा वर्ण बन जाना), (४) वर्णनाश ( = वर्णलोप (५) धातु का अर्थातिशय के साथ योग अर्थात् प्रसिद्ध अर्थ से भिन्न अर्थ में प्रयोग—यह पाँच प्रकार का निरुक्त = निर्वचन [इस सूत्र से] होता है।

[(१) प्रथम का उदाहरण—कौ जीर्यते—इस विग्रह में कु + जर में नुक् का आगम कुञ्जरः। (२) हिंसि धातु से अच् करने के बाद हकार तथा सकार का व्यत्यय—सिंहः। (३) षोडन् आदि में ष् का उत्व, द् का उत्व आदि षोडन्। (४) पृषोदरम् में तलोप। (५) मह्यां रौति का रमण अर्थ हो जाता है—मयूरः प्रक्रिया 'न्यास' में देखें।]॥ १०९॥

## २९७२. संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ ॥ ११० ॥ (२३८)

**संख्या, वि, साय** इत्येवम्पूर्वस्याह्नशब्दस्य स्थाने अहनित्ययमादेशो भवत्यन्यतरस्यां ङौ परतः। **द्वयोरह्नोर्भवः द्व्यह्नः। त्र्यह्नः। द्व्यह्नि, द्व्यहनि। त्र्यह्नि, त्र्यहनि। द्व्यह्ने। त्र्यह्ने। व्यपगतमहो व्यह्नः। व्यह्नि, व्यहनि। व्यह्ने। सायमह्नः सायाह्नः। सायाह्नि, सायाहनि। सायाह्ने।**

**एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि भवतीत्येतदेव विसायपूर्वस्याह्नस्य ग्रहणं ज्ञापकम्। तेन मध्यमह्नो मध्याह्न इत्यपि भवति।**

### न्यासः

**संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ॥ द्वयोरह्नोर्भव इति।** भवार्थविवक्षायाम् 'तद्धितार्थ' इति समासः, ततः 'कालाट्ठञ्' इति ठञ्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्, 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः, 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। **द्व्यह्नीति।** 'विभाषा ङिश्योः' इत्यकारलोपः पाक्षिकः। **द्व्यह्न इति।** 'आद् गुणः'। **व्यह्न इति** प्रादिसमासः। शेषं पूर्ववत्। **सायाह्न इति।** एकदेशिसमासोऽयम्। तत्रेदं चोद्यमाशङ्क्यते—ननु च 'पूर्वापराधरोत्तरम्' इत्यादिना समासो विहितः, न च सायंशब्दस्तत्र पठ्यते, तत् कथमिह सायंशब्दस्याहःशब्देन समासः सम्भवतीति? एतन्निराकर्तुमाह—**एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापीत्यादि।** तत्पुरुषसमासे 'अह्नोऽह्न एतेभ्यः' इत्यनेनाह्नादेशो विधीयते, 'एतेभ्यः' इत्यनेन च 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादयः प्रत्यवमृश्यन्ते। तत्र यदि पूर्वादय एवैकदेशिना समस्येरन्, तदा न सायंशब्दः 'एतेभ्यः' इत्यनेन प्रत्यवमृश्येत; तस्य संख्यादिष्वपरिपठितत्वात्। ततश्च सायंशब्दात् परस्याह्नादेशो न स्यात्। एवञ्च सायम्पूर्वस्याह्नशब्दस्याभावात् तस्येह ग्रहणं न क्रियेत, कृतञ्च, तस्मादेतदेव सायंपूर्वस्याह्नशब्दस्य ग्रहणं ज्ञापयति—

### पदमञ्जरी

**संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ॥ द्व्यह्न इति।** 'तद्धितार्थ' इति समासः, 'कालाट्ठञ्', तस्य 'द्विगोर्लुगनपत्ये' इति लुक्, 'राजाहःसखिभ्यष्टच्', 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। **द्व्यह्नीति।** 'विभाषा ङिश्योः' इत्यल्लोपविकल्पः। **व्यह्न इति।** प्रादिसमासः, शेषं पूर्ववत्। **सायाह्न इति।** एकदेशिसमासः।

ननु चायं पूर्वापरादिसूत्रे न पठ्यते, तत्कथमस्यैकदेशिसमासः? तत्राह—**एकदेशिसमास इत्यादि।** 'अह्नोऽह्न एतेभ्यः' इत्यत्र 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः', 'अहःसर्वैकदेशसंख्यातपुण्याश्च रात्रेः' इति प्रक्रान्ताः संख्यादयः परामृश्यन्ते। यदि च पूर्वादय एवैकदेशिना समस्येरन्न सायंशब्दात्परस्याह्नोऽह्नादेशः स्यात्, 'एतेभ्यः' इत्यनेन तस्यापरामृष्टत्वात्। ततश्च तत्र पूर्वस्याह्नशब्दस्येह ग्रहणमनुपपन्नं स्यात्। तस्मात्सायशब्दस्य समास-

### भावबोधिनी

संख्यावाचक, वि तथा साय—ये जिसके पूर्व में हैं ऐसे 'अह्न' शब्द के स्थान पर ङि प्रत्यय परे रहते विकल्प से 'अहन्' यह आदेश होता है। उदा० द्वयोः अह्नोः भवः—इस प्रकार से द्व्यह्नः बनता है। [उक्त विग्रह में भवार्थ की विवक्षा में 'तद्धितार्थोत्तरपदसमाहारे च' सूत्र से समास के बाद "कालाट्ठञ्" सूत्र से ठञ् प्रत्यय और "द्विगोर्लुगनपत्ये" इस सूत्र से ठञ् प्रत्यय का लुक्, "राजाहःसखिभ्यष्टच्" सूत्र से टच् प्रत्यय, "अह्नोऽह्न एतेभ्यः" सूत्र से 'अह्न' आदेश—द्व्यह्नः। इस शब्द के सप्तमी एकवचन ङि प्रत्यय में विशेषता है जो यह सूत्र निर्दिष्ट करता है। 'अह्न' का 'अहन्' आदेश होने पर "विभाषा ङिश्योः" सूत्र से वैकल्पिक अकारलोप होने से (१) द्व्यह्नि, (२) द्व्यहनि। अहन् आदेश न होने पर (३) द्व्यह्ने। इसी प्रकार अन्यत्र भी तीन-तीन रूप होते हैं—यही लिख रहे है—] द्व्यह्नि, द्व्यहनि, द्व्यह्ने। त्र्यह्नि, त्र्यहनि, त्र्यह्ने। व्यपगतम् अह्नः—इस अर्थ में व्यह्नः। [इससे भी ङि परे तीन रूप होते हैं] व्यह्नि, व्यहनि, व्यह्ने। सायम् अह्नः—इसमें सायाह्नः। ङि प्रत्यय में—सायाह्नि, सायाहनि, सायाह्ने।

**संख्याविसायपूर्वस्येति किम् ? पूर्वाह्णे । अपराह्णे ॥**

**२९७३. ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ १११ ॥ (१७४)**

**ढकाररेफयोर्लोपो यस्मिन् स ढ्रलोपः, तत्र पूर्वस्याणो दीर्घो भवति । लीढम् । मीढम् । उपगूढम् । मूढः । रलोपे—नीरक्तम् । अग्नीरथः । इन्दूरथः । पुनारक्तं वासः । प्रातराजक्रयः ।**

**न्यासः**

पूर्वादिभ्योऽन्यस्याप्येकदेशिसमासो भवतीति । तेन **मध्यमह्नो मध्याह्न** इति सिद्धं भवति । **पूर्वाह्णे इति ।** 'अह्नोऽदन्तात्' इति णत्वम् । 'संख्याविसायेभ्यः' इत्येव वक्तव्ये पूर्वशब्दस्याधिकस्य ग्रहणं तदधिककार्यविधान-सूचनार्थम् । तेन सायाह्न इत्यत्र मकारलोपः सिद्धो भवति ॥ ११० ॥

**ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ढ्रलोप इति** तत्पुरुषोऽयं वा स्याद्, बहुव्रीहिर्वा ? तत्र यदि तत्पुरुषः स्याद्—ढ्रयर्लोपो ढ्रलोप इति, तदाणः पूर्वत्वं नोपपद्यते; लोपस्याभावरूपत्वात्, अभावे च पौर्वापर्यासम्भवात् । अथापि स्थानिद्वारकं पौर्वापर्यमाश्रित्य पूर्वत्वमुच्यते, करणीयः—इत्यत्राप्यनीयरो रेफस्य लोपे कृते पूर्वस्य दीर्घत्वं स्यादितीमं दोषं दृष्ट्वा बहुव्रीहिरयमिति दर्शयन्नाह—**ढकाररेफयोर्लोपो यस्मिन्नित्यादि ।** गमकत्वाद् वैयधिकरण्येऽपि बहुव्रीहिर्भवत्येव, यथा—कण्ठेकाल इति । **लीढमिति ।** 'लिह आस्वादने', निष्ठा, 'हो ढः', 'झषस्तथोर्धोऽधः', 'ष्टुना ष्टुः', 'ढो ढे लोपः'—इत्येते विधयः कर्तव्याः । **मीढमिति ।** 'मिह सेचने' । **उपगूढमिति ।** 'गुहू संवरणे' । **मूढ इति ।** 'मुह वैचित्त्ये' । **नीरक्तमिति ।** 'कुगतिप्रादयः' इति समासः, 'रो रि' इति रेफस्य लोपः ।

**पदमञ्जरी**

स्तावदनुमीयते । तत्र सामान्येन ज्ञापकमाश्रीयते—अन्यस्यापि भवतीति । एवं हि प्रयोजनान्तरमपि सिध्यति, तद्दर्शयति—**तेनेति ।** स्यतेरन्तकर्मणः सायशब्दो घञन्तोऽहरवसानवचनः । **पूर्वाह्णे इति ।** समासादि पूर्ववत्, 'अह्नोऽदन्तात्' इति णत्वम् ॥ ११० ॥

**ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥** रेफे अकार उच्चारणार्थः । यद्ययं षष्ठीतत्पुरुषः स्यात्, तदाणः पूर्वत्वं नोपपद्यते, लोपस्याभावरूपत्वात् । अथापि बुद्धिपरिकल्पितं पौर्वापर्यमाश्रीयते ? एवमपि करणीयमित्यादावप्य-नीयरो रेफस्य लोपे परतः पूर्वस्य दीर्घप्रसङ्ग इति तत्पुरुषे एवं दोषं दृष्ट्वा कण्ठेकालवद्व्यधिकरणपदो बहुव्रीहिरित्याह—**ढकाररेफयोर्लोपो यस्मिन्निति ।** अत्र लिङ्गम्—'भव्यगेयप्रवचनीय' इति निर्देशः । **लीढमिति ।** 'लिह आस्वादने' (धा० पा० १०१६) निष्ठा, ढत्वधत्वष्टुत्वढलोपेषु रूपम्, 'मिह सेचने' (धा० पा० ९९२) 'गुह संवरणे' (धा० पा० ८९६), 'मुह वैचित्त्ये' (धा० पा० ११९८) । पूर्वग्रहणमनर्थकम्, 'तस्मिन्निति निर्दिष्टे

**भावबोधिनी**

[ पूर्वापरादि० सूत्र में इनका पाठ न होने पर इनमें समास कैसे होगा ? ] पूर्व आदि से भिन्न शब्दों का भी एकदेशि-समास होता है—इसमें वि-साय-पूर्वक अह्न का ग्रहण ज्ञापक है । इस कारण मध्यम् अह्नः—इसमें मध्याह्नः—यह होता है ।

संख्या, वि, साय—पूर्ववाले अह्न का ही—इसका क्या फल है ? पूर्वाह्णे । अपराह्णे । [इनमें उक्त तीनों में से कोई भी पूर्व में नहीं है । अतः 'अह्न्' आदेश नहीं होता है । 'अह्नोऽदन्तात्'' सूत्र में णत्व होता है ।] ॥ ११० ॥

ढकार और रेफ का लोप होता है जिसके परे रहते वह—ढलोप है, वहाँ पूर्ववर्त्ती अण् का दीर्घ होता है । उदा० ढलोप में—लीढम् । [लिह् + क्त = त, "हो ढः" से ह् का ढ्, "झषस्तथोर्धोऽधः" से त का ध, लिढ् + ध, ष्टुत्व, लिढ् + ढ, "ढो ढे लोपः" सूत्र से ढ् का लोप—लि + ढ इसमें परवर्त्ती ढ को मान कर पूर्व ढ् का लोप होने से प्रस्तुत सूत्र से अण् = इ का दीर्घ करने पर—लीढम्] मीढम् । [मिह् + क्त, शेष पूर्ववत्] उपगूढम् [उपगुह् + क्त, शेष पूर्ववत्] मूढः । [मुह् + क्त, शेष पूर्ववत्] रलोप में उदा० नीरक्तम् । [निर् + रक्तम्, समास के बाद "रो रि" सूत्र से रेफ का

**पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् ।**
**अण इति किम् ? आतृढम्, आवृढम् ॥**

## २९७४. सहिवहोरोदवर्णस्य ॥ ११२ ॥ (२३५७)

सहि, वहि—इत्येतयोरवर्णस्यौकार आदेशो भवति ढ्लोपे। सोढा, सोढुम्, सोढव्यम्। **बोढा, वोढुम्, वोढव्यम् ।**

### न्यासः

अथ पूर्वग्रहणं किमर्थम्, यावता 'ढ्लोपे' इति सप्तम्या निर्देशः, तत्रान्तरेणापि पूर्वग्रहणम् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति पूर्वस्यैव भविष्यति ? इत्यत आह—**पूर्वग्रहणमित्यादि** । असति पूर्वग्रहणे, उत्तरपदाधिकारादुत्तरपद एव स्यात्—नीरक्तमित्यादौ, अनुत्तरपदे न स्यात्—लीढमित्यादौ । यद्यपि ढलोपस्योत्तरपदेऽसम्भवादनुत्तरपदेऽपि वचनप्रमाण्याद्दीर्घत्वं स्याद्, रलोपे त्वनुत्तरपदे न प्राप्नोति; उत्तरपदे रलोपस्य सम्भवात् । तस्मादनुत्तरपदेऽपि पूर्वमात्रस्याणो दीर्घो यथा स्यादिति पूर्वग्रहणम् । **आतृढमिति** । 'तृहू तृन्हू हिंसार्थौ' । **आदृढमिति** क्वचित् पाठः । 'दृह दृहि वृह वृहि वृद्धौ' इत्यस्य निष्ठायां किलेदं रूपम्, एतत् तु नोपपद्यते; दृहेः सेट्त्वात् तस्येटा भवितव्यम् । अथापि कथञ्चिन्न स्यात्, एवमपि 'दादेर्धातोर्घः' इति घत्वेन भवितव्यम् । स्थूलबलवद्विवक्षायाम् 'दृढः स्थूलबलयोः' इति निर्देशादुभयं न भविष्यतीति चेद् ? दीर्घत्वमप्यत एव तर्हि न स्यात् । केचिदत्रानित्यत्वादागमशासनस्याभावमिटो वर्णयन्ति । 'वा द्रुह' इत्यादौ सूत्रे 'वा' इति योगविभागात् पक्षे घत्वस्याभावः । **आवृढमिति** । 'वृहू उद्यमने' ॥ १११ ॥

**सहिवहोरोदवर्णस्य ॥ ऊढः, ऊढवानिति** । यजादित्वात् सम्प्रसारणम् । 'सम्प्रसारणाच्च' इति परपूर्वत्वम्, दीर्घत्वञ्च । तत्रेदानीमसत्यवर्णग्रहणे ऊकारस्याप्योत्वं स्यात् । ननु च सम्प्रसारणादिभ्यः परत्वा-

### पदमञ्जरी

पूर्वस्य' इति सिद्धेः ? इत्यत आह—**पूर्वग्रहणमित्यादि** । सति पूर्वग्रहणे यद्यपि ढलोपे वचनप्रामाण्यादनुत्तरपदेऽपि स्यात्, रलोपे त्वनुत्तरपदे न स्यात्, नीरक्तमित्यादावुत्तरपदस्यापि सम्भवात् । **आतृढमिति** । 'तृहू हिंसायाम्' (धा० पा० १३४९), 'यस्य विभाषा' इतीट्प्रतिषेधः । क्वचिदादृढमिति पाठः; तदसत्; सेट्त्वादस्य धातोः 'दृढः स्थूलबलयोः' इति हलोपो निपात्यते । **आवृढमिति** । 'वृहू उद्यमने' (धा० पा० १३४७) ॥ १११ ॥

**सहिवहोरोदवर्णस्य ॥ ऊढ इति** । अत्रासत्यवर्णग्रहणे वह्+त इति स्थिते न तावदोत्वं ढलोपनिमित्तत्वात् । अत्र 'पूर्वत्रासिद्धम्' इति ढत्वादीनामसिद्धत्वात्पूर्वं यजादित्वात्सम्प्रसारणम्, तस्मिन्कृते पूर्वत्वे वोकारस्योत्वं प्राप्नोति ।

### भावबोधिनी

लोप होता है ।] अग्नीरथः । [अग्निस्+रथः स् का रुत्व, रेफ का लोप, इ का दीर्घ] इन्दूरथः । [इन्दुस्+रथः, यहाँ भी पूर्ववत् प्रक्रिया है ।] पुनारक्तं वासः । [पुनर्+रक्तम्, रेफ लोप, अ का दीर्घ] प्राताराजक्रयः [प्रातर्+राजक्रयः—रेफलोप के बाद दीर्घ होता है ।]

पूर्वस्य—इसका ग्रहण—उत्तरपद न रहते पर केवल पूर्व का भी दीर्घ करने के लिए है । इसलिए 'लीढम्' एक पद में भी दीर्घ होता है । यदि 'पूर्वस्य' न होता तो 'उत्तरपद' का अधिकार होने से वहीं दीर्घ हो पाता जहाँ उत्तर पद रहता—जैसे—नीरक्तम् आदि । अतः पूर्वमात्र का दीर्घ करने के लिए पूर्वस्य का ग्रहण है ।]

अण् ( अ इ उ ) का दीर्घ होता है—इसका क्या फल है ? आतृढम्, आवृढम् । [ आ तृंह्+क्त, आ वृंह्+क्त में पूर्वोक्त प्रक्रिया करने के बाद ढलोप हो जाने पर भी दीर्घ नहीं होता है क्योंकि 'तृ' का ऋ अण् नहीं है ।] ॥ १११ ॥

सह् तथा वह् धातुओं के अवर्ण का ओकार आदेश होता है ढ्लोप में । उदा० सोढा, सोढुम्, सोढव्यम् ।

**अवर्णस्येति किम् ? ऊढः । ऊढवान् । वर्णग्रहणं किम् ? कृतायामपि वृद्धौ यथा स्यात्—उदवोढाम् । उदवोढम् । तादपि परस्तपरः, तपरत्वादाकारस्य ग्रहणं न स्यात् ॥**

**न्यासः**

दोत्त्वेन भवितव्यम्, तथा च भाष्ये—'उभयोर्नित्ययोः परत्वादोत्त्वेन भवितव्यम्, ओत्वे कृते सम्प्रसारणम्, सम्प्रसारणे कृते सम्प्रसारणपरपूर्वत्वम्, कृतकार्यत्वात् पुनरोत्त्वं न भविष्यति' इति । तस्माद् भवितव्यमेवौत्त्वेन, तस्मिन् सति पश्चात् सम्प्रसारणादिभिः । न चैवं किञ्चिदनिष्टमापद्यत इति नार्थो वर्णग्रहणेन । एवं तर्ह्यवर्णग्रहणं कुर्वन्नेतज्ज्ञापयति—क्वचित् सम्प्रसारणं तदाश्रयञ्च कार्यं बलीयो भवतीति । तेन यदुक्तम्—'सम्प्रसारणं सम्प्रसारणाश्रयञ्च कार्यं बलीयो भवति' इति, तदुपपन्नं भवति ।

**वर्णग्रहणं किमिति ।** 'ओदस्य' एतावत्यपि सति सोढा, सोढुमित्यादि सिध्यत्येवेत्यभिप्रायः । **कृतायामपीत्यादि ।** उत्पूर्वाद्वहेर्लुङि च्लिः, 'च्लेः सिच्', तसस्ताम्, थसस्तम्, अडागमः, ढत्वादेरसिद्धत्वात् ततः पूर्वम् 'वदव्रज' इत्यादिना वृद्धिः, ततो ढत्वादि । अथेदानीमसति वर्णग्रहणे मात्रिकस्याकारस्योच्यमानमोत्त्वं दीर्घस्य न स्यात्, वर्णग्रहणाद्वर्णमात्रस्य भवतीति सिद्धम्—उदवोढाम्, उदवोढमिति ? ननु च 'अणुदित् सवर्णस्य चाप्रत्ययः' इत्यकारो गृह्यमाण आकारमपि ग्राहयिष्यति, तत् किं वर्णग्रहणेन ? इत्यत आह—**तादपि पर इत्यादि ।** 'तपरस्तत्कालस्य' इत्यत्र तादपि परस्तपर इत्ययमपि समास आश्रितः खट्वैडका, खट्वैतिकायनः—इत्येवमादिषु त्रिमात्रिके चतुर्मात्रिके वर्त्तमानस्यैकारस्य वृद्धिसंज्ञा मा भूदित्येवमर्थम् । तत्रासति वर्णग्रहणेऽकारस्य तपरत्वादाकारो न गृह्येत, ततश्च तस्यौत्वं न स्यात् । तस्मादवर्णमात्रस्य यथा स्यादित्येवमर्थं वर्णग्रहणं कर्त्तव्यम् । तादपि परस्तपरः—इत्यस्य च समासस्यैतदेव वर्णग्रहणं ज्ञापकं वेदितव्यम् ॥ ११२ ॥

**पदमञ्जरी**

**भाष्ये** त्ववर्णग्रहणं प्रत्याख्यातम् । अन्तरङ्गाणि ढत्वादीनि, वर्णाश्रयत्वात् बहिरङ्गं सम्प्रसारणम्, प्रत्ययविशेषत्वात्तस्याप्यसिद्धत्वात् 'पूर्वत्रासिद्धम्' इत्यस्यानुपस्थानम् । यद्वा—ढलोपस्यौत्वदीर्घविधौ निमित्तत्वेनाश्रयणादत्र विषये ढत्वादीनामसिद्धत्वं नास्ति, ततः प्रागेव सम्प्रसारणात्परत्वात् ढत्वादिषु कृतेषु वढ इति स्थिते सम्प्रसारणं च प्राप्नोति, ओत्वं च; परत्वादोत्त्वम्, ततः सम्प्रसारणम् । पूर्वत्वं च न पुनरोत्त्वम्, तस्मिन्नेव प्रयोगे कृतत्वात्तदभावे निमित्तसद्भावाद् दीर्घत्वं प्रवर्तिष्यत इति ।

**वर्णग्रहणं किमिति ।** ओदस्येति वक्तव्यमिति प्रश्नः । **कृतायामपीत्यादि ।** उत्पूर्वाद्वहेर्लुङि तामादिषु सिचि वृद्धौ सलोपढत्वादीनि । तत्रेदानीमसति वर्णग्रहणे मात्रिकस्योच्यमानो दीर्घस्य न स्यात् । नन्ववर्णः सवर्णान् गृह्णातीत्याकारस्यापि ग्रहणं भवति ? तत्राह—**तादपि परस्तपर इति ।** इदमेव वर्णग्रहणं लिङ्गं 'तपरस्तत्कालस्य' इत्यत्र पञ्चमीसमासोऽप्याश्रीयत इति । तेनैतन्न चोदनीयम्—'सहिवहोरस्यौत्' इत्येवं कस्मान्न कृतमिति ॥ ११२ ॥

**भावबोधिनी**

वोढा, वोढुम्, वोढव्यम् । [ सह + तृच् = तृ, ह का ढ, त का ध, ष्टुत्व, सढ् + ढा, ढलोप, अ का ओ करने पर—सोढा । इस प्रकार सह् + तुमुन् = तुम्, सह् + तव्यम्, सभी में पूर्ववत् ढत्व, धत्व, ष्टुत्व, ढलोप, अ का ओ करने पर ]

अवर्ण का—इसका क्या फल है ? ऊढः । ऊढवान् । [ वह् + क्त = त, सम्प्रसारण, पूर्वरूप—उह् + त, ढत्व, धत्व, ष्टुत्व, ढलोप, दीर्घ होता है । अ न होने से ओत्व नहीं होता है । ] वर्ण का ग्रहण किसलिए है ? वृद्धि कर देने पर भी जिस प्रकार से हो सके—उदवोढाम् । उदवोढम् । [ उत् पूर्वक 'वह्' धातु से लुङ् = तस् = ताम्, अट् आगम—उद् अ वह् + स् ताम्, "वदव्रजहलन्तस्याचः" से वृद्धि उद् अ वाह् + स् ताम्, ढत्व, सिच्लोप धत्व, ष्टुत्व उद् अ वाढ् + ढाम्, ढलोप उदवा + ढाम्, आ का ओ हो जाता है—उदवोढाम् । थस् का तम् करने पर—उदवोढम् । ]

त से परे भी तपर है, इस कारण ( तपर होने से ) आकार का ग्रहण नहीं हो पाता । [ 'ओदवर्णस्य' में

**२९७५. साढ्यै साढ्वा साढेति निगमे ॥ ११३ ॥ (३५३१)**

साढ्यै, साढ्वा, साढा—इति निगमे निपात्यन्ते। साढ्यै समन्तात् (मै० सं० १.६.३१)। साढ्वा शत्रून् (मै० सं० ३.८.५)। सहेः क्त्वाप्रत्यये ओत्वाभावः। पक्षे क्त्वाप्रत्ययस्य ध्यैभावः। साढा—इति तृचि रूपमेतत्।

निगम इति किम् ? सोढ्वा, सोढेति भाषायाम्॥

**२९७६. संहितायाम् ॥ ११४॥ (१०३५)**

'संहितायाम्' इत्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यम्।

**न्यासः**

**साढ्यै साढ्वा साढेति निगमे ॥** साढ्वेत्यादौ ओत्वाभावो निपात्यते। दीर्घस्तु 'ढ्रलोपे' इत्यादिनैव सिद्धः॥ ११३॥

**संहितायाम् ॥** 'उत्तरपदे' इति वर्त्तते, उत्तरपदञ्च समासे भवति, तत्र चान्तरेणापि वचनं नित्यमेव संहितया भवितव्यम्, तस्मादुत्तरपदे परतो वक्ष्यमाणानां यत् कार्यं न तदर्थताधिकारस्योपपद्यत इति यदनुत्तरपदे कार्यं तदर्थमेवायमधिकारः। तेन यैर्योगैरुत्तरपदे कार्यं विधीयते तानुल्लङ्घ्य येन योगेनानुत्तरपदे कार्यं विधीयते

**पदमञ्जरी**

**साढ्यै साढ्वा साढेति निगमे ॥ साढेति तृचि रूपमिति।** अपपाठोऽयम्, 'आषाढोऽग्निर्बृहद्वयाः' (तै० सं० १-२-१-२६), 'आषाढमुग्रं सहमानम्' (ऋ० १-१८-११), 'आषाढं युत्सु पृतनासु' (ऋ० १-९१-२१), 'आषाढाय सहमानाय' (ऋ० २-२१-२), इत्यादौ निष्ठायामात्वदर्शनात्। **तस्मान्निष्ठायां रूपमिति** पाठः। **सूत्रवृत्तौ** च साढेति ह्रस्वान्तं छेत्तव्यम्। यदि तृजन्तेऽपि क्वचिदात्वं दृश्यते, तदान्यतरस्सूत्रे इतिकरणस्य प्रकारार्थत्वात्साध्यम्॥ ११३॥

**संहितायाम् ॥** अनन्तरैर्योगैरुत्तरपदे कार्यं विधीयते, उत्तरपदं च समासे भवति। तत्र नित्यमेव संहितया भवितव्यम्; संहितैकपदे नित्येति वचनात्। अवग्रहेऽपि क्वचित्कार्यं दृश्यते, क्वचिन्न, 'इकः काशे' अनूकाशमित्यनु+काशमिति, 'अष्टनः संज्ञायाम्' अष्टाबन्धुरमित्यष्टा+बन्धुरमिति। अतो न तेष्ववश्यमस्योप-

**भावबोधिनी**

एकमात्रिक 'अ' का ही ओ हो पाता जब 'अवर्णस्य' लिखा गया तो अवर्णमात्र का ग्रहण होता है। अतः वृद्धि के बाद भी 'ओ' हो जाता है। ]॥ ११२॥

साढ्यै, साढ्वा, साढा—ये शब्द वेद में निपातित होते हैं। उदा० साढ्यै समन्तात्। [ साढ्वा शत्रून। सह् धातु से क्त्वा प्रत्यय करने पर ओत्व का अभाव होता है। पक्ष में क्त्वा प्रत्यय का ध्यै आदेश करने पर—साढ्यै। साढा—यह तृच् प्रत्यय में रूप है।

वेद में—इसका क्या फल है ? भाषा में—सोढ्वा, सोढा—ये ही होते हैं।

[ सह् + क्त्वा = त्वा, ढत्व, धत्व ष्टुत्व, ढलोप के बाद प्राप्त ओकार आदेश नहीं होता है—साढ्वा। जब क्त्वा का साध्यै आदेश हो जाता है तब भी ओत्व नहीं होने से साढ्यै। ]

**विमर्श**—साढा—इसकी प्रक्रिया में मतभेद है। प्रकाशित काशिका में—"साढा—इति तृचि रूपमेतत्" ऐसा पाठ है। किन्तु पदमञ्जरीकार इसे अपपाठ मानकर निष्ठा प्रत्यय क्त का रूप कहते हैं। सिद्धान्तकौमुदीकार ने तृन् प्रत्यय का रूप माना है॥ ११३॥

'संहितायाम्' यह अधिकार है। इसके आगे जिन्हें कहा जायगा 'वे संहिता में होते हैं' ऐसा समझना चाहिए।

वक्ष्यति—'द्वयचोऽतस्तिङः' (६.३.१३५) इति। विद्मा हि त्वा सत्पतिं शूर गोनाम् (ऋ० १०.४६.१)। संहितायामिति किम् ? विद्म, हि, त्वा, सत्पतिं, शूर, गोनाम्" ॥

**२९७७. कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्र-स्रुवस्वस्तिकस्य ॥ ११५ ॥ (१०३६)**

कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्ट, अष्टन्, पञ्चन्, मणि, भिन्न, छिन्न, छिद्र, स्रुव, स्वस्तिक—इत्येतान्वर्जयित्वा। दात्राकर्णः[1]। द्विगुणाकर्णः। त्रिगुणाकर्णः। द्वयङ्गुलाकर्णः। अङ्गुलाकर्णः।

यत्पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं दात्राकारादि क्रियते तदिह लक्षणं गृह्यते।

**न्यासः**

तत्रास्योपयोगं दर्शयन्नाह—**वक्ष्यति द्वयचोऽतस्तिङ इत्यादि। विद्मा हि त्वेत्यादि।** विदेर्लोटि मसः 'स उत्तमस्य' इति सकारलोपः, अदादित्वाच्छपो लुक्॥ ११४॥

**कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥** लक्ष्यतेऽनेन स्वामिविशेषस्य सम्बन्ध इति लक्षणम् = चिह्नम्। **दात्राकर्ण इति।** दात्रमिव दात्रम्, सादृश्यात् तदाकारं चिह्नमुच्यते। दात्रं कर्णे यस्य स दात्राकर्णः। एवमुत्तरत्रापि बहुव्रीहिरेव वेदितव्यः। द्वौ गुणौ यस्य स द्विगुणः। तदाकारमपि चिह्नं द्विगुणम्। गुणशब्दोऽयं[2] बन्धनवचनः[2]। द्वयोरङ्गुल्योः समाहारो द्वयङ्गुलम्, 'तत्पुरुषस्याङ्गुलेः' इत्यादिना च समासान्तः, द्वयङ्गुलकारमपि चिह्नं द्वयङ्गुलम्। **तदिह लक्षणं गृह्यत इति।** कुत एतत् ? लक्षणग्रहणाद्

**पदमञ्जरी**

योग इति। यत्रानुत्तरपदे कार्यं विधीयते तदुदाहरति—**वक्ष्यति द्वयचोऽतस्तिङ इति।** अत्र हि तिङन्तस्य समासासम्भवादुत्तरपद इति न सम्बध्यते। **विद्मा हित्वेति।** विदेर्लट्, मस् 'विदो लटो वा' ॥ ११४॥

**कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥ तदिह लक्षणं गृह्यत इति।** तत्रैव

**भावबोधिनी**

आगे कहेंगे—"द्वयचोऽतस्तिङः" (दो अचों वाले तिङन्त के अकार का ऋग्विषय में आत्व होता है। ६।३।१३५) उदा० विद्मा हि त्वा गोपतिं शूर गोनाम्। [यहाँ 'विद्म' का आत्व होने पर 'विद्मा' बना है।]

संहिता में—इसका क्या फल है ? विद्म, हि, त्वा, गोपतिं, शूर, गोनाम्। [यहाँ संहितापाठ न होने से आत्व नहीं होता है।] ॥ ११४॥

'कर्ण' शब्द उत्तरपद रहने पर लक्षणवाची शब्द का दीर्घ हो जाता है—विष्ट, अष्टन्, पञ्चन्, मणि, भिन्न, छिन्न, छिद्रं, श्रुव, स्वस्तिक—इतने शब्दों को छोड़ कर। उदा० दात्राकर्णः। [दात्रमिव कर्णं यस्य सः। सादृश्य के आधार पर ऐसा कहा जाता है। अथवा दात्रं कर्णे यस्य सः—ऐसा बहुव्रीहि ही यहाँ है।] द्विगुणाकर्णः। [दौ गुणौ यस्य सः—द्विगुणः, इस प्रकार का चिह्न भी द्विगुण है। यहाँ गुण शब्द बन्धनवाचक है।] त्रिगुणाकर्णः। [त्रयः गुणाः यस्य सः। पूर्वोक्त के समान ही यहाँ भी समझना चाहिये।] द्व्यङ्गुलाकर्णः। [द्वयोः अङ्गुल्योः समाहारः—द्वयङ्गुलम् समासान्त अच् प्रत्यय। इस प्रकार का चिह्न भी द्वयङ्गुल होता है।] अङ्गुलाकर्णः।

स्वामिविशेष के साथ सम्बन्ध सूचित करने के लिए पशुओं के कान आदि में जो दात्र आदि के समान बना दिया जाता है, वही यहाँ लक्षण माना जाता है। [एक प्रकार के चिह्न वाले पशु एक विशेष व्यक्ति के होते हैं—ऐसा सूचित करने के लिये चिह्न दागे जाते थे।]

---

१. 'दत्ताकर्णः' इति पाठान्तरम्।	२-२. 'गुणशब्दोऽयमवयववचनः' इति पाठा०।

**लक्षणस्येति किम् ? शोभनकर्णः । अविष्टादीनामिति किम् ? विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ॥**

**२९७८. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ११६ ॥ (१०३७)**

**नहि, वृति, वृषि, व्यधि, रुचि, सहि, तनि—इत्येतेषु क्विप्रत्ययान्तेषूत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये । नहि—उपानत्, परीणत् । वृति—नीवृत्, उपावृत् । वृषि—प्रावृट्, उपावृट् । व्यधि—मर्माविन्, हृदयाविन्, श्वाविन् । रुचि—नीरुक्, अभिरुक् । सहि—ऋतीषट् । तनि—तरीतत् ।**

**न्यासः**

यदिह सामान्येन येन केनचिल्लक्ष्यते तल्लक्षणं गृह्येत चिह्नस्येत्येवं ब्रूयात्, लघु ह्येवं सूत्रं भवति । तस्माच्चिह्नग्रहणे कर्त्तव्ये यल्लक्षणग्रहणं कृतं तेन लक्षणविशेषोऽत्र ग्राह्यः, न तु लक्षणमात्रमित्यस्यार्थस्य प्रतिपादनं कृतमिति लक्ष्यते । तथा चोक्तम्—इङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेन वेहाचार्याणामभिप्राया लक्ष्यन्त इति । ननु च लक्षणग्रहणेन लक्षणविशेषोऽत्राभिमतः, न तु लक्षणमात्रमित्येतावन्मात्रं गम्यते, स तु विशेषो न **वृत्तिकारेणोपदर्शितः** कुतोऽवसेयः ? आचार्याणां स्वीकरणात् । **शोभनकर्ण इति ।** यद्यप्यनेनापि लक्ष्यते, न त्वेवंविधस्य लक्षणस्येह ग्रहणम् । नापि शोभनत्वं लोके लक्षणत्वेन प्रतीयत इति भवत्येतत् प्रत्युदाहरणम् ॥ ११५ ॥

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥** 'णह बन्धने' । उपनह्यत इति **उपानत्,** सम्पदादित्वात् क्विप्, 'नहो धः' इति धत्वम्, ततो जश्त्वम्, चर्त्वञ्च । परिणह्यतीति **परीणत् ।** 'उपसर्गादसमासे' इत्यादिना णत्वम् । निवर्त्तत इति **नीवृत् ।** 'अन्येभ्योऽपि दृश्यते' इति क्विप् । एवमुत्तरत्रापि क्विबेव वेदितव्यः । 'वृषु सेचने', प्रवर्षतीति **प्रावृट् ।** षकारस्य जश्त्वम्—डकारः, तस्य चर्त्वे टकारः । 'व्यध ताडने', मर्माणि विध्यतीति **मर्माविन् ।** ग्रह्यादिसूत्रेण सम्प्रसारणम् । 'रुच दीप्तौ', निरोचणं **नीरुक् ।** 'चोः कुः' इति कुत्वम् । ऋतिं सहत इति **ऋतीषट् ।** 'सहेः पृतनर्त्ताभ्याञ्च' इत्यत्र 'सहेः' इति योगविभागादनुक्तसमुच्चयार्थत्वाद्वा सकारस्य षत्वम् । परितनोतीति **परीतत् ।** अनुनासिकलोपे कृते तुक् ।

**पदमञ्जरी**

लक्षणशब्दस्य प्रसिद्धत्वात् विष्टादिपर्युदासाच्च । दात्रादिशब्द उपमानात्तदाकारे चिह्ने वर्तते ॥ ११५ ॥

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥** उपनह्यते इत्युपानत्, सम्पदादित्वात्(वा० ३११)कर्मणि क्विप्, 'नहो धः' । **परीणदिति ।** 'उपसर्गादसमासेऽपि' इति णत्वम् । **नीवृदिति ।** नीवृदादौ कर्तरि क्विप,

**भावबोधिनी**

लक्षण का—इसका क्या अर्थ है ? शोभनकर्णः । [ शोभन शब्द लक्षणवाची नहीं है । ] विष्ट आदि का नहीं—इसका क्या फल है ? विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः । [ इनमें दीर्घ नहीं होता है । ] ॥ ११५ ॥

नह्, वृत्, वृष्, , व्यध्, रुच्, सह्, तन्—ये क्विप् प्रत्ययान्त उत्तरपद रहने पर संहिता-विषय में पूर्वपद का दीर्घ होता है । क्रमशः उदा० (१) नह्—उपानत्, परीणत् । [ उपपूर्वक नह् से क्विप् प्रत्यय, सर्वापहारी लोप, "नहो धः" सूत्र से 'ह्' का ध्, चर्त्व, उपनत् पूर्वपद का दीर्घ—उपानत् । परिपूर्वक 'नह्' से क्विपादि के बाद दीर्घ तथा "उपसर्गादसमासेऽपि" सूत्र से णत्व—परीणत् । ] (२) वृत्—नीवृत्, उपावृत् । निपूर्वक वृत् से क्विप् तथा लोपादि के बाद दीर्घ-नीवृत् । उपपूर्वक वृत् से पूर्वोक्त प्रक्रिया होनेपर उपावृत् । ] (३) वृष्—प्रावृट्, उपावृट् । [ प्र पूर्वक वृष से क्विप् आदि के बाद दीर्घ, जश्त्व से ष् का ड्, चर्त्व से ड् का ट्—प्रावृट्, उपपूर्वक वृष् से—उपावृट् । ] (४) व्यध्—मर्माविन्, हृदयाविन्, श्वाविन् । [ मर्माणि विध्यति, हृदयं विध्यति, श्वानं विध्यति—इनमें क्विप्, सर्वापहारी लोप, उपपद समास । मर्म + व्यध्, "ग्रहिज्यावयिव्यधि" इत्यादि सूत्र से य् का सम्प्रसारण इ, अ का पूर्वरूप—विध्, जश्त्व, चर्त्व करने के बाद दीर्घ-मर्माविन् । इसी प्रकार अन्यों में भी करना चाहिए । ] रुच्—नीरुक्,

गमः क्वाविति (६.४.४०) गमादीनामिष्यते । ततस्तनोतेरप्यनुनासिकलोपः ।
क्वाविति किम् ? परिणहनम् ॥

**२९७९. वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ॥ ११७ ॥ (१०३८)**

**वन, गिरि—इत्येतयोरुत्तरपदयोर्यथासंख्यं कोटरादीनां किंशुलकादीनां च दीर्घो भवति संज्ञायां विषये । वने कोटरादीनाम्—कोटरावणम्, मिश्रकावणम्, सिध्रकावणम्, सारिकावणम् ।**
**गिरौ किंशुलकादीनाम्—किंशुलकागिरिः । अञ्जलागिरिः ।**
**कोटरकिंशुलकादीनामिति किम् ? असिपत्रवनम् । कृष्णगिरिः ।**
**कोटर । मिश्रक । पुरक । सिध्रक । सारिक । कोटरादिः ।**
**किंशुलक । शाल्वक । अञ्जन । भञ्जन । लोहित । कुक्कुट । किंशुलकादिः ॥**

**न्यासः**

केन पुनरत्रानुनासिकलोपः ? इत्याह **गमः क्वावित्यादि** । गतिकारकयोरेवेष्यत इति । तदर्थम् 'विभाषा पुरुष' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञेया ॥ ११६ ॥

**वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्** ॥ **कोटरावणमिति** । षष्ठीसमासः । 'वनं पुरगा' इत्यादिना णत्वम् ॥ ११७ ॥

**पदमञ्जरी**

व्यधेर्ग्रहिज्यादिसम्प्रसारणम् । **'ऋतीषाहमिति** । 'पूर्वपदात्' इति षत्वम् । **परीतदिति** । अनुदात्तेति लोपस्य विङ्ज़्झलिनिमित्तकत्वात् कौ च तदभावाद् गमादीनामितीत्यनुनासिकलोपे तुक् ॥ ११६ ॥

**वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्** ॥ **कोटरावणमिति** । 'वनं पुरगा' इति णत्वम् ॥ ११७ ॥

**भावबोधिनी**

अभीरुक् । [ नि पूर्वक रुच् से क्विपादि के बाद दीर्घ, "चोः कुः" सूत्र से कुत्व—नीरुक् । अभिपूर्वक से—अभीरुक् । ] (६) सह—ऋतीषट् । [ ऋतिं सहते—इस अर्थ में क्विपादि के बाद स् का ष, दीर्घ-ऋतीषह्, ढत्व, जश्त्व चर्त्वं—ऋतीषट् । (७) तन्—परीतत् । [ परिपूर्वक तन् से क्विपादि के बाद अनुनासिक 'न्' का लोप हो जाने पर 'परीत' इसमें तुक् = त् आगम होता है—परीतत् ] * गम् के अनुनासिक का लोप क्वि परे होता है" इससे गमादि के अनुनासिक का लोप इष्ट है । इसी से 'तन्' के भी अनुनासिक का लोप हो जाता है ।

क्वि परे—इसका क्या फल है ? परिणहनम् । [ यहाँ ल्युट् = अन परे दीर्घ नहीं होता है । ] ॥ ११६ ॥

वन तथा गिरि इन शब्दों के उत्तरपद रहनेपर क्रमशः कोटरादि तथा किंशुलकादि का दीर्घ होता है संज्ञा-विषय में । वन परे रहते कोटरादि के दीर्घ के उदा०—कोटरावणम् । मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् । संज्ञाविषय में समास के बाद दीर्घ होनेपर 'कोटरावनम्' इसमें "वनं पुरगामिश्रका" आदि सूत्र से णत्व होनेपर पूर्ववर्त्ती रूप बनते हैं । ]

गिरि परे किंशुलकादि के दीर्घ के उदा०—किंशुलकागिरिः । अञ्जलागिरि [ समास के बाद दीर्घ हो जाता है । ] कोटरादि-किंशुलकादि का—इसका क्या फल है ? असिपत्रवनम् । कृष्णगिरिः । [इनमें दीर्घ नहीं होता है ।]
कोटर । मिश्रक । पुरक । सिध्रक । सारिक । ये कोटरादि हैं ।

किंशुलक । शाल्वक । अञ्जन । भञ्जन । लोहित । कुक्कुट । ये किंशुलकादि हैं ॥ ११७ ॥

---

१. ऋषीषाड्—इति काशिकायाम् ।

**२९८०. वले ॥ ११८ ॥ (१०४०)**

**वले परतः पूर्वस्य दीर्घो भवति । आसुतीवलः । कृषीवलः । दन्तावलः । 'रजःकृष्यासुतिपरिषदो वलच्' (५.२.११२) इति वलच्प्रत्ययो गृह्यते, न प्रातिपदिकम् ।**

**अनुत्साहभ्रातृपितॄणामित्येव[1] । उत्साहवलः । भ्रातृवलः ॥ पितृवलः[1] ॥**

**२९८१. मतौ बह्वचोऽनजिरादीनाम् ॥ ११९ ॥ (१०४१)**

**मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति संज्ञायां विषये । उदुम्बरावती । मशकावती । वीरणावती । पुष्करावती । अमरावती । 'नद्यां मतुप्' (४.२.८५) इति मतुप्प्रत्ययः । 'संज्ञायाम्' (८.२.११) इति मतोर्वत्वम् ।**

**बह्वच इति किम् ? व्रीहिमती । अनजिरादीनामिति किम् ? अजिरवती । खदिरवती । हंसकारण्डववती । चक्रवाकवती ।**

**'संज्ञायाम्' इत्येव—वलयवती ॥**

**न्यासः**

**वले ॥ वलच्प्रत्ययो गृह्यते, न प्रातिपदिकमिति ।** एतच्च वक्ष्यमाणस्येह बहुलग्रहणस्य सिंहावलोकितन्यायेनोपस्थानाल्लभ्यत इत्येके । अनन्तरं वक्ष्यमाणेन मतुपा प्रत्ययेन साहचर्याच्चेत्यपरे ॥ ११८ ॥

**मतौ बह्वचोऽनजिरादीनाम् ॥ व्रीहिमतीत्यादौ पूर्ववन्मतुप् ।**

**वलयवतीत्यत्र तु**—'तदस्यास्त्यस्मिन्निति मतुप्' ॥ ११९ ॥

**पदमञ्जरी**

**वले ॥ वलच्प्रत्ययो गृह्यत इति ।** वक्ष्यमाणेन मतुपा साहचर्यात् । तेन 'वल संवरणे' (धा० पा० ४९१) इत्यतः पचाद्यचि यत्प्रातिपदिकं तत्र दीर्घो न भवति ।

अण इत्येव—**भर्तृवलः** ॥ ११८ ॥

**मतौ बह्वचोऽनजिरादीनाम् ॥ संज्ञायामिति मतोर्वत्वमिति ।** यद्यप्युदाहृतेषु 'मादुपधायाः' इति वत्वं सिद्धम्, तथापि संज्ञायामत्रापि परत्वादनेनैव वत्वं युक्तम् । प्रत्युदाहरणे च **व्रीहिमतीत्यत्रापि** नानेन वत्वमित्येत-

**भावबोधिनी**

'बल' परे रहते पूर्ववर्ती का दीर्घ होता है । उदा०—आसुतीबलः । कृषीवलः । दन्तावलः । [ इनमें दीर्घ हो जाता है । ] ''रजःकृष्यासुतिपरिषदो वलच्'' सूत्र से होने वाला वलच् प्रत्यय लिया जाता है, अच् प्रत्ययान्त 'बल' प्रातिपदिक नहीं लिया जाता है । ]

''उत्साह, भ्रातृ, पितृ को छोड़कर ही दीर्घ होता है । अतः—उत्साहवलः । भ्रातृवलः । पितृवलः । [ इनमें दीर्घ नहीं होता है । यह वलच् प्रत्यय मत्वर्थ में होता है । ] ॥ ११८ ॥

मतुप् प्रत्यय परे रहते अजिरादि को छोड़कर बहुत अचों वाले का संज्ञाविषय में दीर्घ होता है । उदा०—उदुम्बरावती । मशकावती । वीरणावती । पुष्करावती । अमरावती । इनमें उदुम्बराणि सन्ति अस्याम् इस अर्थ में मतुप् होने पर प्रस्तुत सूत्र से दीर्घ होता है—] ''नद्यां मतुप्'' सूत्र से मतुप् होता है और ''संज्ञायाम्'' सूत्र से म का 'व' होता है ।

बहुत अचों वाले का—इसका क्या फल है ? व्रीहिमती । [ व्रीहि में दो ही अच् होने से दीर्घ नहीं होता है । ]

अजिरादि को छोड़कर—इसका क्या फल है ? अजिरवती । खदिरवती । पुलिनवती । हंसकारण्डववती । चक्रवाकवती ।

'संज्ञा में' ही—[ दीर्घ होता है ] 'वलयवती । [ इसमें नहीं होता है क्योंकि संज्ञा नहीं है । ] ॥ ११९ ॥

---

१-१. पाठोऽयमेकस्मिन्पुस्तके नास्ति ।

**२९८२. शरादीनां च ॥ १२० ॥ (१०४२)**

**शरादीनां च मतौ दीर्घो भवति संज्ञायां विषये । शरावती । वंशावती ।**

**शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । शरादिः ।**

**'संज्ञायाम्' (८.२.११) इति मतोर्वत्वम् । यवादित्वाद् व्रीह्यादिभ्यो न भवति ॥**

**२९८३. इको वहेऽपीलोः ॥ १२१ ॥ (१०४३)**

**इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वह उत्तरपदे दीर्घो भवति । ऋषीवहम् । कपीवहम् । मुनीवहम् ।**

**इक इति किम् ? पिण्डवहम् । अपीलोरिति किम् ? पीलुवहम् ।**

*** अपील्वादीनामिति वक्तव्यम् * [म० भा०] इह मा भूत्—दारुवहम् ॥**

**२९८४. उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ १२२ ॥ (१०४४)**

**उपसर्गस्य घञन्ते उत्तरपदेऽमनुष्येऽभिधेये बहुलं दीर्घो भवति । वीक्लेदः । वीमार्गः । अपामार्गः । न च भवति—प्रसेवः, प्रसारः ॥**

**न्यास**

**शरादीनाञ्च ॥** अबह्वजर्थोऽयमारम्भः । **शरावतीति** । 'नद्यां मतुप्' इति मतुप् ॥ १२० ॥

**इको वहेऽपीलोः ॥ ऋषीवह** इति । षष्ठीसमासः । वहशब्दः पचाद्यजन्तः ।

**अपील्वादीनामित्यादि** । यदेतदिको दीर्घविधानं तत् पील्वादीनां न भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—इहापि तदेव बहुलग्रहणं पूर्ववदुपतिष्ठते, तेन पीलुशब्दादन्येषामपि केषाञ्चिद् दीर्घत्वं न भविष्यतीति ॥ १२१ ॥

**उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥** उपसर्गात् केवलं घञ्प्रत्ययो न सम्भवति, अतो **घञन्त उत्तरपदे**

**पदमञ्जरी**

दुपन्यस्तम् । अजिरादिष्वबह्वचां पाठ उपसमस्तार्थः ॥ ११९ ॥ १२० ॥

**इको वहेऽपीलोः ॥ ऋषीवहादयः** षष्ठीसमासाः । वहशब्दः पचाद्यजन्तः ॥ १२१ ॥

**उपसर्गस्य घञ्यनुष्ये बहुलम् ॥** उपसर्गाद् घञोऽविधानादुत्तरपदाधिकारेऽप्यत्र तदन्तविधिर्विज्ञायत इत्याह—**घञन्त उत्तरपदे इति । वीमार्ग इति** । मृजेर्वृद्धिः ।

**भावबोधिनी**

मतुप् परे रहते संज्ञाविषय में शर आदि का दीर्घ होता है । उदा०—शरावती । वंशावती । [ ये किसी स्थान की संज्ञायें हैं । ] शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । ये शरादि हैं ।

"संज्ञायाम्" इस सूत्र से म का व होता है । यवादिगणीय होने से व्रीहि आदि से परे म का व नहीं होता है । [ व्रीहिमती ही होता है । ] ॥ १२० ॥

पीलु शब्द को छोड़कर इगन्त पूर्वपद का दीर्घ होता है, उत्तरपद परे रहते । उदा०—ऋषीवहम् । कपीवहम् । मुनीवहम् । [ इनमें पचाद्यजन्त 'वह' के साथ षष्ठीसमास है । न्यासकार ने—ऋषीवहः आदि प्रथमान्त उदाहरण माने हैं जो उचित है । काशिका के प्रकाशित उदा०—ऊपर दिये गये हैं । ]

इक का दीर्घ होता है—इसका क्या फल है ? पिण्डवहम् । [यहाँ अकारान्त पूर्वपद् का दीर्घ नहीं होता है ।]

पीलु को छोड़कर—इसका क्या फल है ? पीलुवहम् । * पीलु आदि को छोड़कर—ऐसा कहना चाहिए ।* जिससे यहाँ न होने लगे—दारुवहम् ॥ १२१ ॥

घञन्त उत्तरपद रहनेपर मनुष्यभिन्न अर्थ रहने पर उपसर्ग का बहुलरूप से दीर्घ होता है । उदा०—वीक्लेदः ।

**❀ सादकारयोः कृत्रिमे दीर्घो भवति ❀ (का० वा० १) । प्रासादः । प्राकारः । कृत्रिम इति किम् ? प्रसादः । प्रकारः ।**

**❀ [1]वेशादिषु विभाषा दीर्घो भवति ❀ [म० भा०] । प्रतिवेशः, प्रतीवेशः । प्रतिरोधः, प्रतीरोधः । अमनुष्य इति किम् ? निषादो मनुष्यः ॥**

**२९८५. इकः काशे ॥ १२३ ॥ (१०४५)**

**इगन्तस्योपसर्गस्य काशशब्द उत्तरपदे दीर्घो भवति । नीकाशः । वीकाशः । अनूकाशः । पचाद्यजन्तोऽयं काशशब्दः, न तु घञन्तः ।**

**न्यासः**

कार्यं विज्ञायते इत्याह—**घञन्त उत्तरपद इत्यादि । वीक्लेद इति** । 'क्लिद आर्द्रीभावे', 'अकर्त्तरि च कारके' इत्यादिना घञ् । **वीमार्ग इति** । 'मृजू शुद्धौ', 'मृजेर्वृद्धिः', 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । **प्रसेव इति** । 'षिवु तन्तुसन्ताने' ।

**कृत्रिममिति** । करणेन निर्वृत्तं कृत्रिमम् । पुरुषव्यापारादिभिर्निर्वृत्तमित्यर्थः ।

**निषाद इति** । 'षद्लृ विशरणगत्यवसादनेषु', निषीदत्यस्मिन् पापमिति निषादः । 'हलश्च' इति घञ् ॥ १२२ ॥

**इकः काशे ॥ नीकाश इति** । 'काशृ दीप्तौ' । **पचाद्यजन्तोऽयं काशशब्दः, न तु घञन्त इति** । तत्र पूर्वेणैव सिद्धमित्यभिप्रायः । 'पूर्वेणैव सिद्धे नियमार्थमेतत्—इक एव काशे नान्यस्य' इति क्वचिद् ग्रन्थः, एष तु नोपपद्यते; घञि पूर्वेण दीर्घविधानात्, एतस्य च काशशब्दस्य पचाद्यन्तत्वात् । अथ बहुलग्रहणात् पचाद्यजन्तेऽपि

**पदमञ्जरी**

कृत्रिमम्=करणेन निर्वृत्तम् । पुरुषव्यापाराभिनिर्वृत्तमित्यर्थः ।

**[निषाद इति]** निषीदत्यस्मिन्पापमिति **निषादः**, 'हलश्च' इति घञ् ॥ १२२ ॥

**इकः काशे ॥ पचाद्यच्प्रत्य[2]यान्तोऽयं काशशब्द इति** । न घञन्तः, तत्र पूर्वेणैव सिद्धम् । यथा

**भावबोधिनी**

वीमार्गः । अपामार्गः । [ वि उपसर्गपूर्वक क्लिद् से घञ् है । इसी प्रकार 'वि' तथा 'अप' पूर्वक मृज् धातु से घञ् है । अतः उपसर्गों का दीर्घ होता है । ] नहीं भी होता है—प्रसेवः, प्रसारः ।

❀ साद तथा कार शब्द परे रहते कृत्रिम=करण से निर्वृत्त अर्थ में दीर्घ होता है । ❀ उदा०—प्रासादः । प्राकारः । [ इनमें—बनाया गया—अर्थ की प्रतीति के कारण उपसर्ग का दीर्घ हो जाता है । ] कृत्रिम—अर्थात् किसी के द्वारा बनाया गया इस अर्थ में—इसका क्या फल है ? प्रसादः । प्रकारः । [ यहाँ सामान्य भावार्थ में दीर्घ नहीं होता है । ]

❀ वेश आदि परे रहते विकल्प से दीर्घ होता है ।❀ उदा०—प्रतिवेशः, प्रतीवेशः । प्रतिरोधः, प्रतीरोधः । [ इस वार्त्तिक से लक्ष्यानुसार दीर्घ कर लेना चाहिए । ]

मनुष्य अर्थ न होनेपर—इसका क्या फल है ? निषादः मनुष्यः । [ निषीदन्ति पापानि अस्मिन्—इस अधिकरण अर्थ में घञ् होनेपर रूप बना है । यह मनुष्य अर्थवाचक है । अतः इसका उपसर्ग 'नि' दीर्घ नहीं होता है । ] ॥ १२२ ॥

काश शब्द उत्तर पद रहने पर इगन्त उपसर्ग का उत्तरपद परे रहते दीर्घ होता है । उदा०—नीकाशः । वीकाशः । अनूकाशः । यह 'काश' शब्द पचाद्यन्त है, घञन्त नहीं है । [ क्योंकि घञन्त में तो पूर्ववर्ती सूत्र से ही दीर्घ सिद्ध हो जाता है । ]

---

१. भाष्ये तु 'प्रतिवेशादीनां विभाषा' इति वार्तिकस्वरूपम् । २. काशिकायां 'प्रत्यय' इदं नास्ति ।

**इक इति किम् ? प्रकाशः ॥**

## २९८६. दस्ति ॥ १२४ ॥ (३०७९)

**'दा' इत्येतस्य यस्तकारादिरादेशस्तस्मिन्परत इगन्तस्योपसर्गस्य दीर्घो भवति । नीत्तम् । वीत्तम् । परीत्तम् । 'अच उपसर्गात्तः' (७.४.४७) इत्यन्तस्य यद्यपि तकारः क्रियते, तथापि चर्त्वस्याश्रयात्सिद्धत्वमिति तकारादिर्भवति । इक इत्येव—प्रत्तम्, अवत्तम् ।**

**न्यासः**

पूर्वेणैव सिद्धमित्युच्यते, तथा च तत एव बहुलग्रहणादिकोऽन्यस्य न भविष्यतीति न कर्त्तव्यमेवेदं सूत्रम् । क्रियमाणञ्च पूर्वस्यैव प्रपञ्चार्थं द्रष्टव्यम् ॥ १२३ ॥

**दस्ति ॥ 'दा' इत्येतस्य यस्तकारादिरादेश इति ।** एतेन स्थान्यादेशसम्बन्धे 'दः' इत्येषा षष्ठीति विज्ञायते । **वीत्तमिति ।** ददातेर्निष्ठायां रूपम् । ननु चात्र तकारादिरादेशः परो न सम्भवत्येव, तथा हि—यस्तावद् 'अच उपसर्गात्तः' इति तकारः सः 'अलोऽन्त्यस्य' इति वचनादन्त्यस्य क्रियते, स च वर्णान्तरो व्यवधानादनन्तरस्तकारः परो न सम्भवति; योऽपि 'खरि च' इति दकारस्य तकारो विधीयते, सोऽपि न सम्भवत्येव; दीर्घत्वे कर्त्तव्ये चर्त्वस्यासिद्धत्वेनाविद्यमानत्वादित्यत आह—**अच उपसर्गात्त इत्यादि ।** आश्रयणमाश्रयः = अङ्गीकरणम् । 'दा' इत्यत्र यस्तकारादिरादेशः, तस्मिन् परत इगन्तस्योपसर्गस्य दीर्घो भवतीति ब्रुवता चर्त्वमाश्रितम्, न ह्यन्यथा तकारादिरादेशः परः सम्भवति । तस्मात् चर्त्वस्याश्रयणात् सिद्धम् । अतस्तकारादिरादेशो भवतीति । **नितीर्णमिति ।** 'तॄ प्लवनतरणयोः', 'ॠत इद् धातोः' इतीत्वम्, 'हलि च' इति दीर्घः । 'अट्कुप्वाङ्' इत्यादिना णत्वम् । **सुदत्तमिति ।** 'दो दद् घोः' इत्यत्र—

**पदमञ्जरी**

निगमे—प्राकाशावध्वर्यवे ददातीति । 'इको वहेऽपीलोः' इत्यत्र पूर्वपदमात्रस्येष्यते, इह तूपसर्गस्य; तेन द्विरिक इत्युक्तम् ॥ १२३ ॥

**दस्ति ॥ दा इत्येतस्येत्यादि ।** अत्र तकारादिशब्दः कर्मधारयः । **तस्मिन्परत इति ।** 'यस्मिन्विधिस्तदादौ' (व्या० प० १२७) इति वचनात्तदादावुत्तरपदे दीर्घ इत्येषोऽर्थो विवक्षितः । **नीत्तमिति ।** ननु चात्र तकार आदिर्न भवति, यस्तावद् 'अच उपसर्गात्तः' इति तकारः स 'अलोऽन्त्यस्य' इत्यन्तस्य क्रियते, योऽपि दकारस्य 'खरि च' इति तकारः, सोऽप्यस्मिन्दीर्घे कर्तव्येऽसिद्धः ? अत आह—**अच उपसर्गात्त इत्यादि ।** उच्यते चेदं तकारादावुत्तरपद इति । यदि चर्त्वमसिद्धं स्याद्, दीर्घविधिरनर्थकः स्यात्, अत आश्रयात्सिद्धं चर्त्वम् । तेन तकार आदिरुत्तरपदस्य सम्भवतीत्यर्थः । **यद्यपीति ।** अनेनैतद्दर्शयति—द्वितकारपक्षस्याश्रयणे न किञ्चिद्वक्तव्यमिति । **सुदत्तमिति ॥**

**भावबोधिनी**

इगन्त का—इसका क्या फल है ? प्रकाशः । [ यहाँ दीर्घ नहीं होता है । ] ॥ १२३ ॥

'दा' इसके स्थान पर जो तकारादि आदेश होता है उसके परे रहते इगन्त उपसर्ग का दीर्घ होता है । उदा०—नीत्तम् । वीत्तम् । परीत्तम् । [ नि उपसर्गपूर्वक दा + क्त = त, आ का त, द् का चर्त्व—त्त ] "अच उपसर्गात्तः" इस सूत्र से अन्त्य आ का त् किया जाता है, तथापि चर्त्व आश्रय के सिद्ध होने से सिद्ध रहता है, इसलिए तकारादि ही रहता है । [ नि दा + त, आ का त् नि द् त् त—इसमें "खरि च" से द् का चर्त्व त् होता है, वह दीर्घ करने पर असिद्ध हो जाता हैं । अतः तकारादि आदेश नहीं मिल सकता ? इस शंका का समाधान यह है कि चर्त्व असिद्ध नहीं होता है । अतः उपसर्ग का दीर्घ होता है । ]

❀ **सादकारयोः कृत्रिमे दीर्घो भवति** ❀ **(का० वा० १) । प्रासादः । प्राकारः । कृत्रिम इति किम् ? प्रसादः । प्रकारः ।**

❀ **[1]वेशादिषु विभाषा दीर्घो भवति** ❀ **[म० भा०] । प्रतिवेशः, प्रतीवेशः । प्रतिरोधः, प्रतीरोधः । अमनुष्य इति किम् ? निषादो मनुष्यः ॥**

## २९८५. इकः काशे ॥ १२३ ॥ (१०४५)

**इगन्तस्योपसर्गस्य काशशब्द उत्तरपदे दीर्घो भवति । नीकाशः । वीकाशः । अनूकाशः । पचाद्यजन्तोऽयं काशशब्दः, न तु घञन्तः ।**

**न्यासः**

कार्यं विज्ञायते इत्याह—**घञन्त उत्तरपद इत्यादि । वीक्लेद इति** । 'क्लिद आर्द्रीभावे', 'अकर्त्तरि च कारके' इत्यादिना घञ् । **वीमार्ग इति** । 'मृजू शुद्धौ', 'मृजेर्वृद्धिः', 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । **प्रसेव इति** । 'षिवु तन्तुसन्ताने' ।

**कृत्रिममिति** । करणेन निर्वृत्तं कृत्रिमम् । पुरुषव्यापारादिभिर्निर्वृत्तमित्यर्थः ।

**निषाद इति** । 'षद्लृ विशरणगत्यवसादनेषु', निषीदत्यस्मिन् पापमिति निषादः । 'हलश्च' इति घञ् ॥ १२२ ॥

**इकः काशे ॥ नीकाश इति** । 'काशृ दीप्तौ' । **पचाद्यजन्तोऽयं काशशब्दः, न तु घञन्त इति** । तत्र पूर्वेणैव सिद्धमित्यभिप्रायः । 'पूर्वेणैव सिद्धे नियमार्थमेतत्—इक एव काशे नान्यस्य' इति क्वचिद् ग्रन्थः, एष तु नोपपद्यते; घञि पूर्वेण दीर्घविधानात्, एतस्य च काशशब्दस्य पचाद्यन्तत्वात् । अथ बहुलग्रहणात् पचाद्यजन्तेऽपि

**पदमञ्जरी**

कृत्रिमम् = करणेन निर्वृत्तम् । पुरुषव्यापाराभिनिर्वृत्तमित्यर्थः ।

**[निषाद इति]** निषीदत्यस्मिन्पापमिति **निषादः**, 'हलश्च' इति घञ् ॥ १२२ ॥

**इकः काशे ॥ पचाद्यच्प्रत्य[2]यान्तोऽयं काशशब्द इति** । न घञन्तः, तत्र पूर्वेणैव सिद्धम् । यथा

**भावबोधिनी**

वीमार्गः । अपामार्गः । [ वि उपसर्गपूर्वक क्लिद् से घञ् है । इसी प्रकार 'वि' तथा 'अप' पूर्वक मृज् धातु से घञ् है । अतः उपसर्गों का दीर्घ होता है । ] नहीं भी होता है—प्रसेवः, प्रसारः ।

❀ साद तथा कार शब्द परे रहते कृत्रिम = करण से निर्वृत्त अर्थ में दीर्घ होता है । ❀ उदा०—प्रासादः । प्राकारः । [ इनमें—बनाया गया—अर्थ की प्रतीति के कारण उपसर्ग का दीर्घ हो जाता है । ] कृत्रिम—अर्थात् किसी के द्वारा बनाया गया इस अर्थ में—इसका क्या फल है ? प्रसादः । प्रकारः । [ यहाँ सामान्य भावार्थ में दीर्घ नहीं होता है । ]

❀ वेश आदि परे रहते विकल्प से दीर्घ होता है ।❀ उदा०—प्रतिवेशः, प्रतीवेशः । प्रतिरोधः, प्रतीरोधः । [ इस वार्तिक से लक्ष्यानुसार दीर्घ कर लेना चाहिए । ]

मनुष्य अर्थ न होनेपर—इसका क्या फल है ? निषादः मनुष्यः । [ निषीदन्ति पापानि अस्मिन्—इस अधिकरण अर्थ में घञ् होनेपर रूप बना है । यह मनुष्य अर्थवाचक है । अतः इसका उपसर्ग 'नि' दीर्घ नहीं होता है । ] ॥ १२२ ॥

काश शब्द उत्तर पद रहने पर इगन्त उपसर्ग का उत्तरपद परे रहते दीर्घ होता है । उदा०—नीकाशः । वीकाशः । अनूकाशः । यह 'काश' शब्द पचाद्यन्त है, घञन्त नहीं है । [ क्योंकि घञन्त में तो पूर्ववर्ती सूत्र से ही दीर्घ सिद्ध हो जाता है । ]

---

१. भाष्ये तु 'प्रतिवेशादीनां विभाषा' इति वार्तिकस्वरूपम् । २. काशिकायां 'प्रत्यय' इदं नास्ति ।

**इक इति किम् ? प्रकाशः ॥**

## २९८६. दस्ति ॥ १२४ ॥ (३०७९)

**'दा' इत्येतस्य यस्तकारादिरादेशस्तस्मिन्परत इगन्तस्योपसर्गस्य दीर्घो भवति । नीत्तम् । वीत्तम् । परीत्तम् । 'अच उपसर्गात्तः' (७.४.४७) इत्यन्तस्य यद्यपि तकारः क्रियते, तथापि चर्त्वस्याश्रयात्सिद्धत्वमिति तकारादिर्भवति । इक इत्येव—प्रत्तम्, अवत्तम् ।**

### न्यासः

पूर्वेणैव सिद्धमित्युच्यते, तथा च तत एव बहुलग्रहणादिकोऽन्यस्य न भविष्यतीति न कर्त्तव्यमेवेदं सूत्रम् । क्रियमाणञ्च पूर्वस्यैव प्रपञ्चार्थं द्रष्टव्यम् ॥ १२३ ॥

**दस्ति ॥ 'दा' इत्येतस्य यस्तकारादिरादेश इति ।** एतेन स्थान्यादेशसम्बन्धे 'दः' इत्येषा षष्ठीति विज्ञायते । **वीत्तमिति ।** ददातेर्निष्ठायां रूपम् । ननु चात्र तकारादिरादेशः परो न सम्भवत्येव, तथा हि—यस्तावद् 'अच उपसर्गात्तः' इति तकारः सः 'अलोऽन्त्यस्य' इति वचनादन्त्यस्य क्रियते, स च वर्णान्तरो व्यवधानादनन्तरस्तकारः परो न सम्भवति; योऽपि 'खरि च' इति दकारस्य तकारो विधीयते, सोऽपि न सम्भवत्येव; दीर्घत्वे कर्त्तव्ये चर्त्वस्यासिद्धत्वेनाविद्यमानत्वादित्यत आह—**अच उपसर्गात्त इत्यादि ।** आश्रयणमाश्रयः = अङ्गीकरणम् । 'दा' इत्यत्र यस्तकारादिरादेशः, तस्मिन् परत इगन्तस्योपसर्गस्य दीर्घो भवतीति ब्रुवता चर्त्वमाश्रितम्, न ह्यन्यथा तकारादिरादेशः परः सम्भवति । तस्मात् चर्त्वस्याश्रयणात् सिद्धम् । अतस्तकारादिरादेशो भवतीति । **नितीर्णमिति ।** 'तॄ प्लवनतरणयोः', 'ॠत इद् धातोः' इतीत्वम्, 'हलि च' इति दीर्घः । 'अट्कुप्वाङ्' इत्यादिना णत्वम् । **सुदत्तमिति ।** 'दो दद् घोः' इत्यत्र—

### पदमञ्जरी

निगमे—प्राकाशावध्वर्यवे ददातीति । 'इको वहेऽपीलोः' इत्यत्र पूर्वपदमात्रस्येष्यते, इह तूपसर्गस्य; तेन द्विरिक इत्युक्तम् ॥ १२३ ॥

**दस्ति ॥ दा इत्येतस्येत्यादि ।** अत्र तकारादिशब्दः कर्मधारयः । **तस्मिन्परत इति ।** 'यस्मिन्विधिस्तदादौ' (व्या० प० १२७) इति वचनात्तदादावुत्तरपदे दीर्घ इत्येषोऽर्थो विवक्षितः । **नीत्तमिति ।** ननु चात्र तकार आदिर्न भवति, यस्तावद् 'अच उपसर्गात्तः' इति तकारः स 'अलोऽन्त्यस्य' इत्यन्तस्य क्रियते, योऽपि दकारस्य 'खरि च' इति तकारः, सोऽप्यस्मिन्दीर्घे कर्तव्येऽसिद्धः ? अत आह—**अच उपसर्गात्त इत्यादि ।** उच्यते चेदं तकारादावुत्तरपद इति । यदि चर्त्वमसिद्धं स्याद्, दीर्घविधिरनर्थकः स्यात्, अत आश्रयात्सिद्धं चर्त्वम् । तेन तकार आदिरुत्तरपदस्य सम्भवतीत्यर्थः । **यद्यपीति ।** अनेनैतद्दर्शयति—द्वितकारपक्षस्याश्रयणे न किञ्चिद्वक्तव्यमिति । **सुदत्तमिति ॥**

### भावबोधिनी

इगन्त का—इसका क्या फल है ? प्रकाशः । [ यहाँ दीर्घ नहीं होता है । ] ॥ १२३ ॥

'दा' इसके स्थान पर जो तकारादि आदेश होता है उसके परे रहते इगन्त उपसर्ग का दीर्घ होता है । उदा०—नीत्तम् । वीत्तम् । परीत्तम् । [ नि उपसर्गपूर्वक दा + क्त = त, आ का त, द् का चर्त्व—त्त ] "अच उपसर्गात्तः" इस सूत्र से अन्त्य आ का त् किया जाता है, तथापि चर्त्व आश्रय के सिद्ध होने से सिद्ध रहता है, इसलिए तकारादि ही रहता है । [ नि दा + त, आ का त् नि द् त् त—इसमें "खरि च" से द् का चर्त्व त् होता है, वह दीर्घ करने पर असिद्ध हो जाता है । अतः तकारादि आदेश नहीं मिल सकता ? इस शंका का समाधान यह है कि चर्त्व असिद्ध नहीं होता है । अतः उपसर्ग का दीर्घ होता है । ]

**द इति किम् ? वितीर्णम् । नितीर्णम् । तीति किम् ? सुदत्तम् ॥**

**२९८७. अष्टनः संज्ञायाम् ॥ १२५ ॥ (१०४६)**

**अष्टन्—इत्येतस्योत्तरपदे संज्ञायां दीर्घो भवति । अष्टावक्रः । अष्टाबन्धुरः । अष्टापदम् । संज्ञायामिति किम् ? अष्टपुत्रः । अष्टभार्यः ॥**

**२९८८. छन्दसि च ॥ १२६ ॥ (३५३२)**

**छन्दसि विषयेऽष्टन उत्तरपदे दीर्घो भवति । 'आग्नेयमष्टाकपालं निर्वपेत् चरुम् ।' (मै०सं० १.२.७) अष्टाहिरण्या दक्षिणा । अष्टापदी देवता सुमती । अष्टौ पादावस्या इति बहुव्रीहौ पादस्य लोपे कृते 'पादोऽन्यतरस्याम्' (४.१.८) इति ङीप् ।**

**न्यासः**

'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते' ॥

इत्यनयेष्टया ददातेर्ददादेशः ॥ १२४ ॥

**अष्टनः संज्ञायाम् ॥ अष्टावक्र इति ।** अष्टौ वक्राण्यस्येति बहुव्रीहिः ॥ १२५ ॥

**छन्दसि च ॥ अष्टाकपालमिति ।** अष्टसु कपालेषु संस्कृतमिति 'संस्कृतम्' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक् । **अष्टाहिरण्येति ।** बहुव्रीहिः । **पादस्य लोपे कृत इति ।** 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यनेन ।

**पदमञ्जरी**

'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तं चेति चेष्यते' ॥

इत्यनयेष्ट्याऽत्र ददादेशः ॥ १२४ ॥ १२५ ॥

**छन्दसि च ॥ अष्टाकपालमिति ।** 'आन्महतः' इत्यत्राष्टनः कपाले हविषीति अष्टागवं शकटमिति च

**भावबोधिनी**

इगन्त का ही दीर्घ होता है—प्रत्तम् । अवत्तम् । [ इनमें दीर्घ नहीं होता है । ] 'द्' का—इसका क्या फल है ? वितीर्णम् । निर्णीतम् । [ दा का तकार नहीं है । ] तकार परे रहते—इसका क्या फल है ? सुदत्तम् । [ यहाँ नहीं होता है । ] ॥ १२४ ॥

अष्टन् इसका उत्तरपद परे रहते दीर्घ होता है संज्ञाविषय में । उदा० अष्टावक्रः । अष्टाबन्धुरः । अष्टापदम् । [ अष्टौ वक्राणि अस्य—इस अर्थ में समास के बाद दीर्घ हो जाता है । ]

संज्ञा में—इसका क्या फल है ? अष्टपुत्रः । अष्टभार्यः । [ यहाँ संज्ञा की प्रतीति नहीं है । अतः दीर्घ नहीं होता है । ] ॥ १२५ ॥

वेदविषय में उत्तरपद परे रहते अष्टन् का दीर्घ होता है । उदा० "आग्नेयम् अष्टाकपालं निर्वपेत्" । (मै० सं० १।२।७) अष्टाहिरण्या दक्षिणा । अष्टापदी देवता सुमती ।" [अष्टसु कपालेषु संस्कृतम्—इस अर्थ में अण् और उसका लुक् होने के बाद नलोप, दीर्घ होता है । ] अष्टौ पादौ अस्य इस बहुव्रीहि में पाद का लोपकर देने पर "पादोऽन्यतरस्याम्" इस सूत्र से ङीप् है ।

❀ गवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वक्तव्यम् ❀ [ ? ] अष्टागवं शकटम् ॥

**२९८९. चितेः कपि ॥ १२७ ॥ (१०४७)**

**चितिशब्दस्य कपि परतो दीर्घो भवति । एकचितीकः । द्विचितीकः । त्रिचितीकः ॥**

**२९९०. विश्वस्य वसुराटोः ॥ १२८ ॥ (३७९)**

**विश्वशब्दस्य वसु, राट्—इत्येतयोरुत्तरपदयोर्दीर्घ आदेशो भवति । विश्वावसुः । विश्वाराट् । राडिति विकारनिर्देशः—यत्रास्यैतद्रूपं तत्रैव यथा स्यात् । इह न भवति—विश्वराजौ । विश्वराजः ॥**

**२९९१. नरे संज्ञायाम् ॥ १२९ ॥ (१०४८)**

**नरशब्द उत्तरपदे संज्ञायां विषये विश्वस्य दीर्घो भवति । विश्वानरो नाम यस्य वैश्वानरिः पुत्रः । संज्ञायामिति किम् ? विश्वे नरा यस्य स विश्वनरः ॥**

### न्यासः

**गवि च युक्त इत्यादि । वक्तव्यमिति ।** अस्य व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः । तेन गवि च युक्ते भाषायामप्यष्टनो दीर्घो भवति ॥ १२६ ॥

**चितेः कपि ॥ एकचितीक इति ।** एका चितिरस्येति बहुव्रीहिः, ततः 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः, 'शेषाद्विभाषा' इति कप् ॥ १२७ ॥

**विश्वस्य वसुराटोः ॥ विश्वावसुरिति ।** विश्वं वसु यस्येति बहुव्रीहिः । **विश्वाराडिति ।** विश्वस्मिन् राजत इति 'सत्सूद्विष' इत्यादिना क्विप्, व्रश्चादिसूत्रेण षत्वम्, तस्य 'झलां जशोऽन्ते' इति जश्त्वम्—डकारः, डकारस्यापि चर्त्वम्—टकारः ।

**यत्रास्यैतद्रूपमिति ।** क्व पुनरस्यैतद्रूपम् ? यत्र पदसंज्ञा; पदाधिकारे षकारादीनां विधानात् । **विश्वराजौ, विश्वराज इति ।** अत्र पदसंज्ञा नास्ति; 'असर्वनामस्थाने' इति प्रतिषेधात् ॥ १२८ ॥

**नरे संज्ञायाम् ॥** १२९ ॥

### पदमञ्जरी

व्युत्पादितम्, इदं तु व्युत्पत्तिविकल्पप्रदर्शनार्थमात्वं वा, दीर्घो वेति ॥ १२६ ॥ १२७ ॥

**विश्वस्य वसुराटोः ॥ विश्वाराडिति ।** विश्वस्मिन्राजत इति 'सत्सूद्विष' इत्यादिना क्विप् ।

### भावबोधिनी

* गो शब्द परे रहते युक्त अर्थ में अष्टन् का दीर्घ होता है भाषा में । * उदा० अष्टागवं शकटम् । [ आठ बैलों से युक्त शकट । यहाँ दीर्घ होता है । ] ॥ १२६ ॥

कप् परे रहते चिति शब्द का दीर्घ होता है । उदा० एकचितीकः । द्विचितीकः । त्रिचितीकः । [इनमें दीर्घ होता है । ] ॥ १२७ ॥

वसु तथा राट्—ये उत्तरपद रहने पर विश्व शब्द का दीर्घ होता है । उदा० विश्वावसुः । विश्वाराट् । [विश्वं वसु अस्य । विश्वस्मिन् राजते—इनमें समास तथा प्रत्ययादि के बाद दीर्घ होता है । ]

राट्—यह विकारयुक्त निर्देश—जहाँ इस धातु का ऐसा रूप होता है वहीं पर दीर्घ हो सके । यहाँ न हो सके—विश्वराजौ, विश्वराजः । [अतः जहाँ पद संज्ञा होती है वहाँ-वहाँ दीर्घ होता है । अन्यत्र नहीं होता है । ] ॥१२८॥

नर शब्द उत्तरपद रहने पर संज्ञाविषय में 'विश्व' शब्द का दीर्घ होता है । उदा० विश्वानरो नाम यस्य वैश्वानरिः पुत्रः । वैश्वानर नाम का पुत्र जिसका है वह विश्वानर है । [ यहाँ संज्ञा की प्रतीति में दीर्घ होता । इञ् प्रत्यय करने पर वैश्वानरिः रूप होता है । ]

संज्ञा में—इसका क्या फल है ? विश्वे नराः यस्य सः—विश्वानरः । [ यहाँ सामान्य कथन है । अतः दीर्घ नहीं होता है । ] ॥ १२९ ॥

**२९९२. मित्रे चर्षौ ॥ १३० ॥ (१०४९)**

मित्रे चोत्तरपदे ऋषावभिधेये विश्वस्य दीर्घो भवति । विश्वामित्रो नाम ऋषिः ।

ऋषाविति किम् ? विश्वमित्रो माणवकः ॥

**२९९३. मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३१ ॥ (३५३३)**

मन्त्रविषये सोम, अश्व, इन्द्रिय, विश्वदेव्य—इत्येतेषां मतुप्प्रत्यये परतो दीर्घो भवति । सोमावती (ऋ० १०.९७.७) । अश्वावती (ऋ० १०९७.७) । इन्द्रियावती (तै० सं० २.४.२.१) । विश्वदेव्यावती (तै० सं० ४.१.६.१) ।

**२९९४. ओषधेश्च विभक्तावप्रथमायाम् ॥ १३२ ॥ (३५३४)**

'मन्त्रे' इति वर्तते । ओषधिशब्दस्य विभक्तावप्रथमायां परतो दीर्घो भवति । ओषधीभिरपीपतत् । नमः पृथिव्यै नम ओषधीभ्यः । (तै० आ० २.१२.१) ।

विभक्ताविति किम् ? ओषधिपते । अप्रथमायामिति किम् ? स्थिरेयमस्त्वोषधिः ॥

**२९९५. ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३३ ॥ (३५३५)**

ऋचि विषये तु, नु, घ, मक्षु, तङ्, कुत्र, उरुष्य—इत्येषां दीर्घो भवति । आ तू न इन्द्र वृत्रहन्

**न्यासः**

मित्रे चर्षौ ॥ ॥ १३० ॥

मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३१ ॥

ओषधेश्च विभक्तावप्रथमायाम् ॥ १३२ ॥

**ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥** तङिति प्रत्याहारग्रहणम्—लोण्मध्यमपुरुषबहुवचनादारभ्य महिङो ङकारेण । **आ तू न इन्द्र वृत्रहन्निति ।** आ तु न इति प्राप्ते । एवमुत्तरत्रापि ह्रस्वप्रयोगे प्राप्ते

**पदमञ्जरी**

**यत्रास्यैतदिति ।** पदसंज्ञाविषय इत्यर्थः ॥ १२८ ॥ १२९–१३२ ॥

**ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥** 'मन्त्रे' इति प्रकृते ऋग्ग्रहणं मन्त्रविशेषप्रतिपत्त्यर्थम् । 'घ' इति स्वरूपग्रहणम्, न तरप्तमपोः; छन्दसि घशब्दस्यैव दीर्घदर्शनात् ।[1] **उत वा घा स्यालादिति ।** भार्याया

**भावबोधिनी**

मित्र उत्तरपद रहते ऋषि अर्थ में विश्व का दीर्घ होता है । उदा० विश्वामित्रो नाम ऋषिः ।

ऋषि में—इसका क्या फल है ? विश्वमित्रो माणवकः । [ यहाँ दीर्घ नहीं होता है । ] ॥ १३० ॥

मन्त्रविषय में सोम, अश्व इन्द्रिय, विश्वदेव्य—इन शब्दों का मतुप् प्रत्यय परे रहते दीर्घ होता है । उदा० सोमावती । अश्वावती । इन्द्रियावती । विश्वदेव्यावती । [ इनमें दीर्घ होता है । वेदविषय में—इस कारण 'सोमवती अमावस्या यहाँ दीर्घ नहीं होता है । ] ॥ १३१ ॥

'मन्त्रे' इसकी अनुवृत्ति होती है । ओषधि शब्द का प्रथमाभिन्न विभक्ति परे रहते दीर्घ होता है । उदा० ओषधीभिरपीपतत् । नमः पृथिव्यै नम ओषधीभ्यः (तै० आ० २।१२।१) [ ओषधि का दीर्घ होता है । ]

विभक्ति परे—इसका क्या फल है ? ओषधिपते । [ यहाँ दीर्घ नहीं होता है । ]

प्रथमा में नहीं—इसका क्या फल है ? स्थिरेयमस्त्वोषधिः । यहाँ प्रथमा में दीर्घ नहीं होता है । ] ॥१३२॥

ऋग्विषय में तु, नु, घ, मक्षु, तङ्, कुत्र तथा उरुष्य—इन शब्दों का दीर्घ होता है । क्रमशः उदा० 'आ तू

---

१. 'भवता घा' इत्यपि पाठः ।

**(वा० सं० ३.६५) नु—नू करणे। घ—उत वा घा[1] स्यालात् (ऋ० १.१०९.२)। मक्षु—मक्षू गोमन्तमीमहे (ऋ० ८.३३.३)। तङ्—भरता जातवेदसम् (ऋ० १०.१७६.२)। तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम्, तेनेह न भवति—शृणोत ग्रावाणः (तै० सं० १.३.१३.१) कु—कूमनः। त्र—अत्रा गौः। उरुष्य—उरुष्या णोऽग्नेः। (ऋ० १.९१.१५)।**

### न्यासः

दीर्घो वेदितव्यः। **लास्यादिति।** 'लस श्लेषणक्रीडनयोः' इत्यस्याशिषि लिङि रूपमेतत्[2]। अथ घग्रहणेनात्र तरप्तमपोः प्रत्यययोर्ग्रहणं कस्मान्न भवति? तदन्तस्य कृतदीर्घस्य ऋग्विषये प्रयोगासम्भवात्। **भरता इति।** 'भृ भरणे' इत्यस्माद्धातोर्लोण्मध्यमपुरुषस्य बहुवचने रूपमेतत्। **शृणोत ग्रावाण इति।** अत्र तु न भवति; 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात्। **अत्रा इति।** त्रलन्तमेतत्। 'सप्तम्यास्त्रल्' इति त्रलि कृते 'एतदोऽश्' इत्यनेनैतदोऽशादेशः। **उरुष्या ण इति।** आत्मन उरुमिच्छति 'सुप आत्मनः क्यच्' इति क्यच्, ततः 'सर्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्यः' इत्यौपसंख्यानिकोऽसुक्, 'सुषामादिषु च' इति षत्वम्, लोण्मध्यमपुरुषस्यैकवचनम्, 'अतो हेः' इति हेर्लुक्। **न इति।** 'बहुवचनस्य वस्नसौ' इत्यस्मदादेशोऽयम्। णत्वं तु वर्णव्यत्ययेन। 'उपसर्गाद्बहुलम्' इति बहुलवचनाद्वा। अन्ये तु—'उरुष्य इति निपातः' इत्याचक्षते॥ १३३॥

### पदमञ्जरी

भ्राता [2]स्यालः, ततः पञ्चमी। **तङिति थादेशस्य ङित्त्वपक्षे ग्रहणमिति।** लोण्मध्यमपुरुषबहुवचनस्य थस्य 'लोटो लङ्वत्' इत्यतिदेशेन यस्तादेशस्तस्य यदा ङित्त्वं तदा ग्रहणमित्यर्थः। **शृणोत ग्रावाण इति।** 'तप्तनप्तनथनाश्च' इति तबादेशः। अत्र पित्त्वान्ङित्त्वं नास्ति। **तङिति प्रत्याहारग्रहणमिति** तु **वृत्तौ** न क्वापि पाठो दृश्यते। यच्च तत्रोक्तम्—'लोण्मध्यमपुरुषबहुवचनादारभ्य आ महिङो ङकारात्प्रत्याहारः' इति, तदप्ययुक्तम्; असन्निविष्टेन प्रत्याहारायोगात्। **उरुष्या ण इति।** रुष्यतिः कण्ड्वादियगन्तो रक्षतिकर्मा लोट्, सेर्हिः, 'अतो हेः' इति लुक्, न इत्यस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्॥ १३३॥

### भावबोधिनी

न इन्द्र वृत्रहन्' (वा० सं० ३।६५)। [ तु का दीर्घ होता है। ] नु—"नू करणे।" (नु दीर्घ हुआ है।) घ—उत वा घा स्यालात्।" (ऋ० १।१०९।२) [ इसमें 'घ' शब्द ही लिया जाता है, "तरप्तमपौ घः" यह परिभाषिक नहीं। ] मक्षु—"मक्षु गोमन्तमीमहे।" (ऋ० ८।३३।३) तङ्—भरता जातवेदसम्।" (ऋ० १०।१७६।२) तङ्—यह थ के स्थान पर होने वाले आदेश के ङित्व पक्ष में लिया जाता है, इस कारण यहाँ नहीं होता है—"शृणोत ग्रावाणः।" (तै० सं० १।३।१३।१) [लोट् के थ का त आदेश 'लोटो लङ्वत्' सूत्र से ङित् होने से तङ् माना जाता है। 'शृणोत' यहाँ 'तप्तनप्तनथनाश्च" सूत्र से 'तन' आदेश है, इसका ग्रहण नहीं होता है और न तङ् इस सामान्य प्रत्याहार का हो ग्रहण होता है। ] कु—कूमनाः। त्र—अत्रा गौः। उरुष्य—'उरुष्या णो'। (ऋ० १।९१।१५) [रुष् इस कण्ड्वादिगणीय धातु के लोट् मध्यम पुरुष का रूप है। "नश्च धातुस्थोरुषुभ्यः" सूत्र से णत्व हो जाता है।] ॥ १३३ ॥

---

१. 'भवता घा' इत्यपि पाठः।　　२. पदमञ्जरीकारस्तु स्यालशब्दस्य पञ्चम्यन्तरूपं येने।

**२९९६. इकः सुञि ॥ १३४ ॥ (३५३६)**

सुञ् निपातो गृह्यते। इगन्तस्य सुञि परतो मन्त्रविषये दीर्घो भवति। अभी षु णः सखीनाम् (ऋ० ४.३१.३)। ऊर्ध्व ऊ षु ण ऊतये (ऋ० १.३६.१३)। 'सुञः' (८.३.१०७) इति षत्वम्, 'नश्च धातुस्थोरुषुभ्यः' (८.४.२७) इति णत्वम् ॥

**२९९७. द्व्यचोऽतस्तिङः ॥ १३५ ॥ (३५३७)**

'ऋचि' इति वर्तते। द्व्यचस्तिङन्तस्यात ऋग्विषये दीर्घो भवति। विद्मा हि त्वा गोपतिं शूर गोनाम् (ऋ० १०.४७.१)। विद्मा शरस्य पितरम् (अ० वे० १.२.१)।

द्व्यच इति किम्? अश्वा भवत वाजिनः (वा० सं० ९.६)। अत इति किम्? आ देवान्वक्षि यक्षि च (ऋ० ५.२६.१) ॥

**न्यासः**

इकः सुञि ॥ सुञिति निपातस्य ग्रहणम्। अभी षु ण इति। अभिशब्दस्य दीर्घत्वम्। 'सुञः' इति षत्वम्। 'नः' इत्ययमस्मदादेशः, तस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्। ऊर्ध्व ऊ षु ण इति। उकारस्य दीर्घः ॥ १३४ ॥

द्व्यचोऽतस्तिङः ॥ अश्वा भरत[1] वाजिन इति। "भृ' इत्येतस्य लोण्मध्यमपुरुषस्य बहुवचने रूपमेतत्। वक्षि, यक्षीति। वचेर्यजेश्च परस्य लेटः सिप्, 'कर्त्तरि शप्'। वचेरदादित्वाच्छपो लुक्। यजेरपि 'बहुलं छन्दसि' इति ॥ १३५ ॥

**पदमञ्जरी**

इकः सुञि ॥ सुञिति निपातस्य ग्रहणम्, तस्य च ञकारोऽत्रैव विशेषणार्थः। ऊ षु ण इति। उकारस्य दीर्घः ॥ १३४ ॥

द्व्यचोऽतस्तिङः ॥ भवतेति। लोण्मध्यमपुरुषबहुवचनम्। वक्षि, यक्षीति। वहेर्यजेश्च लेड्, सिप्। 'सिब्बहुलं लेटि' इत्ययं तु विधिर्न भवति; बहुलवचनात्। 'बहुलं छन्दसि' इति शपो लुक्, वहेर्ढत्वम्, यजेः षत्वम्, 'षढोः कः सि' द्वयोरपि। 'देवानावह यज च' इत्यग्निं प्रति भरद्वाजस्य वचनम् ॥ १३५ ॥

**भावबोधिनी**

'सुञ्' यह निपात लिया जाता है। सुञ् परे रहते इगन्त का मन्त्रविषय में दीर्घ होता है। उदा० "अभी षु णः सखीनाम्" (ऋ० ४।३१।३) "ऊर्ध्व ऊ षु ण ऊतये।" (ऋ० १।३६।१३) इनमें "सुञः" (पा० सू० ८।३।१०७) से षत्व होता है और "नश्च धातुस्थोरुषुभ्यः" (पा० सू० ८।४।२७) से णत्व होता है। [ प्रस्तुत सूत्र से पूर्ववर्ती का दीर्घ हो जाने से 'अभी षु' 'ऊ षु' होता है। ] ॥ १३४ ॥

'ऋचि' (ऋग्विषय में) इसकी अनुवृत्ति होती है। दो अचों वाले तिङन्त के अकार का ऋग्विषय में दीर्घ होता है। उदा० "विद्मा हि त्वा गोपतिं शूर गोनाम्।" (ऋ० १०।१७।१) "विद्मा शरस्य पितरम्।" (अथर्व० १।२।१) [इनमें 'विद्म' का दीर्घान्त होता है।]

दो अचों वाले का—इसका क्या फल है? "अश्वा भवत वाजिनः।" (वा० सं० ९।६) [ यहाँ 'भवत' यह तीन अचों वाला है। अतः दीर्घ नहीं होता है। ] अत् = ह्रस्व अकार का—इसका क्या फल है? आ देवान् वक्षि यक्षि च।" ( ऋ० ५।२६।१) [ इसमें इकारान्त होने से दीर्घ नहीं होता है। ] ॥ १३५ ॥

---

1. मूले पदमञ्जर्यां च 'भवत' इति पाठः।

**२९९८. निपातस्य च ॥ १३६ ॥ (३५३८)**

'ऋचि' इत्येव। निपातस्य च ऋग्विषये दीर्घ आदेशो भवति। एवा ते (ऋ० १०.२०.१०)। अच्छा ते (ऋ० १.२.२) ॥

**२९९९. अन्येषामपि दृश्यते ॥ १३७ ॥ (३५३९)**

अन्येषामपि दीर्घो दृश्यते स शिष्टप्रयोगादनुगन्तव्यः। यस्य दीर्घत्वं न विहितम्, दृश्यते च प्रयोगे, तदनेन कर्त्तव्यम्। केशाकेशि। कचाकचि। जलाषाट्। नारकः पूरुषः ॥

❀ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु ❀ [ ? ] श्वादन्तः। श्वादंष्ट्रः। श्वाकर्णः। श्वाकुन्दः। श्वावराहः। श्वापुच्छः। श्वापदः ॥

**न्यासः**

**निपातस्य च। एवा ते, अच्छा त इति।** एवाच्छशब्दौ निपातौ; चादिषु पाठात् ॥ १३६ ॥

**अन्येषामपि दृश्यते ॥** ऋचीति निवृत्तम्। **केशाकेशीति।** केशेषु केशेषु गृहीत्वेदं युद्धं वृत्तमिति 'तत्र तेन' इत्यादिना बहुव्रीहिः, 'इच् कर्मव्यतीहारे' इतीच् समासान्तः। **जलाषाडिति।** जलं सहत इति 'छन्दसि सहः' इति ण्विः, 'सहेः साडः षः' इति षत्वम्।

**श्वादन्त इति।** शुनो दन्त इति षष्ठीसमासः। **श्वादंष्ट्र इति।** शुन इव दंष्ट्रा अस्येति बहुव्रीहिः। श्वाकर्ण इत्यादयः षष्ठीतत्पुरुषाः, बहुव्रीहयो वा ॥ १३७ ॥

**पदमञ्जरी**

**निपातस्य च ॥** एवशब्दश्चादिषु पाठान्निपातः, 'अच्छ गत्यर्थवदेषु' इत्यच्छशब्दः ॥ १३६ ॥

**अन्येषामपि दृश्यते ॥** 'मन्त्रे' इति निवृत्तम्। **केशाकेशीति।** 'तत्र तेनेदम्' इत्यादिना बहुव्रीहिः, 'इच् कर्मव्यतिहारे'। **जलाषाडिति।** 'छन्दसि सहः' इति ण्विः, 'सहेः साडः सः' इति षत्वम्। **पूरुष इति।** पुरुषशब्दस्याद्यचो दीर्घः।

**शुनो दन्तेत्यादि।** तत्र **श्वादंष्ट्र इति** बहुव्रीहिः। अन्यत्र तत्पुरुषः, बहुव्रीहिर्वा। दंष्ट्रेति ह्रस्वान्तस्य ग्रहणाद्दीर्घान्ते नायं दीर्घो भवतीत्याहुः। अन्ये तु दीर्घान्तमेव पठन्तोऽविशेषेणेच्छन्ति ॥ १३७ ॥

**भावबोधिनी**

("ऋचि" इसकी अनुवृत्ति है,) ऋग्विषय में ही। और निपात शब्द का भी ऋग्विषय में ही दीर्घ आदेश होता है। उदा० "एवा ते"। (ऋ० १०।२०।१०) "ते त्वामच्छा"। [ऋग्वेद १।२।२ में 'अच्छा' इतना ही पाठ है। "अच्छ गत्यर्थवदेषु" से निपात मान लिया जाता है। ] ॥ १३६ ॥

अन्य शब्दों का भी दीर्घ आदेश देखा जाता है, वह शिष्टों के प्रयोग से समझ लेना चाहिए। जिसके दीर्घ होने का विधान किसी से नहीं हुआ है और प्रयोग में दीर्घ दिखाई देता है, वह दीर्घ इस सूत्र से करना चाहिए। उदा० केशाकेशि। कचाकचि। [केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम्—इस विग्रह में "तत्र तेनेदमिति सरूपे" सूत्र से समास 'इच् कर्मव्यतिहारे' सूत्र से इत्व और प्रस्तुतसूत्र से दीर्घ—होता है। इसी प्रकार—कचेषु कचेषु गृहीत्वा इदं युद्धं प्रवृत्तम्-यह विग्रह है। पूर्वोक्त सभी कार्य होते हैं। ] जलाषाट्। नारकः पूरुषः। [ जलं सहते—इस अर्थ में "छन्दसि सहः" सूत्र से ण्वि प्रत्यय, "सहेः साडः सः" सूत्र से षत्व, दीर्घ—जलाषाह्, ढत्व, जश्त्व, चर्त्वं ]। पूरुषः—इसके आद्यच् का दीर्घ होता है। अतः लक्ष्यानुसार दीर्घ करने का यह सूत्र है। ]

❀ दन्त, दंष्ट्रा, कर्ण, कुन्द, वराह पुच्छ तथा पद—इनके परे रहते श्वन् शब्द का दीर्घ आदेश होता है। ❀ उदा० श्वादन्तः। श्वादंष्ट्रः। श्वाकर्णः। श्वाकुन्दः। श्वावराहः। श्वापुच्छः। श्वापदः। [ इनमें बहुव्रीहि समास के बाद

## ३०००. चौ ॥ १३८ ॥ (४१७)

**चौ परतः पूर्वपदस्य दीर्घो भवति। 'चौ' 'इत्यञ्चतिर्लुप्तनकाराकारो गृह्यते। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। अन्तरङ्गोऽपि हि यणादेशो दीर्घविधानसामर्थ्यान्न प्रवर्त्तते ॥**

### न्यासः

**चौ ॥ दधीच इति।** दध्यञ्चतीति ऋत्विगादिना क्विन्, ततः शस्, 'अचः' इत्यकारलोपः। ननु चान्तरङ्गत्वाद् यणादेशेनात्राकारलोपाद् दीर्घाच्च प्राग् भवितव्यम्, स हि वर्णाश्रयत्वादन्तरङ्गः, इतरौ तु बहिरङ्गौ, अकारलोपो हि तस्य विधीयते, भसंज्ञा च यकारादावजादौ च स्वादौ विधीयते, दीर्घत्वमप्युत्तरपदे परतः पूर्वपदस्य विधीयमानं द्विपदाश्रयत्वाद् बहिरङ्गम्, ततश्चान्तरङ्गे यणादेशे कृते पूर्वं चौ दीर्घत्वं न सिध्यति ? इत्यत आह— **अन्तरङ्गोऽपीत्यादि।** यदि यणादेश एव प्रवर्त्तते, तदा दीर्घवचनमनर्थकं स्यात्। तस्मात् दीर्घवचनसामर्थ्याद् यणादेशो न प्रवर्त्तते।

ननु च कृते यणादेशेऽनन्तरो दीर्घभावो नास्तीति कृत्वा व्यवहितस्यापि दीर्घत्वं भविष्यति, यथा— 'शमामष्टानां दीर्घः श्यनि' इति शमादीनां श्यनि दीर्घत्वम्, तस्माद् भवितव्यमेवात्र यणादेशेन, तथा च व्यवहितस्य दीर्घत्वे कृतेऽनिष्टं रूपं स्यात् ? नैतदस्ति; इदं च तावद् विचार्यताम्। किं तत् ? 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्येषा परिभाषा बाध्येत, आहोस्विदन्तरङ्गपरिभाषेति ? तत्रान्तरङ्गपरिभाषाया लिङ्गादनुमानाद्वा सिद्धा, तस्या हि 'वाह ऊठ्' इत्यूड्वचनं लिङ्गम्। यथा चैतल्लिङ्गं तथा तत्रैव **वृत्तिकारो** दर्शयिष्यति। इतरा तु परिभाषा साक्षात् श्रुता। तत्र युक्तं यदनुमितोऽर्थो बाध्यते, न तु साक्षाद् इष्ट इत्यन्तरङ्गपरिभाषा बाध्यते नेतरेति। तथा चानन्तरस्यैव दीर्घत्वेन भवितव्यमिति यणादेशो न प्रवर्त्तते ॥ १३८ ॥

### पदमञ्जरी

**चौ ॥ अञ्चतिर्गृह्यत इति।** चवर्गस्य तु ग्रहणं न भवति; व्याख्यानात्। **दधीच इति।** ननु चान्तरङ्गत्वाद्यणादेशेनैव प्राग्भवितव्यम्, अकारलोपो भस्य विधीयते, भसंज्ञा च यकारादावजादौ च सम्भवतीति बहिरङ्गः, दीर्घत्वं तु लोपमपेक्षत इति बहिरङ्गम् ? अत आह—**अन्तरङ्गोऽपीति।** एवं मन्यते—इह दीर्घश्रुत्या 'अचश्च' इत्युपतिष्ठते, तत्राचा पूर्वपदं विशेष्यते—अजन्तस्य पूर्वपदस्येति। यदि च यणादेशः स्यान्न क्वाप्यजन्तपूर्वपदं स्यात्। प्राच इत्यादावपि पूर्वमेव सवर्णदीर्घत्वप्रसङ्गः, तस्मादन्तरङ्गोऽपि विधिर्बाध्यत इति। अत्र च लिङ्गं 'प्रतीच' इति निर्देशः ॥ १३८ ॥

### भावबोधिनी

विभक्तिलोप तथा नकार का लोप कर देने के बाद प्रस्तुत सूत्र से दीर्घ हो जाता है। कहीं-कहीं षष्ठी तत्पुरुष भी हो सकता है और बहुव्रीहि भी। जैसे श्वाकर्णः। ] ॥ १३७ ॥

'चि' परे रहते पूर्व पद का दीर्घ होता है। यह लुप्तनकारवाली अञ्च धातु ली जाती है [ अञ्च के अकार का लोप "अचः" सूत्र से होता है। उसी का यहाँ ग्रहण है। ] उदा० दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। [ दधि अञ्चति—इस अर्थ में क्विन्, सर्वापहारी लोप, शस् प्रत्यय दधि + अञ्च् + शस् = अस् न् = ञ् लोप, अलोप कर देने के बाद प्रस्तुत सूत्र से पूर्वपद 'दधि' का दीर्घ होने से—दधी + च् + अस् = दधीचः। इसी प्रकार मधु-अञ्चति में सभी प्रक्रिया करनी चाहिए।]

[दधि + अच् + शस्, मधु + अच् + अस्—इस अवस्था में यण् क्यों नहीं होता है ?] अन्तरङ्ग भी यण् आदेश दीर्घ करने के सामर्थ्य से प्रवृत्त नहीं होता है। [क्योंकि यण् कर दिया जाय तो दीर्घ की प्रवृत्ति सम्भव नहीं होगी। सूत्र व्यर्थ होने लगेगा। अतः यण् नहीं होता है। दीर्घ ही होता है।] ॥ १३८ ॥

## ३००१. सम्प्रसारणस्य ॥ १३९ ॥ (१००४)

**'उत्तरपदे' इति वर्तते। सम्प्रसारणान्तस्य पूर्वपदस्योत्तरपदे दीर्घो भवति। कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। करीषस्येव गन्धोऽस्य, कुमुदस्येव गन्धोऽस्य—'अल्पाख्यायाम्', (५.४.१३६) 'उपमानाच्च' (५.४.१३७) इति इकारः समासान्तः। करीषगन्धेरपत्यं कारीषगन्ध्या, कुमुदगन्धेरपत्यं कौमुदगन्ध्या, तस्याः पुत्रः कौमुदगन्धीपुत्रः, [तस्याः पतिः] कौमुदगन्धीपतिः।**

**'इको ह्रस्वोऽङ्यो गालवस्य' (६.३.६१) इत्येतन्न भवति; व्यवस्थितविभाषा हि सा। अकृत एव दीर्घत्वे ह्रस्वाभावपक्षे कृतार्थेनापि दीर्घेण पक्षान्तरे परत्वाद् ह्रस्वो बाध्यते।**

### न्यासः

**सम्प्रसारणस्य ॥ कारीषगन्धीपुत्र इति।** करीषगन्धेरपत्यमिति 'तस्यापत्यम्' इत्यण्, 'अणिञोरनार्षयोः' इत्यादिना ष्यङादेशः, ततः 'यङश्चाप्' इति चाप् प्रत्ययः, ततः कारीषगन्ध्यायाः पुत्र इति षष्ठीसमासः, ततः 'सम्प्रसारणम्' इत्यादिना सम्प्रसारणम्, अनेन दीर्घत्वम्।

**व्यवस्थितविभाषा हि सेति।** इको ह्रस्वादौ सूत्रे 'एकहलादौ' इत्यतः सूत्रादन्यतरस्यांग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन कारीषगन्धीपुत्र इत्यत्र न भवति। **अकृत एवेत्यादि।** अथ

### पदमञ्जरी

**सम्प्रसारणस्य ॥ अकृत एवेत्यादि।** कारीषगन्धिपुत्र इति स्थिते ह्रस्वत्वं च प्राप्नोति, अनेन दीर्घत्वं च; तस्यावकाशः—ग्रामणि कुलम्, ह्रस्वाभावपक्षे दीर्घस्यावकाशः; पक्षान्तरे उभयप्रसङ्गः। यद्यपि ह्रस्वाभावपक्षे सावकाशं दीर्घत्वम्, तथापि तेन परत्वाद् ह्रस्वो बाध्यते।

### भावबोधिनी

'उत्तरपदे' इसकी अनुवृत्ति होती है। सम्प्रसारणान्त पूर्वपद का उत्तरपद परे रहते दीर्घ होता है। उदा० कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। करीषस्य इव गन्धः अस्य, कुमुदस्य इव गन्धः अस्य—इस विग्रह में समास के बाद "अल्पाख्यायाम्' 'उपमानाच्च" (५।४।३६–३७) से इकार समासान्त प्रत्यय होता है। [और करीषगन्धिः, कुमुदगन्धिः—ये बनते हैं।] करीषगन्धेः अपत्यम्—इस अर्थ में—कारीषगन्ध्या, कुमुदगन्धेः अपत्यम्—इस अर्थ में कौमुदगन्ध्या रूप होते हैं। [इनमें 'तस्यापत्यम्' से अण् करने के बाद 'अणिञोरनार्षयोः" सूत्र से ष्यङ्=य आदेश, आदिवृद्धि, भसंज्ञा, इलोप करने के बाद स्त्रीलिङ्ग में "यङश्चाप्" सूत्र से चाप् (=आ) प्रत्यय करने पर—कारीषगन्ध्या, कौमुदगन्ध्या—बनते हैं।] उस कौमुदगन्ध्या का पुत्र—कौमुदगन्धीपुत्रः, उस कौमुदगन्ध्या का पति—कौमुदगन्धीपतिः होते हैं। [कारीषगन्ध्यायाः पुत्रः, कारीषगन्ध्यायाः पतिः। कौमुदगन्ध्यायाः पुत्रः कौमुदगन्ध्यायाः पतिः—इन षष्ठीसमासों में "ष्यङः सम्प्रसारणम्" सूत्र से 'य' का सम्प्रसारण 'इ' तथा अकार का पूर्वरूप करने पर कारीषगन्धिपुत्रः, कारीषगन्धिपतिः। कौमुदगन्धिपुत्रः, कौमुदगन्धिपतिः—इस स्थिति में प्रस्तुत सूत्र से पूर्वपद का दीर्घ आदेश होने पर कारीषगन्धीपुत्रः, कारीषगन्धीपतिः, कौमुदगन्धीपुत्रः कौमुदगन्धीपतिः रूप बनते हैं।]

इनमें "इको ह्रस्वोऽङ्यो गालवस्य" (६।३।६१) यह नहीं लगता है, अर्थात् ह्रस्व नहीं होता है क्योंकि यह व्यवस्थित विभाषा है। दीर्घ न करने पर ह्रस्वाभाव पक्ष में चरितार्थ भी दीर्घ के द्वारा पक्षान्तर में पर होने से ह्रस्व का बाध कर दिया जाता है। [कारीषगन्धिपुत्रः—इस दशा में उससे ह्रस्वत्व भी प्राप्त है और इस सूत्र से दीर्घत्व भी। उस ह्रस्वत्व का अवकाश—'ग्रामणि कुलम्' आदि में है। और वैकल्पिक होने से ह्रस्वाभावपक्ष में यह दीर्घ चरितार्थ है।

**पुनःप्रसङ्गविज्ञानं न च भवति; 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे' (व्या० प० ४०) ति ॥**

**॥ इति श्रीवामनविरचितायां काशिकावृत्तौ**
**षष्ठस्याध्यायस्य तृतीयः पादः ॥**

— ० —

**न्यासः**

वा—अकृत एव सम्प्रसारणदीर्घत्वे कारीषगन्धिपुत्र इति स्थिते ह्रस्वत्वं प्राप्नोति, सम्प्रसारणदीर्घत्वं च; उभयञ्चैतत् सावकाशम्, इकोह्रस्वत्वस्यावकाशः—ग्रामणिपुत्र इति, सम्प्रसारणस्यावकाशः—ह्रस्वाभावः; पक्षे तूभयं प्राप्नोति। तत्र यद्यपि ह्रस्वाभावपक्षे कृतार्थं दीर्घत्वम्, तथापि तेन परत्वाद् ह्रस्वो बाध्यते। अथ कृते दीर्घत्वे कस्मात् पुनःप्रसङ्गविज्ञानान्न भवति ? अत आह—**पुनःप्रसङ्गविज्ञानञ्चेत्यादि**। गतार्थम् ॥ १३९ ॥

॥ बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविचितायां काशिकाविवरणपञ्चिकायां
षष्ठाध्यायस्य तृतीयः पादः समाप्तः ॥

— ० —

**पदमञ्जरी**

अथेदानीं दीर्घे कृते पुनःप्रसङ्गः कस्मान्न भवति ? तत्राह—**पुनः प्रसङ्गविज्ञानं चेति** ॥ १३९ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
षष्ठस्याध्यायस्य तृतीयः पादः ॥

— ० —

**भावबोधिनी**

यद्यपि ह्रस्वाभाव पक्ष में दीर्घत्व सावकाश है तथापि परवर्त्ती होने से यह ह्रस्व का बाध ही करता है। अतः ह्रस्व नहीं होता है।]

[दीर्घ हो जाने पर भी ह्रस्व करना सम्भव है अतः] "पुनः प्रसङ्गविज्ञानात् सिद्धम्" इस नियम से ह्रस्व हो जाना चाहिए ? ऐसा नहीं कहा जा सकता क्योंकि "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव।" इस कारण ह्रस्व का बाध ही रहता है, उसकी प्रवृत्ति कभी नहीं होती है।

**विमर्श**—बाध्यबाधकभाव के विषय में उपर्युक्त दो परिभाषायें मानी जाती हैं। यदि कहीं एक शास्त्र की प्रवृत्ति का अवसर बाधित हो जाता है तो पुनः उसका अवसर सम्भव होने पर भी वह कार्य बाधित ही रहता है, किसी भी प्रकार नहीं होता है। अतः जब ह्रस्व का बाध हो गया तो हो ही गया, वह सम्भव होने पर भी नहीं किया जा सकता। इसलिये 'कौमुदगन्धीपुत्रः' 'कौमुदगन्धीपतिः' ये दीर्घवाले ही रूप होते हैं ॥ १३९ ॥

॥ इस प्रकार वामनविरचित काशिकावृत्ति में षष्ठ अध्याय का तृतीयपाद समाप्त हुआ ॥

कृपया विश्वनाथस्य गुरुपितृ-प्रसादतः।
षष्ठे तृतीयं व्याचष्ट त्रिपाठी जयशङ्करः ॥

॥ इस प्रकार जयशङ्करलालत्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में
काशिकावृत्ति में षष्ठ अध्याय का तृतीयपाद समाप्त हुआ ॥

— ० —

# अथ षष्ठाध्याये चतुर्थः पादः

**३००२. अङ्गस्य ॥ १ ॥ (२००)**

**अधिकारोऽयमा सप्तमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामोऽङ्गस्येत्येवं तद्वेदितव्यम् । वक्ष्यति—"हलः" (६.४.२) । हूतः । जीनः । संवीतः" ।**

**न्यासः**

**अङ्गस्य ॥ अधिकारोऽयमिति ।** स्वरितलिङ्गासङ्गात् । इह केचित् प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारो युक्त इति मन्यन्ते । एवं हि 'गुणो यङ्लुकोः' इत्यस्मिन् सूत्रे लुग्ग्रहणं न कर्तव्यं भवति; यङ्लुक्यपि प्रत्ययलक्षणेन गुणस्य सिद्धत्वात् । यदि पुनरा सप्तमाध्यायपरिसमाप्तेरयमङ्गाधिकारः स्यात्, ततोऽवश्यं लुग्ग्रहणं कर्त्तव्यम्, न ह्यन्यथा यङ्लुकि गुणः सिध्यति; 'न लुमताङ्गस्य' इति प्रतिषेधादित्येवं तेषामभिप्रायः । **वृत्तिकारस्तु**—यदि प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारः स्यात्, ततो वव्रश्चेत्यत्र वृश्चतेर्लिटि द्विर्वचने कृते हलादिशेषात् प्राक् सम्प्रसारणम् पूर्वविप्रतिषेधेन 'उभयेषाम्' इति वचनसामर्थ्याद्वा परमपि हलादिशेषं बाधित्वा सम्प्रसारणं स्यात्, ततश्च 'सम्प्रसारणाच्च' इति पूर्वरूपत्वे 'उरत्' इत्यत्त्वे रपरत्वे हलादिशेषे च कृते वकारस्यापि सम्प्रसारणं प्रसज्येत । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सति 'उरत्' इत्यस्य परनिमित्तत्वात् प्रत्ययो निमित्तत्वेनाश्रीयते । तेन परनिमित्तत्वादुरदत्त्वस्य सम्प्रसारणे कर्त्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति स्थानि-

**पदमञ्जरी**

**अङ्गस्य ॥ अधिकारोऽयमिति ।** स्वरितत्वात् । इह केचिन्मन्यन्ते—प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारः । एवं हि 'गुणो यङ्लुकोः' इत्यत्र लुग्ग्रहणं न कर्त्तव्यं भवति, कथम् ? प्रत्ययलक्षणेनैव सिद्धम् । यदि त्वभ्यासविकारेऽप्ययमधिकारः स्यात्, ततोऽङ्गाधिकारविहितमिति 'न लुमताङ्गस्य' इति प्रतिषेधः स्यादिति । **वृत्तिकारस्तु** मन्यते—यदि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः, वव्रश्चेति वृश्चतेर्लिटि 'लिट्यभ्यासस्योभयेषाम्' इति रेफस्य सम्प्रसारणे उरदत्वे हलादिशेषे च कृते वकारस्यापि सम्प्रसारणं प्राप्नोति, तस्य 'न सम्प्रसारणे सम्प्रसारणम्' इति प्रतिषेध इष्यते, स न प्राप्नोति; उदरत्वस्यासम्प्रसारणत्वात् । न च तस्य स्थानिवत्त्वम्, अपरनिमित्तत्वात् । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सत्युरदत्वं परनिमित्तकं भवति, अङ्गेन स्वनिमित्तस्य प्रत्ययस्याक्षेपात् । यदप्युक्तम्—लुग्ग्रहणं न कर्त्तव्यं भवतीति, तदपि न; न हि तत्राङ्गाधिकारविहितस्यैव प्रतिषेधः, कस्य तर्हि ? लुमता लुप्ते प्रत्यये वस्तुतो यदङ्गं तस्य प्राप्तं यत्कार्यमाङ्गमनाङ्गं

**भावबोधिनी**

नत्वा गणेशमीशानं ध्यात्वाम्बां च मतिप्रदाम् ।
षष्ठे चतुर्थकं पादं व्याचष्टे 'जयशङ्करः' ॥

[ अब काशिका-षष्ठ अध्याय में चतुर्थ पाद प्रारम्भ होता है— ]

सातवें अध्याय की परिसमाप्ति तक यह 'अङ्गस्य' अधिकार चलेगा । इसके आगे जो कहेंगे 'अङ्गस्य' ( = अङ्ग का )—इस प्रकार का उसे समझना चाहिए । कहा जायगा—"हलः" ( ६।४।२ ) अङ्गावयव हल् से उत्तरवर्त्ती जो सम्प्रसारण है तदन्त अङ्ग का दीर्घ होता है । ) उदा॰ हूतः । जीनः । संवीतः । [ हूतः—यहाँ 'स्पर्धार्थक√'ह्वेञ्' धातु से क्त = त प्रत्यय परे रहते "वचिस्वपियजादीनाम्" सूत्र से 'व्' का सम्प्रसारण उ, तथा 'ए' का पूर्वरूप करने पर—हु + त, इसमें 'हलः' सूत्र से दीर्घ होने पर 'हूतः' बनता है । इसी प्रकार वयोहान्यर्थक√'ज्या' धातु से क्त =

**अङ्गस्येति किम् ? निरुतम् । दुरुतम् । नामि दीर्घः—अग्नीनाम् । वायूनाम् । अङ्गस्येति किम् ? क्रिमिणां पश्य । पामनां पश्य । 'अतो भिस ऐस्' (७.१.९)—वृक्षैः । प्लक्षैः ।**

**न्यासः**

वद्भावः, ततश्च 'न सम्प्रसारणे सम्प्रसारणम्' इति वकारस्य सम्प्रसारणं प्रतिषिध्यते । प्रागभ्यासविकारेभ्यः पुनरङ्गाधिकारे सत्यपरनिमित्तत्वादुरदत्त्वस्य स्थानिवद्भावो न स्यात्, ततश्च 'न सम्प्रसारणे सम्प्रसारणम्' इत्यस्य प्रतिषेधस्याभावाद् वकारस्य सम्प्रसारणं स्यादेव । ततश्चोव्रश्चेत्यनिष्टं रूपं स्यात् । तस्मादा सप्तमाध्याय-परिसमाप्तेरङ्गाधिकारो युक्तः, न तु प्रागभ्यासविकारेभ्य इति मन्यमान आह—**आ सप्तमाध्यायपरिसमाप्तेरिति ।** सप्तमाध्यायपरिसमाप्तेस्तु परेण 'पदस्य' इत्यधिकृत्य कार्यं विधीयते । तेन तत्राङ्गाधिकारो नानुवर्त्तते । **हूत इति ।** 'ह्वेञ् स्पर्द्धायाम्', निष्ठा, यजादित्वात् सम्प्रसारणम् । **जीन इति ।** 'ज्या वयोहानौ' ग्रह्यादिसूत्रेण सम्प्रसारणम्, 'ल्वादिभ्यः' इति निष्ठानत्वम् । **संवीत इति ।** 'व्येञ् संवरणे', वच्यादिना सम्प्रसारणम् ।

**निरुतम्, दुरुतमिति ।** 'वेञ् तन्तुसन्ताने', पूर्ववत् सम्प्रसारणम् । असत्यङ्गाधिकारे निर्दुरोरवयवो यो हल् ततोऽप्युत्तरस्य सम्प्रसारणस्य दीर्घः स्यात् । अङ्गाधिकारे पुनरङ्गावयवो यो हल् तदुत्तरं यत् सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घत्वं विज्ञायत इति न भवति दीर्घत्वप्रसङ्गः । न ह्यत्राङ्गावयवाद्धल उत्तरं सम्प्रसारणम् । **अग्नीनामिति ।** 'ह्रस्वनद्यापो नुट्' । **क्रिमिणां पश्य, पामनां पश्येति ।** क्रिमयोऽस्यां सन्तीति, पामानोऽस्यां सन्तीति 'लोमादि' इत्यादिना नप्रत्ययः, ततष्टाप्, द्वितीयैकवचनम् । 'अमि पूर्वः' इति पूर्वरूपत्वम् । यद्यङ्गस्येति नाधिक्रियते, ततोऽत्रापि क्रिमिशब्दस्य पामशब्दस्य च नामि परतो दीर्घत्वं स्यात् । अङ्गाधिकारे

**पदमञ्जरी**

वा तस्य सर्वस्य प्रतिषेधः । तस्मादासप्तमाध्यायपरिसमाप्तेरयमङ्गाधिकारो युक्त इति । **हूत** इत्यादौ यजादित्वात्सम्प्रसारणम् । **जीन इति ।** 'ग्रहिज्या' इति सूत्रेण सम्प्रसारणम्, 'ल्वादिभ्यः' इति निष्ठानत्वम् ।

**निरुतम्, दुरुतमिति ।** 'वेञ् तन्तुसन्ताने' (धा० पा० १००६) यजादिः, अत्राङ्गेऽनन्तर्भूतयोर्निर्दुरोरवयवौ यौ हलौ तदाश्रयं दीर्घत्वं न भवति । **क्रिमिणामिति ।** क्रिमिपामन्शब्दाभ्यां मत्वर्थे पामादिभ्यो नः, पामनो नलोपः, स्त्रियां टाप्, द्वितीयैकवचनम् । अत्र नामिति समुदायस्याप्रत्ययत्वान्न तदपेक्षं पूर्वस्याङ्गत्वमिति नप्रत्ययापेक्षयाऽङ्गत्वेऽपि दीर्घत्वं न भवति, पामनामित्यत्र नलोपे कृतेऽजन्तत्वाद् दीर्घप्रसङ्गः । न च नलोपस्या-

**भावबोधिनी**

स, तथा 'संवरणार्थक √ 'व्येञ्' से क्त = त परे रहते सम्प्रसारण, पूर्वरूप करने के बाद 'हलः' सूत्र से दीर्घ होने पर—जीनः, संवीतः रूप होते हैं । 'जीनः' में "ल्वादिभ्यः" सूत्र से निष्ठा 'त' का 'न' होता है ।]

अङ्ग = अङ्गावयव का—इसका क्या फल है ? निरुतम् । दुरुतम् । [ निर् तथा दुर् उपसर्ग के साथ तन्तु-सन्तानार्थक√'वेञ्' धातु से क्त = त प्रत्यय, सम्प्रसारण, 'ए' का पूर्वरूप करने पर 'निर् उत, दुर् उत—इनमें दीर्घ नहीं होता है क्योंकि उपसर्ग अङ्गावयव नहीं हैं । अतः अङ्गावयव हल् से परे सम्प्रसारण न होने से दीर्घ नहीं होता है । ]

'नाम्' परे दीर्घ होता है—अग्नीनाम् वायूनाम् । [ यहाँ भी अङ्ग का ही दीर्घ होता है । ]

अङ्ग का—इसका क्या फल है ? क्रिमिणां पश्य । पामनां पश्य । [ क्रिमयः सन्ति अस्याम्, पामानः सन्ति अस्याम्—इस मत्वर्थ में "लोमादिपामादिपिच्छादिभ्यः शनेलचः" सूत्र से 'न' प्रत्यय, स्त्रीत्व में णत्व, टाप्, क्रिमिणा, पामना—इनमें द्वितीया एकवचन में अम् प्रत्यय मिलाने पर 'नाम्' परे हो जाता है । अङ्ग का अधिकार होने के कारण क्रिमि तथा पाम शब्द का दीर्घ नहीं होता है क्योंकि 'न' प्रत्यय परे ही ये अङ्ग हैं । अम् प्रत्यय परे तो क्रिमिणा तथा पामना ये अङ्ग हैं । इनमें दीर्घ की प्राप्ति नहीं है । अङ्ग का अधिकार न होने पर तो सभी में 'नाम्' परे दीर्घ होने लगता । ]

**अङ्गस्येति किम् ? ब्राह्मणभिस्सा । ओदनभिस्सिटा । अङ्गाधिकारः कृतोऽन्यार्थः 'नामि'-दीर्घत्वाद्यपि व्यवस्थापयतीति तदर्थमर्थवद्ग्रहणपरिभाषा (व्या० प० १) नाश्रयितव्या भवति ।**

**न्यासः**

तु न दोषः, न ह्यत्र क्रिमिपामशब्दयोर्नामि परतोऽङ्गत्वमस्ति, अपि तु नप्रत्यये। **ब्राह्मणभिस्सा, ओदनभिस्सिटेति** । भिस्साभिस्सिटाशब्दौ टाबन्तौ । तत्रैक ओदनस्य वाचकः, अपरस्तु तद्दग्धिकायाः । ताभ्यां यथाक्रमं ब्राह्मणौदनशब्दयोः षष्ठीसमासः । तत्रासत्यङ्गाधिकारे अनङ्गाभ्यामपि ब्राह्मणौदनशब्दाभ्यां परस्य भिस ऐस्भावः प्रसज्येत ।

ननु च 'अर्थवद्ग्रहणे नानर्थकस्य' इति वचनाद् यथा क्रिमिणां पश्य, पामनां पश्येत्यत्र दीर्घत्वं न भविष्यति, तथा ब्राह्मणभिस्सौदनभिस्सिटेत्यत्राप्यैस्भावः, न ह्यत्र नामोऽर्थवत्त्वम्, नापि भिसः, तत् किं तन्निवृत्त्यर्थेनाङ्गाधिकारेण ? इत्याह—**अङ्गाधिकार इत्यादि । नामिदीर्घत्वाद्यपीत्यादि ।** आदिशब्देन 'अतो भिस ऐस्' इत्यैस् गृह्यते । इतिकरणो हेतौ । यस्मादसत्यङ्गाधिकारे 'हलः' इति दीर्घत्वं यथा हूतः, जीन इत्यत्र भवति, तथा निरुतम्, दुरुतमित्यत्रापि स्यात् । 'अज्झनगमां सनि' इति दीर्घत्वं यथा चिकीर्षतीत्यत्र भवति, तथा दधि सनोति, मधु सनोतीत्यत्रापि स्यात् । 'एर्लिङि' 'वान्यस्य संयोगादेः' इत्येत्त्वं यथा ग्लेयादित्यत्र भवति, तथा निर्यायाद्, निर्वायादित्यत्रापि भवेत् । तस्मादेवमाद्यर्थोऽवश्यकर्त्तव्योऽङ्गाधिकारः । सोऽन्यार्थः क्रियमाणो नामि दीर्घत्वाद्यपि व्यवस्थापयति = विषयान्तराद् व्यावर्त्याभिमते विषये नियमयति । तेन तदर्थमेषा परिभाषा

**पदमञ्जरी**

सिद्धत्वम्, असुब्विधित्वात् । न ह्यस्यां दशायां दीर्घत्वं सुब्विधिर्भवति । अस्तु वाऽसिद्धत्वम्, 'नोपधायाः' इति दीर्घत्वप्रसङ्गः ।

भिस्सा = ओदनः,[1] भिस्सदा = दधि । ननु क्रिमिणामित्यत्र प्रत्ययस्यार्थवत्त्वेऽपि समुदायोऽनर्थकः, परम्परासम्बन्धात्, एवं भिस्साभिस्सदयोर्भिस्शब्दः, ततश्च 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येव न भविष्यति ? तत्राह—**अङ्गाधिकार इत्यादि ।** सन्सम्प्रसारणदीर्घत्वैत्वतातङियङुवङ्नुट्ह्रस्वत्वतत्वे चाङ्गस्येत्यधिकारे प्रयोजनम् । सनि दीर्घः प्रयोजनम्—दधि सनोतीति दधिसेत्यत्र मा भूत् । सम्प्रसारणदीर्घत्वम्—निरुतम्, दुरुतमित्यत्र मा भूत् । एत्वम्—'एर्लिङि', 'वान्यस्य संयोगादेः', निर्यायात्, निर्वायादित्यत्र मा भूत् । तातङ्—निपातस्य तोर्मा भूत्, जीव तु त्वम् । इयङुवङ्—श्यर्थम्, वर्थम् इत्यत्र मा भूत् । नुट्—'ह्रस्वनद्यापो नुट्', कुमारी आमित्याहेत्यत्र मा भूत् । ह्रस्वत्वम्—'केऽणः', कुमारी कस्मै स्पृहयति, कुमार्याः कं सुखं कुमारीकमित्यत्र मा भूत् । तत्वम्—'अपो भिः' अब्भार इत्यत्र मा भूदित्येवमर्थं कर्तव्योऽङ्गाधिकारः । सोऽन्यार्थः कृतो नामीत्यत्रापि दीर्घत्वं व्यवस्थापयति = अभिमते विषये नियमयति । **अर्थवद्ग्रहणपरिभाषयेति ।** उपलक्षणमेतत् । 'आने मुक्', प्राण इत्यत्र मा भूत् । अकृत्सार्वधातुकयोर्दीर्घः' दधि यातमित्यत्र मा भूत्—इत्येवमर्थं 'लक्षणप्रतिपदोक्तपरिभाषा', (व्या० प० २) 'नञिवयुक्तन्याय'श्च (व्या० प० ६५) नाश्रयितव्यो भवति ।

**भावबोधिनी**

"अतो भिस ऐस्" ( अदन्त अङ्ग से परे भिस् का ऐस् होता है । ) उदा० वृक्षैः । प्लक्षैः । [ वृक्ष + भिस्, प्लक्ष + भिस्, ऐस् आदेश और वृद्धि आदि करने पर रूप बनते हैं । ]

अङ्ग का—इसके ग्रहण का क्या प्रयोजन है ? ब्राह्मणभिस्सा । ओदनभिस्सिटा । [ इनमें भिस्सा तथा भिस्सिटा शब्दों के परे रहते ब्राह्मण को अङ्ग संज्ञा नहीं होती है क्योंकि ये शब्द प्रत्यय नहीं हैं । भिस्सा का अर्थ चावल है । भिस्सिटा का अर्थ जला हुआ है । पदमञ्जरीकार ने 'भिस्सदा' शब्द माना है और 'दही' अर्थ लिखा है । ]

---

१. भिस्सिटा—अयं पाठः काशिकायां न्यासे च ।

**अङ्गस्येति सम्बन्धसामान्ये एषा षष्ठी यथायोगं विशेषेष्ववतिष्ठते ।**

**न्यासः**

नाश्रयितव्या भवति । अगत्या हि खलु परिभाषाऽऽश्रीयत इति भावः ।

ननु 'षष्ठी स्थानेयोगा' इति वचनादङ्गस्येति स्थानषष्ठीयम्, ततश्च 'अतो भिस ऐस्' इत्येतत् पञ्चम्यन्तेनाङ्गस्येत्येतत्षष्ठ्यन्तस्य समानाधिकरणत्वं न स्यात्; भिन्नविभक्तिकत्वात् । तथा च सत्यकारान्तात् परस्य भिस्सेत्यत्रास्यैस्भावः प्रसज्येत । ततश्चात्रापि स्यात्—ब्राह्मणभिस्सा, ओदनभिस्सिटेति । अवयवषष्ठ्यादयश्च न प्रसिद्ध्येयुः, ततश्च 'उदुपधाया गोहः' इत्यत्र 'गोह्' इत्यस्याः स्थानषष्ठ्या 'अलोऽन्त्यस्य' इत्यन्तेऽल्युपसंहारादुपधाग्रहणसामर्थ्याच्च गोहश्चान्त्यस्य स्यादूत्वम् । उपधामात्रस्य च 'शास इदङ्हलोः' इत्यत्रापि शास इति स्थानषष्ठीत्वेन विज्ञातायाः षष्ठ्या अन्तेऽल्युपसंहारादुपधाग्रहणानुवृत्तिसामर्थ्याच्च शासश्चान्त्यस्येत्वम्, उपधामात्रस्य चेत्येतद् देश्यमपाकर्तुमाह—**अङ्गस्येति सम्बन्धसामान्य एषा षष्ठीत्यादि** । सम्बन्धसामान्ये = अविशेषितसम्बन्धमात्रे । तत्रानेकसम्बन्धानुग्रहार्थमनाश्रितविशेषं सम्बन्धसामान्यमुपादाय प्रवृत्ता सत्युत्तरेषु भिन्नार्थेषु लक्षणवाक्येषु यथायोगं विशेषेष्ववतिष्ठते । सा क्वचित् स्थानेयोगा भवति, यथा—'हन्तेर्जः' इत्येवमादौ । क्वचिदवयवयोगा भवति, यथा—'ऊदुपधाया गोहः', 'शास इदङ्हलोः' इत्येवमादौ । क्वचिन्निमित्तनिमित्तिसम्बन्धविषया, यथा—'युवोरनाकौ' इत्यादौ । यथैव हि देवदत्तस्येत्येका षष्ठ्यभेदेन प्रवृत्ता ज्ञात्यवयवादिषु सम्बन्धभेदैर्भिद्यमाना जन्यजनकभावाद्यैः सम्बन्धविशेषे यथायोगमुपतिष्ठते—देवदत्तस्य पुत्रः, पाणिः, कम्बल इति, तथाङ्गस्येत्येषापि । तत्र यस्मिन् वाक्ये 'शास इदङ्हलोः' इत्येवमादौ सम्बन्धिविशेषो विद्यते—अवयवोऽन्यो वा, तत्र यथायोगमवयवादिसम्बन्धे षष्ठी वेदितव्या । यत्र न विद्यते तत्र स्थाने षष्ठी, यथा—'हन्तेर्जः' इत्येव-

**पदमञ्जरी**

'षष्ठी स्थानेयोगा' इति वचनादङ्गस्येति स्थानषष्ठीयम्, ततश्च 'अतो भिस ऐस्' इत्यत्रात इति पञ्चम्यन्तमङ्गस्येत्यस्य षष्ठ्यन्तस्य सामानाधिकरण्येन विशेषणं नोपपद्यते इत्यकारमात्रस्य ग्रहणात् ब्राह्मणभिस्सेत्यादावपि प्रसङ्गः । अवयवषष्ठ्यादीनां चाप्रसिद्धिः, ततश्च 'ऊदुपधायाः गोहः' 'अङ्गस्य' इति स्थानषष्ठ्या अन्त्येऽल्युपसंहाराद् गोहश्चान्त्यस्य स्यात्, 'उपधायाश्च' इति वचनादुपधामात्रस्य च । एवं 'शास इदङ्हलोः' इत्यादावपीत्याशङ्कायामाह—**अङ्गस्येति सम्बन्धसामान्ये षष्ठीति** । अयमभिप्रायः—अधिकारोऽयम्, स च परार्थः, 'षष्ठीस्थाने योगा' इत्यपि परिभाषा परार्था, न च परार्थयोः परस्परं सम्बन्धोऽस्ति, यथोक्तम्—'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्' इति, ततश्चाङ्गस्येति षष्ठी स्वभावप्रयुक्तं सम्बन्धसामान्यमेवार्थमभिधत्त इति । **यथायोगमिति** । यस्मिन्योगे यस्य सम्बन्धविशेषस्याभिव्यञ्जकमस्ति तस्मिन्योगे तत्रैव विशेषे पर्यवस्यतीत्यर्थः ।

तद्यथा 'हन्तेर्जः' इत्यादौ स्थानषष्ठी, 'ऊदुपधाया गोहः' इत्यवयवषष्ठी, 'युवोरनाकौ' इत्यादौ निमित्तनिमित्तिसम्बन्धे षष्ठी, लोकवत्. तद्यथा—लोके देवदत्तस्येत्यभेदेन प्रवृत्ता षष्ठी—पुत्रः, पाणिः, कम्बल इति प्रतिसम्बन्धवशात्तत्र तत्र विशेषे पर्यवस्यति ।

**भावबोधिनी**

[ 'अर्थवान् के ग्रहण के प्रसङ्ग में अनर्थक का ग्रहण नहीं होता है'—इसी परिभाषा के आधार पर अन्य स्थलों के समान 'ब्राह्मणभिस्सा, ब्राह्मणभिस्सटा' शब्दों में भी भिस् का ऐस् आदेश नहीं होगा । अतः इनकी आपत्ति के वारण के लिए अङ्गाधिकार की आवश्यकता नहीं है—इस शंका का समाधान दे रहे हैं—] अन्य कार्यों के लिए किया गया 'अङ्गाधिकार' नाम् परे रहते भी दीर्घत्व आदि आदेशों की व्यवस्था करता है—इसलिए इन कार्यों के लिए 'अर्थवद्ग्रहण' परिभाषा का आश्रयण करने की आवश्यकता नहीं पड़ती है । [ अङ्गाधिकार से ही निर्वाह हो जाता है । ] 'अङ्गस्य' यह सम्बन्धसामान्य में षष्ठी है किन्तु अन्य स्थलों पर आवश्यकता के अनुसार विशेष = अर्थों में भी मान ली जाती है ।

**अथ वा—प्रातिपदिकार्थमात्रविवक्षित विभक्त्यर्थमधिक्रियते। तदुत्तरत्र यथायोगं विपरिणम्यते। ततोऽकारान्तादङ्गाद् भिस ऐसित्येवमाद्यपि सम्यक् सम्पन्नं भवति ॥**

**न्यासः**

मादौ। कथं पुनरेषा सम्बन्धसामान्ये षष्ठीति लभ्यते, यावता 'षष्ठी स्थानेयोगा' इत्युक्तम्? एवं मन्यते—न हि सर्वा षष्ठी स्थानेयोगा भवति, अपि तु यस्याः कलादिकं लिङ्गं प्रतिज्ञायते; अन्यथा हि 'उदीचामातः स्थाने' इति स्थानग्रहणमनर्थकं स्यात्। तस्माद् विशिष्टैव या षष्ठी यस्याः कलादिकं लिङ्गं प्रतिज्ञायते सा स्थानेयोगेत्युक्तम्। न चास्याः कलादिकं लिङ्गं प्रतिज्ञायते। ततो नेयं स्थानेयोगा भवितुमर्हति।

**अथ वेत्यादि।** अङ्गशब्दस्य प्रातिपदिकस्य योऽर्थस्तन्मात्रमधिक्रियते, न त्वङ्गस्येत्येतच्छब्दरूपम्। मात्रशब्दो विभक्त्यर्थव्यवच्छेदाय। अत एवाह—**अविवक्षितविभक्त्यर्थमिति।** न विवक्षितो विभक्त्यर्थो यस्मिन्नर्थमात्रे तत् तथोक्तम्। यतश्चैतदेवं तेन षष्ठी स्थानेयोगेति। नात्रेयं परिभाषोपतिष्ठते। अनेकसम्बन्धप्रसङ्गे हि सम्बन्धान्तरव्यवच्छेदार्थमेषा प्रणीता। ततो यत्र सम्बन्धो विवक्ष्यते तत्रैव नियमार्थमुपतिष्ठते, न चात्र कश्चित् सम्बन्धः षष्ठ्या विवक्षितः। केवलं निर्देशार्थ एवास्याः प्रयोगः। अवश्यं हि यया कयाचिद् विभक्त्या निर्देशः कर्त्तव्य इति षष्ठ्या निर्देशः कृतः। ननु च स्वरितेनाधिकारः, स च शब्दधर्मः, नार्थधर्मः, तत् कथं स्वरितरहितोऽर्थः शक्यतेऽधिकर्तुम्? नैष दोषः; अङ्गशब्दप्रतिपादितो योऽर्थः स शब्दात्मक एव। तथा हि यस्मात् प्रत्ययविधिस्तदादेः शब्दस्याङ्गसंज्ञा विहिता। **तदुत्तरत्र यथायोगं विपरिणम्यत इत्यादि।** अर्थवशात् क्वचित् षष्ठ्यन्तत्वेनैव, क्वचिद् विभक्त्यन्तरत्वेन यथा—आढ्यो वैधवेयो देवदत्तः, उच्चान्यस्य गृहाणि, आमन्त्रयस्वैनं देवदत्तमिति। तेन 'अतो भिस ऐस्' इत्यत्र पञ्चम्यन्ततया विभक्तिविपरिणामे हि सत्यकारान्तादङ्गादुत्तरस्य भिस ऐसादेशो भवतीत्येवमाद्यर्थरूपं सम्पन्नं भवति। आदिशब्देन युष्मदस्मद्भ्यामुत्तरस्य ङसोऽश् भवतीति परिगृह्यते। अपिशब्दादवयवषष्ठ्यादयोऽपि परिसम्पन्ना भवन्ति। पूर्वत्र तु परिहारे 'अतो भिस ऐस्' इत्यत्रात इत्येषा निमित्तनिमित्तिसम्बन्धे षष्ठी द्रष्टव्या। तत्रायं सूत्रार्थः—अकारान्तस्याङ्गस्य यो भिस् तस्यैस्भवतीति। तेन ब्राह्मणभिस्सेत्येवमादौ न भवति। अङ्गस्य हि को भिस्? यस्तस्य निमित्तम्। कस्तस्य पुनर्निमित्तम् भिस्? परभूते यस्मिन्नङ्गमित्येवं भवति। कस्मिश्चैतद् भवति? प्रत्यये। न च ब्राह्मणभिस्सेत्येवमादौ भिस्प्रत्यय इति कुतस्तस्यैस्प्रसङ्गः॥ १॥

**पदमञ्जरी**

**अथ वेत्यादि।** पूर्वं विवक्षितोऽपि षष्ठ्यर्थः सामान्यरूप इत्युक्तम्, इदानीं तु प्रयोगसाधुत्वायैव षष्ठ्युच्चार्यते, न त्वर्थविवक्षयेत्युच्यते। अवश्यं च यया कयाचन विभक्त्या निर्देष्टव्यम्। षष्ठ्यनुरोधस्तु बाहुल्येन तदर्थस्योपयोक्ष्यमाणत्वात्। **यथायोगं[1] विभक्तिषु विपरिणम्यत इति।** लोकवदेव। तद्यथा—उच्चानि देवदत्तस्य गृहाणि, आढ्यो वैधवेयो देवदत्तः, आमन्त्रयस्वैनं देवदत्तम्, किमनेन कृत्यं देवदत्तेनेति, तेन 'अतो भिस ऐस्' इत्यत्र पञ्चम्या विपरिणामे सति अकारान्तादङ्गादित्ययमर्थो भवति। आदिशब्देन **'युष्मदस्मद्भ्यां ङसोऽश्'** इत्येवमादिर्गृह्यते। अपिशब्देनैतद्दर्शयति—न केवलं षष्ठ्यर्थ एव स स विशेषः सिध्यति, अपि तु पञ्चम्यर्थेऽपीति। पूर्वत्र तु पक्षे 'अतो भिस एस्' इत्यत्र निमित्तनिमित्तिसम्बन्धे षष्ठी—अङ्गस्य निमित्तं यो भिस्। कश्चाङ्गस्य निमित्तम्? यस्मिन्नङ्गमित्येतद्भवति। कस्मिश्चैतद्भवति? प्रत्यये॥ १॥

**भावबोधिनी**

[ अतः कहीं स्थानषष्ठी और कहीं अवयव-षष्ठी आदि में पर्यवसान सम्भव है। ]

अथवा 'अङ्गस्य' इसमें केवल प्रातिपदिक का अर्थ, जिसमें षष्ठी विभक्ति के अर्थ की विवक्षा नहीं है, का ही अधिकार चलता है। यह अङ्गरूप प्रातिपदिकार्थ आगे के सूत्रों में आवश्यकतानुसार बदलता रहता है। इस कारण—

१. विभक्तिषु—इदं मूले नास्ति।

**विश्नानाम्, प्रश्नानामित्यत्र 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' (व्या० प० ३) इत्येवं न भवति ॥**

**न्यासः**

**यत्नानामिति ।** 'यजयाच' इति नङ्, तदन्तात् षष्ठीबहुवचनम्, नुट् । यदि शकारवतो ग्रहणं न क्रियेत् तदा तत्र नलोपः स्यादेव । स्यादेतत्—दीर्घे कृते नादिति व्यपदेशाभावान्न भविष्यतीति ? अत आह—**सुपि चेत्यादि ।** 'सुपि च' इत्ययं दोर्घोऽजादेशः, तस्य नकारलोपपूर्वविधौ कर्त्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावेन तद्रूपतामापन्ने परत्वाद्दीर्घत्वे यदि कृतेऽपि शकारविशिष्टस्य ग्रहणं न क्रियते तदा स्यादेवात्र नलोपः । कृताकृतप्रसङ्गित्वाच्च । दीर्घत्वं तु नकारलोपे कृते निमित्तविहतत्वान्न प्राप्नोतीति तदनित्यम् । ननु च पूर्वविधौ स्थानिवद्भाव उक्तः, न चायं पूर्वविधिः ? नैष दोषः; अयमपि पूर्वविधिरेव । 'पूर्वस्माद् विधिः पूर्वविधिः' इत्यस्यापि समासस्य तत्राश्रयणात् ।

अथ क्रियमाणेऽपि शकारवतो ग्रहणे कस्मादिह न भवति—विश्नानाम्, प्रश्नामिति, भवति ह्यत्रापि शकारवान्नकारः ? इत्याह—**विश्नानां प्रश्नानामित्यत्रेत्यादि ।** इह हि लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तो यः साक्षान्निर्दिष्टः श्नशब्दस्तस्य ग्रहणम्, न तु लाक्षणिकस्य । विश्नानाम्, प्रश्नानामित्यत्र हि 'च्छ्वोः शूडनुनासिके च' इति शकारे कृते श्नशब्दः सम्पद्यते, स च लाक्षणिकः । तस्मात् ततः परस्य लोपो न भवति । 'राल्लोपः' इत्यतो मण्डूकप्लुतिन्यायेन लोपग्रहणानुवृत्तौ सत्यां सिद्धायां यत् पुनर्लोपग्रहणं क्रियते तद् योगविभागार्थम् । 'श्नान्न' इत्येको योगः, अत्र च नेत्यविभक्तिकोऽयं निर्देशः, लोपग्रहणञ्चानुवर्त्तते, तेनायमर्थो भवति—श्नादुत्तरस्य नकारस्य लोपो भवतीति; ततः 'लोपः' इति द्वितीयो योगः, ततः श्नान्नेत्यतो नेत्यनुवर्त्तते—इष्टे विषये नकारलोपो यथा स्यादिति । तेन लङ्गिकम्पिप्रभृतीनामुपतापशरीरविकारादिषु नलोपः सिद्धो भवति ॥ २३ ॥

**पदमञ्जरी**

तस्यासिद्धत्वान्नशब्द एवायम् । ननु यद्यपि नामि दीर्घादयं लोपः परः, 'सुपि च' इत्येतद्दीर्घत्वमस्मात्परम्, तत्र कृते नादिति व्यपदेशाभावादेव लोपो न भविष्यति ? अत आह—**सुपि चेत्यादि । स्थानिवद्भावादिति ।** पूर्वस्मादपि विधौ स्थानिवद्भावात् ।

अथ गृह्यमाणेऽपि शकारवतो ग्रहणे विश्नानाम्, प्रश्नानामित्यत्र कस्मान्न भवति, ननु सम्प्रति श्नरूपत्वादत्रैव प्राप्नोति ? अत आह—**विश्नानामिति ।** अत्र संग्रहश्लोकः—

नान्नस्यायं विधेयो ननु लुबनिदितां नन्दिता चापि सिध्येद्
हिंसेनं प्राप्तिरेवं क्ङिति सति तु तथा नन्दमानो न सिध्येत् ।
क्ङिन्नाच्चेच्चाथ यत्नाद्बहुवचनविधौ दुष्यति स्थानिवत्त्वाद्
विश्नानां लक्षणोक्तप्रतिपदवचनात्सिद्ध एवेत्यदोषः ॥

लोपनं लुप्, लोप इत्यर्थः । 'राल्लोपः' इति प्रकृते लोपग्रहणं विस्पष्टार्थम् ॥ २३ ॥

**भावबोधिनी**

इत्यादि सूत्र से नङ् = न प्रत्यय, श्चुत्व करने पर यज्ञः, यत्नः बनाते हैं । षष्ठी बहुवचन में आम्, नुट्, दीर्घ करने पर बनते हैं । यदि 'नान्नलोपः' इतना ही सूत्र रहता तो दीर्घ के बाद भी स्थानिवद्भाव से ह्रस्व से परे मानकर नलोप प्रसक्त था । 'श्न' मानने पर दोष नहीं है क्योंकि यहाँ 'श्नम्' नहीं है । ] [ विश्नानाम्, प्रश्नानाम्—इनमें तो 'श्न' से परे ही न मिल जाता है तब लोप होना चाहिए—इसका समाधान यह है—] विश्नानाम्, प्रश्नानाम्—इनमें तो 'लाक्षणिक तथा प्रतिपदोक्तों में प्रतिपदोक्त का ही ग्रहण होता है' इस परिभाषा के कारण नलोप नहीं होता है' [विच्छ + नङ्, प्रच्छ + नङ् में "च्छ्वोः शूडनुनासिके च" इस सूत्र से 'च्छ्' का 'श्' कर देने पर—विश्न प्रश्न बनता है । षष्ठीबहुवचन में दीर्घ के बाद लोप प्रसक्त होता है । परन्तु सूत्र में 'श्न' यह प्रतिपदोक्त है 'विश्न' का 'श्न' सूत्रों से बना होवे से लाक्षणिक है, उसका ग्रहण नहीं होता है । अतः इनमें लोप नहीं होता है । ] ॥२३॥

## ३०२५. अनिदितां हल उपधायाः क्ङिति ॥ २४ ॥ (४१५)

**अनिदितामङ्गानां हलन्तानामुपधाया नकारस्य लोपो भवति क्ङिति प्रत्यये परतः । स्रस्तः, ध्वस्तः । स्रस्यते, ध्वस्यते । सनीस्रस्यते, दनीध्वस्यते ।**

**अनिदितामिति किम् ? नन्द्यते, नानन्द्यते । हल इति किम् ? नीयते, नेनीयते । उपधाया इति किम् ? नह्यते, नानह्यते । क्ङितीति किम् ? स्रंसिता, ध्वंसिता ।**

**❀ अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम् ❀ (का० वा० १) । विलगितः । विकपितः । उपतापशरीरविकारयोरिति किम् ? विलङ्गितः । विकम्पितः ।**

**न्यास**

**अनिदितां हल उपधायाः क्ङिति ॥** इद् इद् येषां त इदितः, न इदितोऽनिदित इति षष्ठीबहुवचनस्य स्थाने सुब्व्यत्ययेनैकवचनम्, तच्चानिदितां, विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्यत आह—**हलन्तानामित्यादि । उपधाया नकारस्येति** । उपधाया इत्येतन्नकारस्य विशेषणम् । **स्रस्तः, ध्वस्त इति** । 'स्रन्सु ध्वन्सु अधःपतने', निष्ठा । **स्रस्यते, ध्वस्यत इति** । भावे कर्मणि वा लकारः । **सनीस्रस्यते, दनीध्वस्यत इति** । यङन्ते एते । 'नीग्वञ्चु' इत्यादिनाऽभ्यासस्य नीगागमः ।

**नन्द्यत इति** । 'टुणदि समृद्धौ' । **नानन्द्यत इति** । यङन्तम् । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । **नेनीयत इति** । नयतेः 'गुणो यङ्लुकोः' इति गुणोऽभ्यासस्य । **नह्यत इति** । 'णह बन्धने' ।

**लङ्गिकम्प्योरित्यादि** । लङ्गिकम्प्योरिदित्त्वान्नलोपो न प्राप्नोति, अतस्तयोरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम् । उपसंख्यानम् = प्रतिपादनम् । उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः । प्रतिपादनं

**पदमञ्जरी**

**अनिदितां हल उपधायाः क्ङिति ॥** इकार इत्संज्ञको येषा ते इदितः, ततोऽन्येऽनिदितः, तेषां विशेषणम्—'हलः' इति । व्यत्ययेन त्वेकवचनम् । **सनीस्रंस्यत इति** । 'नीग्वञ्चु' इत्यादिनाऽभ्यासस्य नीगागमः । **नानन्द्यत इति** । 'टुणदि समृद्धौ' (धा० पा० ६७), यङ्, 'दीर्घोऽकितः' । **नह्यत इति** । क्ङित्परत्वेन नकारो विशेष्यते । 'येन नाव्यवधानमि'(व्या० प० ४६)त्येकेन व्यवधानमाश्रीयते—इत्येतत्तु दुर्ज्ञानमिति भावः ।

**लङ्गिकम्प्योरिति** । इदित्त्वाद्वचनम् । कृच्छ्रप्राप्तिरत्रोपतापः, न रोगः; शरीरविकार इत्येव

**भावबोधिनी**

अनिदित् (इकार की इत्संज्ञा से रहित) अङ्ग जो हलन्त है, उनकी उपधा के नकार का लोप कित् तथा ङित् प्रत्ययों के परे रहते होता है । उदा० स्रस्तः, ध्वस्तः । [स्रन्स् + क्त, ध्वन्स् + क्त] स्रस्यते, ध्वस्यते । [स्रन्स् यक् + त, ध्वंस् + यक् + त यह भाव अथवा कर्म का रूप है । ] सनीस्रस्यते, दनीध्वस्यते । [ पौनः पुन्य अर्थ में स्रन्स्, ध्वन्स् धातुओं से यङ्, द्वित्व "नीग्वञ्चुस्रन्सुध्वन्सु" (७।४।८४) से नीक् = नी आगम करने कर सनीस्रन्स् + य, जश्त्वादि के बाद दनीध्वन्स् + य में नलोप 'त' एत्व करने पर रूप बनते हैं—सनीस्रस्यते, दनीध्वस्यते । ]

अनिदित् अङ्गों का—इसका क्या फल है ? नन्द्यते, नानन्द्यते । [ √टुणदि समृद्धि अर्थ में है । भाव या कर्म के रूप हैं । धातु के 'टु' और 'इ' की इत्संज्ञा के कारण 'इदितो नुम् धातोः' से नुम्, होता है । यह इदित् होने से लोप नहीं होता है । इसी में यङ् प्रत्यय परे न नन्द् + य + ते में 'दीर्घोऽकितः" सूत्र से अभ्यास का दीर्घ करने पर रूप बनता है—नानन्द्यते । यहाँ भी लोप नहीं होता है । ]

हलन्त अङ्ग का—इसका क्या फल है ? नीयते, नेनीयते । [ √णीञ् प्रापणार्थक से यङ् करने पर रूप है, द्वित्व, अभ्यास कार्य के बाद 'गुणो यङ्लुकोः' सूत्र से अभ्यास के इकार का गुण ए करने पर नेनीयते । यहाँ हलन्त न होने से लोप नहीं होता है । ]

**❀ रञ्जेर्णौ मृगरमण उपसंख्यानं कर्त्तव्यम् ❀ (का० वा० ३)। रजयति मृगान्। 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वादुपधाह्रस्वत्वम्। मृगरमण इति किम्? रञ्जयति वस्त्राणि।**

**❀ घिनुणि च रञ्जेरुपसंख्यानं कर्तव्यम् ❀ (का० वा० ४)। रागी। 'त्यजरजभज' इति निपातनाद्वा सिद्धम्।**

**न्यासः**

तु कृतमेव। उपतापः = व्याधिः। शरीरविकारः = शरीरस्यान्यथात्वम्। स पुनरिहोपतापादन्यो गृह्यते, अन्यथा 'उपताप' इत्येवं सिद्धे शरीरविकारग्रहणमनर्थकं स्यात्। **विलगित इति।** 'अगि वगि लगि गत्यर्थाः'। उपतापे विलङ्गित इत्येव प्रयोगो मा भूदित्येवमर्थं लङ्गेर्लोपो विधीयते, न तु रूपसिद्ध्यर्थम्; 'लगे सङ्गे' इत्यस्य प्रकृत्यन्तरस्य तस्य सिद्धत्वात्।

**रञ्जेर्णावित्यादि।** अक्ङिदर्थं वचनम्। मृगरमणम् = मृगक्रीडा। **रजयति मृगानिति।** रममाणान् मृगान् प्रयुङ्क्ते इत्यर्थः।

**रजनरजकरजःसूपसंख्यानमिति।** अत्र भूयः प्रतिपादनं क्रियते—'घञि च भावकरणयोः' इत्यत्र चकारोऽनुक्तसमुच्चयार्थः, तेन रजकादिषु प्रतिपाद्येषु रञ्जेः ष्वुन्नादिप्रत्यये परतो नलोपो भवति। **रजक इति।** 'शिल्पिनि ष्वुन्'। **रजनमिति।** ल्युट्। **रज इति।** 'सर्वधातुभ्योऽसुन्' इत्यसुन्।

**घिनुणि चेत्यादि। रागीति।** सम्पृचान्वादिसूत्रेण घिनुण्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। **'त्यजरजभज' इति निपातनात् सिद्धमिति।** यतोऽयमक्ङिति निमित्ते सम्पृचादिसूत्रे रञ्जेरनुनासिकलोपं कृत्वा

**पदमञ्जरी**

सिद्धत्वात्। शरीरविकारोऽत्र व्याधिरुच्यते, न स्वाभाविकः स्थौल्यादिः। **विलगितः, विकपित इति।** 'गत्यर्थाकर्मक' इत्यादिना कर्त्तरि क्तः।

**मित्त्वादुपधाह्रत्वमिति।** एतदेव मित्त्ववचनं ज्ञापकम्—रञ्जेरक्ङित्यप्युपधालोपो भवतीति।

**भावबोधिनी**

उपधा के नकार का—इसका क्या फल है? नह्यते, नानह्यते। [√णह बन्धनार्थक का यङन्त में रूप है। उपधा में 'न्' नहीं अकार है। अतः नलोप नहीं होता है।] कित् और ङित् परे—इसका क्या फल है? स्रंसिता। ध्वंसिता। [ स्रन्स् + तृच् ध्वन्स् + तृच्, इट्। यहाँ कित् या ङित् नहीं है। अतः न्लोप नहीं होता है।]

❀ अनिदितों के नकार के लोप में उपताप तथा शरीरविकार अर्थों में क्रमशः √लङ्घि और √कम्पि का उपसंख्यान करना चाहिए अर्थात् इदित् होवे पर भी इनके नलोप को करना चाहिए। ❀ उदा० विलगितः। विकपितः। [√लघि और √कपि इनमें इकार की इत्संज्ञा लोप के कारण नुम् और परसवर्ण होते है। यहाँ लोप नहीं प्राप्त है। किन्तु इस वचन से लोप होता है। यह उपताप = व्याधि तथा शरीरविकार = शरीर का विकार अर्थों में होता है।] उपताप तथा शरीरविकार अर्थों में—इसका क्या फल है? विलङ्गितः। विकम्पितः। [ सामान्य किसी अर्थ में 'न्' लोप नहीं होने से अनुस्वार और परसवर्ण का रूप ही रहता है।]

❀ रमण अर्थ में णि परे रहते 'रन्ज्' के न्लोप को कहना चाहिए। ❀ उदा० रजयति मृगान्। [ रञ्ज + णि = इ = रन्जि में नलोप के बाद रूप बनता है। इसका अर्थ है—रमण करते हुए मृगों को लगाता है, उन्हें घुमाता है।] "जनीजृष्वक्नसुरञ्जोऽमन्ताश्च" (गण सूत्र०) इस वचन से मित् हो जावे के कारण [ रजयति में ] उपधा का ह्रस्व [ "मितां ह्रस्वः" सूत्र से ] होता है। मृगों का रमण—इस अर्थ में ही—इसका क्या फल है? रञ्जयति वस्त्राणि। [ यहाँ रंगना अर्थ है। अतः न्लोप नहीं होता है।

❀ घिनुण् प्रत्यय परे रहते भी 'रन्ज्' के न् का लोप करना चाहिए। ❀ उदा० रागी। [ रञ्ज् धातु से "सम्पृचानुरुधा०" ३।२।१४२ सूत्र से घिनुण् = इन् प्रत्यय, न् लोप, उपधावृद्धि और कुत्व करने पर 'रागिन्' बनता

❀ रजक-रजन-रजःसूपसंख्यानं कर्त्तव्यम् ❀ (का० वा० ५) । रजकः । रजनम् । रजः ॥

**३०२६. दंशसञ्जस्वञ्जां शपि ॥ २५ ॥ (२३९६)**

**दंश, सञ्ज, ष्वञ्ज—इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति। दशति। सजति। परिष्वजते ॥**

**३०२७. रञ्जेश्च ॥ २६ ॥ (२३९७)**

**रञ्जेश्च शपि परत उपधाया नकारस्य लोपो भवति। रजति, रजतः, रजन्ति। पृथग्योगकारणमुत्तरार्थम् ॥**

**न्यासः**

निर्देशं करोति, तज्ज्ञापयति—घिनुण्यपि नलोपो भवतीति। ननु च 'रञ्जेश्च' इति लक्षणेनैव शपि नलोपोऽभिनिर्वृत्तः ? नैतदस्ति; यथैव 'इन्धिभवतिभ्याञ्च' इत्यागन्तुकेनेकारेणेन्धेर्निर्देशः, तथेहाप्यागन्तुकेनाकारेण, न तु शपा। न हि 'इन्धिभवतिभ्याञ्च' इत्यत्रेका निर्देशः, अन्यथा हि 'अनिदिताम्' इत्यनुनासिकलोपः स्यात् ॥२४॥

**दंशसञ्जस्वञ्जां शपि** ॥ 'दन्श दंशने', 'ष्वन्ज परिष्वङ्गे' । **परिष्वजते इति** । 'उपसर्गात् सुनोति' इत्यादिना षत्वम् ॥ २५ ॥

**रञ्जेश्च** ॥ अथ पृथग्योगकरणं किमर्थम्, न पूर्वयोग एव रञ्जेर्ग्रहणं क्रियते ? इत्याह—**पृथग्योगकरणमित्यादि** । उत्तरसूत्रे रञ्जेरेवानुवृत्तिर्यथा स्यात्, दंशप्रभृतीनां मा भूदिति ॥ २६ ॥

**पदमञ्जरी**

**रजकरजनरजःसूपसंख्यानमिति** । कित्त्वात्सिद्धम् । कित एते औणादिकाः प्रत्ययाः, 'क्वुन् शिल्पिसंज्ञयोः' (द० उ० ३.५) **रजकः** । पुंयोगान्ङीष्—रजकी । अपुंयोगे तु नैव ङीषा भवितव्यम् । 'रञ्जेः क्युन्'—(द० उ० ५.२४) **रजनः** । स च बाहुलकाट्टित्, रजनी । 'श्रूरञ्जिभ्यां किच्च' (द० उ० ९.५४) इत्यसुन्, शिरः, **रजः** ॥ २४ ॥

**दंशसञ्जस्वञ्जां शपि** ॥ **परिष्वजत इति** । 'स्वञ्ज परिष्वङ्गे' (धा० पा० ९७६), अनुदात्तेत्, 'उपसर्गात्सुनोति' इत्यादिना षत्वम् ॥ २५ ॥

**रञ्जेश्च** ॥ **पृथग्योगकरणमुत्तरार्थमिति** । उत्तरत्र रञ्जेरेवानुवृत्तिर्यथा स्यात्, दंशिप्रभृतीनां मा भूत् ॥ २६ ॥

**भावबोधिनी**

है। प्रथमा एकवचन में दीर्घादि करने पर 'रागी' बनता है। ] अथवा 'त्यज-रज-भज' (३।२।१४२) से निपातन से सिद्ध है। [ अर्थात् इस सूत्र में न् का लोप करके ही निर्देश है। अतः न्लोप करने की अलग से आवश्यकता नहीं है। ] ❀ रजक, रजन तथा रजस्—इनमें नलोप का कथन करना चाहिए। ❀ उदा० रजकः। [ रञ्ज् + ष्वुन् = अक ] रजनम् [ रञ्ज् + ल्युट् = अन ] रजः। [ रञ्ज् + असुन् = अस्। इनमें न्लोप होता है। ] ॥२४॥

दंश्, सञ्ज, ष्वञ्ज्—इन धातुरूप अङ्गों की उपधा के नकार का लोप शप् परे होता है। उदा० दशति। सजति। परिष्वजते। [ दंश् = दन्श् + शप् = अ + ति न्लोप होता है। परिष्वजते "उपसर्गात् सुनोति" इत्यादि सूत्र से मूर्धन्य होता है। शप् से भिन्न स्थलों में नहीं होता है। इसीलिये दंशकः, दंशनम्, दंष्ट्रा आदि में अनुनासिक रहता है। ] ॥ २५ ॥

रञ्ज् धातु की भी उपधा के न् का लोप शप् परे होता है। उदा० रजति, रजतः, रजन्ति। [ रञ्ज् + शप् = अ + ति आदि रूपों में न् लोप होता है। अन्यत्र नहीं होता है। ] इस सूत्र को अलग से बनाने का उद्देश्य आगे वाले सूत्र में अनुवृत्ति करना है। [ पूर्वसूत्र में पाठ होनेपर सभी तीनों धातुओं की अनुवृत्ति प्रसक्त होती। ] ॥२६॥

**३०२८. घञि च भावकरणयोः ॥ २७ ॥ (३१८८)**

**भावकरणवाचिनि घञि परतो रञ्जेरुपधाया नकारस्य लोपो भवति। भावे—आश्चर्यो रागः। विचित्रो रागः। करणे–रज्यतेऽनेनेति रागः।**

**भावकरणयोरिति किम् ? रजन्ति तस्मिन्निति रङ्गः ॥**

**३०२९. स्यदो जवे ॥ २८ ॥ (३१८९)**

**जवेऽभिधेये 'स्यदः' इति घञि निपात्यते। स्यन्देर्नलोपो वृद्ध्यभावश्च। इक्प्रकरणात् 'न धातुलोपः' (१.१.४) इति प्रतिषेधो नास्ति—गोस्यदः, अश्वस्यदः।**

**जव इति किम् ? तैलस्यन्दः। घृतस्यन्दः ॥**

**न्यासः**

**घञि च भावकरणयोः ॥ रज्यतेऽनेनेति राग इति।** 'हलश्च' इति घञ्। एवं रङ्ग इत्यत्रपि ॥२७॥

**स्यदो जवे ॥** जवः = वेगः, गतिविशेषः। **वृद्ध्यभावश्चेति।** 'अत उपधायाः' इति। नलोपे कृते 'अत उपधायाः' इति वृद्धिः प्राप्नोति, अतस्तदभावो निपात्यते। ननु च 'न धातुलोप आर्धधातुके' इत्यनेनैव वृद्धिप्रतिषेधः सिद्धः, तत् किमर्थं वृद्ध्यभावोनिपात्यते ? इत्याह—**इक्प्रकरणादित्यादि।** तत्र 'इको गुणवृद्धी' इत्यत इगिति प्रकृतमनुवर्त्तते, तेनेग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, न चेयमिग्लक्षणा वृद्धिः, किन्तूपधालक्षणा। न चेयमुपधालक्षणा वृद्धिरिग्लक्षणा भवति, निर्दिष्टस्थानिकत्वात्। तेन नास्त्यत्र तस्याः प्रतिषेधः। **गोस्यद इति।** भावे घञ्। गवां स्यद इति गोस्यदः, 'कृद्योगा षष्ठी समस्यते' इति समासः। **तैलस्यन्द इति ॥** तैलस्य स्रवणमित्यर्थः। 'स्यन्दू स्रवणे' ॥ २८ ॥

**पदमञ्जरी**

**घञि च भावकरणयोः ॥ राग इति।** 'हलश्च' इति करणाधिकरणयोर्घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम् ॥ २७ ॥

**स्यदो जवे ॥** जवः = वेगः।

**गोस्यद इति।** गोर्गतिविषयो वेग इत्यर्थः। **तैलस्यन्द इति।** तैलस्य स्रवणमित्यर्थः ॥ २८ ॥

**भावबोधिनी**

भाव तथा करण-वाची घञ् प्रत्यय के परे रहते रन्ज् धातु की उपधा के नकार का लोप होता है। उदा०—भाव अर्थ में—आश्चर्यः रागः। विचित्रः रागः। [ रन्ज् + घञ् = अ में न्‌लोप, कुत्व, उपधावृद्धि होती है। ] करण अर्थ में—रज्यते अनेन—इसमें भी 'रागः' बनता है। [ रञ्ज् + घञ् = अ, शेष पूर्ववत्। ]

भाव तथा करण—इन्हीं में—इसका क्या फल है ? रजन्ति तस्मिन्—इस अर्थ में 'रङ्गः'। [ यहाँ भाव या करण अर्थ नहीं होने से अधिकरण अर्थ होने से न्‌लोप नहीं होता है। अनुस्वार, परसवर्ण होता है। ] ॥ २७ ॥

'जव' (वेग) अर्थ रहनेपर 'घञ्' परे 'स्यद' यह निपातित होता है। 'स्यन्द' के न् का 'लोप' तथा वृद्धि का अभाव भी निपातित होता है। इक् प्रकरण होने से 'न धातुलोप आर्धधातुके' इससे वृद्धि का प्रतिषेध नहीं होता है। [ इस कारण वृद्धि का अभाव निपातित करना आवश्यक है। ] उदा०—गोस्यदः। अश्वस्यदः। [ स्यन्द + घञ् = अ, न् का लोप, वृद्धि का अभाव। षष्ठीतत्पुरुष समास। धात्ववयव न् का लोप होने से "न धातुलोप आर्धधातुके" सूत्र से वृद्धि का निषेध हो सकता है। तब वृद्धि के अभाव के निपातन की क्या आवश्यकता ? इसका उत्तर यह है कि 'इको-गुणवृद्धी' से सम्बद्ध अर्थात् इक् के स्थान पर प्राप्त गुण और वृद्धि का निषेध उक्त सूत्र करता है। यहाँ तो "अत उपधायाः" से वृद्धि प्राप्त है। अतः उसका वारण निपातन से ही करना होता है। ]

जव = वेग अर्थ में—इसका क्या फल है ? तैलस्यन्दः। घृतस्यन्दः। [ यहाँ प्रस्रवण = बहना अर्थ होने के कारण न्‌लोप नहीं होता है। ] ॥ २८ ॥

**३०३०. अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ २९ ॥ (३१८७)**

**अवोद, एध, ओद्म, प्रश्रथ, हिमश्रथ—इत्येते निपात्यन्ते ।**

**अवोद इति, उन्देरवपूर्वस्य घञि नलोपो निपात्यते ।**

**एध इति, अन्धेर्घञि नलोपो गुणश्च निपात्यते 'न धातुलोप आर्धधातुके' (१.१.४) इति हि प्रतिषेधः स्यात् ।**

**ओद्म इति, उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते ।**

**प्रश्रथ इति, प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च निपात्यते ।**

**हिमश्रथ इति, हिमपूर्वस्य श्रन्थेर्घञ्येव निपातनम् ॥**

**३०३१. नाञ्चेः पूजायाम् ॥ ३० ॥ (४२४)**

**न्यासः**

**अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ अवोद इति ।** उपसर्गेण सह 'आद् गुणः' । 'न धातुलोप' इत्यादिना प्रतिषेधो न भवति; अनिग्लक्षणत्वाद् गुणस्य ।

**गुणश्च निपात्यत इति ।** ननु च 'पुगन्तलघूपधस्य' इत्येवं गुणः सिद्धः, तत् किमर्थं निपात्यते ? इत्याह—**न धातुलोप इत्यादि ।**

**औणादिके मन्प्रत्यय इति ।** 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावामदियक्षिनीभ्यो मन्' इत्यर्त्यादिभ्यो विधीयमानो बहुलवचनादुन्देरपि भवति ।

**श्रन्थेरिति ।** 'श्रन्थ मोचनप्रतिहर्षणयोः' इत्यस्य ॥ २९ ॥

**नाञ्चेः पूजायाम् ॥** 'अनिदिताम्' इत्यनेन प्राप्तस्य नलोपस्यायं प्रतिषेधः । एतस्मादेव प्रतिषेधान्न-

**पदमञ्जरी**

**अवोदैधौद्मप्रश्रथहिमश्रथाः ॥** 'उन्दी क्लेदने' (धा० पा० १४५७), 'इन्धी दीप्तौ' (धा० पा० १४४८), 'श्रन्थ मोचनहर्षयोः' (धा० पा० १५१०) ॥ २९ ॥

**नाञ्चेः पूजायाम् ॥** उदाहरणे 'मतिबुद्धिपूजार्थे' इत्यादिना वर्त्तमाने क्तः, 'क्तस्य च वर्त्तमाने' इति

**भावबोधिनी**

अवोद, एध, ओद्म, प्रश्रथ और हिमश्रथ—ये निपातित होते हैं ।

अवोदः—यह अवपूर्वक 'उन्द्' धातु से घञ् = अ प्रत्यय में नलोप निपातित होता है । [ अव + उन्द् + घञ् = अ, न्लोप, गुण । यहाँ भी पूर्वपर का गुण होवे से "न धातुलोप" से गुणनिषेध नहीं होता है । √उन्दी क्लेदन अर्थ में है । अतः अवक्लेदन = गीला करना यह अर्थ है ।]

एधः—यह [ 'इन्धी दीप्तौ' ] इन्ध् से घञ् प्रत्यय में नलोप और गुण निपातित होता है, क्योंकि 'न धातुलोप आर्धधातुके' सूत्र से गुणनिषेध होने लगता । [ इसलिए गुण भी निपातन से करना है । ] एधः = इन्धन, दीप्त होना अर्थ है ।]

ओद्म—'उन्द्' धातु से औणादिक मन् प्रत्यय करने पर न् का लोप और गुण निपातित होता है ।

प्रश्रथः—प्रपूर्वक श्रन्थ् धातु से घञ् परे रहते नलोप तथा वृद्धि का अभाव निपातित होता है ।

हिमश्रथः—हिमपूर्वक 'श्रन्थ' धातु से घञ् प्रत्यय परे ही निपातन होता है अर्थात् न्लोप और वृद्धि का अभाव निपासित होता है । [√श्रन्थ यह मोचन और प्रतिहर्षण दो अर्थों में है । अतः प्रश्रथः = छोड़ना और प्रतिहर्षित होना । हिमश्रथः = हिम का छोड़ना यह अर्थ है । ] ॥ २९ ॥

'अञ्च्' धातु के नकार का लोप पूजा अर्थ में नहीं होता है । उदा०—अञ्चिता अस्य गुरवः । अञ्चितम् इव

**अञ्चेः पूजायामर्थे नकारस्य लोपो न भवति। अञ्चिता अस्य गुरवः। अञ्चितमिव शिरो वहति। 'अञ्चेः पूजायाम्' (७.२.५३) इति इडागमः।**

**पूजायामिति किम्? उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः। 'यस्य विभाषा' (७२.१५) इतीट्प्रतिषेधः॥**

## ३०३२. क्त्वि स्कन्दिस्यन्दोः ॥ ३१ ॥ (३३२१)

**क्त्वाप्रत्यये परतः स्कन्द, स्यन्द—इत्येतयोर्नकारलोपो न भवति। स्कन्त्वा। स्यन्त्वा। इन्देरूदित्वात् ( धा० पा० ७६१ ) पक्षे इडागमः (७.२.४४) स्यन्दित्वा। तत्र यदा इडागमस्तदा 'न क्त्वा सेट्' (१.२.२८) इति कित्त्वप्रतिषेधादेव नलोपाभावः॥**

### न्यासः

कारोऽयं कृतचुत्वो निर्दिश्यत इति गम्यते। अथ 'नाञ्चेरिटि' इत्येव कस्मान्नोक्तम्, एवमपि ह्युच्यमाने पूजायामेव प्रतिषेधो लभ्येत, तथा हि—पूजायामेवाञ्चतेरिड् विहितः? अशक्यमेवं वक्तुम्, 'अञ्चेः पूजायाम्' इत्यनेन क्त्वानिष्ठयोर्नित्यमिड् विहितः। यस्तु क्त्वाप्रत्ययः 'उदितो वा' इति पाक्षिक इडागमः, स पूजायामपि भवति, तत्रैवमुच्यमाने यदा क्त्वाप्रत्ययस्य पूजायामिण् न स्यात्, तदा प्रतिषेधो न स्यात्—गुरुमङ्क्त्वेति। नेत्येतत् प्रतिषेधवचनमुत्तरार्थम्। इह 'अञ्चेरपूजायाम्' इत्युच्यमाने सतीष्टं सिध्यत्येव। **अञ्चिता अस्य गुरव इति।** 'मतिबुद्धि' इत्यादिना क्तः, 'क्तस्य च वर्तमाने' इति षष्ठी। **यस्य विभाषेतीट्प्रतिषेध इति। अञ्चतेः** 'उदितो वा' इति विकल्पेनेड्विधानात्॥ ३०॥

**क्त्वि स्कन्दिस्यन्दोः॥ स्कन्त्वेति।** 'स्कन्दिर् गतिशोषणयोः'। **पक्षे इडागम इति।** 'स्वरति' इत्यादिना। **कित्त्वप्रतिषेधाद् नलोपाभाव इति।** 'अनिदिताम्' इत्यादिना हि क्ङिति नलोपो विधीयते। सेट्क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधः कृतः, ततश्चेडागमपक्षे कित्त्वाभावादेव नलोपाभाव इति नासाविमं योगं प्रयोजयति। तेन न सेट्क्त्वाप्रत्ययस्योदाहरणं प्रदर्शितमित्यभिप्रायः॥ ३१॥

### पदमञ्जरी

कर्त्तरि षष्ठी। अथ 'नाञ्चेरिटि' इत्येव कस्मान्नोक्तम्? नैवं शक्यं वक्तुम्; इह हि न स्यात्—समञ्चते गुरुः, गुरुं समञ्च्यागत इति। इड्विधौ **वृत्तिकारो** वक्ष्यति—"निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधे प्राप्ते क्त्वायाम्, तथा 'उदितो वा' इति विकल्पे प्राप्ते पूजायां नित्यमिड्विधीयते" इति। तेन गुरुमङ्क्त्वेति पूजायामसाधुरेव॥३०॥

**क्त्वि स्कन्दिस्यन्दोः॥ न क्त्वा सेडिति कित्त्वप्रतिषेधादेवेति।** तेन सेटः क्त्वाप्रत्यस्योदाहरणं न प्रदर्शितमिति भावः॥ ३१॥

### भावबोधिनी

शिरो वहति। [ अञ्च् + क्त, इट् होनेपर 'अनिदिताम्' सूत्र से प्राप्त नलोप का इस सूत्र से निषेध हो जाता है। ] यहाँ "अञ्चेः पूजायाम्' (७।२।५३) सूत्र से इट् आगम होता है।

पूजा अर्थ में—इसका क्या फल है? उदक्तम् उदकं कूपात्। उद्धृत = निकाला—यह अर्थ है। [ उद् + अञ्च + क्त में नलोप, कुत्वादि होता है। ] "यस्य विभाषा" (७।२।१५) सूत्र से इट् का निषेध होता है॥ ३०॥

क्त्वा प्रत्यय परे रहते स्कन्द और स्यन्द—इनके नकार का लोप नहीं होता है। उदा०—स्कन्त्वा। स्यन्त्वा। 'स्पन्दू प्रस्रवणे' यह ऊदित् धातु है इसलिए वैकल्पिक होने से पक्ष में इट् का आगम भी होता है—स्यन्दित्वा। इनमें जब इट् का आगम होता है तब "न क्त्वा सेट्" (१।२।१८) इससे कित्व का प्रतिषेध हो जाने से ही नलोप का अभाव होता है, नलोप नहीं होता है। [ 'स्वरतिसूतिसूयतिधूञूदितो वा" ७।२।४४ से ऊदित् को विकल्प से इट् होता है। अतः इट् होनेपर सेट् क्त्वा कित् न होने से प्रस्तुत सूत्र से नलोपनिषेध की आवश्यकता नहीं है क्योंकि "अनिदिताम्" यह सूत्र कित् झल् परे ही नलोप करता है। इट् होनेपर ऐसा सम्भव ही नहीं रह जाता है। ]॥ ३१॥

**३०३३. जान्तनशां विभाषा ॥ ३२ ॥ (३३३०)**

जान्तानामङ्गानां नशेश्च क्त्वाप्रत्यये परतो विभाषा नकारलोपो न भवति। रङ्क्त्वा, रक्त्वा। भङ्क्त्वा, भक्त्वा।

नशः—नष्ट्वा, नंष्ट्वा। इट्पक्षे[1]—नशित्वा[1] ॥

**३०३४. भञ्जेश्च चिणि ॥ ३३ ॥ (२७५४)**

भञ्जेश्च चिणि परतो विभाषा नकारलोपो भवति। अभाजि, अभञ्जि।

अप्राप्तोऽयं [2]नलोपः पक्षे विधीयते, ततो नेति नानुवर्तते ॥

**न्यासः**

**जान्तनशां विभाषा ॥ नष्ट्वा, नंष्ट्वेति।** नशेर्व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्। 'मस्जिनशोर्झलि' इति नुमागमः। 'ज' इति वर्णग्रहणम्, तत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयतीत्यन्तरेणाप्यन्तग्रहणेन तदन्तविधौ सिद्धे यदिहान्तग्रहणं क्रियते तद्विस्पष्टार्थम्। यत्त्वाह—अनुपधाया अपि पक्षे लोपस्य प्रतिषेधार्थमन्तग्रहणम्, तद्यथा—भक्त्वा, भङ्क्त्वेति, तन्न; केन पुनरनुपधाभूतस्य नकारस्य लोपः प्राप्नोति, यतोऽसौ पक्षे प्रतिषिध्यते। उपधानकारस्य लोप उक्तः, न चायमुपधानकारः। एवं तर्हि विधिविषयादन्यत्रापि क्वचिल्लोपो नकारस्य भवतीति ज्ञापयति। तेनैतत् सिद्धं भवति —मग्नः, मग्नवानिति। ततश्चैतदर्थम् 'मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गलोपार्थम्' इत्येतन्न वक्तव्यं भवति। तत्र यदीदं नोच्येत, तदा यस्मिन् पक्षे क्त्वाप्रत्यये[3] नलोपो न भवति तस्मिन् पक्षे 'स्कोः संयोगाद्योरन्ते च' इति सलोपोऽपि न स्यात्; असंयोगादित्वात्। तस्माद् वक्तव्यमेवेदम्—मस्जेरन्त्यात् पूर्वं नुममिच्छन्तीति। ततश्चानुपधाभूतस्य नकारस्य लोपभाविनोऽसम्भवादनुपधाभूतस्य नकारस्य लोपप्रतिषेधो यथा स्यादेवमर्थमन्तग्रहणं न युज्यते ॥ ३२ ॥

**भञ्जेश्च चिणि ॥** चकारः 'विभाषा' इत्यनुकर्षणार्थः। **अभाजीति।** पूर्वमेव व्युत्पादितम्।

**अप्राप्तोऽयं [3]नकारलोप इति।** क्ङिति नलोपविधानात्, चिणश्चाक्ङित्वात्। अतः प्रतिषेध्याभावान्नेति नानुवर्त्तते। तेन विधिरेवायमित्यभिप्रायः ॥ ३३ ॥

**पदमञ्जरी**

**जान्तनशां विभाषा ॥ भक्त्वा, भङ्क्त्वा, नष्ट्वा, नंष्ट्वा।** 'मस्जिनशोर्झलि' इति नुम्। अन्तग्रहणं विस्पष्टार्थम्; वर्णग्रहणादेव तदन्तविधिलाभात् ॥ ३२ ॥ ३३ ॥

**भावबोधिनी**

जकारान्त अङ्गों के तथा नश् धातु के नकार का लोप क्त्वा प्रत्यय परे रहते विकल्प से नहीं होता है। उदा० रङ्क्त्वा, रक्त्वा। [ रञ्ज् + क्त्वा में नलोप कर देने पर रज् + त्वा, कुत्व करने पर रक्त्वा। नलोप न होने पर कुत्व के बाद परसवर्ण करने पर रङ्क्त्वा। ] भङ्क्त्वा, भक्त्वा। [ भञ्ज् + क्त्वा, नलोप, कुत्व। नलोपाभाव, कुत्व परसवर्ण में प्रथम रूप होता है। ]

नश् का उदा० नष्ट्वा, नंष्ट्वा। इट् पक्ष में—नशित्वा। [ णश् अदर्शनार्थक धातु से क्त्वा प्रत्यय में "मस्जिनशोर्झलि" सूत्र से नुम् = न् आगम होता है। "व्रश्चभ्रस्ज" इत्यादि सूत्र से श् का ष्, ष्टुत्व न न् ष् + ट्वा। नलोपाभाव पक्ष में अनुस्वार—नंष्ट्वा। नलोपपक्ष में—नष्ट्वा। वैकल्पिक इट्पक्ष में—नशित्वा] ॥ ३२ ॥

चिण् परे रहते भञ्ज धातु के नकार का लोप विकल्प से होता है। उदा० अभाजि। अभञ्जि। [ भञ्ज् + लुङ् भाव या कर्म अर्थ में, अट् आगम, च्लि का चिण्—अभञ्ज् + चिण् + त, विकल्प से न् का लोप, 'चिणो लुक्' से तलोप, उपधा की वृद्धि—अभाजि। पक्ष में उपधा में अ न होने से वृद्धि नहीं होती है—अभञ्जि। ]

---

१-१. पाठोऽयं बहुषु पुस्तकेषु नास्ति।  २-२. काशिकायां 'नलोपः' इति पाठः।

३. "क्त्वाप्रत्ययेन लोपो न भवतीति प्रकाशितपाठोऽसङ्गतः।

**३०३५. शास इदङ्हलोः ॥ ३४ ॥ (२४८६)**

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति । अन्वशिषत्, अन्वशिषताम्, अन्वशिषन् । हलादौ किति—शिष्टः । शिष्टवान् । ङिति—आवां शिष्वः । वयं शिष्मः । इत्त्वे कृते 'शासिवसिघसीनां च' (८.३.६०) इति षत्वम् ।

अङ्हलोरिति किम् ? शासति । शशासतुः, शशासुः ।

❀ क्वौ च शास इत्वं भवतीति वक्तव्यम् ❀(म. भा.) । आर्यान् शास्तीति आर्यशीः । मित्रशीः ।

**न्यासः**

**शास इदङ्हलोः ॥ अन्वशिषदिति ।** 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति च्लेरङादेशः । **शिष्वः, शिष्म इति ।** वस्मसोरुदाहरणे, अदादित्वाच्छपो लुक् । **शासतीति ।** 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, 'अदभ्यस्तात्' इति झेरदादेशः । **शशासतुः, शशासुरिति ।** लिट्यतुस्युसि रूपे ।

**क्वौ च शास इति ।** क्वौ परतः शासेरित्त्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—यद्यपि कृताकृतप्रसङ्गित्वेन नित्यत्वादत्र पूर्वमित्त्वात् क्विब्लोपस्य विधानम्, तथापि लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनात्रेत्त्वं भविष्यति ।

'वर्णाश्रये प्रत्ययलक्षणं नास्ति' इत्येतत्तु प्रायिकम् । तथा हि—वर्णाश्रयेऽपि क्वचिद् भवति । तद्यथा—अतृणेडिति । अत्र 'तृणह इम्' इतीमागमः । अथ वा—वर्णाश्रयमेवेदमित्त्वं न भवति । कथम् ? अङ्ग्रहणेनात्र प्रत्ययः सन्निधापितः, स हल्ग्रहणेन विशिष्यते । अत एव वृत्तावुक्तम्—'हलादौ क्ङिति' इति । तेन यद्यपि क्विब् वर्णात्मकः प्रत्ययः, तथापि नासौ वर्णरूपत्वेनाश्रीयते, किं तर्हि ? प्रत्ययरूपत्वेन ।

**पदमञ्जरी**

**शास इदङ्हलोः ॥** अङ्गाक्षिप्तस्य प्रत्ययस्य हला विशेषणात्तदादिविधिरित्याह—**हलादौ च क्ङितीति ।**

**क्वौ च शास इति ।** नित्यत्वात्क्विपो लोपे हलादेरभावाद्वचनम् । प्रत्ययलक्षणेन तु सिद्धम्, यत्र कार्ये वर्णरूपमेव निमि[1]त्तत्वेनाश्रीयते तद्वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति, यथा—रायः कुलं रैकुलमित्यायादेशः । यत्तु वर्णविशिष्टप्रत्ययनिमित्तं तद्भवत्येव, यथा—अतृणेडिति, हलादौ पिति सार्वधातुके

**भावबोधिनी**

प्राप्त न होने वाले इस नलोप का पक्ष में विधान किया जाता है, इस लिए 'न' इसकी अनुवृत्ति नहीं होती है । [ "अनिदिताम्" यह सूत्र कित् ङित् झलादि परे ही नलोप करता है । चिण् कित् या ङित् नहीं है । अतः नलोप की प्राप्ति नहीं है । तब प्रतिषेध्य विषय न होने के कारण 'न' इस निषेधार्थक की अनुवृत्ति न होकर विधि अंश का ही विकल्प होने से नलोप विकल्प से फलित होता है । ] ॥ ३३ ॥

शास् धातु की उपधा का इकार आदेश होता है अङ् परे रहते और हलादि कित् या ङित् प्रत्यय के परे रहते । उदा० अन्वशिषत्, अन्वशिषताम्, अन्वशिषन् । [ अनुपूर्वक शास् धातु से लुङ् प्रथम पुरुष में अनु अट् + शास् + च्लि + त्—यहाँ पर "सर्त्तिशास्त्यर्तिभ्यश्च" सूत्र से च्लि का अङ् आदेश, प्रस्तुत सूत्र से शास् की उपधा = आ का इकारादेश—अनु अ शिस् + अ + ति, "शासिवसिघसीनां च" सूत्र से स् का ष्, यण्, इलोप—अन्व शिष् अ त् = अन्वशिषत् । द्विवचन में तस् का ताम्—अन्वशिषताम् । बहुवचन में झि = अन्ति इलोप, संयोगान्तलोप—अन्वशिषन् । ] हलादि कित् और ङित् परे के उदा०—शिष्टः । शिष्टवान् । [ शास् + क्त, आ का इ, स् का ष्, ष्टुत्व । इसी प्रकार शास् + क्तवतु में भी होता है । ] ङित् के उदा० आवां शिष्वः, वयं शिष्मः । [ शास् + लट् = वस्, मस्, आ का इ, स् का ष् ] इत्व करने के बाद "शासिवसिघसीनां च" (८।३।६०) सूत्र से स् का ष् होता है ।]

1. 'निमित्तत्वे नाश्रीयते' इति व्यस्तोऽपपाठः ।

**यस्मात् शासेरङ् विहितः 'शासु अनुशिष्टौ' (धा. पा. १०७६) इति, तस्यैवेदं ग्रहणमिष्यते। 'आङः शासु इच्छायाम्' (धा. पा. १०२३) इत्यस्य न भवति—आशास्ते, आशास्यमानः।**

**❀ क्विप्प्रत्यये तु तस्यापि भवतीति वक्तव्यम्❀ (म. भा.)। आशीः, आशिषौ, आशिषः।**

**न्यासः**

**आर्यशीरिति**। सकारस्य रुत्वे कृते 'र्वोरुपधाया दीर्घः' इति दीर्घः।

अथाशास्ते, आशास्यमान इत्यत्र कथमित्वं न भवति? इत्याह—**यस्माच्छासेरित्यादि**। द्वाविमौ शासी—एकः परस्मैपदी, अपरस्त्वात्मनेपदी, तत्र यस्मात् शासेरङ् विहितम् तस्येदं ग्रहणम्, स च 'शासु अनुशिष्टौ' इत्यस्य 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति विधीयते, तत्र 'परस्मैपदेषु' इत्यनुवर्त्तते, अस्यैव परस्मैपदे सम्भवात्। कथं पुनः सामान्येनोपादाने परस्मैपदिन एव विज्ञायते? अङः संसर्गात्। संसर्गे हि सति विशेष-परिच्छेदो भवति, तथा हि—सकिशोरा धेनुरानीयतामित्युक्ते किशोरेण संसर्गाद् वडवायामेव सम्प्रत्ययो भवति। इह शासेरित्वं प्रत्यङ् निमित्तत्वेनोपात्तः, अतस्तेन संसर्गाद् विशिष्ट एव परस्मैपदी शासिः प्रतीयते। ननु चाङेवात्र केवलो निमित्तत्वेन नोपात्तः, किं तर्हि? हलपि, स चात्मनेपदिनोऽपि सम्भवति, तत् कुतोऽङ्संसर्गाद् विशिष्टस्य शासेः प्रतीतिः? नैतदस्ति; साधारणासाधारणसम्बन्धिसन्निपाते यस्यासाधारणः सन्निहितः सम्बन्धी तत्रैव प्रत्ययो जायते। तथा हि—वृद्धानां किशोराणाञ्च मध्ये धेनवोऽनुबध्यन्तामित्युक्ते वडवा एव प्रतीयन्ते। तस्मादङ्हलोरुपादानेऽपि यस्मादङ् विहितस्तस्यैव ग्रहणं युक्तम्।

यदि तर्हि यतोऽङ् विहितस्तस्येदं ग्रहणम्, एवं सति यथाशास्ते, आशास्यमान इत्यत्र न भवति तथा क्विप्प्रत्ययेऽपि न स्यात्? इत्यत आह—**क्विप्प्रत्यये त्वित्यादि**। **क्षियाशीरित्यादि**। अथ वा—नैव तस्या ह्यपि क्विप्रत्यय इत्येवं वक्तव्यमिति। विकल्पार्थो वाशब्दः। अथ तशब्दः किमर्थः, आन्तरतम्याद् दीर्घो मा भूदिति चेत्? 'नैतदस्ति; भाव्यमानोऽण् सवर्णान्न गृह्णातीति' न भविष्यति? एवं तर्हि विस्पष्टार्थः। अथासन्देहार्थः कस्मान्न भवति? 'शाश यङ्हलोः' इत्युच्यमाने सन्देहः स्यात्—किमयमिकारः कृतयणादेशो निर्दिष्टः? आहो-

**पदमञ्जरी**

विधीयमानस्तृणह इमागमः, इदमपीत्वं हलादौ क्ङिति प्रत्यये विधीयमानं लोपेऽपि भवति। **आर्यशीरिति**। सकारस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घः।

अथाऽऽशास्ते, आशास्यमान इत्यत्र कस्मान्न भवति? इत्याह—**यस्माच्छासेरिति**। अङ्विधौ तावत्परस्मैपदिभ्यामर्तिसर्तिभ्यां साहचर्यात्परस्मैपदिनः शासेर्ग्रहणम्, इहाप्यङ्संसर्गाद्विशिष्टस्य शासेर्ग्रहणं संसर्गस्य विशेषावगतिहेतुत्वात्। यथा—सवत्सा धेनुरानीयतां सकलभा सकिशोरेति गवादिर्धेनुः प्रतीयते। ननु च नात्राङ् केवलो निमित्तम्, अपि तु हलादिरपि, स चात्मनेपदिनोऽपि सम्भवति, तत्कुतः संसर्गाद्वि-शिष्टस्य प्रतीतिः? नैष दोषः; साधारणासाधारणसम्बन्धिसन्निपाते यस्यासाधारणः सम्बन्धी सन्निहितस्तस्यैव ग्रहणं भवति, यथा 'वृद्धानां किशोरीणां च मध्ये धेनवो बध्यन्ते' इत्युक्ते बडवा धेनवो बध्यन्ते। तस्मादङ्-

**भावबोधिनी**

* क्वि परे भी शास् का इत्व होता है—ऐसा कहना चाहिए। * उदा० आर्यान् शास्ति—इस अर्थ में—आर्यशीः। [ मित्राणि शास्ति—इसमें ] मित्रशीः। [ आर्यान् उपपद शास् से क्विप् और सर्वापहारी लोप के बाद, उपपद समास, आ का इ—आर्यशिस्, सकार का रुत्व, "र्वोरुपधायाः दीर्घ इकः" सूत्र से उपधा का दीर्घ होने पर रूप बनता है—आर्यशीः। इसी प्रकार मित्राणि उपपद शास् का रूप 'मित्रशीः' है। ]

जिस् शास् धातु (शास अनुशिष्टौ) से [ "सर्त्तिशास्त्यर्तिभ्यश्च" सूत्र से च्लि का ] अङ् विधान किया गया है, उसी का ग्रहण यहाँ इष्ट है। इसलिये 'आङ शासु इच्छायाम्' इस 'शास्' का ग्रहण नहीं होता है। अतः आशास्ते, आशास्यमानः। [ इनमें हलादि ङित् और कित् परे रहते भी आ का ई नहीं होता है। ]

'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' (८. २. १०४) इति निपातनाद्वा सिद्धम् ॥

**३०३६. शा हौ ॥ ३५ ॥ (२४८७)**

**शासो हौ परतः 'शा' इत्ययमादेशो भवति । अनुशाधि । प्रशाधि ।**

**'उपधायाः' इति निवृत्तम्, ततः 'शासः' इति स्थानेयोगा (१.१.४९) षष्ठी भवति ।**

**'क्ङिति' इत्येतदपि निवृत्तम् । तेन यदा 'वा छन्दसि' (३.४.८८) इति पित्त्वं हिशब्दस्य, तदाप्यादेशो भवत्येव । शाधीत्याद्युदात्तमपि छन्दसि दृश्यते ॥**

**न्यासः**

स्विदीकारः ? अथवा यकार इति ? नास्ति सन्देहः, यदयम् 'तदशिष्यं संज्ञाप्रमाणत्वात्' इति निर्देशं करोति, ततो निश्चीयते—इकारोऽयम्, न हीकारः, नापि यकार इति ॥ ३४ ॥

**शा हौ** ॥ यद्यत्र 'उपधायाः' इति वर्त्तते, ततो यथा पूर्वसूत्रे 'शासः' इत्यवयवभूता षष्ठी, तथेहापि स्यात्, एवञ्चोपधाया एवायमादेशः प्रसज्येत, सर्वादेशश्चेष्यत इति मनसि कृत्वाह—**उपधाया इति निवृत्तमिति** । तद्धि उपधाग्रहणं क्ङिद्ग्रहणेन सम्बद्धम्, इह च क्ङिद्ग्रहणं निवृत्तम् । तस्माद् 'उपधायाः' इत्यस्यापि निवृत्तिर्भवति ।

**क्ङितीत्येतदपि निवृत्तमिति** । 'अनुदात्तोपदेश' इत्यादौ सूत्रे पुनः क्ङिद्ग्रहणात् । **तेनेत्यादिना** क्ङिद्ग्रहणे निवृत्ते यदिष्टं सम्पद्यते तद्दर्शयति । यद्यत्र 'क्ङिति' इत्येतदनुवर्त्तेत ततो 'वा च्छन्दसि' इति यस्मिन् पक्षे हेरपित्त्वं न भवति तस्मिन् पक्षे 'सार्वधातुकमपित्' इति वचनात् ङित्त्वं नास्तीति शाभावो न स्यात् । क्ङिद्ग्रहणे तु निवृत्तेऽपित्त्वपक्षेऽपि भवत्येव । स्यादेतत्—व्यवस्थितविभाषाविज्ञानाच्छास उत्तरस्य हेः पित्त्वं न भविष्यति, ततो नार्थः क्ङिद्ग्रहणेन निवर्तितेन ? इत्यत आह—**शाधीत्येतदित्यादि** । यदि शास उत्तरस्य हेः

**पदमञ्जरी**

हृलोर्द्वयोरप्युपादाने यस्माच्छासेरङ् विहितस्तस्यैव ग्रहणम् । 'शासिवसिघसीनां च' इति षत्वविधौ शासिमात्रस्य ग्रहणं द्रष्टव्यम्; 'आशिषि लिङ्लोटौ' इत्यादिनिर्देशात् ॥ ३४ ॥

**शा हौ ॥ उपधाया इति निवृत्तमिति** । तद्धि उपधाग्रहणं क्ङितीत्यनेन सम्बद्धम्, इह च 'क्ङिद्ग्रहणं निवृत्तम्' इति वक्ष्यति, तेन तत्सम्बद्धमुपधाग्रहणं च निवृत्तम् । **स्थानेयोगा षष्ठी भवतीति** । एतच्च शब्दाधिकारपक्षस्याश्रयणाल्लभ्यते, अर्थाधिकारे त्विहाप्यवयवसम्बन्धान्न सर्वस्य स्यात् ।

**क्ङितीत्यपि निवृत्तमिति** । उत्तरत्र पुनः क्ङिद्ग्रहणात् । **तेनेति** । अन्यथा 'सार्वधातुकमपित्' इति वचनात्पित्त्वपक्षे ङित्त्वाभावाच्छाभावो न स्यात् । मा भूत्पित्त्वपक्षे, दृश्यमानस्तु प्रयोगोऽपित्त्वपक्षेऽप्युपपद्यते ? अत आह—**शाधीत्याद्युदात्तमपीति** । यदि तु पिति शाभावो न स्यात्, तदा शाधीत्येतत्सतिशिष्टेन प्रत्ययस्वरेणान्तोदात्त एव स्यात् । आद्युदात्तमपि दृश्यते, तस्मात्पित्यपि शाभाव एव द्रष्टव्यः ।

**भावबोधिनी**

★ क्वि प्रत्यय परे रहते तो उस 'आङ् शास्' का भी इत्व होता है, ऐसा कहना चाहिए । ★ उदा० आशीः, आशिषौ, आशिषः । [ आङ् = आ पूर्वक शास् से क्विप् करने के बाद प्रस्तुत सूत्र से आ का इ करने से 'आशिस्' षत्व करने पर 'आशिष्' । प्रथमा एकवचन में रुत्व तथा दीर्घ आदि करने के बाद—आशीः । ] अथवा यह वचन न मानकर "क्षियाशीः प्रैषेषु तिङाकाङ्क्षम्" (८।२।१०४) इस निर्देश से निपातन से इत्वादि सिद्ध मान लेना चाहिए ॥ ३४ ॥

शास् धातु से 'हि' परे रहते 'शा' यह आदेश होता है । उदा० अनुशाधि । प्रशाधि । [ अनुशास् + लोट् = सिप्, हि, शास् का शा आदेश, आभीयत्वेन असिद्ध मानकर 'हुझल्भ्यो हेर्धिः" सूत्र से 'हि' का 'धि' करने पर उक्त रूप बनते हैं ।]

'उपधायाः' इसकी निवृत्ति है, अनुवृत्ति नहीं है । इस कारण 'शासः' यह स्थानेयोग षष्ठी हो जाती है ।

**३०३७. हन्तेर्जः ॥ ३६ ॥ (२४३१)**

हन्तेर्धातोर्ज इत्ययमादेशो भवति हौ परतः। जहि शत्रून् ॥

**३०३८. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति ॥ ३७ ॥ (२४२८)**

[ [2]अनुनासिकान्तानाम् ] अनुदात्तोपदेशानामङ्गानां वनतेस्तनोत्यादीनां चानुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः। यमु—यत्वा। यतः। यतवान्। यतिः।

**न्यासः**

पक्षे पित्त्वं न स्यात्, तदा शाधीत्येतत् सतिशिष्टत्वेन प्रत्ययस्वरेणान्तोदात्तमेव स्यात्। आद्युदात्तमपि च्छन्दसीष्यते। तच्च हेः पित्त्वे सति धातुस्वरेण सम्पद्यते, नान्यथा। तस्मादवश्यं छन्दसि पक्षे पित्त्वं विधेयम्।

अथ 'आ हौ' इत्येवं कस्मान्नोक्तम्, अकारेऽपि हि 'अलोन्त्यस्य' इति सकारस्य विहिते सवर्णदीर्घत्वेन शाधीत्येतत् सिद्धं भवति? न सिध्यति; पूर्वसूत्रेणोपधाया इत्त्वं स्यात्। न चायं तस्य बाधको युज्यते; असति च सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात्, अत्रास्ति सम्भवः। तस्मादकारेऽन्त्यस्य विहित उपधाया इत्त्वं स्यादेव ॥ ३५ ॥

हन्तेर्जः ॥ हन्तेरिति श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः—[1]जङ्घहि ॥ ३६ ॥

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति** ॥ 'अनुनासिक' इति षष्ठ्या बहुवचनस्य लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः। अत एवाह—[2]**अनुनासिकान्तानामिति**। 'अनुनासिकस्य क्विझलोः

**पदमञ्जरी**

इह 'आ हौ' इति वक्तव्यम्, उपधाया इत्येव, आकारस्याकारवचनमित्त्वबाधनार्थम्, ततः 'हुझल्भ्यो हेर्धिः' इति धित्वम्, 'धि च' इति सकारलोपः। येषां तु 'धि सकारे सिचो लोपः' इति पक्षः, तेषां शाभाव एव विधेय; अन्यथा उपधायाः' इत्यस्य निवृत्तावपि सकारस्याकारे तस्यासिद्धत्वाद्यद्यपि धित्वं लभ्यते, उपधायास्तु पूर्वेणेत्वमाशङ्क्येत, अविरोधात् ॥ ३५ ॥

हन्तेर्जः ॥ श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः ॥ ३६ ॥

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति** ॥ उपदिश्यन्ते इत्युपदेशाः,

**भावबोधिनी**

[शास् के स्थान पर 'शा' यह आदेश होता है।]

'कित् और ङित्' इनकी भी निवृत्ति है। इसलिये जब "वा च्छन्दसि" (३।४।८४) सूत्र से हि का पित्त्व होता है, तब भी आदेश होता ही है। 'शाधि' यह वेद में आद्युदात्त भी देखा जाता है ॥ ३५ ॥

'हि' प्रत्यय परे रहने पर 'हन्' धातु का 'ज' यह आदेश होता है। उदा० जहि शत्रून्। [हन्+लोट्=सिप्=हि, प्रस्तुत सूत्र से 'हन्' का 'ज' आदेश। आभीय होने से 'ज' आदेश के असिद्ध हो जावे के कारण 'अतो हेः' (६।४।१०५) सूत्र से 'हि' का लुक् नहीं होता है।] ॥ ३६ ॥

[अनुनासिकान्त] अनुदात्तोपदेश वाले अङ्गों के √वन धातु तथा तनोति आदि धातुओं के अनुनासिक वर्ण का लोप

---

१. अत्र सायणः—"'हन्तेर्जः' इत्यत्र च न्यासे 'हन्तेरिति श्तिपा निर्देशाद् यङ्लुकि जभावाभावाज् जङ्घहीति भवति' इति कृतानुनासिकलोपः प्रत्युदाहृतः। अत्रात्रेयः—'न्यासे प्रत्युदाहरणं जङ्घनीहि' इति पठन् 'भाषायां हेरपित्वादीडभावाच्छान्दसमुदाहरणम्' इत्याह।" इति। (मा० धातु० पृ० ३१३)

२–२. न्यासे सिद्धान्तकौमुद्यादौ चैतत्पाठस्य दर्शनात् काशिकायां साम्प्रतं लुप्तोऽयमंश इति प्रतीयते।

रमु—रत्वा । रतः । रतवान् । रतिः । अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः ।

वनति—वतिः । क्तिनि[1] रूपमेतत् । क्तिचि तु 'न क्तिचि दीर्घश्च' (६।४।३९) इति भवति । अन्यत्र झलादाविटा भवितव्यम् ।

तनोत्यादयः—ततः । ततवान्[1] । सनोतेरात्वं वक्ष्यति । क्षणु—क्षतः । क्षतवान् । ऋणु—ऋतः । ऋतवान् । तृणु—तृतः । तृतवान् । घृणु—घृतः । घृतवान् । वनु—वतः । वतवान् । मनु—मतः । मतवान् ।

**न्यासः**

विङति' इति दीर्घत्वे प्राप्ते लोपोऽयं विधीयते । अत्र लोपे कृतं दीर्घत्वं न प्राप्नोति; विहतनिमित्तत्वात् । **यमिरमिगमिनमिहनिमन्यतय इति** । 'यम उपरमे', 'रमु क्रीडायाम्', 'गम्लृ सृप्लृ गतौ' 'णम प्रह्वत्वे', 'हन हिंसागत्योः', 'मन ज्ञाने' ।

**वतिरिति** । 'वन षण सम्भक्तौ' । 'तितुत्रतथ' इत्यादिनेट्प्रतिषेधः । **'क्तिनि'[1]** इत्यनेन क्तिन्येव वनतेरुदाहरणं सम्भवति, नान्यत्रेति दर्शयति । किं कारणम् ? इत्याह—**क्तिचि त्वित्यादि** । क्तिचि तु 'न क्तिचि दीर्घश्च' इति प्रतिषेधं वक्ष्यति । ये त्वन्ये झलादयः प्रत्ययास्तेष्वपीटा भवितव्यम्, ततो झलादित्वाभावाद्वनतेरनुनासिकलोपं प्रति ते निमित्तभावं नोपयान्तीति पारिशेष्यात् क्तिन्येव वनतेरनुनासिकलोपेन भवितव्यम् ।

**सनोतेरात्वं वक्ष्यतीति** । तेन तस्यानुनासिकलोपोदाहरणं न भवतीति भावः । आत्वं पुनः 'जनसनखनाम्' इत्यादिना वक्ष्यति । **क्षत इति** । 'क्षणु हिंसायाम्' । **ऋत इति** । 'ऋणु गतौ' । **तृत इति** । 'तृणु दाने' ।

**पदमञ्जरी**

अनुदात्ताश्च ते उपदेशाश्च अनुदात्तोपदेशाः । उपदिश्यमानावस्थायामनुदात्ता इत्यर्थः । अनुनासिकेति पृथक्पदं लुप्तषष्ठीकमनुदात्तोपदेशानां विशेषणम्, तेन तदन्तविधिः ।

**यमिरमीत्यादि** । 'यमिर्यमन्तेषु' इति श्लोको वक्ष्यते । **वनतेरिति** । 'वन षण सम्भक्तौ' (धा० पा० ४६३,६४) ।

**भावबोधिनी**

झलादि कित् और ङित् प्रत्यय परे होता है । उदा० यम्—यत्वा । यतः । यतवान् । यतिः । [यम् से क्त्वा, क्त, क्तवतु, क्तिन् प्रत्ययों के परे रहते प्रस्तुत सूत्र से अनुनासिक वर्ण म् का लोप होने पर उक्त रूप बनते हैं ।]

रमु—रत्वा । रतः । रतवान् । रतिः । [रम्—से क्त्वा, क्त, क्तवत् तथा क्तिन् के परे होने पर अनुनासिक म् का लोप होने पर उक्त रूप बनते हैं ।] अनुनासिक वर्ण जिनके अन्त में है ऐसे यम, रम, नम, गम, हन, मन,—धातुयें अनुदात्तोपदेश हैं । [इनके म्, न् का लोप होता है । ]

वनति—वतिः । यह क्तिन् प्रत्यय परे रूप है । [वन्+क्तिन्, न् का लोप होता है । ] क्तिच् प्रत्यय परे होवे पर तो 'न क्तिचि दीर्घश्च" सूत्र से [ प्रतिषेध ] होता है । अन्यत्र झलादि प्रत्यय में इट् होना चाहिए । [ अतः उनमें लोप नहीं होता है ।]

तनोति आदि—ततः । ततवान् । [तन्+क्त, क्तवतु के रूप में न् का लोप होता है । ] 'सन्' धातु के न् का आत्व आगे कहा जायगा ।

क्षण्—का क्षतः । क्षतवान् । ऋण्—का ऋतः । ऋतवान् । तृण्—का तृतः । तृतवान् । घृण्—का घृतः । घृतवान् । वन्—का वतः । वतवान् । मन्—का मतः । मतवान् । [ इनमें अनुनासिक वर्ण ण् और न का क्त या क्तवतु परे लोप होने पर उक्त रूप होते हैं । ]

१–१. 'क्तिनः' इत्यपपाठो न्यासविरोधात् ।

ङिति—अतत। अतथाः।

अनुदात्तोपदेशवनतितनोत्यादीनामिति किम्? शान्तः। शान्तवान्। तान्तः। तान्तवान्। दान्तः। दान्तवान्। अनुनासिकस्येति किम्? पक्वः। पक्ववान्। झलीति किम्? गम्यते। रम्यते। क्ङितीति किम्? यन्ता। यन्तव्यम्। उपदेशग्रहणं किम्? इह च यथा स्यात्—गतिः। इह च मा भूत्—शान्तः, शान्तवानिति॥

**न्यासः**

घृत इति। 'घृणु दीप्तौ'। वत इति। 'वनु याचने'। मत इति। 'मनु अवबोधने'। अतत, अतथा इति। तनोतेर्लुङ्। आत्मनेपदप्रथममध्यमपुरुषैकवचने। 'तनादिभ्यस्तथासोः' इति सिचो लुक्।

शान्तः, तान्तः, दान्त इति। शमितमिदमोनां रूपाणि। एते नानुदात्तोपदेशाः। इह चेत्यादि। गमिरमिभ्यां क्तिनि कृते तयोर्नित्स्वरेणाद्युदात्तत्वेऽनुदात्तत्वाभावादसत्युपदेशग्रहणे लोपो न स्यात्, अस्मिंस्तु सति भवति। किञ्च—असत्युपदेशग्रहणे शान्तः, दान्त इत्यत्रापि स्यात्। भवति हि शमिः सतिशिष्टप्रत्ययस्वरे कृते 'अनुदात्तं पदमेकवर्जम्' इति शेषस्यानुदात्तत्वेऽनुदात्तः। उपदेशग्रहणात् तु न भवति, न ह्ययमुपदेशेऽनुदात्तः॥ ३७॥

**पदमञ्जरी**

सनोतेरात्वं वक्ष्यतीति। 'जनसनखनां सञ्झलोः' इत्यनेन। अतत, अतथा इति। 'तनादिभ्यस्तथासोः' इति सिचो लुक्।

**भावबोधिनी**

ङित् परे उदा० अतत। अतथाः। [ तनु धातु से लुङ् आत्मनेपद प्रथमपुरुष तथा मध्यम पुरुष एकवचनों में अ+तन्+त, अतन् + थास्,—च्लि उसका सिच् और 'तनादिभ्यस्तथासो' सूत्र से सिच् लुक्, ङित् लकार परे होने से अनुनासिक वर्ण 'न्' का लोप होता है। ]

अनुदात्त उपदेश वाली, वनति तथा तनोति आदि के अनुनासिक वर्ण का—इस कथन का क्या फल है? शान्तः। शान्तवान्। [ शम्+क्त, शम्+क्तवतु ] तान्तः। तान्तवात्। [तम्+क्त, तम्+क्तवतु ] दान्तः। दान्तवान्। [ दम्+क्त, दम्+क्तवतु। ये पूर्वोक्त किसी में नहीं हैं। अतः इनके अनुनासिक वर्ण म् का लोप नहीं होता है इनमें "अनुनासिकस्य क्विझलोः" (६।४।१५) सूत्र से उपधा का दीर्घ होने पर उक्त रूप सिद्ध होते हैं। ]

अनुनासिक का—इस कथन का क्या फल है? पक्वः। पक्ववान्। [इसमें अनुनासिक वर्ण अन्त में नहीं है अतः लोप नहीं होता है।] झल् परे रहते—इससे क्या लाभ है? गम्यते। रम्यते। [ भाव या कर्म में गम्+यक्+ते, रम्+यक्+ते है। किन्तु झल् परे न होने से अनुनासिक म् का लोप नहीं होता है। ] कित् और ङित् परे रहते—इस कथन का क्या लाभ है? यन्ता। यन्तव्यम्। [ यम्+तृच्, यम्+तव्यत्। इनमें कित् या ङित् परे न होवे से अनुनासिक का लोप नहीं होता है। ] उपदेश में अनुनासिक—इसका क्या लाभ है? गतिः—इसमें हो सके।[ गम् तथा रम् धातुओं से क्तिन् = ति करने पर नित् स्वर करने से आद्युदात्त होने से अनुदात्तता नहीं है। अतः अनुनासिक लोप नहीं होगा। किन्तु उपदेश में अनुदात्त मानने पर—'यम् रम् नम् गम् हन् मन्' इन्हें ऊपर अनुदात्तोपदेश वाली माना गया है। अतः नलोप होने में बाधा नहीं है। ] साथ ही इनमें न हो सके—शान्तः। शान्तवान्। [ ये अनुदात्तोपदेश नहीं है। यदि बाद का अनुदात्तत्व भी लिया गया तो 'क्त' का प्रत्यय स्वर 'सतिशिष्ट स्वर अर्थात् उदात्त कर देने पर 'अनुदात्तं पदमेकवर्जम्' से अनुदात्त होने लगेगा। अतः उपदेश में अनुदात्त माना गया है इससे दोष नहीं है। ]॥ ३७॥

१. 'तत्वा, ततिः' इत्यधिकमेकस्मिन्पुस्तके।

### ३०३९. वा ल्यपि ॥ ३८ ॥ (३३३४)

ल्यपि परतोऽनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो वा भवति। व्यवस्थितविभाषा चेयम्, तेन मकारान्तानां विकल्पो भवति। अन्यत्र नित्यमेव लोपः। प्रयत्य, प्रयम्य। प्ररत्य, प्ररम्य। प्रणत्य, प्रणम्य। आगत्य, आगम्य। आहत्य। प्रमत्य। प्रवत्य। प्रक्षत्य ॥

### ३०४०. न क्तिचि दीर्घश्च ॥ ३९ ॥ (३३१४)

क्तिचि परतोऽनुदात्तोपदेशादीनामनुनासिकलोपो दीर्घश्च न भवति। यन्तिः। वन्तिः। तन्तिः।

अनुनासिकलोपे प्रतिषिद्धे 'अनुनासिकस्य क्विझलोः क्ङिति' (६.४.१५) इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिद्धचते ॥

**न्यासः**

**वा ल्यपि॥** अझलाद्यर्थ आरम्भः। **प्रयत्येति।** प्रादिसमासे कृते 'समासेऽनञ्पूर्वे क्त्वो ल्यप्', 'ह्रस्वस्य पिति कृति तुक्' ॥ ३८ ॥

**न क्तिचि दीर्घश्च ॥ यन्तिरित्यादि।** 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्। अत्र चानुदात्तोपदेशादिग्रहणमनुवर्त्तते, तेन कान्तिः, शान्तिरित्यत्र दीर्घप्रतिषेधो न भवति। अनुनासिकलोपस्य त्वत्र प्राप्तिरेव नास्ति; उदात्तोपदेशत्वात्।

**अनुनासिकलोपे प्रतिषिद्धे**—इत्यादिना दीर्घग्रहणस्य प्रयोजनमाचष्टे। ननु च प्रकरणापेक्षया यदस्मिन् प्रकरणे विहितं तन्न भवतीति विज्ञायमानेऽन्तरेणापि दीर्घग्रहणं दीर्घस्यापि प्रतिषेधो भविष्यति, तत् किं दीर्घग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति—अस्तीयं परिभाषा 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति ॥ ३९ ॥

**पदमञ्जरी**

**इह च यथा स्यादिति।** अन्यथा क्तिनि नित्स्वरेण सम्प्रत्युदात्तत्वान्न स्यात्। **इह च मा भूदिति।** अन्यथा प्रत्ययस्वरे कृते शेष निघाते सम्प्रत्यनुदात्तत्वाच्छान्त इत्यादावपि स्यात् ॥ ३७ ॥ ३८–३९ ॥

**भावबोधिनी**

ल्यप् परे रहते अनुदात्तोपदेश, वनति तथा तनोति आदि के अनुनासिक वर्णों का लोप विकल्प से होता है। और यह व्यवस्थित विभाषा है। इसलिए मकारान्तों का विकल्प से लोप होता है। और अन्य का नित्य ही लोप होता है। उदा० प्रयत्य, प्रयम्य। [प्रयम्+ल्यप्] प्ररत्य, प्ररम्य। [प्ररम्+ल्यप्] प्रणत्य प्रणम्य। [ प्र नम्+ल्यप् ] आगत्य, आगम्य। [ आङ् गम्+ल्यप् ] आहत्य, आहन्य। प्रमत्य प्रमन्य। प्रवत्य प्रवन्य। प्रक्षत्य प्रक्षम्य [ इनमें अनुनासिक लोप कर देने पर ह्रस्व अकार को तुक् हो जाता है। अतः एक तुक् आगमसहित और दूसरा अनुनासिकसहित रूप होता है।] ॥ ३८ ॥

क्तिच् प्रत्यय परे रहते अनुदात्तोपदेशादि धातुओं के अनुनासिक का लोप तथा दीर्घ नहीं होते हैं। उदा० यन्तिः। वन्तिः। तन्तिः। [ यम्, वन्, तन् धातुओं से "क्तिच्क्तौ च संज्ञायाम्" सूत्र से क्तिच् = ति प्रत्यय होता है। प्राप्त अनुनासिक लोप और दीर्घ दोनों का निषेध हो जाता है। म् और न् का अनुस्वार, परसवर्ण होने पर रूप बनते हैं।]

अनुनासिक के लोप का प्रतिषेध हो जाने पर "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५) से दीर्घ प्राप्त होता है, उसका भी प्रतिषेध कर दिया जाता है ॥ ३९ ॥

**३०४१. गमः क्वौ ॥ ४० ॥ (२९८६)**

**गमः क्वौ परतोऽनुनासिकलोपो भवति । अङ्गगत् । कलिङ्गगत् । अध्वगतो हरयः ।**
**❀ गमादीनामिति वक्तव्यम् ❀ (म० भा०) । इहापि यथा स्यात्—संयत् । परीतत् ।**
**❀ ऊ च गमादीनामिति वक्तव्यम् । ❀ (म० भा०) । अग्रेगूः । अग्रेभ्रूः ॥**

**३०४२. विड्वनोरनुनासिकस्यात् ॥ ४१ ॥ (२९८२)**

**विटि वनि च प्रत्यये परतोऽनुनासिकान्तस्याङ्गस्याकार आदेशो भवति । 'अब्जाः गोजाः ऋतजाः अद्रिजाः' (ऋ० ४.४०.५) । 'गोषा इन्द्रो नृषा असि' ( ऋ० ९.२.१० ) । 'कूपखाः । शतखाः । सहस्रखाः ।**

न्यासः

**गमः क्वौ ॥** अयमप्यझलाद्यर्थ आरम्भः । **अध्वगतो हरय इति ।** अध्वानं गच्छन्तीति क्विप्, तदन्ताज्जस् ।

**गमादीनामित्यादि ।** गमादीनामनुनासिकलोपः क्वौ भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वसूत्राच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन गमादीनां भविष्यति, न तु गमेरेव केवलस्येति । **संयदिति ।** संपूर्वाद् यमेः क्विप् । **परीतदिति ।** परिपूर्वात् तनोतेः, 'नहिवृति' इत्यादिना दीर्घः ।

**ऊ चेत्यादि ।** चकारादनुनासिकलोपः । क्वचिद् ऊङ् चेति पठ्यते, तत्र ङकारस्य प्रयोजनं चिन्त्यम् । अलोऽन्त्यपरिभाषयैवात्र भविष्यति । **अग्रेगूः । अग्रेभ्रूरिति ।** गमेः, भ्रमेश्चानुनासिकलोपे कृतेऽकारस्योकारः ॥ ४० ॥

**विड्वनोरनुनासिकस्यात् ॥ अब्जा इति ।** अप्सु जायत इत्युपपदसमासः, पकारस्य जश्त्वम्—

पदमञ्जरी

**गमः क्वौ ॥ अध्वगत इति ।** अध्वनो गन्तार इत्यर्थः । अनुनासिकलोपे कृते ह्रस्वस्य तुक् ।

**संयदिति ।** सम्पूर्वाद्यमेः क्विप् । **परीतदिति ।** तनोतेः क्विप्, 'नहिवृतिवृधि' इत्यादिना पूर्वपदस्य दीर्घः ।

**ऊ चेति ।** चकारादनुनासिकलोपश्च । **अग्रेगूरिति ।** अनुनासिकलोपे कृते अकारस्य ऊकारः । क्वचिद् ऊङिति ङकारः पठ्यते, न तस्य प्रयोजनमस्ति । 'ओः सुपि' इति यणादेशो धातुत्वाद्भवति—अग्रेग्वौ, अग्रेग्वः । **अग्रेभ्रूरिति ।** एवं च कृत्वा 'अचि श्नुधातु' इत्यत्र भ्रूग्रहणं न कर्त्तव्यं धातुत्वादेव सिद्धम् ॥ ४० ॥

**विड्वनोरनुनासिकस्यात् ॥ अग्रेगा इत्यादि ।** यद्यप्यकारविधानेऽपि सवर्णदीर्घेण सिद्ध्यति, 'अतो

भावबोधिनी

गम् से क्वि परे रहते अनुनासिक का लोप होता है । उदा० अङ्गगत् कलिङ्गगत् । अध्वगतः हरयः । [ अङ्गान् गच्छन्ति—इस अर्थ में क्विप् करने पर प्रस्तुत सूत्र से म् का लोप, तुक् आगम होता है । ]

❀ गम् आदि का अनुनासिक लोप होता है—ऐसा कहना चाहिए । ❀ जिससे यहाँ भी हो सके—संयत् । परीतत् । [ सम् पूर्वक यम् से क्विप् । परि पूर्वक तनु से क्विप् ] प्रस्तुत वचन से अनुनासिक लोप के बाद तुक् होता है । ]

❀ और गमादि का ऊकार आदेश तथा अनुनासिकलोप भी कहना चाहिए । ❀ उदा० अग्रेगूः । [ अग्रे गच्छति, अग्रे भ्राम्यति—इन अर्थों में क्विप् और उसका लोप करने के बाद गम् के अनुनासिक का लोप तथा गकार के अकार का ऊकार आदेश होता है । ] ॥ ४० ॥

विट् तथा वन् प्रत्ययों के परे रहते अनुनासिकवर्णान्त अङ्ग का आकार आदेश होता है । उदा० "अब्जा गोजा ऋतजा अद्रिजा" [ ऋ० ४.४०.५ ] अप्सु जायते । गोषु जायते । ऋतेषु जायते । अद्रिषु जायते—इन अर्थों में

**दधिक्राः। अग्रेगा उन्नेतृणाम्। 'जनसनखनक्रमगमो विट्' (३.२.६७) इति विट् प्रत्ययः। 'सनोतेरनः' (८.३.१०८) इति षत्वम्—गोषा इन्दो नृषा असीत्यत्र। वन्—विजावा। अग्रेजावा। 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति वनिप्प्रत्ययः।**

**'अनुनासिकस्य' इति वर्त्तमाने पुनरनुनासिकग्रहणमनुनासिकमात्रपरिग्रहार्थम्, अन्यथा ह्यनुदात्तोपदेशवनतितनोत्यादीनामेव स्यात्॥**

**न्यासः**

बकारः। **गोषा इति**। 'षणु दाने'। **विजावा इति**। 'जन जनने'। 'जनी प्रादुर्भावे' इति वा। **अग्रेगावा इति**। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्।

अथानुनासिकग्रहणं किमर्थम्, यावतानुदात्तोपदेशेत्यादेः सूत्रादनुनासिकग्रहणमनुवर्त्तत एव? इत्याह—**अनुनासिकस्येति वर्त्तमान इत्यादि**। तद्धि प्रकृतमनुनासिकग्रहणमनुदात्तोपदेशग्रहणेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मादिदमन्यदनुनासिकग्रहणं क्रियते—अनुनासिकमात्रस्य यथा स्यात्। अथेह दीर्घोच्चारणं किमर्थम्, ह्रस्व एवोच्येत, ह्रस्वेऽपि कृते सत्यकः सवर्णे दीर्घत्वेन सिद्ध्यत्येव; अतो गुणे पररूपत्वं प्राप्नोति, अतो न सिध्यतीत्येतन्नाशङ्कनीयम्, अकारविधानसामर्थ्यात्; यदि ह्यतो गुणे पररूपत्वं स्यात् तदा प्रकृतं लोपग्रहणमेव विदध्यात्, ततो ह्रस्व एव कर्त्तव्यः। नैतदस्ति; ह्रस्वे हि सति 'घुण घूर्णने' इत्यस्माद्वनिपि विहिते घ्वावा इति न सिध्येत्? ततो दीर्घस्यैव विधानं युक्तम्॥ ४१॥

**पदमञ्जरी**

गुणे' इति पररूपत्वे हि अतोलोपमेव विदध्यात्। ये त्वकारोपधा न भवन्ति, तदर्थं दीर्घोच्चारणम्—'घुण घूर्ण भ्रमणे' (धा० पा० ४३७,३८), 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्, घ्वावा, घूरावा। 'क्षिणु'—क्षावा, 'ऋणु'—रावा, 'ओणृ'—अवावा॥ ४१॥

**भावबोधिनी**

"जनसन्" सूत्र से विट् प्रत्यय, सर्वापहारी लोप् के बाद प्रस्तुत सूत्र से 'न्' का आ आदेश, दीर्घ करने के बाद उपपद समास में उक्त रूप बनते हैं। ] "गोषा इन्द्रो नृषा असि।" (ऋ० ९।२।१०) [ गोषु सायते, नुषु सन्यते—विग्रहों में पूर्वोक्त प्रक्रिया होती है। ] कूपखा। शतखा। सहस्रखा। दधिक्रा। अग्रेगा उन्नेतृणाम्। [ कूपं खनति, दधि क्राम्यति, अग्रे गच्छति—आदि में ] "जन-सन-खन-क्रमगमो विट्" (३।२।६७) सूत्र से विट् प्रत्यय [ उसका सर्वाहारी लोप करने के बाद अनुनासिक न् तथा म् का आत्व और दीर्घ करने पर उक्त रूप बनते हैं। ] "सनोतेरनः" (८।३।१०८) सूत्र से सन् के स का ष होता है। इसमें—"गोषा इन्दो नृषा असि।" (ऋ० ९।२।१०) वन् प्ररे उदा० विजावा। अग्रेगावा। [ विजायते, अग्रे जायते—इस विग्रह में ] "अन्येभ्योऽपि दृश्यन्ते" (३।२।७५) सूत्र से वनिप् = वन् प्रत्यय होता है। [विजन् + वन् आत्व और दीर्घ कर देने के बाद—विजावन् सु, दीर्घादि करने पर रूप बनता है। ]

'अनुनासिकस्य' इसकी अनुवृत्ति रहने पर भी दुबारा जो अनुनासिक का ग्रहण किया गया है वह केवल अनुनासिक का ग्रहण कराने के लिए है, अन्यथा अनुदात्तोपदेश, वनति, तनोति आदि के ही अनुनासिकों का लोप होता। [ स्वतन्त्र रूप से दुबारा अनुनासिक के ग्रहण के कारण अनुनासिकमात्र का आत्व होता है। [ यहाँ 'आत्' यह दीर्घ न करके 'अत्' इस ह्रस्वादेश करने पर भी सवर्णदीर्घ से उक्त रूप बन सकते थे किन्तु 'घूण घूर्णने' इससे वनिप् करने पर अनुनासिक का ह्रस्व अ करने और यण् करने पर घ्वन् = घ्वा रूप हो जाता, जब कि इष्ट है—घ्वावा। अतः 'आत्' करना आवश्यक है। ] ॥ ४१॥

## ३०४३. जनसनखनां सञ्झलोः ॥ ४२ ॥ (२५०४)

'झलि', 'क्ङिति' इति चानुवर्त्तते । जन, सन, खन—इत्येतेषामङ्गानां सनि झलादौ क्ङिति झलादौ [ च ] प्रत्यये परत आकार आदेशो भवति । जन्—जातः । जातवान् । जातिः । सन्—सनि, सिषासति । सातः । सातवान् । सातिः । खन्—खातः । खातवान् । खातिः ।

झल्ग्रहणं सन्विशेषणार्थं किमर्थमनुवर्त्यते ? इह मा भूत्—जिजनिषति । सिसनिषति । चिख-निषति । सनोतेः 'सनीवन्तर्ध' (७.२.४९) इति पक्षे इडागमः ।

तदिह सनोत्यर्थमेव सन्ग्रहणम् । अत्र झलादौ क्ङिति सनोतेर्विप्रतिषेधाद् आत्वमनुनासिकलोपं बाधते ।

**न्यासः**

**जनसनखनां सञ्झलोः ॥** झलि क्ङिति चानुवर्त्तत इति यथाक्रमं सनो झलश्च विशेषणम् । सूत्रोपात्तेन तु झल्ग्रहणेन न शक्यते सन् विशेषयितुम्, विशेषणं ह्यप्रधानं भवति, विशेष्यं तु प्रधानम् । सञ्झलोरिति चायं द्वन्द्वः । तत्र सर्वेषां द्वन्द्वपदानां प्राधान्यादन्योऽन्यं प्रधानगुणभावो नोपपद्यते । सन्ग्रहणञ्चाक्ङिदर्थम् ।

**तदिहेत्यादि ।** यस्मात् सनोतेः पक्ष इडागमस्तस्मात् तत एव परो झलादिः सन् सम्भवतीति तदर्थमेव सन्ग्रहणम्, न तु जनखनार्थम् । न हि ताभ्यां परो झलादिः सन् सम्भवति, तयोर्नित्यं सेट्त्वात् । यद्येवम्, सनोतेः सनि कृतार्थत्वादात्वं न स्यात्, अन्यत्र निष्ठादौ झलादौ क्ङितिप्रत्यये 'अनुदात्तोपदेश' इत्यादिना नलोपः स्यात् ? इत्यत आह—**अन्यत्रेत्यादि ।** सनोतेस्तनोत्यादिषु पाठस्यावकाशोऽन्यत् तानादिकं कार्यम्—'तनादिभ्य-स्तथासोः' इत्यादि, आत्वविधौ च सन्ग्रहणस्यावकाशः—सन्, सिषासतीति; इहोभयं प्राप्नोति—सातः, सातवा-निति । अत्रानुनासिकलोपं बाधित्वात्वं भवति विप्रतिषेधेन । ननु चोभयोः सिद्धयोर्विप्रतिषेधो भवति, इह च

**पदमञ्जरी**

**जनसनखनां सञ्झलोः ॥** झल्शब्देनात्र झलादिर्गृह्यते; अङ्गेनाक्षिप्तस्य प्रत्ययस्य झला विशेषणात् । क्ङिद्ग्रहणं तस्य विशेषणम् । प्रकृतं तु झल्ग्रहणं सनो विशेषणम् ।

**तदिहेति ।** वाक्योपन्यासे । **विप्रतिषेधादिति ।** सनोतेस्तनोत्यादिपाठस्यावकाशोऽन्यत्तनादि कार्यम्—'तनादिकृञ्भ्यः उः', 'तनादिभ्यस्तथासोः' इति, इह त्वात्वविधौ सन्ग्रहणस्यावकाशः—सन्, शिषासति; सातः, सातवानित्यत्रोभयप्रसङ्गे परत्वादात्वं भवति ।

ननु चासिद्धकाण्डे वक्ष्यति—पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति, यत्र किलैकस्याप्य-

**भावबोधिनी**

'झलि' तथा 'क्ङिति' इनकी अनुवृत्ति होती है । जन, सन, खन—इन अङ्गसंज्ञकों का झलादि सन् तथा झलादि कित् और ङित् प्रत्ययों के परे रहते [अनुनासिक का] आकार आदेश होता है । उदा० जन्—जातः । जातवान् । जातिः । [ जन् + क्त, क्तवतु, क्तिन् परे हैं, न् का आ, सवर्णदीर्घ करने पर रूप होते हैं । ] सन् परे उदा० सन् धातु—सिषासति । सातः । सातवान् । सातिः । [ षणु = सन् + सन्, द्वित्व तथा अभ्यास कार्य के बाद सिसन् + स, इसमें प्रस्तुत सूत्र से 'न्' का आत्व, दीर्घ, षत्व करने पर 'सिषास' लट् प्रथम पुरुष एकवचन का रूप है । अन्य में, क्त, क्तवतु, क्तिन् परे रहते 'न्' का आ सवर्णदीर्घ कर देने पर उक्त रूप बनते हैं । ]

झल् ग्रहण को सन् का विशेषण बनाने के लिये क्यों अनुवृत्त किया जाता है ? यहाँ न होने लग जाय—जिजनिषति । सिसनिषति । चिखनिषति । इनमें [ जन्, सन्, खन् से सन् प्रत्यय परे रहते ] "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृ-यूर्णु-भर-ज्ञपिसनाम्" (७।२।४९) से पक्ष में इट् आगम होता है । [ इट् होने पर झलादि न मिल सकने से आत्व नहीं होता है । ]

इस सूत्र में 'सनोति' धातु के लिए ही सन् का ग्रहण है । [ क्योंकि इसी में पाक्षिक इट् के अभाव पक्ष में झलादि सन् सम्भव है । जन् तथा खन् के लिये नहीं है क्योंकि ये तो दोनों सेट् हैं, नित्य इट् होवे से झलादि परे सम्भव

**'घुमास्थागापाजहातिसां हलि' (६.४.६६) इति हल्ग्रहणं ज्ञापकम्—अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवतीति ॥**

**न्यासः**

'असिद्धवदत्रा भात्' इत्युभयमप्यसिद्धम्, तत् कुतो विप्रतिषेधः ? इत्यत आह—**घुमास्थागेत्यादि।** कथं कृत्वा ज्ञापकम् ? हल्ग्रहणस्यैतदेव प्रयोजनम्—हलादावीत्वं यथा स्यात्, इह मा भूत्—'आतोऽनुपसर्गे कः' गोदः, कम्बलद इति। यदि चात्र विप्रतिषेधो न स्याद् हल्ग्रहणमनर्थकं स्यात्। अस्त्वत्रेत्वम्, तस्यासिद्धत्वाल्लोपो भविष्यति। पश्यति त्वाचार्यः—भवतीह प्रकरणे विप्रतिषेधः इति; यतो हल्ग्रहणं करोति। ननु चासति हल्ग्रहणेऽजादावपीत्वं स्यात्, ततश्चेयङ् प्रसज्येतेत्यनिष्टं रूपमापद्येत। तस्मादनिष्टनिवृत्त्यर्थत्वाद्धल्ग्रहणस्य न युज्यते ज्ञापकत्वम् ? नैष दोषः; असिद्धत्वादेवेत्त्वस्येयङादेशो न भविष्यति। व्यवस्थार्थं तर्हि हल्ग्रहणं स्यात्, असति हि तस्मिन्नीत्त्वस्यासिद्धत्वादाल्लोपः, आकारलोपस्यासिद्धत्वादीत्त्वमिति चक्रवदव्यवस्था स्यात् ? एतदप्यप्रयोजनम्, यदि व्यवस्थार्थं हल्ग्रहणं स्यात्, नैवायं हल्ग्रहणं कुर्वीत। अविशेषेणेकारमुक्त्वा तस्याजादौ लोपमपवादं विदध्यात्। तत् कथमिदमस्तु—'आतो लोप इटि च' इति ? ततः 'घुमास्थागापाजहातिसाम्' आकारलोपो भवतीत्यजादौ च क्ङिति। किमर्थमिदम् ? प्रत्ययमात्रे घ्वादीनां यदीत्त्वं वक्ष्यते, तस्यायमित्यजादौ च क्ङित्यपवादः, ततः 'ईत्' इतीत्त्वं भवति घादीनामनचि क्ङिति, ततः 'एर्लिङि' 'वान्यस्य संयोगादेः', 'न ल्यपि', 'मयतेरिदन्यतरस्याम्'; ततो यतीत्त्वं भवति—सोऽयमेवं लघीयसा न्यासेन सिद्धे यद्धल्ग्रहणं करोति, तज्ज्ञापयत्याचार्यः—भवतीह विप्रतिषेधः इति ॥ ४२ ॥

**पदमञ्जरी**

सिद्धत्वे विप्रतिषेधाभावस्तत्र का कथा द्वयोरप्यसिद्धत्वे ? इत्यत आह—**घुमास्थागापाजहातीत्यादि। विप्रतिषेधो भवतीति।** विप्रतिषेधेन व्यवस्थायां क्रियमाणायामसिद्धत्वं न भवतीत्यर्थः। कथं कृत्वा ज्ञापकम् ? हल्ग्रहणस्यैतत्प्रयोजनम्—हलादौ यथा स्यात्, इह मा भूत्—गोदः, कम्बलद इति। यदि चात्र विप्रतिषेधो न स्याद्धल्ग्रहणमनर्थकं स्यात्। अस्त्वत्रेत्वम्, तस्यासिद्धत्वादियङादेशे असत्याल्लोपे तत्सिद्धं स्यात्, सति विप्रतिषेधे आल्लोपस्यावकाशः—पाष्णित्रम्, अङ्गुलित्रमिति, ईत्वस्य—दीयते, मीयते; गोद इत्यादावसति हल्ग्रहणे परत्वादीत्वं स्यादिति हल्ग्रहणमर्थवद्भवति ? नैतदस्ति ज्ञापकम्; व्यवस्थार्थमेतत्स्यात्। असति हि तस्मिन्नीत्वस्यासिद्धत्वादालोपः, तस्यासिद्धत्वादीत्वमिति चक्रकमव्यवस्था प्राप्नोति ? नास्ति चक्रकप्रसङ्गः, न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम्, शाश्वतो नाम व्यवस्था। तत्र पूर्वमीत्वम्, तस्यासिद्धत्वादाल्लोपः, लोपेनावस्थानं भविष्यति। एवमपि कुत एतत्—ईत्वास्यासिद्धत्वादाल्लोपः, लोपेनावस्थानमिति; न पुनर्विपर्ययः स्यात्—पूर्वमाल्लोपः, तस्यासिद्धत्वादीत्वमीत्वेन व्यवस्थानमिति ? एवं तर्हि यदि व्यवस्थार्थमेतत्स्यात्, नैवायं हल्ग्रहणं कुर्वीत, अविशेषेणायमीत्वं कृत्वा तस्याजादौ लोपमपवादं विदधीत, कथम् ? इदमस्ति 'आतो लोप इटि च', ततो घुमास्थागापाजहातिसां लोपो भवति—इटि चाजादौ च क्ङितीति, किमर्थं पुनरिद

**भावबोधिनी**

ही नहीं है।] यहाँ सनोति का झलादि कित्, ङित् परे रहते विप्रतिषेध से आत्व अनुनासिकलोप का बाध कर देता है। [अतः 'सिषासति' बनता है।]

'घुमास्थागापाजहातिसां हलि' (६।४।६६) इस सूत्र में हल्ग्रहण इसका ज्ञापक होता है कि—इस असिद्ध प्रकरण में विप्रतिषेध होता है।

**विमर्श**—भाव यह है कि तनोत्यादि में सनोति का पाठ होने से तनादि के अन्य कार्य जैसे 'तनादिकृञ्भ्य उ' "तनादिभ्यस्तथासी" आदि में यह सनोति चरितार्थ है। यहाँ आत्वविधि में सन्ग्रहण चरितार्थ है—सिषासति। परन्तु 'सातवान्' आदि लक्ष्यों में अनुनासिकलोप और आत्व दोनों की प्राप्ति युगपत् होने से विप्रतिषेध है। अतः परत्वात् अनुनासिकलोप का बाध करके आत्व ही होता है।

## २०४४. ये विभाषा ॥ ४३ ॥ (२३१९)

**यकारादौ क्ङिति प्रत्यये परतो जनसनखनामाकार आदेशो भवति विभाषा । जायते, जन्यते । जाजायते, जञ्जन्यते । सायते, सन्यते । सासायते, संसन्यते । खायते, खन्यते । चाखायते, चङ्खन्यते । जनेः श्यनि 'ज्ञाजनोर्जा' (७.३.७९) इति नित्यं जादेशो भवति ॥**

**न्यासः**

**ये विभाषा ॥** असञ्झलाद्यर्थं आरम्भः । **जायते, जन्यत इति ।** भावे लकारः । **जाजायत इति ।** यङ्, 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घत्वम् । **जञ्जन्यत इति ।** 'नुगतोऽनुनासिकान्तस्य' इति नुगागमः । **सायते, सन्यत इति ।** भावे कर्मणि वा लकारः । जनेः श्यन्यपि विभाषात्त्वेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**जनेः श्यनीत्यादि ।** जनेर्दिवादित्वात् श्यनि विहिते सत्युभयं प्राप्नोति, अनेन विभाषाऽऽत्वम्, 'ज्ञाजनोर्जा' इति जाभावश्च, तत्र जादेशस्यानवकाशत्वात् स एव नित्यं भवति । तेन श्यनि 'जायते' इत्येवं नित्यं भवति, न तु कदाचित् 'जन्यते' इति ॥ ४३ ॥

**पदमञ्जरी**

मीत्त्वम् ? वक्ष्यति—तस्य बाधनार्थं तत्, ईद्भवति घ्वादीनाम्, ततः 'एर्लिङि, 'वान्यस्य संयोगादेः', 'न ल्यपि', 'मयतेरिदन्यतरस्याम्', ततः 'यति च', यति च ईद्भवति 'आतः' इत्येव, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यति यद्धल्ग्रहणं करोति तद् गरीयासं यत्नमारभते, तज्ज्ञापयत्याचार्यः—भवतीह विप्रतिषेध इति ।

इह झल्ग्रहणं शक्यमकर्त्तुम् । कथम् ? योगविभागः कर्त्तव्यः—जनसनखनामनुनासिकस्याकारादेशो भवति, झलि क्ङिति; ततः सनि च, जनसनखनामाकारादेशो भवति झलीत्येव ॥ ४२ ॥

**ये विभाषा ॥ जायत इति ।** यक् । **नित्यं जादेशो भवतीति ।** तस्यानवकाशत्वात् । तेन श्यनि

**भावबोधिनी**

यहाँ आभीय अधिकार में दोनों शास्त्र असिद्ध हैं, तब विप्रतिषेध कैसे होगा ? इसका समाधान 'घुमास्था' के हल्ग्रहण से है । "घुमास्था" इत्यादि सूत्र में हल् का ग्रहण इसी लिये है कि हलादि प्रत्यय परे ही ईत्व हो, गोदः कम्बलदः आदि में क = अ प्रत्यय परे न हो सके । यदि यहाँ पर विप्रतिषेध नहीं माना जायगा तो हल्ग्रहण व्यर्थ हो जायगा । क्योंकि यहाँ गोदः आदि में ईत्व करने पर भी इसके असिद्ध हो जाने से आलोप हो ही सकता है । परन्तु आचार्य यह देखते हैं कि यहाँ भी विप्रतिषेध होता है । तब 'आतो लोप इटि च' (६।४।६४) की अपेक्षा "घुमास्था" (६।४।६६) परवर्त्ती होने से ईत्व ही होगा । यह न हो—इसके लिये हल्ग्रहण किया गया । 'गोदः' आदि में हलादि परे न होने से ईत्व नहीं होता है, आलोप होकर रूप बनता है । ] ॥ ४२ ॥

यकारादि कित् ङित् परे जन्, सन्, खन्—इनका आकार आदेश होता है, न् का आ होता है विकल्प से । उदा० जायते, जन्यते । [ जन् धातु से भाव अर्थ में लट् लकार में जन् + यक् + ते, यहाँ विकल्प से 'न्' का 'आ' करने पर—जायते पक्ष में जन्यते रूप होते हैं । ] जाजायते, जञ्जन्यते । [ जन्+यङ्, द्वित्व अभ्यास-कार्य ज जन् य, न् का आ दीर्घ ज जाय, "दीर्घोऽकितः" से अभ्यास का दीर्घ जा जाय+लट् त । पक्ष में जजन्+ य में 'नुगतोऽनुनासिकान्तस्य' सूत्र से अभ्यास को नुम् = न् आगम, अनुस्वार, परसवर्ण—जञ्जन्यते । ] सायते, सन्यते । [ षणु = सन् से भाव या कर्म में सन्+यक्+ते, विकल्प से आत्व दीर्घ, सायते । पक्ष में सन्यते । ] सासायते, संसन्यते । [सन्+यङ्, द्वित्व आदि के बाद पूर्ववत् विकल्प से आत्व, सवर्णदीर्घ, 'दीर्घोऽकितः' सूत्र से अभ्यास का दीर्घ—सासायते । पक्षमे नुक् आगम अनुस्वार संसन्यते । ] खायते, खन्यते । [खन् से कर्म में' यक् खन्+यक्+ते, विकल्प से आत्व, सवर्णदीर्घ] चाखायते, चङ्खन्यते । [ खन्+यङ् द्वित्व अभ्यासकार्य, चर्त्व चखन्+य, आत्व, सवर्णदीर्घ, अभ्यासदीर्घ—चाखायते । पक्ष में अभ्यास को नुक् = न् आगम, अनुस्वार, परसवर्ण—चङ्खन्यते । ] √जन् धातु से [ लट् आदि में ] श्यन् विकरण करने पर तो

**३०४५. तनोतेर्यकि ॥ ४४ ॥ (२७५९)**

तनोतेर्यकि परतो विभाषा आकार आदेशो भवति । तायते, तन्यते ।

यकीति किम् ? तन्तन्यते ।

**३०४६. सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥ (३३१५)**

सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति लोपश्चास्यान्यतरस्याम् । सातिः, सन्तिः, सतिः ।

अन्यतरस्यांग्रहणं विस्पष्टार्थम् । ये—सम्बद्धं हि विभाषाग्रहणमिह निवृत्तमित्याशङ्क्येत ॥

**न्यासः**

**तनोतेर्यकि** ॥ ४४ ॥

**सनः क्तिचि लोपश्चास्यान्यतरस्याम्** ॥ अस्य ग्रहणमनन्तरस्य क्तिचो लोपो मा भूत् । व्यवहितस्यापि नलोपो यथा स्यादित्येवमर्थम् । अथ क्रियमाणेऽप्यस्यग्रहणे कस्मादेव क्तिचो लोपो न भवति ? अस्यग्रहण-सामर्थ्यात् ।

अथान्यतरस्यांग्रहणं किमर्थम्, यावता विभाषेत्यनुवर्त्तते ? इत्याह—**अन्यतरस्यांग्रहणमित्यादि** । कथं पुनर्विभाषाग्रहणस्य निवृत्तिराशङ्क्यते, यतो विस्पष्टार्थमन्यतरस्यांग्रहणं कृतम् ? इत्याह—[1]**यकारसम्बंध होत्यादि** । तद्विभाषाग्रहणं यकारादिप्रत्ययस्य सम्बन्धेन । इह च य इत्येतस्मिन् निवृत्ते क्तिचो निमित्तान्तरस्योपादानाद-तस्तन्निवृत्तौ विभाषाग्रहणमपि निवृत्तमिति कस्यचिदाशङ्का स्यात्, अतो विस्पष्टार्थमन्यतरस्यांग्रहणं क्रियते ॥४५॥

**पदमञ्जरी**

जायते इत्येव भवति, न तु कदाचित् जन्यत इति ॥ ४३ ॥ ४४ ॥

**सनः क्तिचि लोपश्चास्यान्यतरस्याम्** ॥ अस्यग्रहणमनन्तरस्य क्तिचो मा भूदितिव्यवहितस्यापि धातोरेव यथा स्यात् । क्रियमाणे हि तस्मिन्कार्यित्वेन प्राप्तिन्यायाद्व्यवहितस्यापि धातोरेव परामर्शो भवति ।

अन्यतरस्यांग्रहणमनर्थकम्, 'विभाषा' इति प्रकृतत्वाद् ? अत आह—**अन्यतरस्यांग्रहणमिति** । ननु नैतद्विस्पष्टनीयं प्रकृतमनुवर्त्तत इति ? तदाह **ये सम्बद्धं** हीति ॥ ४५ ॥

**भावबोधिनी**

"ज्ञाजनोर्जा" सूत्र से नित्य ही 'जा' आदेश होता है । [वहाँ यकारादि होने पर भी प्रस्तुत सूत्र की प्रवृत्ति नहीं होती है । क्योंकि 'जा' आदेश अनवकाश होने के कारण नित्य विधि है ।] ॥ ४३ ॥

यक् परे रहते तन् धातु का विकल्प से आ आदेश होता है, न् का आ होता है । उदा० तायते, तन्यते । [ तन् से कर्म में यक् करने पर तन्+यक्+लट् = त, न् का आ विकल्प से, सवर्णदीर्घ । पक्ष में तन्यते । ]

यक् परे—इसका क्या फल है ? तन्तन्यते [ तन्+यङ्, द्वित्वाभ्यास कार्य के बाद ततन्+य, नुक् = न्, अनुस्वार, परसवर्ण । यक् न होने से आत्व नहीं होता है । ] ॥ ४४ ॥

क्तिच् प्रत्यय के परे रहते सनोति अङ्ग का आकार आदेश और लोप [न् का आ तथा न् का लोप] विकल्प से होता है । [दोनों का विकल्प होने से तीन रूप बनते हैं ।] उदा० साति । सतिः । सन्तिः । [ षण् = सन् धातु से क्तिच् = ति करने पर जब न् का आत्व, सवर्णदीर्घ—(१) सातिः, नलोप होने पर (२) सतिः । दोनो न होने पर (३) सन्तिः ।]

इस सूत्र में 'अन्यतरस्याम्' इसका उल्लेख स्पष्टता के लिये है । [ क्योंकि 'ये विभाषा' सूत्र में ] 'ये' से सम्बद्ध विभाषाग्रहण के यहाँ निवृत्त हो जाने की आशंका की जा सकती है । [ भाव यह है यहाँ 'क्तिच्' इस अन्य निमित्त का उल्लेख हो जाने से 'ये विभाषा' का 'यकारादि पूर्व विकल्प' यहाँ अनुवृत्त नहीं है, ऐसी शंका कोई कर सकता है । अतः 'विभाषा' की अनुवृत्ति सम्भव होने पर भी 'अन्यतरस्याम्' का ग्रहण केवल स्पष्टतः झटिति ज्ञान कराने के लिए ही समझना चाहिए विकल्पज्ञान के लिये नहीं । ] ॥ ४५ ॥

---

१. 'ये सम्बद्धं हि' ति मूले पदमञ्जर्यां च दृश्यते ।

## ३०४७. आर्धधातुके ॥ ४६ ॥ (२३०७)

'आर्धधातुके' इत्यधिकारः। 'न ल्यपि' (६.४.६९) इति प्रागेतस्माद्यदित ऊर्ध्वमनुक्रमिष्यामः 'आर्धधातुके' इत्येवं तद्वेदितव्यम्। वक्ष्यति—

"अतो लोपः'। (६.४.४८) चिकीर्षिता। जिहीर्षिता। आर्धधातुक इति किम्? भवति। भवतः।" अदिप्रभृतिभ्यः शपो लुग्वचनं (२.४.७२) प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यादित्येतन्न ज्ञापकं शपो लोपाभावस्य।

**न्यासः**

**आर्धधातुके ॥ चिकीर्षितेति** सन्नन्तात् तृच्।

**भवति, भवत इति।** 'आर्धधातुके' इत्यधिकारात् सार्वधातुकेऽत्र शपो लोपो न भवति। यद्यत्र शपो लोपो मा भूदित्येवमर्थं आर्धधातुकाधिकारः क्रियते, तर्हि न कर्त्तव्यः, ज्ञापकादेव शपो लोपो न भविष्यति, आचार्यप्रवृत्तिर्ज्ञापयति—नानेन शपो लोपो भवतीति यदयम् 'अदिप्रभृतिभ्यः शपः' इति शपो लुकं शास्ति? इत्यत आह—**अदिप्रभृतिभ्य इत्यादि।** इतिकरणो हेतौ। असति हि प्रयोजने ज्ञापकं भवति। अस्ति चादिप्रभृतिभ्यः शपो लुग्वचनस्य प्रयोजनम्। किं तत्? वित्त इत्यत्र गुणो मा भूत्। यदि वित्त इत्यत्र लोपः स्यात्, प्रत्ययलक्षणेन 'पुगन्तलघूपधस्य' इति गुणः स्यात्। मृष्ट इत्यत्र 'मृजेर्वृद्धिः' लुकि तु सति न भवति, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात्। तस्माददिप्रभृतिभ्यः शपो लुग्वचनं प्रत्ययलक्षणप्रतिषेधार्थं स्यादिति न ज्ञापकं शपो लोपाभावस्य।

**पदमञ्जरी**

**आर्धधातुके ॥ चिकीर्षितेति।** सनन्तात्तृच् भवतीति सर्वत्रातो लोपे कृते 'अतो दीर्घो यञि' इत्यस्य कोऽवकाशः, वचनात्पचाव इत्यादौ लोपं बाधित्वा दीर्घोऽस्तु। तत्र चरितार्थम् 'अदुपदेशाल्लसर्वधातुकानुदात्तत्वम्' इति? तदपि ज्ञापकं सार्वधातुकेऽतो लोपाभावस्य; यत्तर्ह्यदिप्रभृतिभ्यः शपो लुकं शास्ति तज्ज्ञापयति—न शपोऽतो लोप इति? तत्राह—**अदिप्रभृतिभ्यः शप इति।** ये तर्हि न गुणवृद्धिभाजोऽदिप्रभृतयस्तेषामदादिषु पाठोऽनर्थकः? सत्यम्; वृक्षत्वम्, वृक्षतेत्यादावतो लोपे आर्द्धधातुकाधिकारस्य प्रयोजनम्—बेभिद्यते इत्यत्र शपि सार्वधातुके न भवति। यङो यकारोपदेशस्तु हलन्तेषु चरितार्थः।

**भावबोधिनी**

'आर्धधातुके' (आर्धधातुक परे रहते)—यह अधिकार है। "न ल्यपि" (६।४।६९) इससे पहले और प्रस्तुत सूत्र के आगे यहाँ से जिन्हें कहा जायगा 'आर्धधातुक परे रहते' ऐसा उन्हें समझना चाहिए। आगे कहा जायगा—'अतो लोपः' (६।४।४८) आर्धधातुक परे रहते अकारान्त (=अन्त्य अकार) का लोप होता है। उदा० चिकीर्षिता। जिहीर्षिता। [सन्नन्त चिकीर्ष+तृच्, जिहीर्ष+तृच् इट् करने के बाद अ का लोप प्रथमा एकवचन का रूप है।] 'आर्धधातुके' इसका क्या फल है? भवति, भवतः। [यहाँ तिप् और तस् सार्वधातुक प्रत्यय परे होने से 'भव' के अ (शप्=अ) का लोप नहीं होता है।] 'अदि-प्रभृतिभ्यः शपः' (अदि आदि धातुओं से शप् का लुक् होता है) इससे शप् का लुग्वचन प्रत्ययलोप के प्रत्ययलक्षण का प्रतिषेध करने के लिए होगा, अतः वह शप् के लोप के अभाव का ज्ञापक नहीं बन सकता।

**विमर्श—**भवति। भवतः आदि में अ = शप् का लोप नहीं होता है, इसमें 'अदिप्रभृतिभ्यः' यह सूत्र ज्ञापक मान लिया जाय। क्योंकि यदि शप् का लोप सामान्य सूत्र से भी हो सकता है तो विशेष सूत्र बनाने की आवश्यकता नहीं है। अतः ये प्रत्युदाहरण ठीक नहीं है। इस शंका का समाधान यह है कि 'अदिप्रभृतिभ्यः शपः' सूत्र से शप् का लुक् इसलिये करना आवश्यक है क्योंकि उसे मान कर प्रत्ययलक्षण से 'वित्तः' [विद् + तस्] आदि में गुण न हो सके। यदि लुक् न मान कर लोप किया जायगा तो प्रत्ययलक्षण द्वारा 'पुगन्तलघूपधस्य च' सूत्र से गुण होने लगेगा। अतः वह सूत्र ज्ञापक नहीं बन सकता। प्रत्युदाहरणे ठीक ही है।

**"यस्य हलः' (६.४.४९)। बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। आर्धधातुक इति किम्? बेभिद्यते।"**

**"'णेरनिटि' (६.४.५१)। कारणा। हारणा। आर्धधातुक इति किम्? कारयति। हारयति।"**

**"आतो लोपः (६.४.६४)।' ययतुः। ययुः। ववतुः। ववुः। आर्धधातुक इति किम्? यान्ति। वान्ति।"**

### न्यासः

**बेभिदितेति**। यङो लोपः। **बेभिद्यत** इत्यत्र शपि सार्वधातुके न भवति।

**कारणेति**। 'ण्यासश्रन्थो युच्'। **कारयतीति** शपि सार्वधातुके न भवति।

**पपतुः, पपुः। ववतुः, ववुरिति**। अतुसुसौ। पातेर्वातेश्च 'आतो लोप इटि च' इत्याकारलोपः।

**दीयते, धीयत इति**। आर्धधातुके यकीत्त्वम्। **अदाताम्, अधातामिति**। लुङ्, 'तस्थस्थ' इति तसस्ताम्, 'गातिस्था' इत्यादिना सिचो लुक्।

### पदमञ्जरी

**कारयतीति**। णिज्विधानं प्रत्ययलक्षणार्थमियङर्थं च स्यात्।

**यान्तीति**। ननु 'श्नाभ्यस्तयोरातः' इत्येतन्नियमार्थं भविष्यति—सार्वधातुके श्नाभ्यस्तयोरेवेति? नैतदस्ति; विपरीतोऽपि नियमः स्यात्—श्नाभ्यस्तयोः सार्वधातुक एवेति, तदा च ययतुरित्यादौ न स्यात्। श्नाग्रहणं तूत्तरार्थं स्यात्।

### भावबोधिनी

(अनु०) "यस्य हलः" (६।४।४९ हल् से उत्तरवर्त्ती 'य' शब्द का लोप आर्धधातुक परे रहते होता है।) उदा०— बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। [ भिद् + यङ् द्वित्व अभ्यासादिकार्य के बाद बेभिद्य + तृच् बेभिद्य + इट् + तुमुन् और तव्यत् प्रत्यय परे रहते 'य' का लोप होता है और उक्त रूप बनते हैं। 'यस्य हलः' सूत्र से 'य' (स्वरव्यञ्जनसमुदाय) का लोप होता है। तीनों प्रत्यय आर्धधातुक हैं। ] आर्धधातुक परे रहते—इसका क्या फल है— बेभिद्यते। [ बेभिद्य + लट् = त, शप् = अ, पररूप होता है। शप् सार्वधातुक के परे रहते 'य' लोप नहीं होता है। ]

'णेरनिटि' (६।४।५१। अनिडादि आर्धधातुक परे रहते णि का लोप होता है।) उदा०—कारणा। हारणा। [ कारि तथा हारि इन णिजन्तों से "ण्यासश्रन्थो युच्" सूत्र से युच् = यु = अनप्रत्यय करनेपर आर्धधातुक प्रत्यय परे मान कर णिलोप हो जाता है—कार् + अन्, हार् + अन्, णत्व, टाप् करनेपर रूप बनते हैं। युच् स्त्री अर्थ में होने से टाप् होता है। ] आर्धधातुक परे रहते—इसका क्या फल है? कारयति। हारयति। [ कारि + शप् = अ + ति, हारि + अ + ति में सार्वधातुक परे होने से णिलोप न होकर गुण और अय् आदेश होता है। ]

"आतो लोप इटि च (६।४।६४। इट् तथा अजादि कित् ङित् आर्धधातुक प्रत्यय परे रहते आकारान्त अङ्ग का लोप होता है। "अलोऽन्त्यस्य" के अनुसार केवल अन्त्य आ का ही लोप होता है। ] उदा०—ययतुः। ययुः। ववतुः। ववुः। [ √या तथा √वा धातुओं से लिट् प्रथम पुरुष द्विवचन तथा बहुवचन में द्वित्व तथा अभ्यासकार्य करने के बाद य या + अतुस्, व वा + अतुस् बनने पर "आतो लोप इटि च" सूत्र से 'आ' का लोप, स् का विसर्ग होनेपर रूप बनते हैं। ] आर्धधातुक परे—इसका क्या फल है? यान्ति। वान्ति। [ लट् = झि, शप् और लुक होने पर रूप होते हैं। यहाँ सार्वधातुक परे होने से या + अन्ति, वा + अन्ति में आलोप न होनेपर उक्त रूप बनते हैं। ]

"घुमास्थागापाजहातिसां हलि" (६।४।६६। घुसंज्ञक अङ्गों तथा मा, स्था, गा, पा, जहाति और सा ("षोऽन्तकर्मणि" के सो का आत्व करनेपर सा)—इनका हलादि कित् ङित् प्रत्यय परे रहते ईकार आदेश होता है।)

"घुमास्थागापाजहातिसां हलि' (६.४.६६)। दीयते। धीयते। आर्धधातुक इति किम्? अदाताम्। अधाताम्"।

"वाऽन्यस्य संयोगादेः' (६.४.६८)। स्नेयात्, स्नायात्। आर्धधातुक इति किम्? स्नायात्। आशीर्लिङोऽन्यत्र न भवति।"

"स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' (६.४.६२)। कारिषीष्ट। हारिषीष्ट। आर्धधातुक इति किम्? क्रियेत। ह्रियेत। यगन्तस्याजन्तत्वाच्चिण्वद्भावे सति वृद्धिः स्यात्,

**न्यासः**

**स्नायात्, स्नेयादिति**। स्नातेराशिषि लिङ्, तस्य 'लिङाशिषि' इत्यार्द्धधातुकसंज्ञा, यासुट्, 'स्कोः संयोगाद्योः' इत्यादिना सकारलोपः। **आशीर्लिङोऽन्यत्र न भवतीति**। आशीर्लिङोऽन्यद् विध्यादिलिङ्, तत्र न भवति, तस्य सार्वधातुकसंज्ञकत्वात्। तेन तत्र नित्यं स्नायादित्येवं भवति। अत्र 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः।

**कारिषीष्टेति**। आशिषि लिङ्, सीयुट्, 'भावकर्मणोः' इत्यात्मनेपदम्, सुट्, तिथोः' इति सुट्, चिण्वदभावाद् वृद्धिः। **क्रियेतेति**। विध्यादिलिङ्, पूर्ववदात्मनेपदम्, सार्वधातुके यक्, सीयुडीकारेण सह 'आद्गुणः', लोपो व्योर्वलिः' इति यकारलोपः, 'रिङ् शयग्लिङक्षु' इति रिङादेशः। अत्र चिण्वद्भावेन यो दोषः स्यात् तं **यगन्तस्येत्यादिना** दर्शयति। यद्यत्र चिण्वद्भावात् वृद्धिः स्यात्, ततश्च 'आतो युक् चिण्कृतोः' इति युक् प्रसज्येत्।

**पदमञ्जरी**

**अदातामिति**। लुङ्, 'गातिस्थाघु' इत्यादिना सिचो लुक्।

**चिण्वद्भावे सति वृद्धिः स्यादिति**। नन्वतो लोपो वृद्धेः पूर्वविप्रतिषेधे, तद्यथा—चिकीर्षक इति, अदिहनिमावाप्रभृतिभ्यः शपो लुग्विधानेन सार्वधातुकेऽतोलोपाभावस्य ज्ञापितत्वात्स्वाश्रयोऽतो लापो मा भूच्चिण्वद्भावात्तु चिणि तस्य दर्शनात्स्यादेव। **वृत्तिकारेण** तु 'प्राप्तिमाश्रित्य वृद्धिः स्यात्'—इत्युक्तम्।

**भावबोधिनी**

उदा०—दीयते। धीयते। [ "दाधाघ्वदाप्" सूत्र से 'दा' और 'धा' की घु संज्ञा होने से यहाँ उन्हीं का ग्रहण है। दा+यक्+लट् = त, धा+यक्+लट् = त, प्रस्तुत सूत्र से ईकारादेश टि का एत्व करने पर रूप बनते हैं। ] आर्धधातुक परे—इसका क्या फल है? अदाताम्। अधाताम्। [ दा तथा धा के लुङ् में तस् का ताम्, च्लिका सिच् करने और अ दा+सिच्+ताम् अ धा+सिच्+ताम् में "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" सूत्र से सिच् का लुक् हो जाने के बाद केवल तिङ् बचता है जो "तिङ्शित् सार्वधातुकम्" सूत्र से सार्वधातुक है। अतः ईत्व नहीं होता है। ]

"वाऽन्यस्य संयोगादेः" (६।४।६८। घुसंज्ञक से भिन्न संयोगादि आकारान्त धातु का एकार आदेश लिङ् परे विकल्प से होता है।) उदा०—स्नेयात् स्नायात्। [ स्ना+यासुट्+लिङ् = ति। आशीर्लिङ् में "लिङाशिषि" सूत्र से आर्धधातुक संज्ञा होती है। उसे यासुट् आगम होने से यह भी आर्धधातुक का अवयव बनता है। अतः प्रस्तुत सूत्र से विकल्प से एत्व आदेश। 'स्नेयास्त्' में "स्कोः संयोगाद्योरन्ते च" सूत्र से स् का लोप होता है। पक्ष में स्नायात्। ] आर्धधातुक परे रहते—इसका क्या फल है—स्नायात्। [ यह विधि लिङ् है। अतः आर्धधातुक न होने से वैकल्पिक एत्व नहीं होता है। ] आशीर्लिङ् से भिन्न में एत्व नहीं होता है। [ क्योंकि विधि लिङ् सार्वधातुक रहता है। ]

"स्यसिच्-सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" [ ६।४।६२। भाव या कर्म विषय वाले स्य, सिच् आदि परे रहते उपदेश में अजन्त अङ्गों का तथा हन्, ग्रह, दृश—इनका चिण्वत् कार्य होता है विकल्प से। ] उदा०—कारिषीष्ट। हारिषीष्ट। [ कृ तथा हृ इन अजन्त धातुओं से कर्म में आशीर्लिङ् में कृ+लिङ्,

**ततश्च युक् प्रसज्येत"** ।

**अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ।**
**आल्लोप ईत्वमेवं च चिण्वद्भावश्च सीयुटि ॥ (म० भा० श्लोक वा० १)**

**न्यासः**

**अतो लोपो यलोपश्चेत्यादि** । आर्धधातुकाधिकारप्रयोजनसंग्रहश्लोकः । गतार्थः ।

नन्वत्र 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति रम्, 'दीङो युडचि क्ङिति' इति युडार्धधातुकाधिकार एव विधास्यते, तत् कस्मात् तौ तत्र प्रयोजनत्वेन नोपात्तौ ? एवं मन्यते—भ्रस्जो रम्भाव आर्धधातुकाधिकारं न प्रयोजयति, स तु तुदादौ पठ्यते, ततः सार्वधातुके परतः शेन भवितव्यम्, शे च सति पूर्वविप्रतिषेधाद् ग्रहिज्यादिसूत्रेण सम्प्रसारणेन भवितव्यम् । युडपि नैव प्रयोजयति, दीङो हि दिवादित्वात् सार्वधातुके श्यना भवितव्यम् । ततोऽजादित्वाभावादेव युडागमस्याभाव एव । 'आर्धधातुके' इति यदार्धधातुकसामान्यं विवक्ष्यते तदा सामान्ये पौर्वापर्यासम्भवात् विषयसप्तमीयम् । यदार्धधातुकव्यक्तिस्तदा परसप्तमी । प्रतिपादितञ्चास्माभिः 'न धातुलोप' इत्यत्र ज्ञापकद्वारेण परसप्तमीत्वं विषयसप्तमीत्वञ्चास्येति ॥ ४६ ॥

**पदमञ्जरी**

दोषोपलक्षणं वृद्धिग्रहणम्, लोपेऽपि रूपासिद्धिरेव ।

**ततो युक् प्रसज्येतेति** । 'आद्गुणः' इति तु वार्णत्वान्न लभ्यते, इट्प्रसङ्गस्तु विशेषाभावान्नोक्तः ।

प्रयोजनसंग्रहश्लोको गतार्थः । 'भ्रस्जो रोपधयोरमन्यतरस्याम्', 'दीङो युडचि क्ङिति' इत्यत्र तु नास्य प्रयोजनम्, कथम् ? भृज्जतेः सार्वधातुके तुदादित्वाच्छः, तत्र ग्रहिज्यादिसूत्रेण सम्प्रसारणम् । दीङोऽपि दिवादित्वात् श्यना भाव्यमित्युक्तान्येव प्रयोजनानि ।

असिद्धत्वनिवृत्त्यर्थं द्वितीयाध्यायगोचराः ।
आदेशा नेह विहिता वुगाल्लोपौ प्रयोजनम् ॥

अन्यथा—अस्त्यादेशस्य भवतेरसिद्धत्वान्न वुग्भवेत् ।
न चाचख्यतुरित्यादावाल्लोपः स्यात्प्रसिद्धितः ॥ ४६ ॥

**भावबोधिनी**

हृ+लिङ्, आत्मनेपद, सीयुट् = सीय्, सुट् = स् आगम इट् करने पर कृ+इ सीय् स् त, हृ+इ सीय् स् त। चिण्वद्भाव के फलस्वरूप ऋ की वृद्धि, रपर, य् लोप, दोनों का षत्व, ष्टुत्व करने पर रूप बनते हैं। ] आर्धधातुक परे—इसका क्या फल है ? क्रियेत । ह्रियेत । [ ये विधिलिङ् के रूप हैं इनमें आर्धधातुक परे नहीं होने से चिण्वद्भाव नहीं होता है। यदि आर्धधातुक परे रहते—ऐसा नहीं कहा जाता तो ] यगन्त के अजन्त होने के कारण चिण्वद्भाव होनेपर वृद्धि होने लगती और इसके फलस्वरूप आकारान्त हो जाने से 'आतो युक् चिण् कृतोः' सूत्र से युक् प्रसक्त होने लगता। फलतः क्रियेत, ह्रियेत—रूप नहीं बन पाते। वृद्धि होनेपर क्रिया+ईय् त यहाँ गुण और युक् दोनों के प्रसङ्ग में अङ्गकार्य युक् आगम बलवत्तर होने से होता, गुण नहीं होता, अनिष्ट स्थिति आ जाती। अतः आर्धधातुक परे मानना आवश्यक है। ]

[ उपर्युक्त सभी प्रयोजन भाष्य में श्लोक रूप में दिये गये है। काशिकाकार उसी श्लोक को उद्धृत कर रहे हैं— ]

(१) अलोप, (२) यलोप, (३) णिलोप, (४) आलोप, (५) ईत्व, (६) एत्व, (७) सीयुट् परे रहते चिण्वद्भाव—ये सात प्रयोजन 'आर्धधातुके' इसके अधिकार के समझने चाहिये। [ अन्य सूत्रों में इसकी आवश्यकता नहीं है। ] ॥ ४६ ॥

## ३०४८. भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ४७ ॥ (२५३५)

**भ्रस्जो रेफस्योपधायाश्च रमन्यतरस्यां भवति। 'रोपधयोः' इति स्थानषष्ठीनिर्देशादुपधा, रेफश्च निवर्त्तेते। मित्त्वाच्चायमचोऽन्त्यात्परो भवति। भ्रष्टा, भर्ष्टा। भ्रष्टुम्, भर्ष्टुम्। भ्रष्टव्यम्, भर्ष्टव्यम्। भ्रज्जनम्, भर्ज्जनम्।**

**भृष्टः, भृष्टवान् इत्यत्र पूर्वविप्रतिषेधेन सम्प्रसारणं भवति।**

### न्यासः

**भ्रस्जो रोपधयो रमन्यतरस्याम्** ॥ रमयं यदि रेफोपधयोः स्थाने स्यात् मित्त्वमनर्थकं स्यात्। अथायं रमागमोऽचोऽन्त्यात् परो भवति रेफोपधयोः श्रवणमापद्येत?—इत्येतच्चोद्यमाशङ्क्याह—**रोपधयोरित्यादि**। मित्त्वाद्रमनेनावश्यमचोऽन्त्यात् परेण भवितव्यम्, अन्यथा तदनर्थकं स्यात्। तत्र रेफोपधयोः श्रवणं स्याद् 'रोपधयो' इति षष्ठीनिर्देशोऽनर्थकः स्यात्। तस्मात् षष्ठीनिर्देश एव तयोर्निवृत्तिमाचष्टे। तस्या ह्येतदेव प्रयोजनम्—षष्ठ्या निर्दिश्यमानस्य यो धर्मो निवृत्तिः सा यथा स्यात्। न ह्यन्यत् षष्ठीनिर्देशस्य प्रयोजनमस्ति। तस्मान् मित्त्वादचोऽन्त्यात् परो भवति रम्। षष्ठीनिर्देशसामर्थ्याद् रेफोपधे स्थानिधर्मनिवृत्तिं प्रतिपद्येते। **भ्रष्टेति**। 'भ्रस्ज पाके' व्रश्चादिसूत्रेण षत्वम्। **भ्रज्जनमिति**। सकारस्य जश्त्वम्—दकारः, तस्यापि श्चुत्वम्—जकारः।

अथेह कस्मान्न भवति—भृष्टः, भृष्टवान्? इत्याह—**भृष्टः, भृष्टवानित्यादि**। रमोऽवकाशः—भर्ष्टा, भ्रष्टा, सम्प्रसारणस्यावकाशः—भृज्जतीति; इहोभयं प्राप्नोति—भृष्टः, भृष्टवानिति, ग्रह्यादिसूत्रेण सम्प्रसारणमेव भवति पूर्वविप्रतिषेधेन। पूर्वविप्रतिषधश्चेष्टवाचित्वात् परशब्दस्य लभ्यते।

### पदमञ्जरी

**भ्रस्जो रोपधयो रमन्यतरस्याम्** ॥ रमित्ययं रोपधयोर्यदि स्थाने भवति मित्त्वमस्यानर्थकं स्यात्, अथाचोऽन्त्यात्पर आगमो रोपधयोः श्रवणं प्राप्नोति? तत्राऽऽह—**रोपधयोरिति स्थानषष्ठीनिर्देशादिति**। 'रोपधयोः' इति तावत्स्थानषष्ठी, स्थानं च प्रसङ्गः, रोपधयोः प्रसङ्गे रम् प्रयुज्यते, रोपधे न प्रयुज्येते इत्यर्थः। प्रयुज्यमानश्च रम् मित्त्वादन्त्यादचः परः प्रयुज्यते। यस्य तु देशान्तरे विधानं नास्ति स स्थानिदेश एव भवति, तत्प्रसङ्गे हि तस्य विधानम्, विशिष्टदेशश्च स्थानिनः प्रसङ्गः। इह तु मित्त्वेनायं न्यायो बाध्यते स्थानषष्ठीनिर्देशसामर्थ्यात्तु देशान्तरे प्रयुज्यमानोऽपि रोपधे निवर्त्तयतीति सर्वमवदातम्। **भारद्वाजीयास्तु**—'सनः क्तिचि' इत्यतो लोपग्रहणमनुवर्त्य रोपधयोर्लोपं रमागमं चान्यतरस्यां विदधति। **भ्रज्जनमिति**। ल्युटि सकारस्य जश्त्वम्—दकारः, तस्य चुत्वम्—जकारः।

### भावबोधिनी

√भ्रस्ज् धातु के रेफ तथा उपधा (स्) दोनों के स्थान पर विकल्प से 'रम्' आगम=आदेश होता है। 'रोपधयोः' इसमें स्थानषष्ठी का निर्देश है इसलिए उपधा तथा रेफ दोनों की निवृत्ति हो जाती है, दोनों के स्थान पर 'रम्' यह आदेश होता है। और मित् होने के कारण अन्त्य अच् से परे (बाद में) होता है। उदा०—भ्रष्टा, भर्ष्टा। भ्रष्टुम्, भर्ष्टुम् भ्रष्टव्यम्, भर्ष्टव्यम्। भ्रज्जनम्, भर्ज्जनम्। [भ्रस्ज् + तृच्, र्स् के स्थान पर रम् = र्—भर्ज् + तृच्, "व्रश्चभ्रस्ज" सूत्र से ज् का ष्, ष्टुत्व, प्रथमा एकवचन में ऋ का अनङ् आदि करने पर रूप बनता है—भर्ष्टा। पक्ष में भ्रस्ज् + तृ में 'स्कोः संयोगाद्योरन्ते च" सूत्र से स् लोप, 'वृश्चादि' सूत्र से षत्व और ष्टुत्व—भ्रष्टा। भ्रस्ज् + तव्यम्, यहाँ भी पूर्वोक्त सारी प्रक्रिया होती है। ] भ्रस्ज् + ल्युट् = अन, [ रम् आदेश करने पर रेफ से परे ज् का द्वित्व—भर्ज्जनम् रम् न करने पर—भ्रस्ज् + अन, स् का जश्त्व से 'द्', श्चुत्व से द् का 'ज्' होता है—भ्रज्जनम्। ]

**उपदेश इत्येव—बरीभृज्यते ॥**

**न्यासः**

**बरीभृज्यत इति ।** यङ् । 'रीगृदुपधस्य' इति रीगागमः । अत्र 'उपदेश' इत्यधिकारात् बरीशब्दावयवस्य रेफस्योपधायाश्च निवृत्तिर्न भवतीति । न ह्ययमुपदेशे रेफः । किं तर्हि ? उत्तरकालभावी ।

अन्यतरस्यांग्रहणमिहापि स्पष्टार्थम् । सनः 'क्तिचि लोपश्चास्यान्यतरस्याम्' इत्यतो हि यदन्यतरस्यांग्रहणं प्रकृतं तत् सनादिसम्बद्धम्, इह च सनादेर्निवृत्तिः । अतस्तन्निवृत्तौ तस्यापि निवृत्तिराशङ्क्येत । अनन्तरयोगस्य चान्यार्थत्वात्, तत्रान्यतरस्यांग्रहणस्य प्रयोजनाभावात् ।

अथ भ्रस्जो भर्जेत्येवं कस्मान्नोक्तम् ? अशक्यमेवं वक्तुम् । एवं ह्युच्यमाने 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवति' इति यङ्लुगन्तादार्धधातुक उत्पन्ने सत्यभ्यासस्य भ्रस्जो भर्ज्जादेशः स्यात् ? नैष दोषः; उपदेशग्रहणेन भ्रज्जिं विशेषयिष्यामः—उपदेशे यो भ्रज्जिरिति । श्तिपा निर्देशोऽत्र वा करिष्यते—भृज्जतेर्भर्ज इति; तेन यङ्लुगन्तस्य ग्रहणं न भविष्यति । एवमपि भृज्ज्यत इत्यत्र प्राप्नोति, भवति ह्यत्रोपदेशे भ्रस्जिरिति ? नैतदस्ति; अत्र हि पूर्वविप्रतिषेधात् सम्प्रसारणेन भवितव्यम्, यथा—भृष्ट इत्यत्र । एवं तर्हि वैचित्र्यार्थं तथा नोक्तम् ॥ ४७ ॥

**पदमञ्जरी**

**पूर्वविप्रतिषेधेनेति ।** रमोऽवकाशः—भ्रष्टा, भ्रष्टुम्, सम्प्रसारणस्यावकाशः—भृज्जति, सार्वधातुकत्वादत्र रमोऽप्रसङ्गः, भृष्टः भृष्टवानित्यत्र पूर्वविप्रतिषेधः ।

अथैवं कस्मान्नोक्तम्—'भ्रस्जो रस ऋदन्यतरस्याम्' इति 'भ्रस्जेः सम्बन्धी रसिति योऽयं सङ्घातस्तस्य 'ऋ' इत्ययमादेशो भवतीत्यर्थः । तस्याक्ङिति गुणे कृते भर्जनमित्यादि रूपं भवति, ऋकाराभावपक्षे तु, भ्रज्जनमिति; क्ङिति ऋकारपक्षे भृष्टमिति, तदभावपक्षे तु, ग्रहिज्यादिसूत्रेण सम्प्रसारणे सति तदेव रूपं भवतीति पूर्वविप्रतिषेधो न वक्तव्यो भवति; उपदेशग्रहणमपि नानुवर्त्यम्, न ह्यत्र पक्षे रीकः प्रसङ्गोऽस्ति ? अत्रापि पक्षे पूर्वविप्रतिषेधो वक्तव्यः, क्व ? सिचि वृद्धौ अभार्क्षीदिति; अन्यथा ऋकारविकल्पं बाधित्वा परत्वाद्धलन्तलक्षणा वृद्धिर्नित्यं प्राप्नोति । रम्भावे तु क्रियमाणे परत्वाद्वृद्धौ कृतायामपि पुनः प्रसङ्गविज्ञानमिति सिद्धम्—अभार्क्षीदिति । न चान्तरङ्गत्वात्पूर्वमृकारः, न सिच्यन्तरङ्गमस्तीति वक्ष्यमाणत्वात् । एवं तर्हि नित्यत्वादृभावः, स हि कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि; एकदेशविकृतस्यानन्यत्वात्; शब्दान्तरप्राप्तिरपि नास्ति; वृद्धिस्तु कृते ऋभावे ऋकारस्याकृते त्वकारस्येति शब्दान्तरप्राप्तेरनित्या, तस्मादृकार एव विधेयः ? तथा तु न कृतमित्येव । भ्रस्जेर्भृज्जिरित्युच्यमाने यङ्लुकि दोषः, साभ्यासे भृज्जिभावः प्राप्नोति, इष्यते तु तत्रापि रोपधयोरेव निवृत्ती, रम्भावश्च ।

**बरीभृज्यत इति ।** यङि सम्प्रसारणे 'रीगृत्वत इति वक्तव्यम्' (वा० ८८०) इति रीक्, तस्य तन्मध्यपतितस्य तद्ग्रहणात् (व्या० प० २१) प्रसङ्गः ॥ ४७ ॥

**भावबोधिनी**

भृष्टः, भृष्टवान् [ भ्रस्ज् + क्त, क्तवतु ] इनमें पूर्वविप्रतिषेध द्वारा [ "ग्रहिज्या०" इत्यादि सूत्र से रेफ का ] सम्प्रसारणः ऋ [ अ का पूर्वरूप ] ही होता है [भृस्ज् + क्त, स् लोप, षत्व, ष्टुत्व होने पर रूप बनते हैं । ]

उपदेश में ही [ रम् आगम होता है ]—बरीभृज्यते । [ यहाँ नहीं होता है । भ्रस्ज् + यङ्, सम्प्रसारण, द्वित्व, हलादिशेष, सलोप "रीगृदुपधस्य च" सूत्र से रीक् = री आगम—बरी भृज् + य, यहाँ उपदेशकालिक भ्रस्ज् का रूप परिवर्तित हो जाने से 'रम्' आगम नहीं होता है । ] रीक् आगम होने पर भी भ्रस्ज् का ही अवयव माना जाने के कारण 'रम्' आगम की प्राप्ति होती है । ] ॥ ४७ ॥

## ३०४९. अतो लोपः ॥ ४८ ॥ (२३०८)

अकारान्तस्यार्धधातुके लोपो भवति। चिकीर्षिता। चिकीर्षितुम्। चिकीर्षितव्यम्। धिनुतः। कृणुतः।

अत इति किम्? चेता। स्तोता। तपरकरणं किम्? याता। वाता। आर्धधातुक इति किम्? वृक्षत्वम्। वृक्षता।

### न्यासः

**अतो लोपः ॥ धिनुतः, कृणुत इति।** 'हिवि दिवि धिवि प्रीणनार्थाः', 'कृवि हिंसाकरणयोः', इदित्वान्नुम्, लुट्, तस्, 'धिन्विकृण्व्योर च' इत्युप्रत्ययः, अकारश्चान्तादेशः, तस्यानेन लोपः। अथ तपरकरणं किमर्थम्, यावता धातेत्यत्र मा भूत्? ननु च 'अतो लोप इटि च' इति नियमार्थं भविष्यति—अकारस्येटयेवा-जादौ क्ङिति लोपो भवति? नैतदस्ति; विपरीतनियमोऽपि सम्भाव्येत—आत एवेटि क्ङिति नान्यस्येति। तथा च चिकीर्षितेत्यत्र न स्यात्। तस्माद् विपरीतनियमसम्भावनानिवृत्त्यर्थं तपरकरणम्। विस्पष्टार्थं वा।

### पदमञ्जरी

**अतो लोपः ॥ धिनुतः, कृणुत इति।** 'इवि दिवि धिवि प्रीणनार्थाः', (धा० पा० ५८७, ५९२, ५९३) 'कृवि हिंसाकरणयोः' (धा० पा० ५९८), लट्, तस्य तस्, 'धिन्विकृण्व्योर च' इति उप्रत्ययः, अकारोऽन्तादेशश्च, तस्य चोप्रत्ययेऽतो लोपः। एकवचने त्वन्तरेणातो लोपमुप्रत्ययस्य गुणे कृते 'अतो गुणे' इति पररूपेणापि सिद्धिः।

**चेता, स्तोतेति।** तपरकरणस्य पृथग्व्यावर्त्यस्य दर्शयिष्यमाणत्वात्तद्रहितस्याकारमात्रस्येदं प्रत्युदाहरणम्, एवं च गुणवृद्ध्योर्दीर्घेषु चरितार्थत्वाद् ह्रस्वेषु लोपप्रसङ्गः। ननु च परत्वाद् गुणो भविष्यति, तस्मात् कुटादिषु 'गु पुरीषोत्सर्गे', (धा० पा० १३९९) 'ध्रुव गतिस्थैर्ययोः' (धा० पा० १४००) इत्यत्र लोपप्रसङ्ग उदाहार्यः। **याता, वाता इति।** असति तकारेऽत्रापि लोपप्रसङ्गः, 'आतो लोप इटि च' इत्येतन्नियमार्थं भविष्यति—आत इटयेवाजादौ च क्ङिति, नान्यत्रेति? नैतदस्ति; विपरीतोऽपि नियमः स्यात्—आत एवेटि, नान्यस्येति? तथा च चिकीर्षितेत्यत्र न स्यात्।

### भावबोधिनी

अकारान्त का लोप आर्धधातुक परे होता है। [ "अलोऽन्त्यस्य" के कारण अन्त्य अकारमात्र का ही होता है। ] उदा०—चिकीर्षिता। चिकीर्षितुम्। चिकीर्षितव्यम्। [सन्नन्त कृ = चिकीर्ष से तृच, तुमुन् तव्यत् परे रहते इट् आगम करने पर प्रस्तुत सूत्र से अलोप होता है।] धिनुतः कृणुतः। [√धिवि √तथा कृवि धातुओं के इकार की इत् संज्ञा करने पर "इदितो नुम् धातोः" सूत्र से नुम् होता है—धिन्व्, कृण्व्। लट् = तस् "धिन्विकृण्व्योर च" सूत्र से 'उ' प्रत्यय और अन्त्य ( व् ) का अ आदेश होता है—धिन् अ उ + तस, कृण् अ उ + तस्। यहाँ 'अ' का लोप प्रस्तुत सूत्र से होता है। स् का रुत्व विसर्ग—धिनुतः, कृणुतः। एकवचन में धिन् अ उ + ति में उ का गुण ओ करने पर धिन् अ ओ ति में 'अतो गुणे' सूत्र से 'अ' का पररूप करके भी निर्वाह संभव है। इसीलिये तस् के उदा०—दिये गये।]

अकार का लोप—इसका क्या फल है? चेता। स्तोता। [ इनमें 'अ' न होने से लोप नहीं होता है। ] तपरकरण अर्थात् ह्रस्व अ का ही लोप होता है—इसका क्या फल है? याता। वाता। [ यहाँ दीर्घ आ का लोप नहीं होता है। ] आर्धधातुक परे रहते—इसका क्या फल है? वृक्षत्वम्। वृक्षता। [ ये 'आर्धधातुके' के अधिकार से बाहर प्रत्यय हैं। ]

❀ वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन ❀ (म० भा०)। चिकीर्षकः। जिहीर्षकः। चिकीर्ष्यते। जिहीर्ष्यते॥

**३०५०. यस्य हलः॥ ४९॥ (२६३१)**

**हल उत्तरस्य यशब्दस्यार्धधातुके लोपो भवति। बेभिदिता। बेभिदितुम्। बेभिदितव्यम्।**

**'यस्य' इति सङ्घातग्रहणमेतत्। तत्र 'अलोऽन्त्यस्य' (१.१.५२) इत्येतन्न भवति; 'अतो लोपः' (६.४.४८) इत्यनेनैव तस्य सिद्धत्वात्।**

**न्यासः**

**वृद्धिदीर्घाभ्यामित्यादि।** 'अचो ञ्णिति' इत्यस्यावकाशः—कारयति, हारयति, अतो लोपस्यावकाशः—चिकीर्षिता, जिहीर्षितेति; इहोभयं प्राप्नोति—चिकीर्षकः, जिहीर्षक इति अतो लोप एव भवति पूर्वविप्रतिषेधेन। 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यस्यावकाशः—चीयते, लूयत इति, अतो लोपस्यावकाशः स एव; इहोभयं प्राप्नोति—चिकीर्ष्यते, जिहीर्ष्यत इति, लोप एव भवति पूर्वविप्रतिषेधेन॥ ४८॥

**यस्य हलः॥ बेभिदितेति।** यङन्तादार्धधातुकं तृच्, तस्मिन् परतो यशब्दस्य लोपः। 'यस्य' इतीदं वर्णनिर्देशो वा स्याद्, यकाराकारग्रहणं वा? तत्र यद्याद्यः पक्ष आश्रीयेत तदेर्ष्यिता, मव्यितेत्यत्रापि स्यादिति द्वितीयं पक्षमाश्रित्याह—**यस्येति सङ्घातग्रहणमिति।** कुत एतत्? निर्देशात्। यदि वर्णग्रहणं स्यात्, तदा 'यो हलः' इत्येवं ब्रूयात्। यदि तर्हि सङ्घातग्रहणम्? एवं तर्हि 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यादित्यत

**पदमञ्जरी**

**वृद्धिदीर्घाभ्यामिति।** 'अचो ञ्णिति' इति वृद्धेरेवकाशः—नौरिति, अतोलोपस्यावकाशः—चिकीर्षितेति; चिकीर्षकः—इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः। वृद्धौ तु युकि—चिकीर्षायक इति स्यात्। 'अकृत्सार्वधातुकयोः' इत्यस्य दीर्घस्यावकाशः—चीयते, अतो लोपस्यावकाशः—स एव; चिकीर्ष्यते—इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः॥ ४८॥

**यस्य हलः॥** यस्येति यद्यागन्तुकोऽकारः, ततो वर्णग्रहणम्; अन्यथा तु सङ्घातग्रहणमिति पक्षद्वयसम्भवादाह—**यस्येति सङ्घातग्रहणमिति।** श्रुतस्याकारस्याविवक्षायां कारणाभावादिति भावः। **अतो लोप इत्यनेनैव सिद्धत्वादिति।** अस्तु तर्हि नियमः—यस्य हल एव नान्यतः, लोलूयिता, पोपूयिता, कैमर्थ्याद्धि नियमो

**भावबोधिनी**

* वृद्धि तथा दीर्घ की अपेक्षा अलोप पूर्वविप्रतिषेध से होता है, अर्थात् पहले लोप ही होता है। *उदा०—चिकीर्षकः। जिहीर्षकः। चिकीर्ष्यते। जिहीर्ष्यते। [ चिकीर्ष + ण्वुल् = अक, जिहीर्ष + ण्वुल् = अक यहाँ लोप और "अचो ञ्णिति" से प्राप्त वृद्धि में लोप ही पहले होता है। तब अजन्त न रह जाने से वृद्धि नहीं होती है। ] चिकीर्ष्यते। जिहीर्ष्यते। [ चिकीर्ष + यक् + त, जिहीर्ष + य + त। यहाँ लोप और "अकृत्सार्वधातुकयोः" से दीर्घ दोनों की प्राप्ति में अलोप ही होता है। तब दीर्घ का प्रसङ्ग नहीं रहता है। ]॥ ४८॥

आर्धधातुक परे रहते हल् से उत्तरवर्ती 'य' शब्द का लोप होता है। उदा०—बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। [ भिद् यङन्त के बेभिद्य से तृच्, तुमुन् और तव्यत् परे रहते इट् आगम करने पर प्रस्तुत सूत्र से 'य' का लोप हो जाता है। ]

यस्य = य का—इस स्वरव्यञ्जन-समुदाय का ग्रहण है। यहाँ "अलोऽन्त्यस्य" सूत्र से केवल अन्त्य अ का लोप नहीं होता है क्योंकि इतना लोप तो पूर्ववर्ती 'अतो लोपः' से ही होना सिद्ध है। [अतः पूरे समुदाय 'य' का ही लोप इस सूत्र से किया जाता है। ]

'हलः' इति वा पञ्चमीनिर्देशः, तत्र 'आदेः परस्य' (१.१.५४) इति यकारोऽनेन लुप्यते। सङ्घातग्रहणं किम् ? ईर्ष्यिता। मव्यिता। हल इति किम् ? लोलूयिता। पोपूयिता॥

**३०५१. क्यस्य विभाषा ॥ ५० ॥ (२६६०)**

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके। समिधिता, समिध्यिता। दृषदिता,

**न्यासः**

आह—तत्रालोऽन्त्यस्येत्यादि। कस्मान्न प्रवर्त्तते ? इत्याह—अतो लोप इत्यादि। पूर्वेणाप्यलोऽन्त्यस्य लोपः सिद्धः, तत्रारम्भसामर्थ्यात् सर्वस्य भवति।

हल इति वेत्यादिना परीहारान्तरमाह। 'हलः' इति पञ्चमीनिर्देशः, तत्र 'हल उत्तरो यो यशब्दस्तस्य लोपः' इत्युच्यमाने 'आदेः परस्य' इति वचनाद् यकारस्यैवानेन लोपो भवति। अकारस्य तु 'अतो लोपः' इत्यनेन।

ईर्ष्यिता, मव्यितेति। 'सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः', 'मव्य बन्धने'। अत्र सङ्घातात्मको यशब्दो न भवतीति न प्रवर्त्तते लोपः। लोलूयितेति। यङ् 'गुणो यङ्लुकोः' इति गुणः॥ ४९॥

क्यस्य विभाषा॥ 'क्य' इति क्यच्क्यङोरुत्सृष्टानुबन्धयोः सामान्येन ग्रहणम्; विशेषानुपादानात्।

**पदमञ्जरी**

भवति विधेयं नास्तीति कृत्वा ? इह चास्ति विधेयम्, किम् ? अन्त्यस्य लोपः प्राप्तः सर्वस्य विधेयः। तत्रापूर्वो विधिरस्तु, नियमो वेति ? अपूर्वो विधिरेव भविष्यति।

एवमपि क्यस्य विभाषायां दोषः—समिधमिच्छति समिध्यति, समिध्यतेस्तृच, इट्, समिधिता, यदा लोपस्तदा सर्वस्य लोपः, यदा त्वलोपपक्षस्तदा सर्वस्यालोपः प्राप्नोति, सङ्घातग्रहणे हि 'यस्य हलः' इत्यनेन येननाप्राप्तिन्यायेन (व्या० प० ४९) अतो लोपो बाध्यः, यलोपोऽपि 'क्यस्य विभाषा' इति विकल्पेन बाध्यः, ततश्च पक्षे सङ्घातस्यैव श्रवणं स्यात्, यलोपवदल्लोपस्यापि विकल्पेन बाधनात् ? इत्यत आह—हल इति वेत्यादि। एवं च 'क्यस्य विभाषा' इति यकारस्यैव विकल्पेन लोपः, अकारस्य तु 'अतो लोपः' इत्यनेन नित्यमिति ? सिद्धमिष्टम्; अवश्यं चातो लोप एवात्रैष्टव्यः; अन्यथा पापचक इत्यादौ 'अत उपधायाः' इति वृद्धिः स्यात्, स्थानिवद्भावान्न भवति। तस्मात्सङ्घातस्य ग्रहणम्, अवयवशस्तु लोप इति, तदेव युक्तम्।

मव्यितेति। मव्यतिः संयोगान्तोऽस्ति, ज्वरत्वरादिसूत्रे तु वकारान्त उदाहृतः॥ ४९॥

क्यस्य विभाषा॥ 'क्यस्य' इति क्यच्क्यङोः सामान्येन ग्रहणम्, क्यषस्तु हलन्तादसम्भवः। समिध-

**भावबोधिनी**

अथवा 'हलः' यह पञ्चमीनिर्देश है, इसमें "आदेः परस्य" (१।१।५४) सूत्र के अनुस्वार केवल य् का लोप किया जाता है। [ और अ का लोप तो 'अतो लोपः' इसी से होता है। अतः समुदाय का लोप मानना आवश्यक नहीं है। ]

'य' इस समुदाय के ग्रहण का क्या प्रयोजन है ? ईर्ष्यिता। मव्यिता। [ ईर्ष्य तथा मव्य धातुओं में अकार इत्संज्ञक है। अतः केवल य् होने से उसका लोप नहीं होता है। ईर्ष्य् + इट् + तृच्, मव्य् + इट् + तृच् ] हल् से परे—इसका क्या फल है ? लोलूयिता। पोपूयिता। [ यङन्त लोलूय तथा पोपूय से तृच् प्रत्यय और इट् करने पर यहाँ लोप नहीं होता है क्योंकि यहाँ हल् = व्यञ्जन से परे 'य' नहीं है। अतः केवल 'अ' का लोप होता है। ]॥ ४९॥

आर्धधातुक प्रत्यय परे रहते हल् से उत्तरवर्त्ती क्य = य का लोप विकल्प से होता है। उदा० समिधिता, समिध्यिता। दृषदिता, दृषद्यिता। यहाँ समिधम् आत्मन इच्छति—इस अर्थ में अथवा समिधम् इव आचरति आत्मानम्—इस अर्थ में क्रमशः [ "सुप आत्मनः क्यच्" सूत्र से ] क्यच्, [ "उपमानादाचारे" सूत्र से क्यच् ] और [ "कर्तुः क्यङ्

दृषद्यिता। समिधमात्मन इच्छति, [1]समिधमिवात्मानमाचरति—इति वा क्यच्क्यङौ यथायोगं कर्त्तव्यौ ॥

## ३०५२. णेरनिटि ॥ ५१ ॥ (२३१३)

अनिडादावार्धधातुके णेर्लोपो भवति। इयङ्यण्गुणवृद्धिदीर्घाणामपवादः। अततक्षत्। अररक्षत्। आटिटत्। आशिशत्। कारणा। हारणा। कारकः। हारकः। कार्यते। हार्यते। ज्ञीप्सति।

### न्यास

**समिधमिवात्मानमाचरतीति**। वेति वाशब्दः समुच्चये वर्त्तमानः समिदिवाचरतीत्यमुमर्थं ग्राहयति[1]। **यथायोगमिति**। यदात्मनः समिधमिच्छतीत्यर्थो विवक्ष्यते तदा 'सुप आत्मनः क्यच्' इति क्यच् कर्त्तव्यः, यदा समिधमिवात्मनमाचरतीति तदा 'उपमानादाचारे' इति क्यजेव, यदा समिदिवाचरतीति तदा 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्—इत्येष यथायोगशब्दार्थः ॥ ५० ॥

**णेरनिटि** ॥ **णेरिति**—णिङ्णिचोर्विशेषकरावनुबन्धावुत्सृज्य यत् सामान्यं णिमात्रं तस्य ग्रहणम्। इयङादिभिः सर्वस्य विषयस्यावष्टब्धत्वादनवकाशोऽयं णिलोपस्तेषामपवादोऽयं विज्ञायत इत्यत आह—**इयङ्यणित्यादि**। **अततक्षत्, अररक्षदिति**। तक्षिरक्षिभ्यां हेतुमण्णिच्, तदन्ताल्लुङ्, णिश्रिद्रुस्रुभ्यः' इत्यादिना च्लेश्चङ्, ङित्त्वाद् गुणस्य प्रसङ्ग एव नास्तीतीयङादेशः स्यात्। अतस्तस्यापवादो णिलोपः। **आटिटत्, आशिशत्**। अट्यशिभ्यां पूर्वं णिजादिषु कृतेषु 'अजादेर्द्वितीयस्य' इति टिशब्दशिशब्दौ द्विरुच्येते। अत्र 'एरनेकाचः' इत्यादिना प्राप्तस्य यणादेशस्यायमपवादः। **कारणा, हारणेति**। अत्र 'सार्वधातुकार्धधातुकयोः'

### पदमञ्जरी

**मिवात्मानमाचरतीति**। अप[1]पाठोऽयम्; एवं हि क्यङो वाक्यं न प्रदर्शितं स्यात्, क्यचश्च द्वितीयं वाक्यमनर्थकं स्यात्। विधिभेदान्नानर्थकमिति चेत्? यद्येवम्, 'अधिकरणाच्चेति वक्तव्यम्' (वा० १८४) इत्यस्यापि प्रदर्शनीयं स्यात्। **तस्मात्समिदिवाचरतीति** पाठः। अत्र केचित्कण्ड्वादियकोऽपि ग्रहणमिच्छन्ति, 'क्यस्य' इति कितो यकारस्य ग्रहणे तात्पर्यम्, आदित्वं ककारस्याविवक्षितं वदन्ति, नेति वयम्; आदित्वाविवक्षायां प्रमाणाभावात् ॥ ५० ॥

**णेरनिटि** ॥ इयङादिभिरेव सर्वस्य विषयस्यावष्टब्धत्वादनवकाशो णिलोपस्तेषां बाधक इत्याह—**इयङ्यणित्यादि**। ननु पाचयतेः पाक्तिः, याजयतेर्याष्टिरित्युदाहरिष्यति, 'ण्यासश्रन्थो युच्' इति युचि प्राप्ते 'क्तिन्नजादिभ्यः' (वा० ३०७) इति क्तिन्प्रत्ययः, क्तिज्वा पुनरयं द्रष्टव्यः, तत्कथमनवकाशः? उच्यते; यद्येतावत् प्रयोजनं स्यात्, अनिटीति न वक्तव्यं स्यात्, अतोऽनिटीति वचनादार्धधातुकमात्रविषयतास्यावसीयते, ततश्च युक्तमियङादीन्प्रत्यपवादत्वम्। **वार्त्तिककारेण** तु पूर्वविप्रतिषेधः पठितः—'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति। **अततक्षदिति**। अत्र चङो ङित्त्वाद् गुणस्याप्रसङ्गः, संयोगपूर्वत्वाद् 'एरनेकाचः' इति यणोऽप्यप्रसङ्गः। इयङ एवायं विषयः, अत्रेयङि सति—पुनः प्रसङ्गविज्ञानात् भवन्नपि लोपोऽन्त्यस्य स्यात्।

### भावबोधिनी

सलोपश्च" सूत्र से ] क्यङ् प्रत्यय समझने चाहिए। [ समिध् य + इट् तृच्, दृषद्य + इट् तृच में विकल्प से यलोप होने पर दो दो रूप होते है। पूर्वसूत्र नित्य लोप करता है। अतः दो-दो रूपों की सिद्धि के लिए यह सूत्र आवश्यक है। ] ॥ ५० ॥

अनिडादि ( जिसके आदि में इट् का आगम नहीं है ऐसे ) आर्धधातुक प्रत्यय परे रहते णि का लोप होता है। यह इयङ्, यण्, गुण, वृद्धि तथा दीर्घ का अपवाद है। उदा० अततक्षत्। अररक्षत्। [ तक्ष् और रक्ष् से प्रेरणार्थक

---

१-१-१, अस्य पाठस्य न्यासे साधुत्वं पदमञ्जर्यां चासाधुत्वं दृश्यते।

**अनिटीति किम्? कारयिता। हारयिता।**

**न्यासः**

इति प्राप्तस्य गुणस्य। **कारकः हारक, इति।** अत्र 'अचो ञ्णिति' इति वृद्धेः। **कार्यते, हार्यत इति।** अत्र 'अकृत्सार्वधातुकयोः' इति प्राप्तस्य दीर्घस्य। **ज्ञीप्सतीति।** 'अज्झनगमां सनि' इति प्राप्तस्य दीर्घस्यैव। जानातेर्णिचि 'अर्तिह्री' इत्यादिना पुक्, 'मारणतोषणनिशामनेषु ज्ञा' इति घटादिपाठाद् 'घटादयो मितः' इति मित्संज्ञा, 'मितां ह्रस्वः' इति ह्रस्वत्वम्, ततः सन्, 'सनीवन्तर्ध' इत्यादिना पक्ष इडागमाभावः, 'आप्ज्ञप्यृधामीत्' इतीत्त्वम्, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः।

**कारयिता, हारयितेति।** 'अनिटि' इति वचनादिह न भवति।

अनिटीति शक्यमकर्तुमु। कथम्? 'निष्ठायां सेटि' इति नियमार्थं भविष्यति—निष्ठायामेव सेटि, नास्त्यत्रेति? अयुक्तमेतत्, विपरीतनियमोऽप्याशङ्क्येत—सेट्येव निष्ठायामिति। तथा च सति कारयितेत्यत्र स्यादेव णिलोपः। तस्माद् विपरीतनियमाशङ्कानिरासार्थमनिटीत्युक्तम् ॥ ५१ ॥

**पदमञ्जरी**

**आशिशदिति।** 'एरनेकाचः' इति यणोऽत्र प्रसङ्गः। अत्र सत्यपि यणि असिद्धत्वात्पुनःप्रसङ्गविज्ञानेन वा णिलोपे सति सिद्धमिष्टम्। एवं गुणवृद्धिदीर्घविषयेऽपि द्रष्टव्यम्। न च गुणवृद्ध्योरयादेशप्रसङ्गः, 'वार्णादाङ्गं बलीयः' (व्या० प० ३९) इति णिलोपः। **ज्ञीप्सतीति।** 'आप्ज्ञप्यृधामीत्' 'अज्झनगमां सनि' इति दीर्घप्रसङ्गः।

अनिटीति शक्यमकर्तुम्। कथं कारयिता? 'निष्ठायां सेटि' इत्येतन्नियमार्थं भविष्यति—सेटि यदि भवति निष्ठायामेवेति। विपरीतस्तु नियमो न भवति—निष्ठायां सेट्येवेति; अनिटो निष्ठाया असम्भवात्। असम्भवश्चोत्तरसूत्रे वक्ष्यते।

अथ वा—'अयामन्ताल्वाय्येत्निष्णुषु' इत्यत्र णेरिति योगविभागः क्रियते, सेट्यार्द्धधातुके णेरयादेशो भवति लोपस्यापवादः ॥ ५१ ॥

**भावबोधिनी**

णिच् करके लुङ् प्रथमपुरुष एकवचन में "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यादि सूत्र से च्लि का चङ्, 'चङि' सूत्र से धातु का द्वित्व, अभ्यासादि कार्य—अत तक्ष इ + अ + ति। यहाँ 'इ' का इयङ् आदेश और लोप दोनों की प्राप्ति में इ (णि) का लोप ही होता है, ति के इलोप करने पर—अततक्षत्। इसी प्रकार अररक्ष् + इ + अ ति में भी 'इ' (णि) लोप होने पर—अररक्षत् बनता है। यहाँ भी इयङ् नहीं होता है।] आटिटत्, आशिशत्। [अट् और अश् धातुओं से णिच् करके लुङ् प्रथम पुरुष एकवचन में च्लि का चङ् = अ करने पर 'अजादेर्द्वितीयस्य' सूत्र से 'टि' 'शि' का द्वित्व होने पर आअटि टि + अति आ अ शिशि + अ + ति इनमें 'एरनेकाचोऽसंयोगपूर्वस्य' से यण् और प्रस्तुत सूत्र से णिलोप में णिलोप ही करने पर रूप बनते है।] कारणा। हारणा। [कारि + युच् = अन, णिलोप, स्त्रीत्व में टाप्। यहाँ णि का गुण और लोप की प्राप्ति में लोप ही होता है—कार् + अन + आ, णत्व-कारणा। हारि + अन + आ, णिलोप, णत्व-हारणा] कारकः। हारकः। [कारि + ण्वुल् = अक, हारि + ण्वुल् = अक, यहाँ णि = इ की वृद्धि और लोप इन दोनों में लोप ही होता है—कार् + अक, हार् + अक।] कार्यते। हार्यते। [कारि + यक् + त, हारि + यक् + त—इनमें णिलोप और "अकृत्सार्वधातुकयोः' से दीर्घ प्राप्त है। लोप ही होता है—कार्यते। हार्यते।] ज्ञीप्सति। [ज्ञा से णिच् करने पर "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" सूत्र से पुक् = प् ज्ञाप् इ। मित् मानने से ह्रस्व—ज्ञपि। इससे सन् करने पर पाक्षिक इट् के अभाव में 'आप् ज्ञप्यृधामीत्' सूत्र से आ का ई, "अत्र लोपोऽभ्यासस्य" सूत्र से अभ्यास का लोप कर देने पर ज्ञीप् + स—इसमें 'अज्झनगमां सनि" सूत्र से इ का दीर्घ प्राप्त है और प्रस्तुत सूत्र से णिलोप। णिलोप ही होता है।]

अनिट् आदि = इट् आदि में न रहने पर—इसका क्या फल है? कारयिता। हारयिता [कारि + इट् + तृच्, हारि + इट् + तृच् इनमें णि = इ का लोप न होकर गुण और अय् आदेश होता है। क्योंकि यहाँ इट् आदि में है।] ॥ ५१ ॥

## ३०५३. निष्ठायां सेटि ॥ ५२ ॥ (३०५७)

**निष्ठायां सेटि परतो णेर्लोपो भवति । कारितम् । हारितम् । गणितम् । लक्षितम् ।**

**सेटीति किम् ? संज्ञपितः पशुः । इड्ग्रहणसामर्थ्यादिह पूर्वेणापि न भवति । 'सनीवन्तर्ध' (७.२.४९) इति ज्ञपेरिटि विकल्पिते 'यस्य विभाषा' (७.३.१५) इति निष्ठायां प्रतिषेधः ।**

**अथ पुनः 'एकाचः' इति तत्रानुवर्त्तते, तदा नित्यमत्र भवितव्यमेवेडागमेनेति सेड्ग्रहणमनर्थकम् ? तत् क्रियते कालावधारणार्थम्—इडागमे कृते णिलोपो यथा स्यात् । अकृते हि तत्र णिलोपे सति कारित-**

**न्यासः**

**निष्ठायां सेटि ॥ गणितम्, लक्षितमिति ।** 'गण संख्याने', 'लक्ष दर्शनाङ्कनयोः', चुरादौ ।

**संज्ञपितः पशुरिति ।** ननु चात्र यदि सेटीति वचनादनेन न भवितव्यं तदा पूर्वसूत्रेण कस्मान्न भवति ? इत्याह—**सेड्ग्रहणसामर्थ्यादित्यादि ।** यदि ह्यनिटि पूर्वेण णिलोपः स्यात् सेड्ग्रहणमनर्थकं स्यात्, निष्ठायामित्येवं ब्रूयात्, आरम्भसामर्थ्यादेव हि सेडर्थो भविष्यति । तस्मात् सेड्ग्रहणसामर्थ्यात् पूर्वेणापि— 'संज्ञपितः पशु'रित्यत्र णिलोपो न भवति । कथं पुनरत्र सेड् निष्ठा न भवति ? इत्याह—**सनीवन्तर्धेत्यादि । अथेत्यादि ।** अथ 'यस्य विभाषा' इत्यत्र 'एकाच उपदेशेऽनुदात्तात्' इत्यत एकाज्ग्रहणमनुवर्त्तते,ततोऽनेकाच्त्वाज् ज्ञपेः प्रतिषेधाभावाद् भवितव्यमिडागमेन निष्ठायाम् । तस्मात् सेड्ग्रहणमनर्थकं स्यात्; व्यावर्त्याभावात् । ननु च ज्ञप्त इत्यत्र मा भूदित्येवमर्थं सेड्ग्रहणं भविष्यति ? नैतदस्ति; क्रियमाणेऽपि सेड्ग्रहणे 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' इति निपातनादत्र भवितव्यमेव णिलोपेन ।

**पदमञ्जरी**

**निष्ठायां सेटि ॥ सेटीति किमिति ।** अनिटि पूर्वेण सिद्धत्वात्सेडर्थमेवेदं सूत्रं भविष्यतीति प्रश्नः । सामर्थ्यात्पूर्वसूत्रप्राप्तेरेव व्यावृत्तिरित्युत्तरम् ।

**संज्ञपित इति ।** 'वा दान्तशान्तपूर्ण' इत्यत्र ज्ञपेर्निपातनमाश्रीयते—ज्ञप्तः, ज्ञपित इति । **अथ पुनरिति ।** प्रतिपत्तृविप्रतिपत्त्या सन्दिग्धाभिधानम् ।

**कालावधारणार्थमिति ।** सेड्ग्रहणे क्रियमाणे यदा निष्ठा सेड् भवति तदा लोपो भवति न प्रागिति कालावधारणं लभ्यते । किं पुनः स्याद्यद्येवमर्थं सेड्ग्रहणं न क्रियेत ? तत्राह—**अकृते हीति । णिलोपे सतीति ।** नित्यत्वात् । स हि कृतेऽपीटि प्राप्नोत्यकृतेऽपि, इट् पुनरनित्यः, णिलोपे सत्येकाच इति प्रतिषेधात् । यस्य च निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यम्, न हि बालिसुग्रीवयोर्युध्यमानयोर्भगवता रामेण बालिनि हते

**भावबोधिनी**

सेट् ( इट्सहित ) निष्ठा ( क्त, क्तवतु ) प्रत्यय परे रहने पर णि का लोप होता है । उदा०—कारितम् । हारितम् । गणितम् । लक्षितम् । [ णिच् प्रत्ययान्त कृ, हृ, गण, लक्ष—धातुओं से क्त प्रत्यय और इट् आगम करने पर प्रस्तुत सूत्र से णि का लोप होता है । ]

सेट् = इट्सहित—इसका क्या फल है ? संज्ञपितः पशुः । [ यहाँ इट् नहीं है अतः णिलोप नहीं होता है । ] इट् ग्रहण के सामर्थ्य से पूर्व सूत्र द्वारा भी यहाँ णिलोप नहीं होता है । "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञापिसनाम्" (७।२।४९) सूत्र से ज्ञप् से विकल्प से इट् करने पर "यस्य विभाषा" (७।२।१५) से निष्ठा में इट् का प्रतिषेध हो जाता है । [ अतः निष्ठा में सेट् नहीं मिल सकता । ]

उस ('यस्य विभाषा' ७।२।१५) सूत्र में (एकाच उपदेशेऽनुदात्तात्' ७।२।१० सूत्र से) 'एकाचः' इसकी अनुवृत्ति होती है तब तो यहाँ उक्त उदाहरणों में नित्य ही इट् का आगम होना चाहिए, इसलिए सेट् ग्रहण अनर्थक है ? फिर भी वह किया गया है काल का अवधारण करने के लिए—जिससे इट् का आगम कर लेने के बाद [ सेट् होने से ] णिलोप हो सके । इनमें णिलोप न करने पर 'कारितम्' यहाँ 'एकाच उपदेशेऽनुदात्तात्' इससे इट् का प्रतिषेध होने लगता ।

मित्यत्र 'एकाच उपदेशेऽनुदात्तात्' (७.२.१०) इतीटः प्रतिषेधः प्रसज्येत ॥

### ३०५४. जनिता मन्त्रे ॥ ५३ ॥ (३५४२)

**न्यासः**

यदि तर्ह्यनर्थकं सेड्ग्रहणम्, तत् किमर्थं क्रियते ? इत्याह—**तत् क्रियत इत्यादि**। पूर्वमिडागमे कृते सेटि निष्ठायां जातायां पश्चाण्णिलोपो यथा स्यादित्येवमर्थं सेड्ग्रहणं कृतम्। कः पुनरकृत इटि णिलोपे सति दोषः स्याद्, यन्निवृत्त्यर्थं पूर्वमिडागम इष्यते ? इत्याह—**अकृते हीत्यादि**। असति सेड्ग्रहणे, कारित इति स्थिते णिलोपः प्राप्नोति, इट् च, तत्र कृताकृतप्रसङ्गित्वेन णिलोपेनैव भवितव्यम्, णिलोपे च सत्येकदेशविकृतस्यानन्यत्वात् स एवायं करोतिरिति 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधः प्रसज्येत, ततश्च कारितमित्येतन्न सिध्येत्। तस्मात् सेड्ग्रहणं कर्त्तव्यम् ॥ ५२ ॥

**पदमञ्जरी**

सुग्रीवापेक्षया बालिनो दौर्बल्यं मन्यन्ते शूरमानिनः ? सत्यम्; कार्यगतभावाभावविवक्षायां तु तत्राश्रीयते। **इट्प्रतिषेधः प्रसज्येतेति**। एकदेशविकृतस्यानन्यत्वात्। एतच्च पूर्वस्मादपि विधौ स्थानिवद्भावमनाश्रित्योक्तम्।

**भाष्ये तु सूत्रमिदं प्रत्याख्यातम्**। सप्तमे 'णेरध्ययने वृत्तम्' इत्ययं योगस्त्रेधा विभक्तव्यः, क्रमविपर्ययश्चाश्रयणीयः—'णेः' इत्येको योगः, तत्र निष्ठायां नेडिति वर्तते—ण्यन्तादुत्तरस्या निष्ठाया इण्न भवति; ततः 'वृत्तम्'—वृत्तमिति निपात्यते, णिलोपः। किमर्थमिदम् ? नियमार्थम्—अत्रैव निष्ठायां णेर्लोपो भवति, नान्यत्रेति। क मा भूत् ? कारितम्, हारितम्, कैमर्थक्यान्नियमो भवति, विधेयं नास्तीति कृत्वा। इह चास्ति विधेयम्, किम् ? गुणाभावः। एवं तर्हि तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणादेकस्य नियमार्थत्वमपरस्य गुणनिषेधार्थत्वं भवति, ततोऽध्ययने, वर्तेरध्ययन एव णिलोप इति ॥ ५२ ॥ ५३ ॥

**भावबोधिनी**

**विमर्श**—'सेटि' ग्रहण के प्रत्युदाहरण के रूप में 'संज्ञपितः पशुः' यह लिखा गया है। यहाँ इट् का विकल्प होने के कारण "यस्य विभाषा" (७।२।१५) सूत्र से इट् का प्रतिषेध होता है। अतः सेट् निष्ठा न होने से णिलोप नहीं होता है।

'यस्य विभाषा' (७।२।१५) में 'एकाच उपदेशेऽनुदात्तात् (७।२।१०) से 'एकाचः' की अनुवृत्ति के कारण—जिस एकाच् का विकल्प से इट् कहा गया है उसका निष्ठा में इट् नहीं होता है। चूंकि णिजन्त ज्ञपि + स अनेकाच् है अतः इसका प्रतिषेध न हो सकने से निष्ठा में इससे इट् होगा ही। तब 'सेटि' ग्रहण का क्या लाभ है, कोई व्यावर्त्य नहीं होगा 'सेटि' ग्रहण व्यर्थ है।

यदि व्यर्थ है तो फिर इसका ग्रहण क्यों किया गया ? उत्तर है—काल का अवधारण करने के लिए—इट का आगम करने के बाद ही णिलोप हो पहले न हो। अतः 'सेटि' की सार्थकता है।

यदि इट् आगम किए विना ही णिलोप मान लिया जाय तो क्या दोष है ? कारि + त यहाँ णिलोप भी प्राप्त है और इट् भी प्राप्त है। णिलोप (कृताकृतप्रसङ्गी होने से) नित्य है अतः वही होगा। णिलोप कर देने पर भी कार् + त ऐसा ही हो जाने पर भी 'एकदेशविकृत अन्यवत् नहीं होता है' के अनुसार वही धातुरूप रहेगा। तब एकाच् हो जाने के कारण 'एकाच उपदेशेऽनुदात्तात्' इस सूत्र से इट् का प्रतिषेध हो जायगा। फलतः 'कारितम्' यह रूप नहीं बन सकेगा।

णिलोप न करने और इट् न करने पर भी 'कारितम्' ऐसा आनुपूर्वी रह सकती है ऐसी शंका नहीं करनी चाहिए क्योंकि पूर्वसूत्र से नित्य णिलोप प्रसक्त होने से यह आनुपूर्वी नहीं रह सकती। अतः 'सेटि' ग्रहण आवश्यक है ॥५२॥

मन्त्रविषय में 'जनिता' इस इडादि में णिलोप निपातित होता है। उदा० "यो नः पिता जनिता।"

जनितेति मन्त्रविषये इडादौ णिलोपो निपात्यते । 'यो नः पिता जनिता' (ऋ० १०.८२.३) ।

मन्त्र इति किम् ? जनयिता ।

## ३०५५. शमिता यज्ञे ॥ ५४ ॥ (३५४३)

यज्ञकर्मणि शमितेति इडादौ तृचि णिलोपो निपात्यते । शृतं हविः शमितः । तृचि सम्बुद्धयन्तमेतत् । यज्ञे इति किम् ? शृतं हविः शमयितः ॥

## ३०५६. अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥ (२३११)

आम्, अन्त, आलु, आय्य, इत्नु, इष्णु—इत्येतेषु परतो णेरयादेशो भवति । कारयाञ्चकार ।

### न्यासः

**जनिता मन्त्रे ॥ इडादौ णिलोपो निपात्यत इति ।** जनितेति तृजन्तम्, तत्रानिटीति प्रतिषेधादिडादौ न प्राप्नोति, अतो निपात्यते । ह्रस्वत्वं तु 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञकत्वात् 'मितां ह्रस्वः' इत्यनेनैव सिद्धम् ॥ ५३ ॥

**शमिता यज्ञे ॥** शमितरित्यत्र पूर्ववद् ह्रस्वत्वम् । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः, हल्ङ्यादिना सुलोपः, रेफस्य विसर्गः । **तृचि सम्बुद्धयन्तमेतदिति ।** निष्ठान्तमेतदिति कस्यचिदाशङ्का स्यात्, अतस्तां निराकर्तुमिदमुक्तम् । शमयितरित्येतदपि तृचि सम्बुद्धयन्तम् ॥ ५४ ॥

**अयामन्ताल्वाय्येत्न्विष्णुषु ॥ कारयाञ्चकारेति ।** 'कास्प्रत्ययात्' इत्यादिनाम्, 'आमः' इति लेर्लुक्, 'कृञ्' इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः, द्विर्वचनमभ्यासकार्यम् । **गण्डयन्तः, मण्डयन्त इति ।** 'गडि

### पदमञ्जरी

**शमिता यज्ञे ॥ तृचि सम्बुद्धयन्तमेतदिति ।** उदाहृताभिप्रायमेतत् । सूत्रे तु शुद्धप्रथमैकवचनान्तम् । सर्वासु च विभिक्तिषु निपातनम्; प्रथमैकवचनस्याविवक्षितत्वात् । तथा च सूत्रार्थकथनसमये 'इडादौ तृचि' इति सामान्येनोक्तम् । प्रयोगोऽपि तथाविध एव—'शमितारो यदत्र सुकृतमिति', (ऐ० ब्रा० २.१७.१२) शमितृभ्यश्चैवैनन्तन्निगृहीतृभ्यश्चेति च । शामित्रमिति तद्धितेऽपि भवति । सूत्रे च सम्बुद्धयन्तं विवक्षितं चेच्छमितर्यज्ञ इति प्राप्नोति ॥ ५४ ॥

**अयामन्ताल्वाय्येत्न्विष्णुषु ॥ गण्डयन्त इति ।** 'गडि सेचने' (धा० पा० ७७७) घटादिः, 'मडि भूषायाम्' (धा० पा० ३२१)—आभ्यामौणादिको झच्, 'झोऽन्तः' । **स्पृहयालुरिति ।** 'स्पृहिगृहि' इत्यादिना

### भावबोधिनी

(ऋ० १०।८२।३) [ णिजन्त जनि + तृच् इसमें इट् आगम होता है । णिच् में वृद्धि करने पर भी मित् होने से ह्रस्व हो जाता है । अतः जनि + इ + तृ में णिलोप होता है । प्रथमा एकवचन का रूप है । लोक में 'जनयिता' ऐसा बनता है । यही लिख रहे हैं— ]

मन्त्र में—इसका क्या फल है ? जनयिता [जनि + इट् + तृच्, णि=इ का गुण, अय् आदेश होता है ।] ॥ ५३ ॥

यज्ञकर्म में 'शमिता' यह इडादि तृच् में निपातित होता है । उदा० 'शृतं हविः शमितः ।'' [ शमि + तृच् इट् करने पर णिलोप होता है ।] 'शमितः' यह तृच् प्रत्यय में सम्बोधन एकवचनान्त रूप है [हे पितः, हे धातः के समान] ।

यज्ञकर्म में—इसका क्या फल है ? शृतं हविः शमयितः । [ यह सामान्य प्रयोग है । अतः णिलोप न होकर गुण और अय् आदेश होता है । ] ॥ ५४ ॥

आम्, अन्त, आलु, आय्य, इत्नु और इष्णु—इनके परे रहने पर 'णि' का 'अय्' आदेश होता है । [ लोप नहीं होता है । ] उदा० कारयाञ्चकार । हारयाञ्चकार । [ णिजन्त कारि + लिट्, हारि + लिट्—यहाँ 'कास्प्रत्ययात्'

**हारयाञ्चकार।** अन्त—**गण्डयन्तः।** **मण्डयन्तः।** आलु—**स्पृहयालुः।** **गृहयालुः।** आय्य—**स्पृहयाय्यः** (ऋ० ६.४.१२)। **गृहयाय्यः।** इत्नु—**स्तनयित्नुः।** इष्णु—**पोषयिष्णवः** (मै० ४.२.१४) **पारयिष्णवः।**

**'न' इति वक्तव्ये अयादेशवचनमुत्तरार्थम् ॥**

**न्यासः**

सेचने' मडि भूषायाम्' हेतुमण्णिच्, गडेर्घटादित्वान्मित्त्वे सति पूर्ववद् ह्रस्वत्वम्। 'जॄवृषिभ्यां झच्' इत्यनुवर्त्तमाने 'तृभूवहिवसभासिसाधिगमिमण्डिजिनन्दिभ्यश्च' इति झच्, अन्तादेशः। **स्पृहयालुः, गृहयालुरिति।** 'स्पृह ईप्सायाम्' 'गृह ग्रहणे'—चौरादिकावदन्तौ, 'अतो लोपः' इत्यकारलोपः, तस्य स्थानिवत्त्वाल्लघूपधगुणाभावः, 'स्पृहिगृहि' इत्यादिनाऽऽलुच्। **स्पृहयाय्य इति।** 'तनुदक्षिस्पृहिगृहिभ्य आय्यः' इति आय्यप्रत्ययः। **स्तनयित्नुरिति।** 'स्तन गदी देवशब्दे', चुरादावदन्तः, 'अतो लोपः'। तत्राकारलोपस्य स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न भवति। 'स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्' इतीत्नुच्प्रत्ययः। **पोषयिष्णवः, पारयिष्णव इति।** 'पुष तुष्टौ', हेतुमण्णिच्, 'पार तीर कर्मसमाप्तौ', चुरादिणिच्, 'णेश्छन्दसि' इतीष्णुच्।

अथ 'न' इत्येवं कस्मान्नोक्तम्, णिलोपे हि प्रतिषिद्धे गुण एव स्यात्, तत्र 'एचोऽयवायावः' इत्ययादेशो भविष्यति; लघु चैवं सूत्रं भवति, अयेत्युच्याने मात्राधिक्येन सूत्रं गुरु भवतीति मत्वाऽऽह—नेति **वक्तव्य इत्यादि।** 'ल्यपि लघुपूर्वात्' इत्यत्र गुणाभावादयादेशो न स्याद् यदि नेत्युच्यते। तस्मादुत्तरार्थमयादेशवचनम् ॥ ५५ ॥

**पदमञ्जरी**

आलुच्। **स्पृहयाय्य इति।** 'भृदक्षिस्पृहिभ्य आय्यः' (द० उ० ८.१)। **स्तनयित्नुरिति।** औणादिक इत्नुच्। **पारयिष्णव इति।** 'णेश्छन्दसि' इति इष्णुच्।

**नेति वक्तव्ये इति।** णिलोपे हि प्रतिषिद्धे गुणे सत्ययादेशः सिद्धः, मात्रालाघवं च भवति। **उत्तरार्थमिति।** 'ल्यपि लघुपूर्वात्' इत्यत्र न गुणः, नाप्ययादेशः ॥ ५५ ॥

**भावबोधिनी**

'कास्यनेकाचः' इनसे आम् प्रत्यय 'आमः' सूत्र से लिट् का लुक्, "कृञ्चानुप्रयुज्यते लिटि" सूत्र से लिट्परक कृ का अनुप्रयोग—कारि + आम् + कृ + लिट्, कृ का द्वित्व तथा अभ्यासादि कार्य करने पर 'चकार' बनता है। णि = इ का अय् आदेश—कार् अय् आम् चकार, म् का अनुस्वार परसवर्ण करने पर रूप बनता है। ] गण्डयन्तः, मण्डयन्तः। [ गडि तथा मडि के इकार की इत्संज्ञा होने से नुम्, अनुस्वार परसवर्ण—गण्ड्, मण्ड् से प्रेरणा अर्थ में णिच्—गण्डि, मण्डि से औणादिक 'झच्' प्रत्यय, झ का अन्त आदेश, णि = इ का अय् आदेश होता है। णिलोप नहीं होता है—गण्डयन्तः। मण्डयन्तः। न्यासकार ने घटादिगणीय मानकर मित् करके उपधाह्रस्व लिखा है। किन्तु इदित् होने से नुम् हो जाने पर उपधावृद्धि की सम्भावना ही नहीं रह जाती है। अतः न्यासकार का कथन चिन्त्य है। ] आलु—स्पृहयालुः। गृहयालुः। [स्पृहि तथा गृहि इन णिजन्त धातुओं से "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" (३।२।१५८) सूत्र से आलुच् प्रत्यय करने पर णि का अय् आदेश—स्पृहयालुः गृहयालु, यह आलुच् प्रत्यय ताच्छील्य आदि अर्थों में होता है।] आय्य—स्पृहयाय्यः। गृहयाय्यः। [ "तनुदक्षिस्पृहिगृहिभ्य आय्यः' (उणादि०) से आय्य प्रत्यय, णि = इ का अय् आदेश होता है। ] इत्नु—स्तनयित्नुः। [ स्तन शब्दार्थ चौरादिक धातु से णिच्, अलोप तथा स्थानिवद्भाव के कारण उपधावृद्धि नहीं होती है। "स्तनिहृषि०" इस औणादिक सूत्र से 'इत्नु' प्रत्यय, णि का 'अय्' आदेश—स्तन् अय् इत्नुः। ] इष्णुच्—पोषयिष्णुः। पारयिष्णवः। [ पुष—इस धातु से प्रेरणार्थक णिच्, उपधागुण पोषि + इष्णुच्। 'पार' धातु से णिच्, इष्णुच्—पारि + इष्णु, णि का अय् आदेश—पोषयिष्णुः। बहुवचन का रूप है—पारयिष्णवः [ "णेश्छन्दसि" से इष्णुच् है। ]

'न' यही कहना चाहिए था [ क्योंकि णिलोप नहीं होता है, ऐसा कह देने पर णि का गुण तथा अय् आदेश होकर कार्यनिर्वाह सम्भव था ] फिर भी अय् आदेश कहना आगे के सूत्र के लिए है ॥ ५५ ॥

## ३०५७. ल्यपि लघुपूर्वात् ॥ ५६ ॥ (३३३६)

ल्यपि परतो लघुपूर्वाद्वर्णादुत्तरस्य णेरयादेशो भवति। प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, सन्दमय्य गतः। प्रबेभिदय्य गतः। प्रगणय्य गतः।

ह्रस्वयलोपाल्लोपानामसिद्धत्वं न भवति, असमानाश्रयत्वात्—ह्रस्वादयो हि णौ, ल्यपि णेरया-

### न्यासः

ल्यपि लघुपूर्वात् ॥ लघुपूर्वादिति—लघुः पूर्वो यस्मादिति बहुव्रीहिः। वर्णोऽन्यपदार्थः। **प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्येति**। अत्र नमादीनां मित्त्वात् पूर्ववद् ह्रस्वत्वे कृते मकारो लघुपूर्वः। **प्रबेभिदय्य गत इति**। मिदेर्यङन्ताण्णिच्। 'यस्य हलः' इति यकारलोपः। अत्रापि दकारो लघुपूर्वः। **प्रगणय्येति**। 'गण संख्याने', चुरादावदन्तः, पूर्ववदल्लोपः। अत्रापि णकारो लघुपूर्वः।

ननु ह्रस्वादय एवाभाच्छास्त्रीयाः, अयादेशोऽपि; तत्र 'असिद्धवदत्रा भात्' इति ह्रस्वादीनामसिद्ध-त्वाल्लघुपूर्वत्वं मकारादेर्वर्णस्य नोपपद्यते? इत्यत आह—**ह्रस्वयलोपाल्लोपानामित्यादि**। कथमसमाना-श्रयत्वम्? इत्याह—**ह्रस्वादयो हीत्यादि**।

अथ पूर्वग्रहणं किमर्थम्, न लघोरित्येवोच्येत? अशक्यमेवं वक्तुम्; एवमुच्यमाने लघोरुत्तरस्य णेर्ल्यप्यादेशो भवतीत्येष वाक्यार्थः। तथा च प्रतमय्येत्यादौ न स्यात्, हला व्यवधानात्। क्व तर्हि स्यात्? प्रगणय्येत्यादौ। ननु चात्राप्यतो लोपे कृते लघोरुत्तरो णिर्न सम्भवत्येव, तत्र वचनसामर्थ्याद्व्यवधानमा-

### पदमञ्जरी

**ल्यपि लघुपूर्वात्** ॥ अत्र केचिदाचार्येण 'ल्यपि लघुपूर्वस्य' इति षष्ठ्यन्तमध्यापिताः, अन्ये पञ्चम्यन्तम्; तत्राद्यपक्षे प्रशमय्येत्यादौ व्यञ्जनान्ते न स्यात्, न ह्यत्र णिर्लघुपूर्वः, किं तर्हि? व्यञ्जनपूर्वः। न चाव्यवहिते सम्भवति व्यवहितं पूर्वमाश्रयितुं युक्तम्। प्रचकास्य गत इत्यादावतिप्रसङ्गश्च। क्व तर्हि स्यात्? प्रगणय्य, प्रस्तनय्येत्यादौ? यद्यप्यत्राल्लोपे कृते णिर्लघुपूर्वो न भवति, व्याश्रयत्वादल्लोपस्यासिद्धिरपि नास्ति; तथापि भूतपूर्वलघुपूर्वतामाश्रित्यात्रैव स्यात्। तथा प्रचिकीर्ष्येत्यादावपि प्रसङ्गः, सम्प्रति गुरुपूर्वत्वेऽपि भूतपूर्वगत्या। तस्माद् द्वितीयं पक्षमाश्रित्य व्याचष्टे—**लघुपूर्वाद्वर्णादिति**।

नन्वत्रापि पक्षे प्रशमय्येत्यादौ ह्रस्वादीनामसिद्धत्वादयादेशाप्रसङ्गः, क्व तर्हि स्यात्? मृदमाचष्ट इति

### भावबोधिनी

ल्यप् परे रहने पर जिस वर्ण से पूर्व में लघु है ऐसे वर्ण से उत्तरवर्त्ती 'णि' का 'अय्' आदेश होता है। उदा० प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, सन्दमय्य गतः। [ प्रपूर्वक णिजन्त नमि, तमि, दमि शमि—धातुओं से पूर्वकालिक क्रिया अर्थ में क्त्वा और उसके स्थान पर 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' सूत्र से ल्यप् = य करने पर प्रणमि + य, प्रतमि + य प्रदमि + य, प्रशमि + य, सन्दमि + य—इनमें लघुवर्ण पूर्व में है जिसके ऐसे वर्ण हैं मकार, इनसे परे है णि, इसका अय् आदेश होता है—प्रणम्अय्य = प्रणमय्य। इसी प्रकार अन्यों में भी समझना चाहिये। ] प्रबेभिदय्यगतः। [ यङन्त भिद् = बेभिद्य से णिच् करने के बाद "यस्य हलः" सूत्र से 'य' का लोप कर देने पर बेभिदि + ल्यप् = य। इसमें द से पूर्व लघुवर्ण है अतः उससे परे 'णि' का अय् होता है। ] प्रगणय्य गतः। [ 'गण संख्याने' इस चुरादिगणीय अकारान्त धातु से स्वार्थिक णिच् करने पर अकार की इत्संज्ञा लोप, स्थानिवद्भाव के कारण वृद्धि नहीं। प्रगणि + ल्यप् = य, यहाँ भी अय् होता है—प्रगण् अय्य। ]

[ ये ह्रस्वादि कार्य आभीय हैं और प्रस्तुत अय् आदेश भी आभीय है तब "असिद्धवदत्राभात्" से ह्रस्वादि कार्य असिद्ध क्यों नहीं होते जिससे लघुपूर्वत्व समाप्त हो जाय? ] ह्रस्व, यलोप, अलोप, आलोप आदि असिद्ध नहीं होते

देशो भवति। लघुपूर्वादिति किम् ? प्रपात्य: गतः ॥

**३०५८. विभाषाऽऽपः ॥ ५७ ॥ (३३३७)**

आप उत्तरस्य णेर्ल्यपि परतो विभाषाऽयादेशो भवति। प्रापय्य गतः। प्राप्य गतः।
इङादेशस्य लाक्षणिकत्वान्न भवति—अध्याप्य गतः ॥

**३०५९. युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥ (३५४४)**

**न्यास**

श्रयिष्यते ? नैतदेवम्, वचनसामर्थ्याद् भूतपूर्वगतिराश्रयिष्यते। कुत एतल्लभ्यते—वचनसामर्थ्याद्व्यवधानमाश्रयितव्यम्, न तु भूतपूर्वगतिरिति ? भूतपूर्वगतावाश्रीयमाणायां प्रगणय्येत्यादावेव स्यात्, प्रणमय्य गत इत्यादौ तु न स्यात्। तस्मात् पूर्वग्रहणं कर्त्तव्यम् ॥ ५६ ॥

**विभाषाऽऽपः ॥ प्रापय्येति।** 'आप्लृ लम्भने', 'आप्लृ व्याप्तौ'—द्वयोरपि ग्रहणम्। पूर्वकश्चुरादिः, अपरः स्वादिः।

अथाध्याप्य गत इत्यत्र कस्मान्न भवति, अत्रापि 'क्रीङ्जीनां णौ' इतीङ आत्वे कृते 'अर्त्तिह्री' इत्यादिना पुक्याप उत्तरो णिर्भवति ? इत्यत आह—**इङादेशस्येत्यादि**। यद्येवम्, अप आचष्ट इत्यप्-शब्दाण्णिचि कृते प्रापय्येत्यादि न स्यात्, लाक्षणिकत्वादेव मा भूदनेन, पूर्वेण सूत्रेण भविष्यति, ननु चैकादेशे कृते सत्यलघुपूर्वत्वान्न प्राप्नोति ? एकादेशस्यासिद्धत्वान्न दोषः। कथम् ? 'असिद्धं बहिरङ्गमन्तरङ्गे' इति बहिरङ्गत्वं त्वेकादेशस्य द्विपदाश्रयत्वात्। अयादेशस्य पुनर्णिमात्राश्रयत्वादन्तरङ्गत्वम् ॥ ५७ ॥

**पदमञ्जरी**

णिचि 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे प्रमृदय्य गत इत्यादौ स्यादत आह—**ह्रस्वयलोपाल्लोपानामिति** ॥ ५६ ॥

**विभाषाऽऽपः ॥** 'आप्लृ लम्भने' (धा० पा० १८३९) चुरादिः, 'आप्लृ व्याप्तौ' (धा० पा० १२६०) स्वादिः—द्वयोरपि ग्रहणम्। इह 'इङ् अध्ययने' (धा० पा० १०४६) णिच्, 'क्रीङ्जीनां णौ' इत्यात्वम्, 'अर्त्तिह्री', इत्यादिना पुक्, अध्याप्य गत इत्यत्रापि प्राप्नोति; आप्रूपस्य भावात्, तस्मात् सानुबन्धको निर्देश्यः।

आपुलिति पठितव्यम्, आप्लृशब्दान्ङसिः, ऋकारलकारयोः सवर्णत्वात् 'अत उत्' इत्युत्वम्,

**भावबोधिनी**

हैं क्योंकि समानाश्रय नहीं हैं, दोनों कार्यों के निमित्त अलग-अलग हैं, क्योंकि 'णि' परे रहते ह्रस्व आदि कार्य होते हैं और ल्यप् परे णि का अय् आदेश। [ इसलिये "असिद्धवदत्राभात्" का विषय नहीं बन पाने से ये ह्रस्वादि सिद्ध ही रहते हैं। ]

लघुपूर्व है जिस वर्ण के—इसका क्या फल है ? प्रपात्य गतः। [ प्र पूर्वक णिजन्त प्रपाति + ल्यप् = य, यहाँ त् से पूर्व लघु न होने से णि का अय् न होकर "णेरनिटि" सूत्र से णिलोप ही होता है—प्रपात्य गतः। ] ॥ ५६ ॥

आप् धातु से उत्तरवर्त्ती णि का 'अय्' होता है ल्यप् परे रहते विकल्प से। उदा० प्रापय्य गतः। प्राप्य गतः। [ इसमें 'आप्लृ लम्भने' और 'आप्लृ व्याप्तौ' ये चुरादिगणीय और स्वादिगणीय दोनों ली जाती हैं। प्र पूर्वक आप् से स्वार्थिक या प्रेरणार्थक णिच् करने पर प्रापि + ल्यप् = अ, प्रस्तुत सूत्र से णि का अय्, प्राप् अय् य। पक्ष में णिलोप होने पर—प्राप्य बनता है। ]

[ इङ् अध्ययने' धातु से णिच् करने पर "क्रीङ्जीनां णौ' सूत्र से आत्व और इसलिये "अर्ति-ह्री-व्लीरीक्नूयीक्ष्माय्यतां पुङ्णौ" सूत्र से युक् करने पर—अधि आपि बनाकर ल्यप् में णि का अय् होना चाहिए इसका निराकरण करते हैं— ]

अधि पूर्वक इङ् का आदेशभूत 'आप्' + णि = अध्यापि यह लाक्षणिक है अतः [ इसका ग्रहण न होने से 'णि' का 'अय्' ] नहीं होता है—अध्याप्य गतः ॥ ५७ ॥

यु, प्लु—इनका ल्यप् परे रहते वेदविषय में दीर्घ होता है। उदा० "दाम्यनुव्यं वियूय" (ऋ० १०.१३१.२)

**यु, प्लु—इत्येतयोर्ल्यपि परतश्छन्दसि विषये दीर्घो भवति । 'दान्त्यनुपूर्वं वियूय' (ऋ० १०.१३१.२) । 'यत्रा यो दक्षिणा परिप्लूय' (काठ० सं० २५.३) ।**

**छन्दसीति किम् ? संयुत्य । आप्लुत्य ॥**

**३०६०. क्षियः ॥ ५९ ॥ (३३३८)**

**क्षियश्च दीर्घो भवति ल्यपि परतः । प्रक्षीय ॥**

**३०६१. निष्ठायामण्यदर्थे ॥ ६० ॥ (३०१४)**

**ण्यतः कृत्यस्यार्थौ = भावकर्मणी, ताभ्यामन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति । आक्षीणः । प्रक्षीणः । परिक्षीणः । अकर्मकत्वात् क्षियः कर्त्तरि क्तः ।**

**प्रक्षीणमिदं देवदत्तस्येति 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (६.४.७६) इत्यधिकरणे क्तः ।**

**न्यासः**

**युप्लुवोर्दीर्घश्छन्दसि** ॥ 'यु मिश्रणे', 'प्लुङ् गतौ'—अनयोर्धात्वोस्तुकि प्राप्ते दीर्घार्थं वचनम् ॥ ५८ ॥

**क्षियः** ॥ छन्दसीति निवृत्तम् । 'क्षियः' इति 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति 'क्षि क्षये', क्षि निवासगत्योः'—इत्यनयोर्ग्रहणम्, न 'क्षिष् हिंसायाम्' इत्यस्य ॥ ५९ ॥

**निष्ठायामण्यदर्थे** ॥ **ण्यतः कृत्यस्यार्थौ भावकर्मणी इति** । 'तयोरेव कृत्यक्तखलर्थाः' इति वचनात् । **ताभ्यामन्यत्रेति** । कर्त्तर्यधिकरणे च । **आक्षीण इति** । 'क्षियो दीर्घात्' इति निष्ठानत्वम् । **अकर्मकात् क्षियः कर्त्तरि क्तप्रत्ययोऽयमिति** । 'गत्यर्थ' इत्यादिना ।

**प्रक्षीणमिदं देवदत्तस्येति** । 'अधिकरणवाचिनश्च' इति कर्त्तरि षष्ठी । **अधिकरण इति** । क्तप्रत्ययोऽयमिति प्रकृतेन सम्बन्धः । प्रक्षीयतेऽस्मिन्निति प्रक्षीणम्—अधिकरणभूतं द्रव्यमुच्यते । **क्षितमिति भाव इति** ।

**पदमञ्जरी**

'उरण्रपरः' इत्यत्र रप्रत्याहारग्रहणाल्लपरत्वम्, सकारस्य संयोगान्तलोपः, तर्त्तार्हि तथा पठितव्यम् ? नेत्याह—**इडादेशस्येति** ॥ ५७ ॥ ५८ ॥ ५९ ॥

**निष्ठायामण्यदर्थे** ॥ **ण्यतः कृत्यस्यार्थौ भावकर्मणी इति** । यद्यपि भव्यगेयादावाप्लाव्यापात्यशब्दयोः कर्त्तापि पक्षे ण्यदन्तयोर्वाच्यः; तथापि क्षियः सन्निधानात्तदीयो ण्यदर्थ एव पर्युदस्यते ।

**प्रक्षीणमिदं देवदत्तस्येति** । 'अधिकरणवाचिनश्च' इति कर्त्तरि षष्ठी । **अधिकरण इति** । क्तः प्रत्यय

**भावबोधिनी**

यत्रा यो दक्षिणा परिप्लूय । (काठ० सं० २५।३) [ वि यु + ल्यप्, परिप्लु + ल्यप्, दीर्घ होने पर रूप बनते हैं । ]

वेदविषय में—इसका क्या फल है ? संयुत्य । आप्लुत्य । [दीर्घ न होने के कारण पित् मानकर "ह्रस्वस्य पिति कृति तुक्" सूत्र से तुक् = त् आगम होने पर रूप बनते हैं । ये लौकिक प्रयोग हैं । ] ॥ ५८ ॥

ल्यप् परे रहते 'क्षि' धातु का दीर्घ होता है । उदा० प्रक्षीय । [ प्रपूर्वक 'क्षि क्षये' से क्त्वा = ल्यप् करने पर दीर्घ होनेपर रूप बनता है । इसमें 'छन्दसि' का सम्बन्ध नहीं है । ] ॥ ५९ ॥

ण्यत् इस कृत्य प्रत्यय के अर्थ हैं भाव और कर्म । [ क्योंकि भावकर्म में कृत्य प्रत्ययों का विधान है । ] इन दोनों अर्थों से भिन्न कर्ता और अधिकरण अर्थों में जो निष्ठा प्रत्यय है उसके परे पहते 'क्षि' धातु का दीर्घ होता है । उदा० आक्षीणः । प्रक्षीणः । परिक्षीणः । इनमें अकर्मक होने से 'क्षि' से कर्ता अर्थ में क्त प्रत्यय होता है । [ प्रक्षि + क्त = त, दीर्घ करने के बाद "क्षियो दीर्घात्" (८।२।४६) सूत्र से निष्ठा त का ण और उसका न होता है ।

'प्रणीक्षम्—इदं देवदत्तस्य' इसमें 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३।४।७६) इस सूत्र से अधिकरण अर्थ में क्त प्रत्यय होता है ।

अण्यदर्थ इति किम् ? अक्षितमसि मा मेक्षेष्ठाः (तै० सं० १.६.५.१)। क्षितमिति भावे दीर्घाभावात् 'क्षियो दीर्घात्' (८.२.४६) इति निष्ठानत्वमपि न भवति ॥

**३०६२. वाऽऽक्रोशदैन्ययोः ॥ ६१ ॥ (३०८१)**

आक्रोशे गम्यमाने, दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति। क्षितायुरेधि। क्षीणायुरेधि। दैन्ये—क्षितकः। क्षीणकः। क्षितोऽयं तपस्वी। क्षीणोऽयं तपस्वी॥

**३०६३. स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥ (२७५७)**

स्य, सिच्, सीयुट्, तासि—इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानाम्, हन्, ग्रह,

**न्यासः**

अस्यापि पूर्ववत् सम्बन्धः। कर्मणि न प्रत्युदाहरति; क्षियोऽकर्मकत्वात् ॥ ६० ॥

**वाऽऽक्रोशदैन्ययोः ॥ क्षितायुरिति।** पूर्ववत् कर्त्तरि क्तः। एवमुत्तरत्रापि। **क्षितक इति।** अनुकम्पायां कन्। आक्रोशदैन्याभ्यामन्यत्र पूर्वेण नित्यं भवति।

अण्यदर्थ इति किम् ? क्षितं जाल्मस्य, क्षितकमस्य तपस्विनः॥ ६१ ॥

**स्यसिचसीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥** 'स्यसिच्सीयुट्तासिषु' इति सप्तम्या प्रतियोगिनो निर्देशाच्चिणीव चिण्वदिति सप्तमीसमर्थाद्वतिर्विज्ञायते, यथा—मथुरावत् पाटलिपुत्रे प्राकार इति। **भावकर्मविषयेष्विति।** अनेन 'भावकर्मणोः' इत्यस्य विषयसप्तमीत्वं दर्शयति। भावकर्मणी

**पदमञ्जरी**

इत्यनुषङ्गः। **एवमक्षितमिति भावे** इत्यत्रापि ॥ ६० ॥

**वाऽऽक्रोशदैन्ययोः ॥ क्षितायुरिति।** पूर्ववत्कर्त्तरि क्तः। **क्षीणक इति।** 'अनुकम्पायाम्' इति कन्। प्राप्तविभाषेयम्। अण्यदर्थ इत्येव—क्षितं सर्वमस्य, क्षितमस्य तपस्विनः॥ ६१ ॥

**स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥** चिणीव चिण्वत्, 'तत्र

**भावबोधिनी**

अण्यदर्थ = ण्यत् के अर्थ से भिन्न अर्थ में—इसका क्या फल है ? "अक्षितमसि मा मेक्षेष्ठाः। (तै० सं० १।६।५।१) यहाँ 'क्षितम्' यह भाव में 'क्त' है दीर्घ न होने से 'क्षियो दीर्घात्' (८।२।४६) सूत्र से निष्ठा त का न भी नहीं होता है ॥ ६० ॥

आक्रोश या दैन्य गम्यमान रहने पर अण्यदर्थ (ण्यदर्थ = कर्म भाव से भिन्न) में 'क्षि' से परे निष्ठा का विकल्प से दीर्घ होता है। उदा० क्षितायुरेधि। क्षीणायुरेधि। [ क्षि + क्त कर्ता अर्थ में है। अतः दीर्घ होनेपर 'क्षियो दीर्घात्' से नत्व, णत्व होता है—क्षीणायुः। क्षीणम् आयुः यस्य सः तादृशः एधि। दीर्घ न होने पर नत्व भी नहीं होता है—क्षितायुः एधि = भव। अस् धातु के लोट् मध्यमपुरुष एकवचन का प्रयोग है। आक्रोश की प्रतीति है। ] दैन्य की प्रतीति में—क्षितकः। क्षीणकः। [ क्षि + क्त = क्षित से अनुकम्पा में 'कन्' प्रत्यय है। दीर्घ होनेपर पूर्ववत् नत्व, णत्व—क्षीणकः। अन्यथा क्षितकः। ] क्षितोऽयं तपस्वी। क्षीणोऽयं तपस्वी। [ क्षि + क्त, दीर्घ होनेपर नत्व, णत्व। ]

[ अण्यदर्थ में ही होता है। अतः 'क्षितम् अस्य सर्वम्; क्षितम् अस्य तपस्विनः। यहाँ कर्म अर्थ में नहीं होता है। ] ॥ ६१ ॥

भाव अथवा कर्म विषय वाले स्य, सिच्, सीयुट् और तास्—इनके परे रहते उपदेशावस्था में अजन्त धातुओं (अङ्गों) का तथा हन्, ग्रह, दृश्—इन धातुओं का विकल्प से चिण्वत् कार्य होता है। [ चिण् परे रहते जो कार्य होते हैं

**दृश्—इत्येतेषां च चिण्वत्कार्यं भवति वा। यदा चिण्वत् तदा इडागमो भवति। कस्य? स्यसिच्सीयुट्तासीनामेवेति वेदितव्यम्; ते हि प्रकृताः। अङ्गस्य तु लक्ष्यविरोधान्न क्रियते।**

**कानि पुनरस्य योगस्य प्रयोजनानि?**

**चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति।**

**इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती॥ (म० भा० श्लो० वा०)**

**न्यास।**

विषयौ येषां ते तथोक्ताः। के पुनः स्यादयो भावकर्मविषयाः? ये स्यादयो लादेशेन भावकर्मणोर्विवक्षितयोर्भवन्ति। चकारोऽत्र सन्नियोगार्थः क्रियते। तेन यदा चिण्वद्भावो भवति तदेडागमो भवति। यदा तु चिण्वद्भावो न भवति तदा त्विडागमो न भवतीति दर्शयन्नाह—**यदेत्यादि। कस्येति।** षष्ठीनिर्दिष्टस्य ह्यागमा भवन्ति, स्यादयश्चेह सप्तम्या निर्दिष्टाः; न चान्य आगमी श्रूयत इति प्रश्नः। यद्यपि ते सप्तम्या निर्दिष्टाः, तथापि यथा 'हनश्च वधः' इति पञ्चमीनिर्दिष्टोऽपि हन्तिः प्रत्ययमुत्पाद्यादेशेन सम्बन्धमनुभवन् षष्ठ्यन्ततां प्रतिपद्यते, तथा

**पदमञ्जरी**

तस्येव' इति सप्तमीसमर्थाद्वतिः; 'स्यसिच्सीयुट्तासिषु' इति प्रतियोगिनि सप्तमीनिर्देशात्, यथा—मथुरावत् पाटलिपुत्रे प्रासाद इति। **भावकर्मविषयेष्विति।** अनेन 'भावकर्मणोः' इति विषयसप्तमीति दर्शयति। भावकर्मणोर्ये स्यादयो वर्त्तन्ते तेष्विति तु विज्ञायमाने सीयुडेको विशेषितः स्यात्, स्यादयो न विशेषिताः स्युः; भावकर्मणोर्लादेशवाच्यत्वात्सीयुटश्च तद्भक्तत्वात्। अथ यदाभावकर्माभिधायी प्रत्ययो भावकर्मशब्दाभ्यामभिधीयते, तदायमर्थः स्यात्—भावकर्मवाचिनि प्रत्यये परतो ये स्यादय इति। तदा स्यादयो विशेषिताः, सीयुडविशेषितः, न हि तद्भक्तस्य तेन सह पौर्वापर्यं सम्भवति। तस्मात्सर्वानुग्रहाय विषयसप्तम्येव युक्ता। **यदा चिण्वत्तदेडागमो भवतीति।** चकारस्य सन्नियोगार्थत्वात्। **कस्येति।** षष्ठीनिर्दिष्टस्यागमो भवति, स्यादयश्च सप्तमीनिर्दिष्टाः, 'अज्झनग्रहदृशाम्' इति षष्ठीनिर्दिष्टम्, 'अङ्गस्य' इति च वर्तते, अतोऽजन्तादीनामङ्गानामेवागमित्वं युक्तमिति विपर्ययं मन्यमानस्य प्रश्नः। **स्यसिच्सीयुट्तासीनामेवेति।** कथम्? इत्याह—**ते हि प्रकृता**

**भावबोधिनी**

वे इनमें विकल्प से किये जाते हैं—यह भाव है।] जब चिण्वद् होता है तब इट् आगम होता है। किसे इट् आगम होता है? स्य, सिच्, सीयुट् तथा तासि को ही होता है—ऐसा समझना चाहिए, क्योंकि इन्हीं का प्रकरण है, उल्लेख है। अङ्ग का इट् आगम तो लक्ष्य के विरोध से कारण नहीं किया जाता है। [ यदि अङ्ग को इट् आगम किया जायगा तो इष्ट शब्द रूपों की सिद्धि नहीं हो सकेगी। इसलिए इन प्रकरणप्राप्त स्य आदि के लिए ही इट् मानना चाहिए।]

[ चिण्वत्—यह अतिदेश है। इससे दो अर्थ निकल सकते हैं—(१) चिण्निमित्तक जो कार्य है, चिण् परे जिसका उच्चारण करके किया जाता है वह कार्य अतिदिष्ट होता है। अथवा (२) चिण् परे रहते जो देखा जाता है, वह चिण्निमित्तक या अचिण्निमित्तक कैसा भी हो, अतिदिष्ट होता है। इन दोनों में द्वितीय पक्ष माना जाता है। 'चिण्वत्' यहाँ सप्तम्यन्त से वति प्रत्यय है। यह सामान्य निर्देश है। अतः अब द्वितीय पक्ष के अनुसार भाष्योक्त प्रयोजन प्रस्तुत किये जाते हैं— ] इस सूत्र के कौन से प्रयोजन हैं?

(१) चिण्वद्भाव का प्रयोजन है—वृद्धि। [ चेष्यते, चायिष्यते ] (२) और युक् प्रयोजन है—ग्लास्यते, ग्लायिष्यते।] (३) हन् धातु के ह का घत्व प्रयोजन है—हनिष्यते, घानिष्यते।] (४) और मित् धातुओं का चिण् परे जो विकल्प से दीर्घ कहा गया है, वह प्रयोजन है [—शमिष्यते शामिष्यते]। (५) इट् असिद्ध होना प्रयोजन है जिससे "णेरनिटि" (६।४।५१) से णिलोप हो सके। यह णिलोप नित्य है। वल् = वलादिनिमित्तक इट् विघाती है। [ विघात = निमित्त न होने से प्रवृत्त न होना। जो ऐसा है वह विघाती है।]

**न्यासः**

स्यादयोऽपि यदागमेन सम्बन्धमनुभवन्ति तदा षष्ठ्यन्ततां प्रतिपद्यन्त इत्यभिप्रायेणाह—**स्यसिजित्यादि**। अत्रैव हेतुमाह—**ते हि प्रकृता इत्यादि**। इडयमागमलिङ्गः, तस्यावश्यमागमिना भवितव्यम्, तत् किमश्रुतानामागमित्वं परिकल्प्य, तस्यैव विधीयतामुत प्रकृतानामेव स्यादीनामिति ? युक्तं यत् प्रकृतानामेव विधीयते; अश्रुत-प्रकल्पनाया गरीयस्त्वात्। ननु चाङ्गमपि प्रकृतम्, तस्य कस्मान्न क्रियते ? इत्यत आह—**अङ्गस्येत्यादि**। अङ्गस्य न क्रियते, लक्ष्यविरोधात्। यद्यङ्गस्य स्यात्, तदेटि कृते लक्ष्यविरोधादनिष्टं स्यात्। न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता। तस्मान्मा भूल्लक्ष्यविरोध इति यद्यप्यङ्गमपि प्रकृतम्, तथापि स्यादीनामेव क्रियते, नाङ्गस्य।

इह द्वौ पक्षौ सम्भवतः—चिण्निमित्तं यत् कार्यम्, यदाहत्य चिणि विधीयते तद्वातिदिश्यते। यद्वा चिणि यद् दृष्टं चिण्निमित्तमचिण्निमित्तं च तत् सामान्येन। तत्र यदि पूर्वकः पक्ष आश्रीयेत, तदा 'आतो युक् चिण्कृतोः' इति युगागमः, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति दीर्घत्वञ्च—एते द्वे एवाङ्गकार्ये अतिदिश्ये स्याताम्। नान्यद् वृद्ध्यादिकम्, न हि तदाहत्य चिणि विधीयते। आहत्य = उच्चार्येत्यर्थः। यद्धि साक्षाच्चिणं निमित्तमुपादाय विधीयते तच्चिण्याहत्य विधीयते, न चैवं वृद्ध्यादिकं विधीयते। अथ द्वितीयस्ततो न भवत्येष दोषप्रसङ्गः; वृद्ध्यादीनामपि चिणि दृष्टत्वात्।

यदि चिणि यद् दृष्टं तदतिदिश्यते, तर्हि हनिणिङामादेशा अपि प्राप्नुवन्ति, तेषामपि तत्र दृष्टत्वा-दिति ? अनेनाभिप्रायेणाह—**कानि पुनरित्यादि**।

द्वितीये पक्षे यो दोषस्तमुत्तरत्र परिहरिष्यामीति चेतसि कृत्वा चिणि यददृष्टं कार्यं तन्निमित्तमितरद्वा तदिह सामान्येन निर्दिश्यत इति दर्शयन्नस्य योगस्य यानि प्रयोजनानि तेषां संग्रहश्लोकमाह–**वृद्धिश्चिण्वदित्यादि**।

**पदमञ्जरी**

**इति**। सन्निहिता इत्यर्थः। नन्वङ्गमपि प्रकृतं योग्यविभक्तिकं च ? तत्राह—**अङ्गस्य त्विति**। **लक्ष्यविरोधा-दिति**। यद्वा—सप्तमे योगविभागः क्रियते, आर्धधातुकस्येट्, परिभाषेयम्, यो यावान्कश्चिदिडागमः स सर्व आर्धधातुकस्यैव द्रष्टव्यः, तेनायमपीडागमः स्यादीनामेव भवति, नाङ्गस्य।

**कानि पुनरिति**। चिणि यदेवाहत्य विहितं तदेवातिदिश्यते, आहोस्वित् चिणि दृष्टमात्रमिति प्रश्नः। तत्र द्वितीयः पक्ष आश्रीयत इति श्लोकेन दर्शयति—**चिण्वद्वृद्धिरिति**। यथा चिणि वृद्धिः तथा स्यादिष्वपीष्यते—घानिष्यते। एतदेकं प्रयोजनम्, एवमुत्तरत्रापि। प्रत्येकं सम्बन्धेन यथायोगमतिदेशो योज्यः। दायिष्यत इति, 'आतो युक् चिण् कृतोः' इति युक्, एतच्चिण्याहत्य विहितम्। यच्च 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वमघानीत्यत्र दृष्टम्, तदपि प्रयोजनम्—घानिष्यत इति। यच्च 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति दीर्घविकल्पविधानं तदपि

**भावबोधिनी**

**विमर्श**—भाव यह है कि प्रस्तुत सूत्र से इट् होता है, यह आभीय है अतः असिद्ध हो जाता है, इस कारण 'अनिट्' यह प्रतिषेध लागू नहीं होता है और 'शामिता' आदि में 'णेरनिटि' से णिलोप हो जाता है। 'भाविष्यते' आदि में भी यही इट् समझना चाहिये क्योंकि वलादिलक्षण इट् अनित्य है, क्योंकि जब इस सूत्र से चिण्वद्भाव और इसका सन्नियोगशिष्ट इट् कर दिया जाता है तब वलादित्व समाप्त हो जाता है। और इस इट् के लिये वलादि होने की आवश्यकता नहीं है। हर स्थिति में होने से नित्य है। अतः यही किया जाता है। भाष्यकार ने लिखा है—

"इटोऽसिद्धत्वात् 'णेरनिटि' (६।४।५१) इति णिलोपो यथा स्यात्। कथमयं नित्यः ? कृताकृतप्रसङ्गित्वात्। कृताकृतप्रसङ्गी ह्ययम्। कृतेऽपि तस्मिन्निटि साप्तमिके "आर्धधातुकस्येड्वलादेः" (७।२।३५) इति, पुनरनेनायं भवति। अस्मिंस्तु विहिते वलादित्वस्य निमित्तस्य विहतत्वात् साप्तमिको न भवति निमित्तं विहतं भवति। अयं तस्य निमित्तं विहन्ति तस्मादयं नित्यः। स तु अस्य निमित्तं न विहन्ति।" (म० भा० ६।४।६२)

**अजन्तानां तावत्—चायिष्यते, चेष्यते, अचायिष्यत, अचेष्यत । दायिष्यते, दास्यते, अदायिष्यत, अदास्यत । शामिष्यते, शमिष्यते, शमयिष्यते, अशामिष्यत, अशमिष्यत, अशमयिष्यत । हन्—घानिष्यते,**

**न्यासः**

चायिष्यत इत्यत्र वृद्धिः प्रयोजनम् । चिनोतेर्लृट्, स्यप्रत्ययः 'भावकर्मणोः' इत्यात्मनेपदम्, अत्रेदानीं चिण्वद्भावाद् वृद्धिर्भवति । यथा—चिणि 'अचो ञ्णिति' इति वृद्धिर्भवत्यचायीति, एवमुत्तरत्रापि चिण्वदि-

**पदमञ्जरी**

प्रयोजनम् । एतदपि चिण्याहृत्य विहितम्—शमिष्यते, शामिष्यत इति शमेर्णिचि 'मितां ह्रस्वः' लुटि स्ये चिण्वद्भावेन दीर्घविकल्पः, 'णेरनिटि' इति णिलोपः ।

नन्वनिटीत्युच्यते, सेट् चायम् ? अत आह—**इट् चासिद्ध इति** । आभाच्छास्त्रीये णिलोपे कर्त्तव्ये आ भाच्छास्त्रीयश्चिण्वदिडसिद्धः, तेनानिडादित्वात्सिद्धो णिलोप इत्यर्थः । **मे इति** । सूत्रकारायमाणस्य वचनम् । ननु चास्य चिण्वदिटोऽवकाशः येऽनिटः, येषु 'ऋद्धनोः स्ये' इत्यादि प्रतिपदविधानं नास्ति; आर्द्धधातुकस्येत्य-स्यावकाशः—सेड् योऽस्य विषयो न भवति; यस्तु सेडस्य च सूत्रस्य विषयः, तत्र परत्वात् 'आर्धधातुकस्ये-ड्वलादेः' इत्ययमेव प्राप्नोति, तत्कथमसिद्धत्वम् ? अत आह—**नित्यश्चायमिति** । अयं चिण्वदिण्णित्यः,

**भावबोधिनी**

(अनु०) अब उदा० पहले अजन्त अङ्गों के—चायिष्यते, चेष्यते । अचायिष्यत, अचेष्यत । [ चिञ् चयने से कर्म अर्थ में लृट् तथा लृङ् के रूप हैं । इनमें 'स्य' होनेपर विकल्प से चिण्वद्भाव और इट् आगम करने पर चि + इ + स्य ते में इ की वृद्धि और आय् आदेश, षत्व—चायिष्यते । पक्ष में चेष्यते । लृङ् में अट् आगम होता है । टि का एत्व नहीं होता है—अचायिष्यत, अचेष्यत ] दायिष्यते, दास्यते । अदायिष्यत, अदास्यत [ दा धातु से लृट् और लृङ् में स्यप्रत्यय करने पर पूर्ववत् वैकल्पिक चिण्वद्भाव तथा इट् होता है । चिण्वद्भाव के कारण "आतोयुक् चिण् कृतोः" सूत्र से युक् = य् आगम होने से—दायिष्यते, अदायिष्यत । पक्षमे दास्यते, अदास्यत । ] शामिष्यते, शमिष्यते, शमयिष्यते । अशामिष्यत, अशमिष्यत, अशमयिष्यत । [ णिजन्त शमि धातु से भाव अर्थ में लृट् स्य—शमि + इ + स्य ते, मित् होने से वृद्धि करने पर भी ह्रस्व ही रहता है । प्रकृतसूत्र से विकल्प से चिण्वद्भाव तथा इट् करने से पहले 'णेरनिटि' से णि का लोप हो जाता है । चिण्वद्भाव के कारण "चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" (६।४।९३) से विकल्प से दीर्घ होता है—शामिष्यते । दीर्घ न होनेपर—शमिष्यते । चिण्वद्भाव न होनेपर वलादिलक्षण इट् आगम णि = इ का गुण, अय् आदेश—शमयिष्यते । इसी प्रकार लृङ् में भी तीनों रूप समझने चाहिए—(१) चिण्वद्भाव इट् दीर्घ वाला, (२) दीर्घरहित (३) चिण्वद्भाव न होनेपर वलादिलक्षण इट्, गुण अय् आदेश वाला— ] अशामिष्यत, अशमिष्यत, अशमयिष्यत ।

अब हन् के उदा० घानिष्यते, हनिष्यते । अघानिष्यत, अहनिष्यत । [ हन् से कर्म में लृट्, स्य, त करने पर प्रस्तुत सूत्र से विकल्प से चिण्वद्भाव तथा इट् करने पर 'होहन्तेर्ञ्णिन्नेषु' (७।३।५४) सूत्र से ह का कुत्व घ् । णित् होने से कुत्व के अतिरिक्त उपधावृद्धि भी होती है—घान् इ + स्य+त, षत्व, टि का एत्व—घानिष्यते, पक्ष में हनिष्यते । ] अघानिष्यत, अहनिष्यत । [लृङ् में अडागम के अतिरिक्त पूर्वोक्त सभी प्रक्रिया होती है । ] ग्रह के उदा० ग्राहिष्यते, ग्रहीष्यते । [ ग्रह + लृट् = त, स्य, चिण्वद्भाव, इट्, उपधावृद्धि, षत्वादि—ग्राहिष्यते । चिण्वद्भाव न होने पर "ग्रहोऽलिटि दीर्घः" (७।२।३७) से दीर्घ होता है । यह दीर्घ चिण्वद्भाव पक्ष में नहीं होता है क्योंकि ] "ग्रहोऽलिटि दीर्घः" (७।२।३७) इस सूत्र से प्रकृत अर्थात् "आर्धधातुकस्येड्वलादेः" (७।२।३५) से प्राप्त इट् का दीर्घ होता है । दृश् के उदा० दर्शिष्यते, द्रक्ष्यते । अदर्शिष्यत्, अद्रक्ष्यत । [ दृश् से कर्म अर्थ में लृट् और लृङ् में 'स्य' करने पर वैकल्पिक

**हनिष्यते, अघानिष्यत, अहनिष्यत। ग्रह—ग्राहिष्यते, ग्रहीष्यते, अग्राहिष्यत, अग्रहीष्यत। 'ग्रहोऽलिटि दीर्घः' (७.२.३७) इति प्रकृतस्येटो दीर्घत्वम्। दृश्—दर्शिष्यते, द्रक्ष्यते, अदर्शिष्यत, अद्रक्ष्यत।**

**सिच्यजन्तानाम्—अचायिषाताम्, अचेषाताम्। अदायिषाताम्, अदिषाताम्। अशामिषाताम्। अशमिषाताम्, अशमयिषाताम्। हन्—अघानिषाताम्, अवधिषाताम्, अहसाताम्। ग्रह्—अग्राहिषाताम्, अग्रहीषाताम्। दृश्—अदर्शिषाताम्, अदृक्षाताम्।**

**न्यासः**

त्येतस्य प्रत्येकमभिसम्बन्धं कृत्वा यथायोगमतिदेशो योजनीयः। **अचायिष्यत इति**। लृङ्, शेषं पूर्ववत्। युक् च प्रयोजनम्—दायिष्यत इत्यत्र। दीर्घश्चोक्तो यो मितां वा चिणीति स च। प्रयोजनम्—शमिष्यते, शामिष्यते इत्यत्र। शमेः 'जनिजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञा, स च ण्यन्तः 'सनाद्यन्ता धातवः' इत्यत्रोपदिष्ट इत्युपदेशोऽजन्तो भवति। यत्तु हन्तेः 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वं विधास्यते, तच्च प्रयोजनम्—**घानिष्यत** इत्यत्र। हनिष्यत इत्यत्र तु 'ऋद्धनोः स्ये' इतीट्।

सन्त्येतानि प्रयोजनानि, किन्त्वनेनेटि कृते शमिष्यते, शामिष्यत इत्यत्र 'णेरनिटि' इति णिलोपो न सिध्यति; सेट्त्वात्। अत आह—**इट् चासिद्ध इत्यादि**। 'असिद्धवदत्रा भात्' इत्यसिद्धोऽयं चिण्वदिट्, तेन णिलोपो भविष्यति। स्यादेतत्—येऽनुदात्तोपदेशाश्चिनोत्यादयस्तेभ्यः परेषां स्यादीनामनेनेड् विधीयत इति युक्तमसिद्धत्वम्, ये तूदात्तोपदेशाः शमिप्रभृतयस्तेभ्यः परत्वाद् 'आर्धधातुकस्येड् वलादेः' इति वलिनिमित्तेनेटा भवितव्यम्, स च सिद्ध एव; तस्मिंस्तु तदवस्थ एव दोषः? इत्यत आह—**नित्यश्चायमित्यादि**। कृताकृतप्रसङ्गी यो विधिः स नित्यः—इत्येतदाश्रित्यायं चिण्वदिड् नित्यः। कृतेऽपि हि बलादिलक्षण इटि प्राप्नोत्यकृतेऽपि, न ह्ययं बलादित्वमपेक्षते। अस्मिंस्तु कृते वलादिलक्षण इट् न प्राप्नोति; वलादित्वस्य विहतत्वात्। **वलिनिमित्तो विघातीति**। वल् निमित्तं कारणं यस्य स तथोक्तः। विघातोऽस्यास्तीति विघाती। विघातः = निमित्ताभावादप्रवृत्तिः। तदेवं नित्यत्वादुदात्तेभ्योऽप्यनेनैव चिण्वदिटा भवितव्यम्, अयञ्चासिद्ध इति न भवति णिलोपा-

**भावबोधिनी**

चिण्वद्भाव तथा इट् करने पर गुण, रपर आदि—दर्शिष्यते। पक्ष में 'सृजिदृशोर्झल्यमकिति'' सूत्र से अम् = अ आगम दृ अ श् + स्य + ते, ऋ का यण् र्, द्रश् + स्य ते, ''व्रश्च भ्रस्ज०'' इत्यादि सूत्र से श् का ष, ''षढोः कः सि' सूत्र से ष् का क्। द्रक् + स्यते, 'इण्कोः' से षत्व, क् + ष = क्ष करने पर—द्रक्ष्यते। लृङ् में अट् आगम होता। ]

सिच् परे अजन्त धातु के उदा० अचायिषाताम्, अचेषाताम्। [ 'चि' से कर्म अर्थ में लुङ् प्रथम पुरुष द्विवचन में च्लि, सिच् करने पर—अचि + स् + आताम्। चिण्वद्भाव तथा इट् करने पर वृद्धि आय् आदेश—अ चाय् इ स् आताम्, षत्व—अचायिषाताम्। पक्ष में—गुण करने परे—अचेषाताम्। ] अदायिषाताम् अदिषाताम्। [ दा + लुङ् = आताम्, अट् सिच् = स्, चिण्वद्भाव तथा इट् करने पर ''आतो युक् चिण्कृतोः'' सूत्र से युक् = य् आगम—अ दा य् इ स् आताम्, षत्व अदायिषाताम्। पक्ष में ''स्थाघ्वोरिच्च'' (१।२।२७) सूत्र से 'आ' का 'इ' और कित्व होने के कारण गुण का निषेध—अदिताषाम्। ] अशामिषाताम्, अशमिषाताम्, अशमयिषाताम् [ णिजन्त शमि के लुङ् = आताम् के रूप हैं। लट् के समान चिण्वद्भाव, इट् वैकल्पिक दीर्घ णि लोप। पक्ष में चिण्वद्भाव न होने पर वलादिलक्षण इट्, गुण, अय् आदेश—अशमयिषाताम् ] हन् के उदा०—अघानिषाताम्, अवधिषाताम्, अहसाताम्। [ हन् लुङ् = आताम् सिच् = स्, चिण्वद्भाव तथा इट् करने पर ''होहन्तेर्ञ्णिन्नेषु'' सूत्र से कुत्व, 'ह' का 'घ', षत्व, उपधावृद्धि०—अघानिषाताम्। ''आत्मनेपदेष्वन्यतरस्याम्'' सूत्र से विकल्प से 'वध' आदेश—अवधिषाताम्। दोनो न होने पर ''हनः सिच्' (१।२।१४) से सिच् के कित् हो जाने से 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः झलि क्ङिति'' (६।४।३७) से अनुदात्तोपदेश हन् के न् का लोप—अहसाताम्। ] ग्रह के उदा० अग्राहिषाताम्, अग्रहीषाताम्। [ ग्रह् + लुङ् = आताम्, सिच् चिण्वद्भाव पक्ष में उपधा की वृद्धि—अग्राहिषाताम्। पक्ष में 'ग्रहोऽलिटि दीर्घः'' सूत्र से इट् दीर्घ—अग्रहीषाताम्। ]

**सीयुटि अजन्तानाम्—चायिषीष्ट, चेषीष्ट । दायिषीष्ट, दासीष्ट । शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट । हन्—घानिषीष्ट, वधिषीष्ट । ग्रह—ग्राहिषीष्ट, ग्रहीषीष्ट । दृश्—दर्शिषीष्ट, दृक्षीष्ट ।**

**तासावजन्तानाम्—चायिता, चेता । दायिता, दाता । शामिता, शमिता, शमयिता । हन्—घानिता, हन्ता । ग्रह—ग्राहिता, ग्रहीता । दृश्—दर्शिता, दर्ष्टा, द्रष्टा ।**

**न्यासः**

भावप्रसङ्गः ।

**ग्राहिष्यत इति** । 'अत उपधायाः' इति वृद्धिः प्रयोजनम् । अथेह 'ग्रहोऽलिटि दीर्घः' इति दीर्घः कस्मान्न भवति ? इत्याह—**ग्रहोऽलिटीत्यादि** । वलादिलक्षणस्तत्रेट् प्रकृत इति तस्यैव दीर्घो विज्ञायते, नान्यस्य । **द्रक्ष्यत इति** । 'सृजिदृशोर्झल्यमकिति' इत्यमागमः, व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम् । **दर्शिष्यत इति** । 'पुगन्तलघूपधस्य' इत्यनेनात्र गुणः सिद्धयत्येव । इडर्थस्तु चिण्वद्भावो विधीयते ।

**अचेषातामिति** । आताम्, सिचि रूपम् । **अदिषातामिति** । 'स्थाघ्वोरिच्च' इतीत्वम्, 'सिचश्च' कित्वम् । **अवधिषातामिति** । 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशः । **अदृक्षातामिति** । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वम् । तेनामागमगुणौ न भवतः, षत्वादि पूर्ववत् ।

**पदमञ्जरी**

कृतेऽपि वलादिलक्षण इट् प्राप्नोति, अकृतेऽपि, न ह्ययं वलादित्वमपेक्षते । अस्मिंस्तु कृते वलादिलक्षण इण्न प्राप्नोति, तस्माद् **वलिनिमित्त** इडनित्यः । विघातः=निमित्ताभावादप्रवृत्तिः, सोऽस्यास्तीति **विघाती** । तदेवं नित्यत्वात्सेड्भ्योऽप्यनेनैवेड् भवति, अयं चासिद्ध इति न भवति णिलोपाभावदोषः । अवश्यं चानेनैव सेड्भ्योऽपीडेष्टव्यः, अन्यथा एतदिट्सन्नियुक्तश्चिण्वद्भावोऽपि न स्यात् । न च शब्दान्तरप्राप्तेरस्याप्यनित्यत्वम्; आकृतिपक्षे शब्दान्तरत्वाभावात् ।

**प्रकृतस्येटो दीर्घत्वमिति** । वलादिलक्षणस्य प्रकृतत्वात् ।

**भावबोधिनी**

दृश् के उदा० अदर्शिषाताम्, अद्रक्षाताम् [ दृश् + लुङ् = आताम् सिच् आदि करने के बाद चिण्वद्भावपक्ष में इट्, ऋ का गुण, रपर, षत्व—अदर्शिषाताम् । पक्ष में "लिङ्सिचावात्मनेपदेषु' सूत्र से सिच् के कित् होने से अम् आगम तथा गुण दोनों ही नहीं होते हैं—अदृश् + स् आताम्, षत्व कत्व, क्षत्व पूर्वोक्त लृट् के रूप के समान होते हैं—अदृक्षाताम् । ]

सीयुट् परे अजन्त अङ्गों के उदा० चायिषीष्ट, चेषीष्ट । [ चि + लिङ् आशीः त, सीयुट् = सीय् चिण्वद्भाव तथा इट्, इ की वृद्धि आय् आदेश—चाय् इ सीय् + त, 'सुट्तिथोः' सूत्र से सुट् = स्, यलोप, दोनों षकारों के मूर्धन्य, ष्टुत्व—चायिषीष्ट । चिण्वद्भाव तथा इट् न होने पर गुण—चेषीष्ट । ] दायिषीष्ट, दासीष्ट । [ दा + आशीर्लिङ् = त, सीयुट्, चिण्वद्भाव, इट् "आतो युक् चिण्कृतोः" सूत्र से युक् आगम दा + य् + इ सीय् + त, सुट्, यलोप, षत्व—दायिषीष्ट । पक्ष में दासीष्ट । ] शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट । [ णिजन्तशमि से लिङ् आशीः, त, णिलोप सीयुट्, चिण्वद्भाव, इट्, विकल्प से दीर्घ । चिण्वद्भाव न होने पर बलादिलक्षण इट्, गुण अयादेश । ] घानिषीष्ट, वधिषीष्ट । [ हन् + लिङ् आशीः = त, सीयुट्, चिण्वद्भाव इट्, उपधावृद्धि, कुत्व 'ह' का घ् सुट्, षत्व ष्टुत्व—घानिषीष्ट पक्ष में 'हनो वध लिङ्" सूत्र से हन् का वध आदेश, इट्, अलोप—वधिषीष्ट । ] ग्राहिषीष्ट, ग्रहीषीष्ट । [ ग्रह + आशीर्लिङ् = त, सीयुट्, चिण्वद्भाव, इट् उपधावृद्धि, षत्वद्वय, ष्टुत्व । पक्ष में "ग्रहोऽलिटि दीर्घः" से इट् का दीर्घ ] दर्शिषीष्ट, दृक्षीष्ट । दृश् + सीयुट् + त, चिण्वद्भाव, इट्, गुण, रपर, षत्व ष्टुत्व—दर्शिषीष्ट । पक्ष में "लिङ्सिचावात्मनेपदेषु" से लिङ् के कित् हो जाने से अम् आगम न होवे पर दृश् + सीष्ट में षत्व, कत्व, क्षत्व करने पर—दृक्षीष्ट रूप होता है । ]

तास् परे अजन्तों के उदा० चायिता, केता । [ चि + लुट् = त, तास् चिण्वद्भाव, इट् 'इ' की वृद्धि आय्

**स्यसिच्सीयुट्तासिष्विति किम्? चेतव्यम्, दातव्यम्। भावकर्मणोरिति किम्? चेष्यति। दास्यति। उपदेश इति किम्? कारिष्यते—इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति। अज्झनग्रहदृशामिति किम्? पठिष्यते।**

**अङ्गाधिकारविहितं कार्यमिहातिदिश्यते, तेन हनिणिङामादेशा न भवन्ति। हनिष्यते, घानिष्यते।**

**न्यासः**

**चेतेति।** लुट्, तासिः, 'लुटः प्रथमस्य डारौरसः' इति डादेशः, टिलोपः। **द्रष्टेति।** पूर्ववदमादिः। **चेतव्यमिति।** कर्मणि तव्यः। **चेष्यतीति।** अत्र कर्तुर्लादेशेन विवक्षितत्वात् कर्तृविषयः स्यप्रत्ययः।

**गुणे कृते रपरत्वे च न प्राप्नोतीति।** कृ+ष्यत इति स्थिते गुणः प्राप्नोति, चिण्वद्भावश्च; तत्र परत्वाद् गुणः, तत्र कृते रपरत्वम्। यद्युपदेशग्रहणं न क्रियेत ततोऽनजन्तत्वादिह न स्यात्। **उपदेशग्रहणाद् भवति।** यद्यपि करोतिरुत्तरकालमनजन्तः, उपदेशे त्वजन्त एव।

यदि चिणि यद् दृष्टं कार्यं तदतिदिष्टं हनिणिङादेशा अपि प्राप्नुवन्ति। तेषामपि तत्र इष्टत्वात्? इत्यत आह—**अङ्गाधिकारविहितमित्यादि।** अङ्गस्येत्यधिकारे सति प्रत्यासत्तेरङ्गाधिकारे विहितं कार्यं यच्चिणि दृश्यते सामान्येन तदतिदिश्यते, न तु यद्विप्रकृष्टं प्रकरणान्तरविहितम्। न च हनिणिङामादेशा अङ्गाधिकारे विहिताः, अपि तु प्रकरणान्तरे तस्मान्न तेऽतिदिश्यन्त इति न भवन्ति तत्र। **घानिष्यते** इत्यत्र

**पदमञ्जरी**

**गुणे कृत इति।** परत्वान्नित्यत्वाच्च। **उपदेशग्रहणाद् भवतीति।** यद्यपि करोतिरुत्तरकालमनजन्तः, उपदेशे त्वजन्त एव।

यदि चिणि दृष्टमात्रस्यातिदेशः, हनिणिङादेशा अपि प्राप्नुवन्ति, तेषामपि तत्र दृष्टत्वात्? अत आह—**अङ्गाधिकारविहितमिति।** अङ्गस्येति प्रकृत्य यद्विहितं चिणि दृष्टं तदेवातिदिश्यते, सन्निहितत्वात्। न च हनिणिङामादेशा एवंविधा इति तेषामनतिदेशः। अत्र **वार्तिकम्**—'वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन' (का० वा० ४१०१) इति। वधभावस्यावकाशः—वध्यात्, वध्यास्ताम्, वध्यासुः; चिण्वद्भावे हन्ग्रहणस्यावकाशः घानिष्यते, अघानिष्यत, अघानिषाताम्; अघानिषत, घानिषीष्टेत्यत्रोभयप्रसङ्गे चिण्वद्भावो भवति विप्रतिषेधेन।

**भावबोधिनी**

आदेश—च् आय् इ तास्+त, त का डा=आ आदेश टि लोप—चायिता। चिण्वद्भाव न होने पर इ का गुण—चेता] दायिता, दाता। [दा+लुट् आदि पूर्वोक्ति कार्य, चिण्वद्भाव इट् पक्ष में 'युक्'=य् आगम।] शामिता, शमिता, शमयिता। [शम् णिजन्त से लुट् आदि के बाद णिलोप, चिण्वद्भाव, इट्, वैकल्पिक दीर्घ। पक्ष में णि=इ का गुण, इट्, अयादेश] हन्—घानिता, हन्ता। [चिण्वद्भाव इट्पक्ष में ह का घ् कुत्व, उपधावृद्धि। पक्ष में—हन्ता] ग्रह—ग्राहिता, ग्रहीता। [चिण्वद् भावपक्ष में उपधावृद्धि, पक्ष में इट् का दीर्घ।] दृश्—दर्शिता, दर्ष्टा, द्रष्टा। [दृश्+लुट्=त=डा, तास्, विकल्प से चिण्वद्भाव इट् न होने पर "सृजदृशोर्झल्यमकिति" सूत्र से अम् आगम विकल्प से – दृ+अ श् ता, यण्, षत्व, ष्टुत्व—द्रष्टा। पक्ष में ऋ का गुण, रपर—दर्ष्टा।]

स्य, सिच्, सीयुट् तथा तास्—इनके परे रहते—इसका क्या फल? चेतव्यम् दातव्यम्। [कर्म में तव्य प्रत्यय है। पूर्वोक्त कोई न होने से चिण्वद्भाव, इट् नहीं होता है।] भाव तथा कर्म में—इसका क्या फल है? चेष्यति, दास्यति। [यह कर्ता अर्थ में रूप है। इसीलिये परस्मैपद है।] उपदेश में अजन्त—इसका क्या फल है? कारिष्यते—इसमें गुण तथा रपर पहले कर देने पर [कार् यह हो जाने पर अजन्त न रह जाने से] यह चिण्वद् भाव नहीं प्राप्त होता है, किन्तु उपदेश के ग्रहण के कारण होता है। [क्योंकि उपदेश में 'कृ' अजन्त ही है।] अजन्त, हन्, गृह, दृश् इनके—इसका क्या फल है? पठिष्यते। [पठ पूर्वोक्त किसी में न होने चिण्वद्भाव, न होकर बलादिलक्षण नित्य इट् होता है।]

यहाँ 'अङ्ग' इस अधिकार में विहित कार्य का ही अतिदेश होता है. इस कारण—हन्, इण्, इङ् (हनिणिङ्) के

**एष्यते, आयिष्यते । अध्येष्यते, अध्यायिष्यते । 'हनो वध लिङि', (२.४.४२) 'लुङि च', (२.४.४३) 'इणो गा लुङि', (२.४.४५) 'विभाषा लुङ्लृङोः' (२.४.५०) इत्येते विधयो न भवन्ति ॥**

### ३०६४. दीङो युडचि क्ङिति ॥ ६३ ॥ (२५०७)

**दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः । उपदिदीये, उपदिदीयाते, उपदिदीयिरे । 'दीङः' इति पञ्चमीनिर्देशादजादेर्युडागमो भवति । विधानसामर्थ्याच्च 'एरनेकाचः' (६.४.८२)**

**न्यासः**

'लुङि च' इत्यनेन विहितो वधादेशो न भवति । **आयिष्यत इति ।** 'इणो गा लुङि' इत्यनेन विहितो गादेशः । **अध्यायिष्यते इति ।** अत्र 'विभाषा लुङ्लृङो' इत्यनेन विहितो गाङादेशः । एवमपि स्यादिभ्यः परस्य प्रत्ययस्य लुक् प्राप्नोति; अङ्गाधिकारे चिण उत्तरस्य प्रत्ययस्य 'चिणो लुक्' इति लुग्विधानात् ? नैष दोषः; इह हि सप्तमीसमर्थाद् विहितस्य वतेराश्रयणम् । तेन चिणि यद् दृष्टं कार्यं पूर्वस्य सम्भवति तदतिदिश्यते, न तूत्तरस्य यत् कार्यं तदपि ॥ ६२ ॥

**दीङो युडचि क्ङिति ॥ उपदिदीय उपदिदीयरे इति ।** 'दीङ् क्षये', 'असंयोगाल्लिट् कित्' इति कित्त्वम्, लिटस्तझयोरेशिरेचौ ।

'दीङः' इति षष्ठीयं वा स्यात्, पञ्चमी वेति द्वौ पक्षौ । तत्र यद्याद्यः पक्ष आश्रीयेत, तदा 'आद्यन्तौ टकितौ' इत्यादौ युटि कृते धातोरनिष्टं रूपमापद्येत; अत इदं षष्ठीपक्षे दूषणमालक्ष्य पञ्चमीपक्षं पुरस्कृत्याह— **दीङ इति पञ्चमीनिर्देशादित्यादि ।** पञ्चमीनिर्देशे हि सति 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'दीङः'

**पदमञ्जरी**

अथेदानीं चिण्वद्भावे पुनःप्रसङ्गविज्ञानाद् वधादेशः कस्मान्न भवति ? 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति' (व्या० पा० ४०) । ननु द्वितीयाध्याये, तत्र 'आर्धधातुके' इति विषयसप्तमी, ततः किमन्तरङ्गो वधभावः ? नैतदस्ति; लिङीति विशेषनिर्देशात्परसप्तमी । यत्र तु विशेषनिर्देशाभावः—'अस्तेर्भूः' इत्यादौ, तत्रैव विषयसप्तमी भव्यादिसिद्धये ॥ ६२ ॥

**दीङो युडचि क्ङिति ॥ दीङ इति पञ्चमीनिर्देशादिति ।** षष्ठ्यां त्वस्यां दीङ एवादितो युट् स्यात्, पञ्चम्यां तु 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति' (शा० प० ९७), अचीति सप्तम्याः षष्ठ्यां प्रकल्पितायाम-

**भावबोधिनी**

आदेश नहीं होते हैं [ क्योंकि इन धातुओं के जो आदेश होते हैं वे 'अङ्गस्य' (६।४।१) इसके अधिकार के बाहर ही हैं । ] हनिष्यते, घानिष्यते । [ इसमें वध आदेश नहीं होता है ] एष्यते आयिष्यते । [ इसमें इण् का 'गा' आदेश नहीं होता है । ] अध्येष्यते अध्यायिष्यते । [ इसमें विकल्प से 'गा' नहीं होता है । यही लिख रहे हैं— ] 'हनो वध लिङः' (२।४।४२) 'लुङि च' (२।४।४३) 'इणो गा लुङि' (२।४।४५) 'विभाषा लुङ्लृङोः' (१।४।५०)—ये विधियाँ नहीं होती हैं । [ क्योंकि पूर्वोक्त कोई भी विधि 'अङ्गस्य' (६।४।१) के अन्तर्गत नहीं है । ] ॥ ६२ ॥

अजादि कित् ङित् प्रत्यय परे रहने पर दीङ् धातु को युट् = य् का आगम होता है । उदा० उपदिदीये, उपदिदीयाते, उपदिदीयिरे । [ उपपूर्वक दीङ् + लिट् = त आताम्, झ = एश्, आते, इरे—करने पर द्वित्व, अभ्यास का ह्रस्व उपदिदी + ए, युट् = य् आगम । इसी प्रकार उपदिदी + य् + आते, उपदिदी + य् इरे । ]

'दीङः' [ दीङ् से परे– ] यह पञ्चमी-निर्देश होने के कारण अजादि को युट् आगम होता है । और इसके विधानसामर्थ्य से 'एरनेकाचः' (६।४।८२) इस यण् आदेश के करने में इस युट् का असिद्धत्व नहीं होता है ।

**इति यणादेशे कर्त्तव्ये तस्यासिद्धत्वं न भवति ।**

**अचीति किम् ? उपदेदीयते । क्ङितीति किम् ? उपदानम् ॥**

**न्यासः**

इति पञ्चम्या अचीति सप्तम्याः षष्ठीत्वे प्रकल्पिते 'तस्मादित्युत्तरस्य' इत्यजादेरादिर्युडागमो भवति । 'अचि' इति सप्तमीनिर्देशस्तूत्तरार्थः । ननु चात्र 'एरनेकाचः' इति यणादेशे कर्त्तव्ये युडसिद्ध इति यणादेशेन भवितव्यम्, ततश्चोपदिदीय इति न सिध्येत्, उपदिद्ये इत्यनिष्टं रूपं प्राप्नोति । अत आह—**विधानसामर्थ्यादित्यादि ।** यदि यणादेशे कर्त्तव्ये युटोऽसिद्धत्वं स्यात्, तदा युटो विधानमनर्थकं स्यात्; विशेषाभावात् । कथं पुनर्विशेषाभावः, यावताऽसति हि युटयेकस्य यकारस्य श्रवणं भवति, सति तु द्वयोः ? नैषोऽस्ति विशेषः; न हि व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रवणं प्रति विशेषोऽस्ति । ये तु विशेषमिच्छन्ति, तन्मतेनास्माभिः पूर्वमेव यणादेशे युटः सिद्धत्वमन्यथा प्रतिपादितम् ।

**उपदेदीयते इति ।** यङ् । **उपदानमिति ।** ल्युट, 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वम् । दीङ् इत्यनुबन्धनिर्देशो यङ्लुकि मा भूदित्येवमर्थः—देद्यतुः, देद्युरिति । ननु चात्र 'कास्प्रत्ययादाममन्त्रे' इत्यामा भवितव्यम्, तेनाक्ङित्त्वादेव न भविष्यति ? सत्यमेतत्; अमन्त्रे न भविष्यति, मन्त्रे तु स्यादेव; तत्रामोऽभावात् । अथ यङ्लुगन्तस्य मन्त्रे प्रयोगो न दृश्यते, तदा विस्पष्टार्थम् ॥ ६३ ॥

**पदमञ्जरी**

जादेर्युड् भवति । सप्तमीनिर्देशस्तूत्तरार्थः, तदादिविध्यर्थश्च । **विधानसामर्थ्याच्चेति ।** यदि युटोऽसिद्धत्वेन यणादेशः स्यात्, युड्विधानमनर्थकं स्यात्; उपदिय्य इति रूपे विशेषाभावात् । न च यकारद्वयश्रवणाद्विशेषः; 'हलो यमां यमि लोपः' इति पक्षे यलोपविधानात् । न च पक्षे श्रुतिभेदः; 'यणो मये द्वे' (का० वा० ९५६) इति द्विर्वचनविधानादेव सिद्धत्वात् । श्रुतिभेदोऽपि व्यञ्जनात्परस्यैकस्यानेकस्य वा यकारस्य कीदृश इति चिन्त्यम् ।

**उपदानमिति ।** 'मीनातिमिनोतिदीङां ल्यपि च' 'इत्यात्वम्, 'दीङः' इत्यनुबन्धनिर्देशो यङ्लुकि मा भूदिति ॥ ६३ ॥

**भावबोधिनी**

अच् परे—इसका क्या फल है ? उपदेदीयते । [ यङन्त में अच् परे नहीं है । ] कित् ङित् परे—इसका क्या फल है ? उपदानम् । [ उपदी + ल्युट् = अन, 'मीनातिमिनोतिदीङां ल्यपि च" से आत्व होता है । कित् ङित् परे न होने से युट् आगम नहीं होता है । ]

**बिमर्श—**'दीङः' यहाँ पञ्चमी है और 'अचि' यहाँ सप्तमी है । यदि 'दीङः' में षष्ठी मानेंगे तो दीङ् को ही युट् होने लगेगा क्योंकि टित् होने से आद्यवयव आगे होगा । पञ्चमीनिर्देश में तो 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इसके अनुसार 'अचि' यह सप्तमी षष्ठी में परिवर्त्तित हो जाती है और 'तस्मादित्युत्तरस्य' इसके आधार पर अजादि को ही युट् होता है ।

'एरनेकाचः' (६।४।८२) इससे यण् की कर्तव्यता में 'उपदिदी + य् + ए में युट् असिद्ध होना चाहिए क्योंकि आभीय दोनों ही है । समाननिमित्तक भी हैं ? इस शंका का समाधान यह है कि यदि युट् असिद्ध होकर यण् आदेश होने लगेगा तो युट् का विधान ही व्यर्थ होगा । क्योंकि जहाँ जहाँ युट् सम्भव है वहाँ अजादि परे होने से यण् भी प्रसक्त होगा । अतः विधानसामर्थ्य के कारण यह युट् असिद्ध नहीं होता है । यण् नहीं होता है ।। ६३ ।।

## ३०६५. आतो लोप इटि च ॥ ६४ ॥ (२३७२)

इटयजादावार्धधातुके क्ङिति चाकारान्तस्याङ्गस्य लोपो भवति । इटि–पपिथ । तस्थिथ । क्ङिति–पपतुः, पपुः । तस्थतुः, तस्थुः । गोदः । कम्बलदः । ङिति—प्रदा । प्रधा ।

'आर्धधातुके' इत्येव—यान्ति । वान्ति । व्यत्यरे । व्यत्यले । रातेर्लातेश्च लङि इटि रूपम् ।

### न्यासः

**अतो लोप इटि च । इटयजादावार्धधातुके क्ङिति चेति ।** 'अजादावार्धधातुके' इति प्रत्येकमभिसम्बध्यते—इट्यजादावार्धधातुके, क्ङिति चाजादावार्धधातुक इति । इड्ग्रहणमक्ङिदर्थम् । **पपिथेति ।** पातेः पिबतेर्वा लिट्, सिप्, 'परस्मैपदानाम्' इत्यादिना तस्य लथ्, 'ऋतो भारद्वाजस्य' ति नियमादिट् । **गोद इति ।** 'आतोऽनुपसर्गे कः' ।

**व्यत्यरे, व्यत्यले इति ।** 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्, उत्तमपुरुषैकवचनम्—इट्, तस्य 'सार्वधातुकमपित्' इति ङित्वम् । तत्रार्धधातुकत्वं नास्तीति न भवति लोपः ।

### पदमञ्जरी

**आतो लोप इटि च ॥** इह 'अचि', 'क्ङिति', आर्द्धधातुके' इति त्रयाणां प्रकृतत्वाद्विशेषणविशेष्यभावे च कामचारात्तेषामन्यतमेनानुभूतान्यतरविशेषणेन, अनुभूतोभयविशेषणेन, अननुभूतविशेषणेन वा इटः समुच्चयसम्भवाद् द्वादश पक्षाः सम्भवन्ति । तत्र यदि तावद्विशेषणसम्बन्धात् प्रागेवाचा इटः समुच्चयः, अङ्गाक्षिप्तश्च प्रत्ययो वा विशेष्यते, 'इट्यजादौ च प्रत्यये' इति विज्ञायते, तदेड्ग्रहणमनजाद्यर्थं भवति; अजादेरिटोऽजादिना प्रत्ययेन समुच्चयासम्भवात् । तदा च ङिदार्धधातुके अजादेरेव विशेषणे व्यवतिष्ठेते, नेटः; हलादेरिटः क्ङित्त्वासम्भवात्, आर्धधातुकत्वाद्, व्यभिचाराच्च । ततश्च दासीयेत्यादौ लोपप्रसङ्गः । अथ क्ङिद्विशिष्टेनाचा समुच्चयः—क्ङित्यजादौ भवतोटि चेति, ततोऽक्ङिदर्थमनजाद्यर्थं चेड्ग्रहणं भवति—पपिथ, दासीयेति; अथार्द्धधातुकविशिष्टेनाचा समुच्चयः, ततोऽक्ङिदर्थमनजाद्यर्थमनार्धधातुकार्थं चेडग्रहणम्—पपिथ, दासीय, व्यत्यरे—इतीण्मात्रेः लोपप्रसङ्गः, तदेवमचा समुच्चये चत्वारः पक्षाः । एवमार्धधातुकेन, एवं क्ङितेति द्वादश पक्षाः । तयोरप्युभयविशिष्टयोस्त एव दोषाः, यांस्तववोचाम ।

अथाविशेषितेनार्धधातुकेन समुच्चयस्तदा नार्धधातुकार्थमिडग्रहणमिति 'व्यत्यरे' इत्यत्रैव प्रसङ्गः; अथ क्ङिद्विशिष्टेनार्धधातुकेन समुच्चयस्तदाऽक्ङिदर्थमनार्धधातुकार्थमिड्ग्रहणम्—पपिथ, व्यत्यरे; अथाज्विशिष्टेनार्धधातुकेन समुच्चयः अनजाद्यर्थमनार्धधातुकार्थं चेड्ग्रहणम्—दासीय, व्यत्यरे; अथाज्विशिष्टेन क्ङिता समुच्चयः, ततोऽनजाद्यर्थमक्ङिदर्थं चेड्ग्रहणम्—दासीय, पपिथ । अथार्धधातुकविशिष्टेन क्ङिता समुच्चयः,

### भावबोधिनी

इट् तथा अजादि कित्, ङित् आर्धधातुक प्रत्यय परे रहते आकारान्त अङ्ग [ के आ ] का लोप होता है । उदा० पपिथ । तस्थिथ । [ पा + लिट् = सिप् = थल्, द्वित्व तथा अभ्यासकार्य के बाद इट् आगम पपा + इथ, आलोप । स्था + लिट् = सिप् आदि पूर्वोक्त प्रक्रिया के बाद 'शर्पूर्वाः खयः' से खय् शेष तस्था + इथ, आ लोप—तस्थ् इथ ] । कित् परे उदा० पपतुः, पपुः । तस्थतुः, तस्थुः । [ पा + लिट् = तस् आदि के बाद पपा + अतुस्, पपा + उस्, तस्था + अतुस्, तस्था + उस् इनमें आ का लोप ] गोदः । कम्बलदः । [ गां ददाति, कम्बलं ददाति—इनमें "आतोऽनुपसर्गे कः' सूत्र से क = अ प्रत्यय, दा के आ का लोप, उपपदसमास । ] ङित् परे—प्रदा । प्रधा । [ प्र पूर्वक 'दा' तथा 'धा' धातुओं से 'आतश्चोपसर्गे' (३।३।१०६) से अङ् = अ प्रत्यय भाव में स्त्रीलिङ्ग में होता है । प्रदा + अ, प्रधा + अ, आलोप तथा टाप् करने पर रूप बने हैं । ]

आर्धधातुक परे ही होता है—यान्ति । वान्ति । [ ये लट् = सार्वधातुक के रूप हैं । अतः लोप नहीं होता है ]

इस्, मन्, त्रन्, क्वि—इत्येतेषु परतश्छादेरुपधाया ह्रस्वो भवति। छदिः। छद्म। छत्त्रम्। धामच्छत्। उपच्छत्।

**३०९९. गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥ (२३६३)**

**गम, हन, जन, खन, घस—इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङित्यनङि परतः। जग्मतुः, जग्मुः। जघ्नतुः, जघ्नुः। [¹जज्ञतुः, जज्ञुः] जज्ञे, जज्ञाते, जज्ञिरे। चख्नतुः, चख्नुः। जक्षतुः, जक्षुः। 'अक्षन्नमीमदन्त पितरः' (वा० सं० १९.३६)।**

**न्यास**

इतीसिप्रत्ययः। **छद्मेति।** 'सर्वधातुभ्यो मनिन्' इति मनिन्। **छत्त्रमिति।** 'सर्वधातुभ्यः ष्ट्रन्' इति ष्ट्रन्। योगविभागोऽनेकोपसर्गस्यापि यथा स्यात्—समुपातिच्छदिरिति ॥ ९७ ॥

**गमहनजनखनघसां लोपः क्ङित्यनङि॥ अनङीति** अजादावयं प्रतिषेधः, तेन तत्तुल्येऽजादावेव प्रत्यये कार्यं विज्ञायते, इत्याह—**अजादौ प्रत्यय इति। जघ्नतुः, जघ्नुरिति।** 'अभ्यासाच्च' इति कुत्वम्। **¹जज्ञतुः, जज्ञुरिति।** 'जन जनने'—परस्मैपदी जौहोत्यादिकः, 'स्तोः श्चुना श्चुः' इति श्चुत्वम्। **जज्ञ इति।** 'जनी प्रादुर्भावे'—आत्मनेपदी दिवादिः, 'लिटस्तझयोरेशिरेच्' इत्येश्। **जक्षतुरिति। अदेः** 'लिट्यन्यतरस्याम्' इति घस्लादेशः, 'खरि च' इति घकारस्य ककारः, 'शासिवसिघसीनाञ्च' इति षत्वम्।

**पदमञ्जरी**

'**मनिन् सर्वधातुभ्यः**' (द० उ० टी० ६.७३)। '**ष्ट्रन् सर्वधातुभ्यः**' (द० उ० टी० ८.७९)। योगविभागात् द्विप्रभृत्युपसर्गादपि भवति—**समुपच्छदिः** ॥ ९७ ॥

**गमहनजनखनघसां लोपः क्ङित्यनङि॥ जघ्नतुरिति।** 'अभ्यासाच्च' इति कुत्वम्। **जज्ञतुरिति¹।** 'जन जनने' (धा० पा० ११०५) परस्मैपदी जौहोत्यादिकः, नकारस्य चुत्वम्। **जज्ञ इति।** 'जनी प्रादुर्भावे' (धा० पा० ११४९) अनुदात्तेत् दैवादिकः। **जक्षतुरिति।** 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः, घकारस्य चर्त्वम्, 'शासिवसिघसीनां च' इति षत्वम्। **अक्षन्निति।** 'लुङ्सनोर्घस्लृ', 'मन्त्रे घस' इति च्लेर्लुक्।

**भावबोधिनी**

से 'इस्' औणादिक प्रत्यय तथा णिलोप करनेपर प्रस्तुत सूत्र से ह्रस्व होता है—छदिः। ] छद्म। [ छादि से मनिन् = मन् प्रत्यय, णिलोप ह्रस्व ]। छत्त्रम्। ['छादि' से ष्ट्रन् = त्र प्रत्यय, णिलोप, ह्रस्व—छद् त्रि, चर्त्व] धामच्छत्। उपच्छत्। [ यहाँ धाम तथा उप के साथ 'छादि' से क्विप् प्रत्यय सर्वापहारो लोप, णिलोप, उपधाह्रस्व, तुक्, श्चुत्व के बाद, चर्त्व ] ॥ ९७ ॥

गम्, हन्, जन्, खन् तथा घस्—इनके अङ्गों की उपधा का लोप अजादि कित् ङित् प्रत्ययों के परे रहते और अङ् के न परे रहते होता है। उदा० जग्मतुः जग्मुः। [ गम् + लिट् = तस् = अतुस् द्वित्वादि कार्यों के बाद जगम् + अतुस् में उपधा के अ का लोप होता है—जग्मतुः। ] जघ्नतुः, जघ्नुः। [ हन् + लिट् = तस् = अतुस्, द्वित्व तथा अभ्यासकार्य कुत्व जश्त्व के बाद जघन् + अतुस्, उपधा अ का लोप ] जज्ञे, जज्ञाते, जज्ञिरे। [ जन् + लिट् = त = एश् = ए, द्वित्वादि के बाद जजन् + ए उपधालोप, श्चुत्व जज्ञ् ए, ज् + ञ् का 'ज्ञ्' ] चख्नतु, चख्नुः। [ खन् + लिट् = तस् = अतुस्, द्वित्वादि के बाद उपधा अ का लोप ] जक्षतुः, जक्षुः। [ अद् + लिट् में "लिट्यन्यतरस्याम्" सूत्र से अद् का घस्लृ = घस् आदेश थस् + तस् = अतुस्, द्वित्वादि कार्य के बाद जघस् में उपधा अकार का लोप करने पर जघस् + अतुस् 'खरि च' सूत्र से घ् का चर्त्व क्, "शासिवसिघसीनां च" सूत्र से स् का ष, ज क् ष् + अतुस्, क् + ष् = क्ष्—जक्षतुः इसी प्रकार बहुवचन में भी समझना चाहिए। ] अक्षन् पितरोऽमीमदन्त। [ अद् + लुङ् = झि, "लुङ् सनोर्घस्लृ" से घस्लृ आदेश, अट् आगम, च्लि, मन्त्र होने से च्लि का लुक्, प्रस्तुत सूत्र से उपधा अ का लोप अघ् स् + अन्ति पूर्ववत् चर्त्व घ् का क्, षत्व, क् ष् का क्ष्, इलोप, संयोगान्तलोप—अक्षन्। ]

१.१.१. न्यासपदमञ्जर्योरनुरोधादत्र मूले 'जज्ञतुः जज्ञुः' इत्यपि पठनीयम्।

**क्ङितीति किम् ? गमनम् । हननम् । अनङीति किम् ? अगमत् । अघसत् ।**
**अचीत्येव—गम्यते, हन्यते ॥**

**३१००. तनिपत्योश्छन्दसि ॥ ९९ ॥ (३५४९)**

**तनि, पति—इत्येतयोश्छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः । 'वितत्निरे कवयः' (ऋ० १.१६४.५) । 'शकुना इव पप्तिम (ऋ० १.१०४.२०) ।**

**छन्दसीति किम् ? वितेनिरे । पेतिम ॥**

**३१०१. घसिभसोर्हलि च[1] ॥ १०० ॥ (३५५०)**

**घसि, भस—इत्येतयोश्छन्दसि उपधाया लोपो भवति हलादावजादौ च क्ङिति प्रत्यये परतः ।**

**न्यासः**

अथ वा—'घस्लृ अदने' इत्यस्यैतद्रूपम् । **अक्षन्निति** । लुङ्, 'लुङ्सनोर्घस्लृ' इति घस्लादेशः, 'मन्त्रे घसह्वर' इत्यादिना लेर्लुक्, झेरन्तादेशः, संयोगान्तलोपः । शेषं पूर्ववत् । **अघसत्, अगमदिति** । पुषादिसूत्रेणाङ् ॥ ९८ ॥

**तनिपत्योश्छन्दसि ॥ वितत्निर इति** । अत्र यद्यप्युपधालोपस्यासिद्धत्वम्, तथापि लोपविधानसामर्थ्याद् 'अत एकहल्मध्ये' इत्यादिनैत्वाभ्यासलोपौ न भवतः । **पप्तिमेति** । लिट्, क्रादिनियमादिट् ॥ ९९ ॥

**घसिभसोर्हलि च ॥ घत्वं तकारस्येति** । 'झषस्तथोर्धोऽधः इति । **जश्त्वं घकारस्येति** । 'झलां जश्

**पदमञ्जरी**

**अचीत्येवेति** । 'अचि श्नुधातु' इत्यतः । तस्य तु दोषो णौ' इत्यत आरभ्योपयोगो न प्रदर्शितः; क्वचिद्व्यभिचाराभावात्, क्वचिदसम्भवात् । इह तूपयोगः, तथा चोत्तरसूत्रे 'हलि च' इति वक्ष्यति ॥ ९८ ॥

**तनिपत्योश्छन्दसि ॥ वितत्निर इति** । लोपविधानसामर्थ्यादसिद्धत्वेऽपि तस्य 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ न भवतः । **पप्तिमेति** । लिट्, मस्, इट् ॥ ९९ ॥

**घसिभसोर्हलि च ॥** सूत्रे चकारस्य पाठोऽनार्षः[1] । तथा च वार्तिकम्—[2]हल्ग्रहणमपरिभाष्यम्, अन्यत्रापि दर्शनात्' (का० वा०) ४१३०) इति ।

**भावबोधिनी**

जज्ञतुः जज्ञुः । [ 'जन जनने' जुहोत्यादिगणीय के रूप है । ]

क्ङित् परे—इसका क्या फल है ? गमनम् । हननम् । [ ल्युट् = अन परे रूप हैं । ] अङ् परे न होनेपर—इसका क्या फल है ? अगमत् । अघसत् । [ यहाँ लुङ् में "पुषादि-द्युतादि-लृदितः" सूत्र से च्लि का अङ् होनेपर ङित् होनेपर भी उपधा का लोप नहीं होता है । ]

अच् = अजादि परे ही—गम्यते, हन्यते । [ इनमें कित् होनेपर अजादि न होने से उपधा का लोप नहीं होता है । ] ॥ ९८ ॥

वेदविषय में 'तन' तथा 'पत्' इनकी उपधा का लोप अजादि कित् ङित् प्रत्ययों के परे रहते होता है । उदा० वितत्निरे कवयः [ वि पूर्वक तन् + लिट् = झि = इरेच्, द्वित्वादि के बाद वितन्तन् + इरे में उपधा का लोप होता है । ] शकुना इव पप्तिम । [ पत् + लिट्, मस्, द्वित्वादि के बाद इट् तथा उपधा अ का लोप होता है—पप्त्-इम = पप्तिम । ]

वेदविषय में—इसका क्या फल है ? वितेनिरे । पेतिम । [ प्रथम में उपधालोप नहीं है । द्वितीय में "अत एकहल्मध्येऽनादेशादेः" सूत्र से एत्व तथा अभ्यास का लोप होता है । ] ॥ ९९ ॥

वेदविषय में घस् तथा भस्—इनकी उपधा का लोप हलादि और अजादि प्रत्ययों के परे रहते होता है । उदा० "सग्धिश्च मे सपीतिश्च मे ।" बब्धां ते हरी धाना ।"

---

1. चकारः प्रक्षिप्त इति पदमञ्जरी ।　2. भाष्ये तु 'हल्ग्रहणानर्थक्यमन्यत्रापि दर्शनात्' इत्यपि पाठो दृश्यते ।

'सग्धिश्च मे सपीतिश्च मे' (वा० सं० १८.९)। 'बब्धां ते हरी धानाः' (नि० ५.१२)।

**सग्धिरिति**—अदेः क्तिनि 'बहुलं छन्दसि' (२.४.३९) इति घस्लादेशे उपधाया लोपे च कृते 'झलो झलि' (८.२.२६) इति सकारलोपः। धत्वं तकारस्य, जश्त्वं घकारस्य। ततः समाना ग्धिः—सग्धिरिति समासे कृते समानस्य सभावः।

**बब्धामिति**—भसेर्लोटि तामि श्लौ द्विर्वचने कृते उपधालोपसलोपधत्वजश्त्वानि कर्त्तव्यानि। द्विर्वचनात्परत्वान्नित्यत्वाच्च उपधालोपः प्राप्नोति; छान्दसत्वात् स तथा न क्रियते।

**अजादौ**—बप्सति। **विङतीत्येव**—'अंशून् बभस्ति' (काठ० सं० ३५.१४)॥

**न्यासः**

झशि' इति। **समासे कृत इति**। 'पूर्वापरप्रथम' इत्यादिना। **समानस्य सभावइति**। 'समानस्य च्छन्दसि' इत्यादिना।

यदि द्विर्वचनात्पूर्वमुपधालोपः क्रियते, तदैकाच्त्वाभावाद् द्विर्वचनं न प्राप्नोति? इत्यत आह—**छान्दसत्वादित्यादि**। **बब्धामिति**। छान्दसमेतत्। तत्र 'बहुलं छन्दसि' इति वचनाद् बहुलं विधयो भवन्ति। तेन यद्यपि परत्वान्नित्यत्वाच्च द्विर्वचनात् पूर्वमुपधालोपः प्राप्नोति, तथापि **स तथा न क्रियते**। द्विर्वचनात् पूर्वं न क्रियत इति भावः। **बप्सतीति**। भसेः परस्य झेरदादेशः, शपः श्लुः, 'श्लौ' इति द्विर्वचनम्, अभ्यासकार्यम्, उपधालोपे कृते भकारस्य चर्त्वम्—पकारः। **बभस्तीति**। तिपि रूपम्॥ १००॥

**पदमञ्जरी**

**तथा न क्रियत इति**। यदि क्रियेत, अनच्कत्वाद् द्विर्वचनं न स्यादिति भावः। पूर्वत्र अचीत्यधिकारादिह हलीत्युक्तम्, तदुपादानाद्—अचि न स्यादिति चकारेण समुच्चयः।

यदि पूर्वत्रैवाचीत्यनुवर्त्तते, नेह इत्युच्येत, ततः 'हलि च' इति शक्यमकर्त्तुम्, उत्तरार्थं तु तत्कृतम्॥ १००॥

**भावबोधिनी**

सग्धिः—यह रूप अद् से क्तिन् प्रत्यय परे रहते "बहुलं छन्दसि" सूत्र से घस्लृ = घस् आदेश करनेपर घस्+ति में उपधा का लोप—घ् स्+ति यहाँ झल् से परे और झल् परे होने से 'स्' का लोप "झलो झलि" (८।२।२६) से होता है। अब ['झषस्तथोर्धोऽधः' इस सूत्र से] त् का ध्—घ्+धि, ['झलां जश् झशि' सूत्र से] का जश्त्व करनेपर ग्—ग् धि। इसके बाद 'समाना ग्धिः'—इस अर्थ में समास कर देनेपर ['समानस्य च्छन्दसि' इत्यादि सूत्र से] समान का स आदेश—सग्धिः बनता है। 'सग्धिः स्त्री सहभोजनम्।' (अमरकोष २।९।५५) के अनुसार सहभोजन अर्थ में 'सग्धिः' का प्रयोग होता है।]

बब्धाम्—भस् धातु से लोट् = तस् = ताम्—भस्+ताम्, [जुहोत्यादिगणीय होने से शप् का] श्लु और ["श्लौ" सूत्र से धातु का] द्वित्वादि करनेपर [भस् भस् ताम्, हलादिशेष, भभस् ताम्] उपधा का लोप [प्रस्तुत सू से भभ्स् ताम्। 'झलो झलि' सूत्र से] स् लोप, 'त्' का ध् भभ्+धाम्, अभ्यास का] जश्त्व [ब्—बभ्धाम्। पुनः "झलो जश् झशि" सूत्र से भ् का जश्त्व ब्—] बब्धाम्। [प्रथम भ् अभ्यास का जश्त्व 'अभ्यासे चर्च' सूत्र से और द्वितीय भ् का जश्त्व "झलां जश् झशि" सूत्र से किया जाता है।]

द्विर्वचन की अपेक्षा परवर्त्ती होने तथा नित्य होने के कारण उपधा का लोप प्राप्त होता है, किन्तु छान्दस प्रयोग होने के कारण वैसा [द्विर्वचन से पहले] नहीं किया जाता है। [अतः पहले द्वित्व, अभ्यासकार्य के बाद ही उपधा का लोप होनेपर भ भ स्+ताम् में अन्य पूर्वोक्त कार्य होते हैं।]

अजादि परे रहते—इसका क्या फल है—बप्सति। [भस्+लट्=झि, शप् का का श्लु, द्वित्व अभ्यासकार्य जश्त्वादि करनेपर बभस्+झि, झ् का अत्, अजादि परे होने से उपधा का लोप नहीं चर्त्व से भ का प्—बप्स्+अति।]

## ३१०२. हुझल्भ्यो हेर्धिः ॥ १०१ ॥ (२४२५)

'हु' इत्येतस्मात् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति। जुहुधि। झलन्तेभ्यः—भिन्धि। छिन्धि।

हुझल्भ्य इति किम्? क्रीणीहि। प्रीणीहि।

हेरिति किम्? जुहुताम्।

हलीत्येव—रुदिहि। स्वपिहि।

### न्यासः

**हुझल्भ्यो हेर्धिः॥ हलादेरिति।** कुतः पुनर्हल्ग्रहणं प्रकृतं येन हिशब्दो विशिष्यते? अनन्तरसूत्रादिति चेत्? न; तद्धि सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः। 'हुझल्भ्यः' इत्येषा पञ्चमी हलीत्येतस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति। 'तस्मादित्युत्तरस्य' इति वचनादित्यदोषः। **भिन्धीति।** 'श्नसोरल्लोपः' इत्यकारलोपः। **क्रीणीहीति।** 'सेर्ह्यपिच्च' इति हिरादेशः 'ई हल्यघोः' इतीत्त्वम्। **जुहुतामिति।** लोट्, तसस्ताम्। **रुदिहि, स्वपिहीति।** अदादित्वाच्छपो लुक्, 'रुदादिभ्यः सार्वधातुके' इतीट्।

अथेह कस्मान्न भवति—जुहुतात् त्वमिति? आह—**इहेत्यादि।** धिभावस्यावकाशोऽनाशिषि—जुहुधीति, तातङोऽवकाशः—जीवतात् त्वमिति; आशिषि लोटि उभयप्राप्तौ परत्वात्तातङेव भवति। अथ कृतेऽपि तस्मिस्तस्य स्थानिवद्भावात् पुनःप्रसङ्गविज्ञानाद् धिभावः कस्मान्न भवति? इत्याह—**तत्रेत्यादि।**

### पदमञ्जरी

**हुझल्भ्यो हेर्धिः॥ हलादेरिति।** 'हुझल्भ्यः' इति पञ्चम्या हलीति सप्तम्याः षष्ठी प्रकल्प्यते इति भावः। यद्येवम्, 'यस्मिन्विधिः' (व्या० प० १२७) इत्यस्याभावात्तदादिविधिर्न स्यात्? हलीत्यनुवृत्ति-सामर्थ्याद्धलन्तत्वाभावाच्च भविष्यति। **भिन्धीति।** 'श्नसोरलोपः'। **प्रीणीहीति।** 'ई हल्यघोः'। लोटो लङ्वत्'। **जुहुतामिति।** तसस्ताम्। **रुदिहीति।** शब्दान्तरप्राप्त्या द्वयोरप्यनित्ययोः परत्वादिटि कृते पुनर्द्वित्वप्रसङ्गः।

**इहेत्यादि।** धित्वस्यावकाशोऽनाशिषि—जुहुधीति, तातङोऽवकाशो हुझल्भ्योऽन्यः—जीवतात्त्वमिति; आशिषि हुझल्भ्यस्तूभयप्रसङ्गे परत्वात्तातङ्। अथ कृतेऽपि तस्मिन् स्थानिवद्भावाद्धित्वं कस्मान्न भवति?

### भावबोधिनी

कित् ङित् परे ही—"अंशून् बभस्ति। [ भस् + तिप् शप् का श्लु पूर्वोक्त प्रक्रिया के बाद बभस् + ति में पित् होने से कित् न होने से उपधालोप नहीं होता है। ] ॥ १०० ॥

"हु" इससे और झलन्तों से परे हलादि 'हि' के स्थान पर 'धि' आदेश होता है। उदा० जुहुधि। [ जु + लोट्, हि, शप् का श्लु, द्वित्व, अभ्यास कार्य के बाद जुहु + हि में हि का धि-जुहुधि। ]

झलन्तों से परे हि का धि—उदा० भिन्धि। छिन्धि। [ भिदिर्, छिदिर् के लोट मध्यम पुरुष, एकवचन में भिद् + हि, छिद् + हि, रुधादिगणीय होने से श्नम् = न भिनद् + धि, छिनद् + धि 'श्नसोरल्लोपः' सूत्र से अ का लोप, न् का अनुस्वार, परसवर्ण द् का वैकल्पिक लोप—भिन्धि भिन्द्धि। ]

हि का धि—इसका क्या फल है? जुहुताम्। [ इसमें 'ताम्' का 'हि' नहीं होता है। ]

हलादि हि का ही 'हि' होता है—इसका क्या फल है? रुदिहि। स्वपिहि। [ रुद् तथा स्वप् के लोट् मध्यम पुरुष एकवचन में "रुदादिभ्यः सार्वधातुके" सूत्र से इट् कर देने पर रुद् + इहि, स्वप् + इहि में हलादि 'हि' न होने से 'धि' आदेश नहीं होता है। ]

इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङि कृते 'सकृद् गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (चा० प० ६०) इति पुनर्धिभावो न भवति।

भिन्धकि, छिन्धकीत्यत्र परत्वाद् धिभावे कृते पुनःप्रसङ्गविज्ञानादकच् क्रियते ॥

**३१०३. श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०२ ॥ (३५५१)**

श्रु, शृणु, पॄ, कृ, वृ—इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये। 'श्रुधी हवमिन्द्र'

**न्यासः**

यद्येवम्, भिन्धकि, छिन्धकीत्यत्र परत्वाद् धिभावे सत्यनन्तरोक्तादेव हेतोरकज् न स्यात्। इत्यत आह—**भिन्धकि, छिन्धकीत्यादि**। व्यक्तौ हि पदार्थे 'सकृद्गते विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इत्येतत् प्रवर्त्तते। जातौ च 'पुनःप्रसङ्गविज्ञानात् सिद्धम्' इति 'विप्रतिषेधे परं कार्यम्' इत्यत्र प्रतिपादितम्। **पाणिने**-स्तूभयं मतम्, लक्ष्यानुरोधात् क्वचित् किञ्चिद् आश्रीयते। तत्र तातङ्विधौ व्यक्तिपदार्थस्याश्रयणात् 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इत्यस्या उपस्थानम्; अकज्विधौ तु जातेः पदार्थस्याश्रयणात् 'पुनःप्रसङ्गविज्ञानात् सिद्धम्' इत्यस्याः। **भिन्धकीति**। 'अव्ययसर्वनाम्नाम्' इत्यादिनाकच्। तत्र 'तिङश्च' इत्यनुवर्त्तते ॥ १०१ ॥

**श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ शृणुधीति**। 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च। **पूर्द्धीति**। 'पॄ पालनपूरणयोः', 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, 'हलि च' इति दीर्घः। **उरु णस्कृधीति**। उरु अस्माकं कृधीति स्थिते 'बहुवचनस्य वस्नसौ' इत्यस्मदो नसादेशः, 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्, सकारस्य रुत्वम्, विसर्जनीयः। तस्य 'अतः कृकमि' इत्यादिना सत्वम्। **अपावृधीति**। वृङो वृञो वा रूपम्। वृङोऽपि हि 'व्यत्ययो बहुलम्' इति च्छन्दसि परस्मैपदं भवत्येव।

**पदमञ्जरी**

तत्राह— **तत्र कृते इति**। भिन्धकि, छिन्धकीत्यत्रापि तर्हि परत्वेन धित्वे कृते अकज्न स्यात्? इत्यत आह—**भिन्धकीति**। अपर आह—'स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थः, हकारस्य धकार आदेशः, हलीत्यपि नानुवर्त्यम्, न क्वाप्यनिष्टप्रसङ्गः' इति ॥ १०१ ॥

**श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ उरुकृदुरुणस्कृधीति**। 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्, 'कः करत्' इति विसर्जनीयस्य सत्वम्।

**भावबोधिनी**

त्वं जुहुतात्, भिन्तात्—इत्यादि में परवर्त्ती होने से 'हि' के स्थान पर विकल्प से तातङ् कर देने पर 'विप्रतिषेध में एक बार जिसका बाध हो गया उसका हो ही गया' इस परिभाषा के अनुसार [ तातङ् के अभाव पक्ष में भी ] फिर धि' आदेश नहीं होता है।

भिन्धकि, छिन्दकि—इनमें पर होने से [ हि का ] धि करने पर 'पुनः प्रसङ्ग होने पर कार्य होता है' इस वचन से 'अकच्' किया जाता है। [ भिन्धि, छिन्धि में 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इसमें 'तिङश्च' की अनुवृत्ति के कारण तिङन्त की टि के पहले भी अकच् होता है—भिन्ध् अक् इ, छिन्ध् अक् इ = भिन्दकि, छिन्दकि। ] यहाँ अकच् दुबारा सम्भव था, इसलिये किया जाता है। परन्तु लोट् में आशीः अर्थ में तातङ् से 'धि' का बाध हो जाने पर दुबारा 'धि' नहीं होता है। यह व्यवस्था व्यक्तिपक्ष और जातिपक्ष को लक्ष्यानुसार मानकर की जाती है। अतः कोई दोष नहीं है। ] ॥ १०१ ॥

श्रु, शृणु, पॄ, कृ, वृ—इनसे बाद में आने वाले 'हि' का वेदविषय में 'धि' आदेश होता है। उदा० श्रुधी हवमिन्द्र। [ श्रु + लोट् बाहुलकात् श्नु आदि न होकर सि का हि और प्रस्तुत सूत्र से 'हि' का धि होता है। ] शृणुधी गिरः। [ श्रु + लोट् = सिप् = हि, श्नु विवरण और शृ आदेश, दीर्घ। ] पूर्द्धि। [ पॄ पालनार्थक धातु से, लोट्=सिप्,

(ऋ० २.११.३) । 'श्रृणुधी गिरः (ऋ० ८.१३.७) । पूर्द्धि (ऋ० ८.७८.१०) । उरुणस्कृधि (ऋ० ८.५७.११) । अपावृधि (ऋ० १.७.६) ।

श्रृणुधीत्यत्र धिभावविधानसामर्थ्याद् 'उतश्च प्रत्ययात्' (६.४.१०४) इति हेर्लुग्न भवति । 'अन्येषामपि दृश्यते' (६.३.१३७) इति दीर्घत्वम् । अतोऽन्यत्र 'व्यत्ययो बहुलम्' (३.१.८५) इति शप्, तस्य 'बहुलं छन्दसि' (२.४.७३) इति लुक् ॥

## ३१०४. अङितश्च ॥ १०३ ॥ (३५५३)

अङितश्च हेर्धिरादेशो भवति । 'वा छन्दसि' (३.४.८८) इति पित्त्वेनास्याङित्त्वम् । 'सोमं रारन्धि'

### न्यासः

अथ श्रृणुधीत्यत्र 'उतश्च प्रत्ययादसंयोगपूर्वात्' इत्यनेन लुक् कस्मान्न भवति ? इत्याह—श्रृणुधीत्यत्रेत्यादि । यद्यत्र लुक् स्याद् धिभावस्यानर्थक्यं स्यादिति भावः । 'अन्येषामपि दृश्यते' इति दीर्घत्वमपावृधीत्यत्र । ननु च श्रुधीत्यत्र 'श्रुवः श्रृ च' इति श्रृभावेन श्नुप्रत्ययेन च भवितव्यम्, पूर्धीत्यत्र क्र्यादित्वात् श्नाप्रत्ययेन, उरु णस्कृधीत्यत्र 'तनादिकृञ्भ्य उः' इत्युप्रत्ययेन; अपावृधीत्यत्र यदि वृङ् तदा क्र्यादित्वात् श्नाप्रत्ययेन, अथ वृञ् तदा स्वादित्वात् श्नुप्रत्ययेन; एवञ्चैतानि रूपाणि न सिध्यन्ति ? इत्यत आह—अतोऽन्यत्रेत्यादि । श्रृणुधीत्येतस्मादुदाहरणादन्येषूदाहरणेषु 'व्यत्ययो बहुलम्' इति शप्, तस्यापि 'बहुलं छन्दसि' इति लुक् ॥ १०२ ॥

अङितश्च ॥ वा छन्दसीत्यादि । 'सार्वधातुकमपित्' इत्यपितः सार्वधातुकस्य ङित्त्वं विधीयते, छन्दसि विषये 'वा छन्दसि' इत्यनेन हेर्यदपित्त्वं तद्विकल्प्यते । तेन पक्षे तस्य ङित्त्वं न भवति ।

### पदमञ्जरी

अन्येषामपि दृश्यत इति । दीर्घत्वमिति । न केवलं श्रृणुधी गिर इत्यत्र; श्रुधी हवम्, अपावृधीत्यत्राप्यनेनैव दीर्घत्वम् । अतोऽन्यत्रेति । श्रृणुधीत्यतोऽन्येषु सर्वोदाहरणेषु ॥ १०२ ॥

अङितश्च ॥ मलोपाभावस्त्विति । 'अनुदात्तोपदेश' इत्यादिना यो मलोपस्तस्याभावः । अङित्त्वादेवेति ।

### भावबोधिनी

हि, "उदोष्ठ्यपूर्वस्य" से ऋ का उत्व, रपरत्व 'हलि च' से दीर्घ पूर्+धि, "अचो रहाभ्यां द्वे" सूत्र से ध का विकल्प से द्वित्व, जश्त्व—पूर्द्धि, पक्ष में पूर्धि ] उरुणस्कृधि । [ कृ+लोट् = सिप् = हि, धि, उरु अस्माकं कृधि में "अस्माकम्" में 'बहुवचनस्य वस्नसौ" से 'नस्' आदेश, "नश्च धातुस्थोरुषुभ्यः' सूत्र से णत्व स् का रुत्व और विसर्ग, 'अतः कृकमिकंस" इत्यादि सूत्र से सत्व—उरुणस्कृधि ] अपावृधि । अप आङ् पूर्वक वृञ् या वृङ् से व्यत्यय से परस्मैपद लोट् = सिप्, हि, धि ]

श्रृणुधि—यहाँ धि का विधान करने के कारण "उतश्च प्रत्ययाद्" (६।४।१०६) इस सूत्र से 'हि' का लुक् नहीं होता है । "अन्येषामपि दृश्यते" (६।३।१३७) सूत्र से 'धि' दीर्घ होता है । इस (श्रृणुधि) से भिन्न सभी रूपों में 'व्यत्ययो बहुलम्" (२।४।७३) सूत्र से शप् होता है उसका "बहुलं छन्दसि" (२।४।७३) से लुक् होता है ॥ १०२ ॥

और अङित् 'हि' का 'धि' आदेश होता है । 'वा छन्दसि' (३।४।८८) सूत्र से पित् होने से यह अङित् होता है । उदा० सोमं रारन्धि । अस्मभ्यं तद्धर्यश्व प्रयन्धि । युयोध्यस्मज्जुहुराणमेनः ।

अङित् का—इसका क्या फल है ? हव्यं प्रीणीहि । [ यहाँ ङित् है । अतः धि नहीं होता है । ]

(ऋ० १.९१.१३)। 'अस्मभ्यं तद्धर्यश्व प्रयन्धि' (ऋ० ३.३६.९)। 'युयोध्यस्मज्जुहुराणमेनः' ऋ०१.१८९.२०)

अङित इति किम् ? 'हव्यं प्रीणीहि' (काठ० सं० ४०.९४)।

**रारन्धीति—रमेर्व्यत्ययेन परस्मैपदम्, शपः श्लुः, अभ्यासदीर्घत्वं छान्दसत्वात्। मलोपाभावस्तु अङित्त्वादेव। प्रयन्धीति—यमेः शपो लुक्। युयोधीति—यौतेः शपः श्लुः॥**

**३१०५. चिणो लुक् ॥ १०४ ॥ (२३२९)**

**चिण उत्तरस्य प्रत्ययस्य लुग्भवति। अकारि। अहारि। अलावि। अपाचि।**

**न्यासः**

अथ रारन्धीति कथं परस्मैपदम्, यावता रमिरयमात्मनेपदी ? कथं वात्र शपः श्रवणं न भवति ? कथञ्चाभ्यासस्य दीर्घत्वम् ? कथञ्च 'अनुदात्तोपदेश' इत्यादिना मकारलोपो न भवति ? इत्याह—**रारन्धीत्यादि**। 'शपः श्लुः' इति ब्रुवाणेन 'श्लौ' इति द्विर्वचनमित्युक्तं भवति। मकारलोपाभावस्त्वङित्त्वादेव सिद्ध इति नासौ यत्नसाध्य इत्यभिप्रायः। **यमेः शप इति**। 'बहुलं छन्दसि' इत्यनेन। **यौतेः शपः श्लुरिति**। 'बहुलं छन्दसि इत्यनेन॥ १०३॥

**चिणो लुक्॥ चिण उत्तरस्य प्रत्ययस्येति**। अथ प्रत्ययस्यैतत् कुतो लभ्यते ? 'अङ्गस्य' इत्यनेन प्रत्ययस्य सन्निधापितत्वात्।

यदि चिण उत्तरस्य प्रत्ययस्य लुग् भवति, अकारितरामकारितमामित्यत्र तरप्तमपोर्लुक् कस्मान्न भवति ? इत्याह—**अकारितरामित्यादि**। योऽसौ तशब्दस्य लुक्, तस्य तरप्तमपोर्लुकि कर्त्तव्ये 'असिद्धवदत्रा भात्' इत्यसिद्धत्वम्। अतस्तशब्देन व्यवधानाच्चिणोऽनन्तरौ तरप्तमपौ न भवत इति तयोर्लुग्न भवति। ननु

**पदमञ्जरी**

नासौ यत्नसाध्य इत्येवशब्दार्थः। **यमेः शपो लुगिति**। 'बहुलं छन्दसि' इत्येव। एवमुत्तरत्रापि[1] ॥ १०३॥

**चिणो लुक्॥** चिण इति पञ्चमी, न षष्ठी; विधानसामर्थ्यात्। **प्रत्ययस्येति**। 'प्रत्ययस्य लुक्श्लुलुपः' इति वचनादङ्गाधिकाराच्चैतल्लभ्यते। तेनाकारितरामिति तशब्दस्य तरप आमश्च यः सङ्घातस्तस्य युगपल्लुग्न भवति; प्रत्येकं प्रत्ययत्वेऽपि सङ्घातोऽप्रत्ययो ह्ययम्।

**भावबोधिनी**

रारन्धि—यह 'रम्' धातु से व्यत्यय से परस्मैपद, शप् का श्लु, द्वित्व, अभ्यासकार्य, अभ्यास का दीर्घत्व—ये कार्य छान्दस होने से होते हैं। [ हि का धि, म का अनुस्वार परसवर्ण—रारन्धि।] अङित् होने के कारण ही म् (अनुनासिक का लोप नहीं होता है। प्रयन्धि—यह 'यम्' से शप् का लुक् [ लोट्, सि, हि, धि; म् लोपाभाव, अनुस्वार, परसवर्ण होने पर—प्रयन्धि रूप बनता है। ] युयोधि—यह 'यु' धातु से शप् का श्लु [ द्वित्व, गुण, सिप् = हि = धि करने पर ] होता है। ॥ १०३ ॥

चिण् से उत्तरवर्त्ती प्रत्यय का लुक् होता है। उदा० अकारि। अहारि। अलावि। अपाचि। [ कृ+लुङ् = त, अट्, च्लि, च्लिका चिण् ऋ की वृद्धि, रपर—अकार् इ+त, प्रस्तुत सूत्र से 'त' का लोप। इसी प्रकार हृ+लुङ्, लू+लुङ्, पच्+लुङ् से कर्म अर्थ में रूप है। सभी में चिण् के बाद 'त' का लुक् होता है। ]

अकारितराम्, अहारितराम्—इनमें [ प्रस्तुत सूत्र से किया गया ] 'त' लोप असिद्ध हो जाता है, इस कारण तरप् और तमप् के तकार का लोप नहीं होता है। "चिणो लुक्" यह सूत्र विषयभेद से भिन्न-भिन्न माना जाता है। [ व्यक्तिपक्ष में अकारि+त, और अकारि+त+तराम् ये भिन्न-भिन्न हो जाते हैं। अथवा एक ही में व्यक्तिभेद से भेद मान लिया जाता है। अतः एक की कर्त्तव्यता में दूसरा असिद्ध हो जाने से 'त' का व्यवधान होने से 'तराम्' का लुक्

१. युयोधीत्यस्मिन् लक्ष्ये—इत्येवार्थः, न तूत्तरसूत्रे, अप्रसङ्गात्।

**अकारितराम्, अहारितमामित्यत्र तल्लोपस्यासिद्धत्वात् तरप्तमपोर्न लुग्भवति; 'चिणो लुक्' इत्येतद्विषयभेदाद्भिद्यते ॥**

## ३१५६. अतो हेः ॥ १०५ ॥ (२२००)

**अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति । पच । पठ । गच्छ । धाव ।**

**अत इति किम् ? युहि । रुहि । तपरकरणं किम् ? लुनीहि । पुनीहि । ईत्वस्यासिद्धत्वादाकार एव भवति ॥**

### न्यासः

चान्यस्यान्यस्मिन्नसिद्धवचनादेकस्य तत्रैवासिद्धत्वं नोपपद्यते ? इत्यत आह—**चिणो लुगित्येतदित्यादि** । 'चिणो लुक्' इत्यभेदेनापि श्रुतमिदं लक्षणं विषयस्य लक्ष्यस्य भेदाद्भिद्यते, व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणं भिद्यत इति कृत्वा, तेन भेदे सत्युपपद्यत एवासिद्धत्वम् । अकारि, अहारीति स्थिते, अतिशयविवक्षायां तरप्तमपौ 'तिङश्च' इत्यनेन, तदन्तात् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे', इत्यामौ कृते, अकारितराम्, अहारितमामिति भवति ॥१०४॥

**अतो हेः** ॥ **गच्छेति** । गमेर्लोट्, 'इषुगमियमां छः' इति छत्वम् । **धावेति** । 'धावु गतिशुद्धयोः' । अथ वा—सर्त्तेः 'पाघ्रा' इत्यादिना धावादेशः । **युहि, रुहीति** । अदादित्वाच्छपो लुक् । **लुनीहि, पुनीहीति** । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्, 'ई हल्यघोः' इतीत्वम् ।

ननु चेत्वे कृते सत्यनकारान्तत्वान्न भविष्यति, तत् किमेतन्निवृत्त्यर्थेन तपरकरणेन ? इत्यत आह—**ईत्वस्येत्यादि** । असिद्धत्वं तु पूर्ववत् ॥ १०५ ॥

### पदमञ्जरी

ननु चेदमस्मिन्नसिद्धमिति भेदनिबन्धनो विषयविषयिभावः, तत्कथं चिणो लुक्चिणो लुक्येवासिद्धो भवति ? अत आह—**चिणो लुगित्येतदिति** । अथ वा—'क्ङिति' इति वर्तते, 'चिणः' इति पञ्चमी तस्य षष्ठी प्रकल्पयिष्यति, तेन क्ङितः प्रत्ययस्य लुग्विधीयमानस्तरपो न भविष्यति ॥ १०४ ॥

**अतो हेः** ॥ **गच्छेति** । 'इषुगमियमां छः' । **धावेति** । 'धावु गतिशुध्योः' (धा० पा० ६०१) । पाघ्रादिसूत्रेण सर्त्तेर्धावादेशो वा[1] ।

**लुनीहीति** । 'प्वादीनां ह्रस्वः', 'ई हल्यघोः' । ननु चात्रानवर्णान्तत्वादेव न भविष्यति, ईत्वमेव हि परत्वाद्भवति ? तत्राह—**ईत्वस्येति** । नन्वेवमप्युत्तरसूत्रे 'उतः', 'प्रत्ययात्' इति यदुपात्तमुपाधिद्वयं तस्मादेवात्र प्रत्युदाहरणद्वयेऽपि न भविष्यति । यदि च लुनीहीत्यत्र परत्वादीत्वं भवति, ततोऽसिद्धत्वं नास्ति; विप्रतिषेधविषये तदभावस्योक्तत्वात् । तस्मादतं इत्यस्य—इहि, अधीहीति प्रत्युदाहरणम्, तपरकरणस्य—याहि, वाहीति ॥१०५॥

### भावबोधिनी

नहीं होता है । अथवा इस सूत्र में 'क्ङिति' की अनुवृत्ति करके 'चिणः' इस पञ्चम्यन्त को षष्ठ्यन्त में प्रकल्पित करते हैं जिससे कित् ङित् प्रत्ययों का ही लुक् होता है । तरप् तमप् ऐसे नहीं हैं । अतः इनका लुक् नहीं होता है ] ॥ १०४ ॥

अकारान्त अङ्ग से उत्तरवर्त्ती 'हि' का लुक् होता है । उदा० पच । पठ । गच्छ । धाव । [ डुपचष् से लोट् मध्यमपुरुष में सि = हि, शप्—पच् अहि हि का लुक्—पच । धाव–यह √धाव का या √सर्ति का धाव आदेश का रूप है ।

अकार से परे—इसका क्या फल है ? युहि । रुहि । [ √यु तथा रु √रु धातुओं से लोट् = सि = हि है । अकारान्त अङ्ग नहीं होने से लुक् नहीं होता है । ]

तपरकरण का क्या फल है ? लुनीहि । पुनीहि । [ √लू तथा √पू—ह्रस्व करके धातुओं से लोट् = सि, हि, श्ना = ना विकरण—लुना हि पुना हि । ह्रस्व अकार न होने से यह सूत्र नहीं लगता है । "ई हल्यघोः" सूत्र से 'आ' का ई होता है । ] ईत्व के असिद्ध हो जाने से आकार ही रहता है । [ अतः अकार से परे न होने से लुक् नहीं होता है । ] ॥ १०५ ॥

---

१. अत्र विकल्पार्थको 'वा' शब्दः प्रमादाद् भ्रष्टः प्रकाशितसंस्करणेषु ।

## ३१०७. उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥ (२३३४)

**उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति । चिनु । सुनु । कुरु ।**

**उत इति किम् ? लुनीहि । पुनीहि । प्रत्ययादिति किम् ? रुहि । युहि । असंयोगपूर्वादिति किम् ? प्राप्नुहि । राघ्नुहि । तक्ष्णुहि ॥**

**न्यासः**

**उतश्च प्रत्ययादसंयोगपूर्वात् ॥ उकारो योऽसंयोगपूर्व** इति । अविद्यमानः संयोगः पूर्वो यस्मात् स तथोक्तः । एतेनासंयोगपूर्वग्रहणमुकारविशेषणमिति दर्शयति । स एवंविध उकारः प्रत्ययस्य विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह—**तदन्तादित्यादि** । किमर्थं पुनस्तदन्तविधिरभ्युपगम्यते ? सुनु, चिन्वित्यत्र यथा स्यात् । अस्त्वेतत् प्रयोजनम्, अयं तु दोषः—तनु, कुर्वित्यत्र न प्राप्नोति, अत्र ह्युकार एव प्रत्ययः, न तदन्तः ? अत्रापि व्यपदेशिवद्भावेन तदन्तत्वं प्रत्ययस्यास्तीत्यदोषः । **कुर्विति** । धातोर्गुणे रपरत्वे च कृते 'अत उत् सार्वधातुके' इत्युत्त्वम् ।

**तक्ष्णुहीति** । 'तनूकरणे तक्षः' इति श्नुः ।

**पदमञ्जरी**

**उतश्च प्रत्ययादसंयोगपूर्वात् ॥** उतः, प्रत्ययात्—इत्यनयोर्विशेषणविशेष्यभावे कामचारः । तत्र—

उकारस्य विशेष्यत्वात् तेन नास्ति तदन्तता ।
न सम्भवति चोकारः प्रत्ययान्तो यदा पुनः ॥
विशेष्यते उकारेण प्रत्ययस्तत्तदन्तता ।
आश्रीयते प्रत्ययस्य तत्पक्षद्वयसम्भवः ॥

तत्राद्ये पक्षे तनु, कुरु—इत्यादावेव स्यात्; सुनु, चिनु—इत्यादौ तु न स्यात् । तथा उकारस्य प्रत्ययस्यासंयोगपूर्वत्वादसंयोगपूर्वग्रहणमस्मिन्पक्षे अङ्गविशेषणं विज्ञायेत, ततश्च क्षिणु इत्यादौ न स्यात्, क्षिणु हिंसायाम्' (धा० पा० १४६६) तानादिकः, अत्र धातोर्गुणो न भवतीत्याहुः । तस्मादुकारो विशेषणम्, तेन तदन्तविधिः । यद्येवम्, तनु, कुरु—अत्र न प्राप्नोति, इकार एवात्र प्रत्ययो न तदन्तः ? अत्रापि तदन्तः; कथम् ? व्यपदेशिवद्भावात् । एवं स्थिते—

यद्यसंयोगपूर्वत्वमुकारान्तविशेषणम् ।
आप्नुहीत्यत्र हेर्लुक्स्यात्प्रतिषेधस्तु तक्ष्णुहि ॥
तस्माद्विशेषणमिदमुकारस्यैव गृह्यताम् ॥

**भावबोधिनी**

उकार जो असंयोगपूर्वक है, (जिससे पूर्व में संयोग नहीं है ऐसा) तदन्त (वह जिसके अन्त में है ऐसे) प्रत्यय से परे 'हि' का लुक् होता है । उदा० चिनु । सुनु । कुरु । [ √चि + लोट् = सि = हि, स्वादिगणीय होने से श्नु = नु विकरण चिनु + हि, प्रस्तुत सूत्र से हि का लुक् । इसी प्रकार सु नु + हि । कृ + लोट् = सिप् = हि, "तनादिकृञ्भ्यः उः" सूत्र से 'उ' विकरण, ऋ का गुण, रपर—कर् उ + हि, 'अत उत् सार्वधातुके" सूत्र से अकार का उकार—कुरु + हि, हि का लुक् । ]

उकार से परे—इसका क्या फल है ? लुनीहि । [ लूञ्, पूञ् का ह्रस्व करके लोट् में श्ना = ना विकरण, सि = हि । उकार से परे न होने से लुक् नहीं होता है । ईत्व होता है । ]

प्रत्यय से परे हि का लुक्—इसका क्या फल है ? रुहि । युहि । [ यहाँ प्रत्यय से परे नहीं अपि तु प्रकृति का ही उ परे का रूप है । ]

असंयोगपूर्वक से—इसका क्या फल है ? प्राप्नुहि । राघ्नुहि । तक्ष्णुहि । [ इनमे उकार से पूर्व संयोग होने के कारण उसका लुक् नहीं होता है । ]

❀ **उतश्च प्रत्ययाच्छन्दोवावचनम्** ❀ (म० भा०)। **'उतश्च प्रत्ययात्'** इत्यत्र **'छन्दसि वा'** इति इति वक्तव्यम्। आतनुहि यातुधानान्। 'धिनुहि यज्ञपतिम्' (काठ० सं० १.६)। तेन मा भगिनं कृणुहि'[1] (अ० वे० १२९.१)॥

## ३१०८. लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥ (२३३३)

**न्यासः**

**छन्दोवावचनमिति।** अभिधानेऽभिधेयोपचाराद् वार्थो विकल्पो वाशब्देन विवक्षितः। उच्यते व्याख्यायतेऽनेनेति वचनम्, वार्थस्य वचनं वावचनम्, छन्दसि वावचनं छन्दोवावचनमिति 'सप्तमी' इति योगविभागात् समासः। **छन्दसि वेति वक्तव्यमिति।** छन्दसि विषये विकल्पेनायं विधिर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—उत्तरसूत्रेऽन्यतरस्यांग्रहणमुभयोर्योगयोः शेषः, सा च व्यवस्थितविभाषा। तेन छन्दसि विषये विकल्पेनायं विधिर्भवतीति। **धिनुहि, कृणुहीति।** 'इवि, दिवि, धिवि, प्रीणनार्थाः', 'कृवि हिंसाकरणयोः'। इदित्वान्नुम्, 'धिन्विकृण्व्योर च' इत्युप्रत्ययः, अकारश्चान्तादेशः, तस्य 'अतो लोपः' इति लोपः॥ १०६॥

**लोपश्चास्यान्यतरस्यां म्वोः॥ योऽयमुकारोऽसंयोगपूर्व इति।** एतेनास्येत्यनेन प्रकृत उकारः प्रत्यवमृश्यत इति दर्शयति। ननु च 'उतः' इत्यनुवृत्तेरुकारस्यैव लोपो विज्ञास्यते, तत् किम् 'अस्य' इत्यनेन ?,

**पदमञ्जरी**

ननु न 'येन विधिस्तदन्तस्य' इति उकारस्तदन्तस्य संज्ञा, ततः किम् ?

संज्ञीप्रत्यायनपरा संज्ञा तस्या विशेषणम्।
अयुक्तमिति चेदत्र समाधिरभिधीयते।
विशेषणं तदन्तस्य संज्ञा, सत्यम्, तथापि तु।
विशेषणत्वस्फुरणात् प्रागेवोतो विशेषणम्।
स्यादस्य संयोगपूर्वत्वं पश्चात्तत्तु विशेषणम्।
प्रत्ययस्येति, नैवेह किञ्चिदस्ति तिरोहितम्॥

तदिदमुक्तम्—**योऽयमुकारोऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति। युहि, रुहीति।** ननु जुहोतेः परस्य हेर्धित्वविधानादेव धातोः परस्य न भविष्यति ? सत्यम्; विशिष्टविषयमेतज्ज्ञापकं स्यादिति प्रत्ययग्रहणम्। **छन्दसि वेति च वक्तव्यमिति।** एवं च कृत्वोत्तरसूत्रेऽन्यतरस्यांग्रहणं न कर्तव्यं भवति॥ १०६॥

**लोपश्चास्यान्यतरस्यां म्वोः॥** अस्येत्यनेनोकारान्तः प्रत्ययः प्रत्यवमृश्यते। अस्येत्यनुच्यमाने 'म्वोः' इति षठ्याश्रयणे न म्वोरेव लोपो विज्ञायते। एवं च 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति पञ्चमी न बाधिता

**भावबोधिनी**

❀ उतश्च प्रत्ययात्—इसमें 'वेद में विकल्प से होता है' ऐसा कहना चाहिए। ❀ 'उतश्च प्रत्ययात्' इस सूत्र में 'वेद में विकल्प से' ऐसा कहना चाहिए। [ अतः कहीं लुक् होता है और कहीं नहीं भी होता है। ] उदा० आतनुहि यातुधानान् ] धिनुहि यज्ञपतिम्। [ आङ् पूर्वक तनु = तन् से लोट् = सिप् = हि, तनादि होने से 'उ' विकरण आतनुहि—इसमें 'हि' लुक् नहीं होता है। धिनुहि—यह 'धिवि प्रीणने' का लोट् मध्यम पुरुष एकवचन का रूप है। इकार की इत्संज्ञा होने से नुम् होता है, "धिन्विकृण्व्योर च" इस सूत्र से 'उ' प्रत्यय और अकार अन्तादेश होता है धि न अ उ + हि, अ का लोप होता है—धिनुहि। ] तेन मा भगिनं कृणु" कृणुहि में 'हि' का लुक् होता है। ] ॥ १०६ ॥

जो यह उकार असंयोगपूर्वक है (जिससे पूर्व में संयोग नहीं है) तदन्त प्रत्यय का मकारादि और वकारादि प्रत्यय परे विकल्प से लोप होता है। उदा० सुन्वः, सुनुवः। सुन्मः, सुनुमः। तन्वः, तनुमः। तन्मः, तनुमः। [ सु + लोट् = वस्,

१–१. अत्र 'हि' रहितः 'कृणु' इत्येवोचितः पाठः।

**योऽयमुकारोऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकारमकारादौ प्रत्यये परतः। सुन्वः, सुनुवः। सुन्मः, सुनुमः। तन्वः, तनुवः। तन्मः, तनुमः।**

**प्रत्ययस्येत्येव—युवः, युमः। असंयोगपूर्वस्येत्येव—शक्नुवः, शक्नुमः।**

**लुगिति वर्त्तमाने, लोपग्रहणमन्त्यलोपार्थम्॥**

**३१०९. नित्यं करोतेः॥ १०८॥ (२५४८)**

**करोतेरुत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति। कुर्वः, कुर्मः।**

**न्यास**

षष्ठीप्रक्लृप्त्यर्थमस्येत्येतदिति चेत्? न; 'म्वोः' इत्येषैव हि सप्तम्यकृतार्था 'उतः' इत्यस्याः पञ्चम्याः पूर्वयोगे कृतार्थायाः षष्ठीत्वं प्रकल्पयिष्यति, 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात्। स्यादेतत्—यदि 'म्वोः' इत्येषा सप्तमी विज्ञायते, एतदेव तु न विज्ञायते—किमियं षष्ठी, उत सप्तमीति? तस्मात् षष्ठीप्रक्लृप्त्यर्थमस्येत्युक्तम्। **लुगित्यनुवर्त्तमान इत्यादि**। यदि प्रकृत एव लुक् क्रियते तदा सर्वस्यैव प्रत्ययस्य लुक् स्यात्, नान्त्यस्य; यतः प्रत्ययादर्शनस्य लुगित्येषा संज्ञा विहिता, न तु प्रत्ययावयवस्यादर्शनस्य। सर्वस्य तु लुकि कृते सुन्वः, सुन्म इति न सिध्यति? लोपग्रहणाददोषः। तत्र ह्युकारमात्रस्य लोपः; 'अलोऽन्त्यस्य' इति वचनात्। तस्मादन्त्यस्य लोपार्थं लोपग्रहणम्। किञ्च कुर्वः, कुर्म इत्यत्र गुणो लुकि सति न स्यात्; 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात्। लोपे तु सति भवति। ततो गुणार्थमपि लोपग्रहणं कर्त्तव्यम्॥ १०७॥

**नित्यं करोतेः॥ करोतेरुकारप्रत्ययस्येति**। ननु चकारेण पूर्वसूत्र उकारोऽनुकृष्टः, 'चानुकृष्टञ्चोत्तरत्र नानुवर्त्तते', तत् कथमुकारस्य लोपो लभ्यते? नैवम्; पूर्वसूत्रे ह्युकारस्य सन्निधानमस्येत्यनेनैव लभ्यत इति

**पदमञ्जरी**

भवति। **लुगिति वर्त्तमाने इत्यादि**। यदि हि प्रकृत एव लुक् क्रियेत, सर्वस्यैव प्रत्ययस्य स्यात्। 'लुगादयः सर्वादेशाः' इति संज्ञाविधाववोचाम। सर्वस्य लोपे कृते सुन्वः, सुनुव इति न सिध्येत्। तस्मादन्त्यस्य लोपार्थं लोपग्रहणम्। किञ्च—कुर्वः, कुर्म इत्यत्र लुकि सति गुणो न स्यात्; 'न लुमताङ्गस्य' इति प्रतिषेधात्। लोपे तु सति भवति॥ १०७॥

**नित्यं करोतेः॥ करोतेरुप्रत्ययान्तस्येति**। 'उतश्च प्रत्ययाद्' इत्यनुवृत्तेर्लभ्यते। **उकारलोपस्येत्यादिना** सोपपत्तिकां दीर्घप्राप्तिमनूद्य प्रतिषेधं दर्शयति।

**भावबोधिनी**

मस्, श्नु = विकरण— सु नु + वस् "नित्यं ङितः" से वस् तथा मस् के स् का लोप होता है क्योंकि 'लोटो लङ्वत्" सूत्र से ङित्त्व हो जाता है। प्रस्तुत सूत्र से उलोप करने पर सुन्वः, पक्ष में सुनुमः। इसी प्रकार सुनु+मस् में भी दो रूप होते हैं। तनु धातु से भी वस् तथा मस् परे दो दो रूप होते हैं।]

प्रत्यय के ही उकार का लोप होता है, अतः युवः, युमः [इनमें धातु से उकार से परे वकार का लोप नहीं होता है।]

असंयोगपूर्वक का ही—शक्नुवः। शक्नुमः। [यहाँ उकार से पूर्व में संयोग होने के कारण उकार का लोप नहीं होता है।]

["चिणो लुक्" इस पूर्व सूत्र से] लुक् की अनुवृत्ति सम्भव होने पर भी पुनः 'लोप' का ग्रहण केवल अन्त्य अर्थात् उकार का लोप कराने के लिए है। [अन्यथा उकारान्त प्रत्यय का ही लुक् होने लगता है।]॥ १०७॥

करोति = कृधातु से उत्तरवर्ती उकार प्रत्यय का वकारादि तथा मकारादि प्रत्यय परे रहते नित्य ही लोप होता है। उदा० कुर्वः। कुर्मः। [कृ+लट् = वस्, मस्, "तनादिकृञ्भ्यः उः" से 'उ' विकरण ऋ का गुण, रपर

उकारलोपस्य दीर्घविधावस्थानिवद्भावाद् 'हलि च' (८.२.७७) इति दीर्घत्वं प्राप्तम्, 'न भकुर्छुराम्' (८.२.७९) इति प्रतिषिध्यते ॥

**३११०. ये च ॥ १०९ ॥ (२५४९)**

यकारादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति। कुर्यात्, कुर्याताम्, कुर्युः ॥

**३१११. अत उत्सार्वधातुके ॥ ११० ॥ (२४६७)**

उकारप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशो भवति सार्वधातुके क्ङिति परतः। कुरुतः। कुर्वन्ति।

**न्यासः**

तत्र तस्य चकारेण याऽनुकृष्टिः सैतदर्थैव वेदितव्या। **उकारलोपस्येत्यादिना** कुर्वः, कुर्म इत्यत्र सोपपत्तिकां दीर्घप्राप्तिं दर्शयति, 'न भकुर्छुराम्' इत्यनेन च तत्प्रतिषेधम्।

नित्यग्रहणं विस्पष्टार्थम्। आरम्भसामर्थ्यादेव हि नित्यो विधिर्भविष्यति ॥ १०८ ॥

**ये च ॥** चकारो लोपस्यानुकर्षणार्थः ॥ १०९ ॥

**अत उत्सार्वधातुके ॥ उकारप्रत्ययान्तस्येति।** उकारः प्रत्ययोऽन्तो यस्य स तथोक्तः। उकारप्रत्ययान्तश्च करोतिः सार्वधातुकत्वं न व्यभिचरति, अनेनाभिप्रायेणाह—**सार्वधातुकग्रहणं किमिति? भूतपूर्वेऽपीत्यादि।** असति सार्वधातुकग्रहणे करोतेरुकारप्रत्ययान्तस्य क्ङिति प्रत्यये परत उत्त्वमुच्यमानं यत्र क्ङित् सार्वधातुकं परभूतं तत्रैव स्यात्—कुरुतः, कुर्वन्तीत्यादिषु; कुर्वित्यत्र हेर्लुकि कृते क्ङित्प्रत्ययस्याभावात् 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात्तु न स्यात्। तस्माद् भूतपूर्वेऽपि सार्वधातुके यथा स्यादित्येवमर्थं सार्वधातुकग्रहणम्।

**पदमञ्जरी**

आरम्भसामर्थ्यादेव सिद्धे नित्यग्रहणं विस्पष्टार्थम् ॥ १०८ ॥ १०९ ॥

**अत उत्सार्वधातुके ॥ करोतेरुप्रत्ययान्तस्येति।** 'उतश्च प्रत्ययात्' इत्यनुवृत्तेर्लभ्यते।

**सार्वधातुक इति किमिति।** सत्यपि सार्वधातुकग्रहणे स्यतास्यन्तस्य प्रसङ्गः—करिष्यावः, कर्त्ताराविति; स्यतासिभ्यां व्यवधानान्न भविष्यति। कुरुते—इत्यत्रापि तर्ह्युप्रत्ययेन व्यवधानान्न स्यात्। तस्मात्सार्व-

**भावबोधिनी**

करु+वस्, मस्, "अत उत् सार्वधातुके" सूत्र से अ का उ। प्रस्तुत सूत्र से प्रत्यय उकार का नित्य लोप, स् का रुत्व, विसर्ग। ] दीर्घ-विधि में उकारलोप के स्थानिवद्भाव का प्रतिषेध [ "न पदान्तद्विर्वचन" इत्यादि सूत्र से ] हो जाने के कारण "हलि च" (८।२।७७) से दीर्घ प्राप्त होता है परन्तु "न भकुर्छुराम्" (८।२।७९) सूत्र से निषेध होता है। इस कारण दीर्घ नहीं होता है। ] ॥ १०८ ॥

और यकारादि प्रत्यय परे रहते भी करोति से उत्तरवर्ती उकार प्रत्यय का नित्य लोप होता है। उदा० कुर्यात्, कुर्याताम्, कुर्युः। [ कृ+विधिलिङ्= तिप्, यासुट्, उ विकरण, ऋ का गुण, रपर कर् उ यास् ति, अ का उत्व, ई का लोप, "स्कोः संयोगाद्योः" से स् लोप-कुरु या त्, प्रस्तुत सूत्र से उलोप। दीर्घ का निषेध "न भकुर्छुराम्" से होता है। ] ॥ १०९ ॥

उकारप्रत्ययान्त करोति = कृ धातु के अकार के स्थान में उकार आदेश कित् ङित् सार्वधातुक प्रत्यय परे होता है। उदा० कुरुतः। कुर्वन्ति। [ कृ+उ+तस्, कृ+उ+झि = अन्ति, ऋ का गुण, रपर कर् उ+तस्, कर् उ अन्ति में अकार का उकार होवे पर—कुरुतस्, कुर् उ अन्ति, यण् कुर्वन्ति। ]

**सार्वधातुकग्रहणं किम् ? भूतपूर्वेऽपि सार्वधातुके यथा स्यात्—कुरु ।**
**तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम् ।**
**क्ङितीत्येव—करोति । करोषि । करोमि ॥**

## ३११२. श्नसोरल्लोपः ॥ १११ ॥ (२४६९)

**श्नस्यास्तेश्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । रुन्धः, रुन्धन्ति [रुन्द्धः, रुन्द्धन्ति] । भिन्तः, भिन्दन्ति । अस्तेः—स्तः, सन्ति ।**

**न्यासः**

अथ तपरकरणं किमर्थम्, यावता यद्यपि भाव्यमान उकारः सवर्णानां ग्राहको भवति, तथाप्यान्तरतम्यान्मात्रिकस्य स्थाने मात्रिक एव भविष्यति ? इत्यत आह—**तपरकरणमित्यादि** । असति हि तपरकरण उकारप्रत्ययमाश्रित्य 'सार्वधातुकार्धधातुकयोः' इति गुणे कृते रपरत्वे च यदुत्वं तस्योकारस्य 'पुगन्तलघूपधस्य च' इति गुणः स्यात् । तस्मात् तपरकरणं क्रियते—ह्रस्वस्यैव श्रवणं यथा स्यात्, लक्षणान्तरेण यो दीर्घः प्राप्नोति स मा भूदिति ॥ ११० ॥

**श्नसोरल्लोपः ॥ रुन्ध इति** । 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः । **स्त इति** । अदादित्वाच्छपो लुक् ।

**पदमञ्जरी**

धातुके परतः करोतेरङ्गस्येत्यर्थासम्भवात्सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् । एवं च स्यतास्यन्तस्यापि प्रसङ्ग इति । 'उतश्च प्रत्ययात्' इत्यवश्यमनुवर्त्यम्, उप्रत्ययान्तात्करोतेः परं क्ङित्सार्वधातुकमेवेति प्रश्नः । **भूतपूर्वेऽपीति** । कुरु+हि इति स्थिते उत्वं च प्राप्नोति, हिलुक्च, नित्यत्वाद्धिलुकि कृते क्ङितः परस्याभावादुत्वं न स्यात् । प्रत्ययलक्षणं च 'न लुमताङ्गस्य' इति प्रतिषिद्धम् । तस्माद् भूतपूर्वेऽपि सार्वधातुके यथा स्यादिति सार्वधातुकग्रहणम् । असिद्धो हिलुक्, तस्यासिद्धत्वादुत्वं भविष्यति । तस्माद्विस्पष्टार्थं सार्वधातुकग्रहणम् । यथा पुनरस्योत्तरत्राप्युपयोगाभावः, तथा तत्र तत्र वक्ष्यते ।

इह यद्यपि भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति, तथाप्यान्तर्यतो मात्रिकस्यातो मात्रिक उकार एव भविष्यति, नार्थस्तकारेण ? तत्राह—**तपरकरणमिति** । असति हि तस्मिन्नुप्रत्ययमाश्रित्योकारस्य लघूपधलक्षणो गुणः स्यात्, स मा भूदिति तपरकरणम् । तस्य हि प्रयोजनम्—लक्षणान्तरेणापि दीर्घो मा भूत् ॥ ११० ॥

**श्नसोरल्लोपः** ॥ तपरकरणं किम् ? आटो मा भूत्—आस्ताम्, आसन्, असिद्ध आट् । एवं तर्ह्याभीयस्यासिद्धत्वमनित्यमिति ज्ञापनार्थं तपरकरणम् । अथात्र सार्वधातुकाधिकारस्योपयोगः ? नेत्याह । श्नः सार्व-

**भावबोधिनी**

सार्वधातुकग्रहण किस लिए है ? भूतपूर्व सार्वधातुक के परे रहते भी जिस प्रकार से हो सके—कुरु । [ कुरु+हि यहाँ उत्व और हिलोप दोनों प्राप्त हैं, नित्य होने के कारण हि का लुक् ही होता है । अब कित् ङित् प्रत्यय परे न होने से उत्व नहीं हो सकता है । इसी लिए पहले किये गये सार्वधातुकत्व को मान कर भी यह उत्व हो सके—इसके लिए 'सार्वधातुके' का ग्रहण है । ]

तपरकरण लघूपध का गुण रोकने के लिये है । [ तपर न करने पर 'सार्वधातुकार्धधातुकयोः' सूत्र से उकार का गुण हो सकता था । किन्तु तपरकरण का यही फल है कि उ ही रहे, अन्य कोई आदेश न हो सके ।]

कित् ङित् परे ही—करोति । करोषि । करोमि । [ तिप्, सिप्, मिप्—में पित् होने से सार्वधातुक के साथ-साथ ङित् भी नहीं है । अतः अ का उत्व नहीं होता है । ] ॥ ११० ॥

श्नम् विकरण के तथा अस् धातु के अकार का लोप कित् ङित् सार्वधातुक परे रहते होता है । उदा० रुन्द्धः । रुद्धन्ति । भिन्तः । भिन्दन्ति । [ रुधिर् = रुध् + लट = तस्, रुधादिभ्यः श्नम्' से श्नम् = न विकरण, मित् होने से

**विङतीत्येव—भिनत्ति । अस्ति ।**

**'श्नसोः' इत्याकारस्य पररूपत्वं शकन्ध्वादिषु द्रष्टव्यम् ॥**

### ३११३. श्नाभ्यस्तयोरातः ॥ ११२ ॥ (२४८३)

**'श्ना' इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । लुनते ।**

**न्यासः**

अथ श्नसोरिति कोऽयं निर्देशः, यावता 'अकः सवर्णे दीर्घः' इति दीर्घत्वे कृते 'श्नासोः' इति निर्देशेन भवितव्यम् ? इत्याह—**श्नसोरित्याकारस्य पररूपत्वमित्यादि ।**

अथ तपरकरणं किमर्थम् आस्तामासन्नित्यत्राडागमस्य मा भूदिति चेत् ? नैतदस्ति; इह हि लङि कृते लावस्थायामाडागमात् पूर्वमन्तरङ्गत्वाल्लादेशः क्रियते । तत्र कृते विकरणः कृताकृतप्रसङ्गित्वादाडागमं बाधते । आडागमस्य त्वशब्दान्तरप्राप्तेरनित्यत्वम् । तथा हि—कृते विकरणे विकरणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते धातुमात्रस्य । कृते विकरणे यद्यप्याडागमाकारलोपयोर्द्वयोरपि कृताकृतप्रसङ्गित्वेन नित्यत्वम्, तथापि परत्वादकारलोपः क्रियते, तस्मिन् कृते तस्यासिद्धत्वादाट्, तस्यासिद्धत्वादेव च लोपो न भविष्यतीति किं तपरकरणेन ? एवं तर्ह्येतज् ज्ञापयति—आभाच्छास्त्रीयमसिद्धत्वमनित्यमिति । तेन 'वुग्युटावुवङ्यणोः सिद्धौ भवतः' इत्येतद् वक्तव्यं न वक्तव्यं भवति ॥ १११ ॥

**श्नाभ्यस्तयोरातः ॥ लुनत इति ।** 'आत्मनेपदेष्वनतः' इत्यदादेशः । **लुनतामिति ।** लोट् 'आमेतः' । **अलुनतेति ।** लङ् । **मिमत इति ।** 'मङ् माने' । अभ्यासस्य 'भृञामित्' इतीत्वम् । एवं **सञ्जिहत** इत्यत्रापि 'ओहाङ् गतौ' इत्यस्य । **बिभ्रतीति ।** पूर्ववदित्त्वम् । **अलुनादिति ।** ननु चासति क्ङितीत्यस्मिन्नीत्वेनात्र भवितव्यम्, तत् कुतो लोपस्य प्रसङ्गः ? नैतदस्ति; ईत्वमपि हि क्ङित्येवेष्यते । इह चोत्तरसूत्रे क्ङितीत्यनुवर्त्यम्, तत्र यदि क्ङितीति नानुवर्त्तते तदा स्यादेव लोपः ।

**पदमञ्जरी**

धातुक एव, अस्तेरप्यार्द्धधातुके भूभावेन भाव्यम् । नन्वनुप्रयोगे भूभावो नास्ति—ईहामासुः । सत्यम्; तत्र द्विर्वचने हलादिशेषे च कृते 'येन नाप्राप्तिन्या येन' (व्या० प० ४९) 'अतोगुणे' इति पररूपं बाधित्वा 'अत आदेः' इति दीर्घत्वे कृते परस्याकारस्य सत्यपि लोपे सिद्धमिष्टम् ॥ १११ ॥

**श्नाभ्यस्तयोरातः ॥ लुनत इति ।** लट्, 'आत्मनेपदेष्वनतः' इति झस्यादादेशः । **लुनतामिति ।** लोटि **'आमेतः' । अलुनतेति ।** लङ् । **मिमते** इत्यादौ 'भृञामित्' इतीत्वम् ।

**भावबोधिनी**

अच् के बाद श्नघ् + तस्, "झषस्तथोर्धोऽधः" सूत्र से त् का ध्, प्रस्तुत सूत्र से 'न' के अ का लोप—श्न् घ् घस् पूर्व धकार का जश्त्व से दकार, वैकल्पिक लोप, स् का रुत्व, विसर्ग ।' इसी प्रकार भिदिर् = भिद् + तस् श्नम् = न विकरण अलोप आदि होनेपर रूप बनता है । ] अस् के उदा० स्तः । सन्ति । [ अस् + लट् = तस्, झि = अन्ति, धातु के अकार का लोप कर देनेपर 'स्' बचने से स्तः, स् अन्ति = सन्ति रूप होते हैं । ]

कित् ङित् परे ही लोप होता है—भिनत्ति । अस्ति । [ तिप् परे लोप नहीं होवे से अकार सुनाई देता है । ] 'श्नसोः' इसके [ श्न + असोः के ] अकार का पररूप शकन्ध्वादि में देखना चाहिए । [ अतः अकार का पररूप हो जाने के कारण सवर्ण दीर्घ नहीं सुनाई देता है । ] ॥ १११ ॥

'श्ना' इसके तथा अभ्यस्तसंज्ञक अङ्गों के आकार का लोप कित् ङित् सार्वधातुक प्रत्यय परे होता है । उदा० लुनते । लुनताम् । अलुनत । [ लूञ् का ह्रस्व, लट् = झ, श्ना = ना विकरण लु ना + झ "आत्मनेपदेष्वतः" सूत्र से झ् का अत् आदेश लु ना + अत, श्ना = ना के आ का लोप—लु न् अत, 'टित आत्मनेपदानां टेरे' से अ का ए लुनते । लोट् में ए का आम्—लुनताम् । लङ् में अट् आगम होने पर अलुनत ]

**लुनताम् । अलुनत[1] । अभ्यस्तानाम्—मिमते । मिमताम् । अमिमत । सञ्जिहते । सञ्जिहताम् । समजिहत ।**

**श्नाभ्यस्तयोरिति किम् ? यान्ति । वान्ति । आत इति किम् ? बिभ्रति ।**

**ङितीत्येव—अलुनात् । अजहात् । आद्ग्रहणं स्पष्टार्थम् ॥**

**३११४. ई हल्यघोः ॥ ११३ ॥ (२४९७)**

**श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति**

**न्यासः**

नन्वाद्ग्रहणं किमर्थम्, 'श्नाभ्यस्तयोरतः' इत्येवोच्येत, एवं ह्येकमात्रया लघु भवति ? इत्यत आह—**आद्ग्रहणं स्पष्टार्थम् ।** जागर्त्तेः 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायामपि ऋकारलोपो न भवति—जाग्रतीति । एतच्च श्नेत्यकारान्तेन साहचर्यादभ्यस्तस्याकारान्तस्यैव ग्रहणाल्लभ्यते ॥ ११२ ॥

**ई हल्यघोः ॥ लुनीतः, पुनीतः; लुनीथः, पुनीथ इति ।** तस्थसौ । **मिमीत इति ।** आत्मनेपदैकवचनम् । **मिमीष इति ।** 'थासः से' । **मिमीध्वमिति ।** ध्वम् । **लुनन्ति, पुनन्तीति ।** झिप्रत्ययः ।

**पदमञ्जरी**

**यान्ति, वान्तीति ।** असति हि श्नाभ्यस्तग्रहणे 'अतो गुणे' इत्यत्र तपरकरणस्य यानमित्यादावक्ङिति चरितार्थत्वादिह लोप एव स्यादिति भावः ।

**अलुनादिति ।** उत्तरसूत्रे क्ङितीत्यस्य सम्बन्धः स्थित एवेति नायमीत्वस्य विषयः । इहाकारेणाभ्यस्तविशेषणादाकारान्तस्य लोपो जाग्रतीत्यत्र न भवति । तत्र 'निर्दिश्यमानस्यादेशाः' (व्या० प० १०६) इति वा 'अलोऽन्त्यस्य' इति वा आकारस्यैव लोप इत्यादि मत्वा व्याख्यातम्—**श्न इत्येतस्याभ्यस्तानां चाकारस्येति । आकारान्तानाम्** इति तु व्याख्येयम् । अत्रापि आ सार्वधातुक एव सम्भवति । एवमभ्यस्तमप्याकारान्तम् । ववतुरित्यादौ भवत्येव लोपः ॥ ११२ ॥

**भावबोधिनी**

अभ्यस्तों के उदा० मिमते । मिमताम् । अमिमत । [ माङ् माने जुहोत्यादिगणीय से लट्, शप् का श्लु द्वित्व, अभ्यास का ह्रस्व म मा + झ = अत, "भृञामित्" से अभ्यास अ का इत्व मि मा + अत, आ का लोप, टि का एत्व—मिमते । लोट् में ए का आम्—मिमताम् । लङ् में अट् आगम—अमिमत ] सञ्जिहते । सञ्जिहताम् । समजिहत । [ सम् पूर्वक ओहाङ् गतौ' हा + लट् शप्, श्लु द्वित्व, अभ्यासकार्य, इत्व सम् + जि हा + अत, आलोप, टि एत्व, म् का अनुस्वार परसवर्ण—सञ्जिहते । और रूप पूर्वोक्त रीति से समझना चाहिए । ]

श्ना तथा अभ्यस्तों का—इसका क्या फल है ? यान्ति । वान्ति । [ यहाँ आ का लोप नहीं होता है । ] आकार का लोप—इसका क्या फल है ? बिभ्रति । [ भृ + लट् = झ; शप्, श्लु द्वित्व, अभ्यासकार्य, अभ्यास का इत्व बि भृ + अति । आ न होने से लोप न होकर यण् होता है—बिभ्रति । ] कित् तथा ङित् परे ही—अलुनात् । अजहात् । [ यहाँ लङ् में तिप् परे लोप नहीं होता हैं क्योंकि तिप् होने से मित् ङित् नहीं है । ]

आद् का ग्रहण स्पष्टतार्थ है । [अर्थात् अलोप कहने से भी कार्य निर्वाह सम्भव था । ] ॥ ११२ ॥

श्नान्त अङ्गों के और अभ्यस्तसंज्ञकों के, घुसंज्ञकों को छोड़कर, आकार का ईकार आदेश हलादि कित् ङित् सार्वधातुक प्रत्यय परे रहते होता है । उदा० लुनीतः । पुनीतः । लुनीथः । पुनीथः । लुनीते । पुनीते । [ सभी में श्ना के आ का ई होता है । ] अभ्यस्तों के उदा० मिमीते । मिमीषे । मिमीध्वे । [ मा + लट् = त, शप्, श्लु, द्वित्व अभ्यास कार्य, अभ्यास अ का इत्व—मिमा + त, आ का ई, टि का एत्व—मि मी ते । इसी प्रकार अन्य रूपों में भी ईत्व होता है । ] सञ्जिहीते । सञ्जिहीषे । सञ्जिहीध्वे । [ सम्पूर्वक ओहाङ्गतौ का रूप है । आ का ईत्व होता है । ]

---

१. लुनतः । 'पुनते, पुनताम्, अपुनत'—इत्यधिकं पुस्तकान्तरे ।

परतः। लुनीतः, पुनीतः। लुनीथः, पुनीथः। लुनीते, पुनीते। अभ्यस्तानाम्—मिमीते। मिमीषे। मिमीध्वे। सञ्जिहीते। सञ्जिहीषे। सञ्जिहीध्वे।

हलीति किम्? लुनन्ति। मिमते। अघोरिति किम्? दत्तः। धत्तः।

क्ङितीत्येव—लुनाति। जहाति॥

**३११५. इद्दरिद्रस्य ॥ ११४ ॥ (२४८२)**

**दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति। दरिद्रितः। दरिद्रिथः। दरिद्रिवः। दरिद्रिमः।**

**हलीत्येव—दरिद्रति। क्ङितीत्येव—दरिद्राति।**

**न्यासः**

ननु च यद्यप्यजादावपीत्वं स्यात्, लोपोऽनवकाशः स्यात्, अतोऽनवकाशत्वाल्लोप ईत्वं बाधिष्यते, तत् किं हलीत्यनेन? नैतदस्ति; असति हल्ग्रहणे वचनादुभयं स्यात्। घुसंज्ञकेष्वाल्लोपः प्रसज्येत। तस्माद्धलीति वक्तव्यम्। **दत्त इति।** 'खरि च' इति चर्त्वम्। **धत्त इति।** धाञो द्विर्वचने कृते 'अभ्यासे चर्च्च' इत्यभ्यासस्य जश्त्वे च 'दधस्तथोश्च' इति भष्भावेन दकारस्य धकारः, धातोस्त्वाकारलोपे कृते जश्त्वचर्त्वे॥ ११३॥

**इद् दरिद्रस्य ॥ दरिद्रतीति।** 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, तेनाभ्यस्तलक्षण आकारलोपो भवति।

**वक्तव्य इति** व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'श्नसोरल्लोपः' इत्यतो मण्डूकप्लुतिन्यायेन लोपग्रहणमनुवर्त्त्य—सार्वधातुके, हलि, क्ङितीत्येतान् विशेषान् निवर्त्त्य दरिद्रातेः सामान्येनेत्त्वलोपौ विधातव्यौ। न चैवं सति तौ सङ्करेण प्रसजतः, यस्माद् वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोर्योगयोः शेषभूतम्। सा च व्यवस्थितविभाषा। तेन यत्रैवेष्यते यत् तत् तत्रैव भविष्यति, नान्यत्रेति।

**पदमञ्जरी**

**ई हल्यघोः ॥ लुनन्तीति।** असति हल्ग्रहणे ईत्वलोपयोः पर्यायः स्यात्; एकविषयत्वात्। घुसंज्ञकेष्वेव वा लोपः स्यात्। अत्रापि पूर्ववत् सार्वधातुकमेव सम्भवति॥ ११३॥

**इद्दरिद्रस्य ॥** इदमपि सार्वधातुक एव; अन्यत्र लोपविधानात्। **सिद्धश्चेति।** यथा प्रत्ययविधौ प्रत्ययविधानकाल एव सिद्धो भवति, तथा लोपः कर्त्तव्यः, 'आर्धधातुके' इति विषयसप्तम्याश्रयणीयेति भावः।

**आकारान्तलक्षण इति।** 'आर्धधातुके' इति परसप्तम्यां तस्योत्पत्तिं प्रतीक्ष्य लोपः कर्त्तव्यः, ततश्च 'स्याद्व्यध' इत्याकारान्तलक्षणो णप्रत्ययः स्यात्, तत्र कृतेऽनेन लोपश्च प्राप्नोति युक्च, तत्र लोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वम्; युकस्तु लोपे कृतेऽप्राप्तिः, ततश्च उभयोरप्यनित्ययोः परत्वाद्युक् स्यात्। अथापि लोपः स्यात्, एवमपि अदरिद्र इत्यत्र 'अच्कावशक्तौ' इत्येष स्वरो न स्यात्। ईषद्दरिद्रमित्यत्र च 'आतो युच्' इति युच् स्यात्।

**दरिद्रायक इति।** ण्वुलि, युक्। **दरिद्राण इति।** ल्युट्। **दिदरिद्रासतीति।** 'तनिपतिदरिद्राणामुपसंख्यानम्' (का० वा० ५०५०) इति व्यवस्थितविभाषा, तेन लोपपक्षे इट्। अन्यत्रेडभावः।

**भावबोधिनी**

हलादिपरे—इसका क्या फल है? लुनन्ति। मिमते। [ झि तथा झ का अन्ति तथा अते होने से हलादि परे नहीं मिलता है। ई नहीं होता है। ]

घुसंज्ञकों को छोड़कर इसका क्या फल है? दत्तः। धत्तः [ डुदाञ् डुधाञ् की घुसंज्ञा होती है। ] कित् ङित् परे रहते—इसका क्या फल है? लुनाति। पुनाति। [ तिप् परे रूप हैं। अतः कित्, ङित् न होने से ईत्व नहीं होता है। ] ॥ ११३ ॥

हलादि कित् ङित् सार्वधातुक परे रहते 'दरिद्रा' धातु से आकार का इकार होता है। उदा० दरिद्रितः। दरिद्रिथः। दरिद्रिवः। दरिद्रिमः। [दरिद्रा + लट् = तस्, शप् का अदादि होने से लुक् आ का इ आदेश—दरिद्रि + तस्, स् का रुत्व विसर्ग। इसीप्रकार थस्, वस्, मस् परे भी होता है। ]

❀ **दरिद्रातेरार्धधातुके लोपो वक्तव्यः** ❀ **(का० वा० १)।**

❀ **सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम्** ❀ **(का० वा० २)। दरिद्रातीति दरिद्रः। आकारान्तलक्षणो णप्रत्ययो न भवति, पचादित्वादजेव भवति।**

**न दरिद्रायके लोपो दरिद्राणे च नेष्यते।**

**दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा॥ (म० भा०)**

**न्यासः**

**सिद्धश्च प्रत्ययविधाविति**। तथासौ कर्त्तव्यो यथा प्रत्ययविधौ=प्रत्ययविधानकाले सिद्धः = निष्पन्नो भवति। एतदुक्तं भवति—आर्धधातुके प्रत्यये विषयभूतेऽनुत्पन्ने एव लोपः कर्त्तव्य इति। एवं ह्यसौ प्रत्ययविधौ सिद्धो भवति, नान्यथा। 'सिद्धश्च प्रत्ययविधौ' इत्यस्योपादाने यत् फलं तद्—**आकारान्तलक्षण** इत्यादिना दर्शयति। यद्यार्धधातुक उत्पन्ने सति लोपः क्रियते, तदा 'श्याद्व्यधास्रु' इति सूत्रेण णप्रत्ययः स्यात्; दरिद्रातेराकारान्तत्वात्। ततश्च 'आतो युक् चिण्कृतोः' इति युकि कृते, दरिद्राय—इत्यनिष्टं रूपं स्यात्। 'सिद्धश्च प्रत्ययविधौ' इत्युच्यमाने तु प्रागेव प्रत्ययोत्पत्तेर्लोपः, तस्मिन् सत्यनकारान्तत्वात् पचाद्यजेव भवति। तेन दरिद्रः—इतीष्टं सिद्धं भवति।

**न दरिद्रायके लोप इत्यादिना** श्लोकेन यत्रार्द्धधातुके लोपो नेष्यते यत्र विकल्पेन चेष्यते कैश्चित्, तद्दर्शयति। दरिद्रायक इत्यत्र ण्वुलन्ते शब्दे सिसाधयिषिते लोपो नेष्यते। दरिद्रातीति दरिद्रायक इति। पूर्ववद् युक्। **दरिद्राण इति**। अत्रापि ल्युडन्ते लोपो नेष्यते। **दिदरिद्रासतीत्येक इति**। सनि कृते द्विर्वचनम्, अभ्यासकार्यम्। **दिदरिद्रिषतीति वेति**। 'सनीवन्तर्ध' इत्यत्र 'तनिपतिदरिद्राणाम्' इत्युपसंख्यानाद्विकल्पेनेट्।

**पदमञ्जरी**

**अद्यतन्यामिति**। लुङ एषा पूर्वाचार्यसंज्ञा। **अदरिद्रासीदिति**। 'यमरमनमातां सक्च' इति। 'एकाचः'

**भावबोधिनी**

हलादि परे ही होता है—दरिद्रति। [ दरिद्रा+झि = अति में नहीं होता है क्योंकि हलादि परे नहीं है।]

कित् ङित् परे ही होता है—दरिद्राति। [ तिप् परे होवे से पित् है, कित्, ङित् नहीं है अतः आ का लोप नहीं होता है।]

❀ आर्धधातुक परे रहते 'दरिद्रा' धातु के आकार का लोप कहना चाहिए। ❀ ❀ और प्रत्यय की विधि में आलोप सिद्ध ही रहता है, ऐसा कहना चाहिए। ❀ उदा० दरिद्राति इस अर्थ में दरिद्रः होता है। इसमें [ "श्याद् व्यधास्रु संस्रवतीणवसा०" (३।१।१४१) सूत्र से ] आकारान्त मानकर 'ण' प्रत्यय नहीं होता है, पचादि होने से [ "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" सूत्र से ] अच् ही होता है। [ यदि आलोप न होता अथवा होने पर भी असिद्ध मान लिया जाता तो उक्त सूत्र से आकारान्त मानकर 'ण' प्रत्यय करने पर "आतो युक् चिण् कृतोः" सूत्र से युक् आगम भी होवे लगता जिससे 'दरिद्रायः' ऐसा अनिष्ट रूप बन जाता। इसलिये आलोप सिद्ध मानना आवश्यक है।]

[ लोप की व्यवस्था के लिये महाभाष्य में प्रस्तुत श्लोक काशिकाकार ने भी लिखा है— ]

'दरिद्रायकः' इसमें लोप नहीं होता है। [ दरिद्रा+ण्वुल् = अक, आकारान्त मानकर युक् = य् आगम दरिद्रा य् अक ] 'दारिद्राणः' इसमें भी लोप इष्ट नहीं है। [ दरिद्रा+ल्युट् = अन, णत्व ] कुछ लोग दिदरिद्रासति दिदरिद्रिषति—इसमें विकल्प से लोप कहते हैं। [ दरिद्रा + सन् द्वित्व आदि करने के बाद वैकल्पिक लोपपक्ष में "तनिपतिदरिद्राणां वा" को व्यवस्थित विभाषा मानकर इट् आगम होता है दिदरिद्र् इ + स, षत्व—दिदरिद्रिषति। आलोप न होवे पर इट् भी नहीं होता है—दिदरिद्रासति ]

**❀ अद्यतन्यां वेति वक्तव्यम् ❀ (का० वा० ३)। अदरिद्रीत्, अदरिद्रासीत्। 'दरिद्रस्य' इति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम् ॥**

## ३११९. भियोऽन्यतरस्याम् ॥ ११५ ॥ (२४९२)

**'भी' इत्येतस्याङ्गस्यान्तरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः। बिभितः, बिभीतः। बिभिथः, बिभीथः। बिभिवः, बिभीवः। बिभिमः, बिभीमः।**

**न्यासः**

**अद्यतन्यामिति।** लुङीत्यर्थः। लुङोऽद्यतनीति पूर्वाचार्यसंज्ञा। **अदरिद्रासीदिति।** 'यमरमनमातां सक्च' इति सगिटौ, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः। ननु च 'आतो धातोः' इत्याकारलोपे कृते दरिद्र इति निर्देशेन भवितव्यम्, तत् कथं दरिद्रस्येति निर्देश इत्याह—**दरिद्रस्येति निर्देश इत्यादि।** 'छन्दोवत् सूत्राणि भवन्ति' इत्यतः 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति बहुलवचनाच्छान्दसमिह ह्रस्वत्वम्।

तपरकरणं विस्पष्टार्थम्। भाव्यमानतया सवर्णाग्रहणादेव दीर्घो न भविष्यति ॥ ११४ ॥

**भियोऽन्यतरस्याम् ॥ हलादौ सार्वधातुके क्ङिति परत इति।** यद्यप्येते विशेषाः पूर्वस्मिन्निवर्त्तिताः, तथापीह मण्डूकप्लुतिन्यायेनानुवर्त्तन्त इत्यभिप्रायः। **बिभीत इति।** 'ञिभी भये', जुहोत्यादित्वाच्छपः श्लुः।

**पदमञ्जरी**

इति तत्रानुवर्त्तत इत्येकीयं मतम्। चिणि—अदरिद्रि, अदरिद्रायि। णलि—ददरिद्रौ[1]। **छान्दसं ह्रस्वत्वमिति।** अन्यथा 'आतो धातोः' इति लोपे दरिद्र इति निर्देशः स्यात् ॥ ११४ ॥

**भियोऽन्यतरस्याम् ॥ हलादौ क्ङिति सार्वधातुक इति।** नैतेषामत्रोपयोगः, तथा च प्रत्युदाहरणं न प्रदर्शितम्। तथा हि—अजादावप्यस्तु बिभ्यतीति, 'एरनेकाचः इति ह्रस्वस्यापि यण् भविष्यति। न चेत्वविधेर्वैयर्थ्यम्; हलादौ चरितार्थत्वात्। तथा बिभेतीति अक्ङित्यपि भवतु, गुणो भविष्यति। इत्वविधिश्च क्ङिति

**भावबोधिनी**

❀ अद्यतनी = लुङ् में लोप विकल्प से कहना चाहिए। ❀ उदा० अदरिद्रीत्, अदरिद्रासीत्। [ लोपाभाव पक्ष में अदरिद्रा + सिच् + ति, "यमरमनमातां सक् च" सूत्र से सक् और इट् का आगम, ति प्रत्यय के इलोप के बाद "अस्तिसिचोऽपृक्ते" से ईट् आगम अदरिद्रा स् इ स् ई त्। "इट ईटि" से सिच् लोप, इकारद्वय का सवर्णदीर्घ—अदरिद्रासीत्। आलोप पक्ष में अदरिद्र् ईत् ]।

[ सूत्रस्थ 'दरिद्रस्य' यह कैसे बनेगा क्योंकि 'आतो धातोः' से आलोप कर देने पर 'दरिद्र्' से षष्ठी में 'दरिद्रः' बनेगा ? ] 'दरिद्रस्य' इस निर्देश में छान्दस ह्रस्व समझना चाहिए। [ 'छन्दोवत् सूत्राणि भवन्ति' के अनुसार इसमें बहुल के बल से ह्रस्व समझना चाहिए। ] ॥ ११४ ॥

'भी' इस अङ्ग का हलादि कित् ङित् सार्वधातुक प्रत्यय परे रहते विकल्प से इकार आदेश होता है। उदा० बिभितः, बिभीतः। बिभिथः, बिभीथः। बिभिवः, बिभीवः। बिभिमः, बिभीमः। [ भी + तस् शप् का श्लु, 'श्लौ' सूत्र सूत्र से द्वित्व तथा अभ्यास कार्य करने पर बि भी + तस् में प्रस्तुत सूत्र से ई का इ विकल्प से होता है—बिभितः। पक्ष में बिभीथः। इसी प्रकार थस्, वस्, मस् में भी दो दो रूप होते हैं। ]

हलादि परे ही—बिभ्यति। [ भी + झि, शप्, श्लु द्वित्वादि कार्य के बाद झ् का अत् बिभी + अति में हलादि परे न होने से यण् होता है, ह्रस्व विकल्प नहीं। ] कित् ङित् परे ही—बिभेति। [ भी + तिप्, शप् का श्लु आदि होने पर कित् ङित् परे न होने से 'इ' कार आदेश न होने से गुण होता है—बिभेति। ] सार्वधातुक परे ही—

---

१. "आत औ णलः' इत्यत्रौकारेणैव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थमिति निर्णीतत्वात्" इति पाठा०।

हलादावित्येव[1]—बिभ्यति । क्ङितीत्येव—बिभेति । सार्वधातुक इत्येव—भीयते[1] ॥

**३११७. जहातेश्च ॥ ११६ ॥ (२४९८)**

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः । जहितः, जहीतः । जहिथः, जहीथः ।

हलादावित्येव—जहति । क्ङितीत्येव—जहाति । सार्वधातुक इत्येव[2]—हीयते । जेहीयते[2] । पृथग्योगकरणमुत्तरार्थम् ॥

**न्यासः**

**हलादावित्येव—बिभ्यतीति ।** इत्वविधानसामर्थ्यादेव 'एरनेकाचः' इति यणादेशो न स्यात् । सार्वधातुक इत्येव—भीतः, भीतवान् । क्ङितीति किम् ? बिभेति ॥ ११५ ॥

**जहातेश्च ॥** ईत्वापवाद इत्वमारभ्यते; अन्यतरस्यांग्रहणानुवृत्तेः । पक्षे तदपि भवत्येव । सार्वधातुक इत्येव—हीनः, हीनवान् । इह केचित् 'सार्वधातुके' इत्यस्यानुवृत्तिं प्रत्याचक्षते । कथम् ? 'हलि परत ईत्वेत्वे प्राप्नुतः, द्विर्वचनञ्च; तत्र यदि परत्वादीत्वेत्वे स्यातां ततश्चेवर्णान्तताभ्यासस्य स्यात्; तस्मादभ्यस्तग्रहणमनुवर्त्तनीयम्, तस्मिंश्चानुवर्त्तमाने सार्वधातुकानुवृत्तिरपार्थिका' इति, एतच्चायुक्तम्; अन्तरङ्गत्वाद् । द्विर्वचनेनैव प्रागीत्वेत्वाभ्यां भवितव्यम्, तत् कुतोऽभ्यासस्येवर्णान्तताप्रसङ्ग ? अन्तरङ्गत्वं तु द्विर्वचनस्याल्पापेक्षत्वात् । तद्धि श्लुमात्रमपेक्षते । इत्वेत्वयोश्च बह्वपेक्षत्वाद् बहिरङ्गता, बह्वपेक्षा च; तयोः पुनरङ्गस्य हलादौ क्ङिति सार्वधातुके विधानात् । जहातेरिति निर्देशाज्जिहीत इत्यत्र जिहातेर्न भवति ।

**पृथग्योगकरणमुत्तरार्थमिति ।** 'आ च हौ' इत्येष विधिर्जहातेरेव यथा स्यात्, बिभेतेर्मा भूदिति ॥ ११६ ॥

**पदमञ्जरी**

चरितार्थः । तथा 'अभ्यस्तस्य' इत्यनुवृत्तेर्भीत इत्यादावार्धधातुके न भविष्यति । क्वसावपि तर्हि प्राप्नोति ? छान्दसः क्वसुः, 'दृष्टानुविधिश्छन्दसि' (व्या० प० ६८) ॥ ११५ ॥

**जहातेश्च ॥** अत्रापि न 'सार्वधातुके' इत्यस्योपयोगः, अत एवास्य प्रत्युदाहरणं न प्रदर्शितम् । 'अभ्यस्तस्य' इत्यनुवृत्तेरार्धधातुके न भविष्यति, लिडजादिः ॥ ११६ ॥

**भावबोधिनी**

भीयते । [ कर्म अर्थ में भी + यक् + ते आर्धधातुक परे इकार आदेश नहीं होता है । कहीं-कहीं 'बेभीयते' भी पठित है । ] ॥ ११५ ॥

हलादि कित् ङित् सार्वधातुक परे रहते 'जहाति' धातु का इकार आदेश विकल्प से होता है । उदा० जहितः, जहीतः । जहिथः, जहीथः । [ ओ हाक् त्यागे धातु से लट्—तस, थस्, शप्, श्लु, द्वित्वादि के बाद विकल्प से इकार आदेश—जहितः । पक्ष में "ई हल्यघोः" सूत्र से ईकार आदेश—जहीतः । ]

हलादि परे ही—जहति । [जहा + झि = अति में आ का इ नहीं लोप होता है ।] कित् ङित् परे ही—जहाति । [ तिप् परे होने से पित् है । ] सार्वधातुक परे ही—हीयते । जेहीयते । [ यहाँ यक् यङ् आर्धधातुक परे होने से इकार आदेश नहीं होता है । ]

पृथक् सूत्र बनाना आगे सूत्र में अनुवृत्ति के लिए है ॥ ११६ ॥

---

१–१. पाठोऽयं बहुषु पुस्तकेषु नास्ति । २–२. पाठोऽयं बहुत्र नास्ति ।

**३११८. आ च हौ ॥ ११७ ॥ (२४९९)**

जहातेराकारश्चान्तादेशो भवति इकारश्चान्यतरस्यां हौ परतः । जहाहि, जहिहि, जहीहि ॥

**३११९. लोपो यि ॥ ११८ ॥ (२५००)**

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः । जह्यात्, जह्याताम्, जह्युः ॥

**३१२०. घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥ (२४७१)**

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतोऽभ्यासलोपश्च । देहि । धेहि । अस्तेः—

**न्यासः**

आ च हौ ॥ चकार इत्वान्यतरस्यांग्रहणयोरनुकर्षणार्थः ॥ ११७ ॥

लोपो यि ॥ ११८ ॥

**घ्वसोरेद्धावभ्यासलोपश्च ॥ अभ्यासलोपश्चेति** घुसंज्ञकार्थमभ्यासलोपग्रहणम्, न त्वस्त्यर्थम्; अस्तेरभ्यासस्यासम्भवात् । **देहि, धेहीति** । दाञ्धाञोरेते रूपे । अन्येषां तु घुसंज्ञकानामुदाहरणं न सम्भवति; विकरणेन हेर्व्यवधानात् । असम्भवाच्च यथायोगम् । तत्र 'दो' इत्येतस्य श्यना हिशब्दो व्यवधीयते, दाणो धेटस्तु शपा, देङः पुनरात्मनेपदित्वाद् हेरसम्भवः । **एधीति** । सकारस्यैत्वे कृते तस्यासिद्धत्वाद् **'हुझल्भ्यो हेर्धिः'** इति धिभावः । ननु च 'अलोऽन्त्यस्य' इत्यलामन्त्यस्य लोपेन भवितव्यम्, तत् कथं सर्वस्याभ्यासस्य लोपो भवति ? इत्यत आह—**शिदयमित्यादि** । 'लोपश्च' इत्यत्र द्वौ शकारौ निर्दिष्टौ । तत्रैको लोपस्य सम्बन्धी, द्वितीयस्तु विभक्तेः । यश्च लोपस्य सम्बन्धी तस्येत्संज्ञा प्रतिज्ञायत इति शिदयं लोपो भवति । तेन सर्वस्याभ्यासस्य लोपो भवति । 'आ च हौ' इत्यतो हौग्रहणं मण्डूकप्लुतिन्यायेन शक्यतेऽनुवर्त्तयितुम् । तत् त्वन्यतरस्यां-

**पदमञ्जरी**

आ च हौ ॥ सार्वधातुकमेव हि ॥ ११७ ॥

**लोपो यि ॥** 'अभ्यस्तस्य' इत्यनुवृत्तेर्यकि न भविष्यति । यद्यपि यकारेण सह द्विर्वचनान्न जहातिरभ्यस्तम् ॥ ११८ ॥

**घ्वसोरेद्धावभ्यासलोपश्च ॥ देहि, धेहीति** । दाञ्धाञो रूपे । दोदाण्धेटां तु विकरणेन हिर्व्यवहितः । देङात्मनेपदी । **शिदयमिति** । न सूत्रे श्रूयमाणश्शकारो विभक्तिसकारस्य श्चुत्वेनागतः, किं तर्हि ? औत्पत्तिको

**भावबोधिनी**

'हि' प्रत्यय परे रहते 'जहाति' का आकार अन्तादेश और इकार आदेश विकल्प से होता है । उदा० जहाहि, जहिहि, जहीहि । [ हा + लोट् = सिप् = हि, शप् का श्लु द्वित्व अभ्यासकार्य ज हा + हि, आकारान्त आदेश में (१) जहाहि, इकार आदेश में (२) जहिहि । पक्ष में "ई हल्यघोः" से ईत्व करने पर (३) जहीहि । ] ॥ ११७ ॥

यकारादि कित् ङित् सार्वधातुक परे रहते 'जहाति' का लोप होता है । [अन्त्य का होवे से आलोप ही होता है । ] उदा० जह्यात्, जह्याताम्, जह्युः । [ हा + लिङ् विधि तिप् शप्, श्लु द्वित्व, यासुट्, इलोप, स्लोप जहा + यात्, आलोप—जह्यात् । तस् = ताम् जह्याताम् । झि = जुस् = उस्, पररूप—जह्युः । ] ॥ ११८ ॥

घुसंज्ञक अंगों का तथा अस् धातु का एकार आदेश 'हि' परे होता है तथा अभ्यास का लोप होता है । उदा० देहि । धेहि । [ दा + लोट् = सिप् = हि, शप् श्लु, द्वित्वादि के बाद ददा + हि इसमें आकार का एकार आदेश तथा अभ्यास (द) का लोप—देहि । दधा + हि में भी एत्व और अभ्यास-लोप-धेहि । ] अस् + लोट् = सिप् = हि—यहाँ "श्नसोरल्लोपः" सूत्र से अ का लोप होता है प्रस्तुत सूत्र से स् का ए होता है—ए + हि, इस एत्व आदेश के असिद्ध हो जावे से "हुझल्भ्यो हेर्धिः" से हि का धि—एधि । ] यह लोप शित् है इस कारण सम्पूर्ण अभ्यास का ही होता है ।

**'श्नसोरल्लोपः' (६.४.१११) इत्यकारलोपः, एधि । शिदयं लोपः, तेन सर्वस्याभ्यासस्य भवति ॥**

## ३१२१. अत एकहल्मध्येऽनादेशादेर्लिटि ॥ १२० ॥ (२२६०)

**लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः । रेणतुः, रेणुः । येमतुः, येमुः । पेचतुः, पेचुः । देमतुः, देमुः ।**

**न्यासः**

ग्रहणेन सम्बद्धमिति तदनुवृत्तौ 'अन्यतरस्याम्' इत्येतस्याप्यनुवृत्तिरित्याशङ्का स्यात्, अतस्तन्निवृत्त्यर्थम् 'हौ' इत्युक्तम् । चकारस्य सन्नियोगार्थत्वाल्लोपो भवत्येत्वञ्च ॥ ११९ ॥

**अत एकहल्मध्येऽनादेशादेर्लिटि ॥ एकहल्मध्य इति ।** एकशब्दोऽयमसहायवाची । एकश्च एकश्च एकौ, एकौ च तौ हलौ चेत्येकहलौ, एकहलोर्मध्य इति द्विवचनान्तस्य षष्ठीसमासः । द्वयोरेव हि हलोर्मध्यं सम्भवति, नैकस्य । अत्र यदि लिट्यादेशो न विशिष्यते ततो नेमतु, नेमुः, सेहे, सेहाते, सेहिर इत्यत्र न स्यात् । अस्ति ह्यत्राप्यङ्गस्यादेश आदिरित्येतच्चेतसि कृत्वा लिट्यादेशं विशेषयितुमाह—**लिटि परत इत्यादि ।** लिटि परभूते य आदेशो विधीयते स आदिर्यस्याङ्गस्य नास्तीत्यर्थः । **तस्येति ।** तस्यैवंविधस्याङ्गस्येत्यर्थः । तस्येति चाङ्गस्य योऽकार इत्यनेन सम्बन्धः । अवयवषष्ठी चेयम्, तस्यैवंविधस्याङ्गस्य योऽकारोऽवयवस्तस्येत्यर्थः । **एकहल्मध्य** इत्यस्येदं विवरणम्—**असहाययोर्हलोर्मध्य इति ।** तस्येत्यन्तरोक्तोऽकारः सम्बध्यते । तस्याङ्गस्यावयवस्याकारस्येत्यर्थः । स्थानषष्ठी चेयम्—तस्य स्थान एकार आदेशो भवति । **रेणतुः, रेणुरिति ।** 'अण रण' इति 'रणिः शब्दार्थः' पठ्यते । **येमतुः, येमुरिति ।** 'यम उपरमे' । **देमतुर्देमुरिति ।** 'दमु उपशमे' ।

**पदमञ्जरी**

लोपशब्दसम्बन्धी । विभक्तेषु हल्ङ्यादिलोप इति भावः । संज्ञाशब्दे च कृतोऽनुबन्धः संज्ञिनः कार्यं सम्पादयति, यथा—ङमुटष्टित्वम् । एतच्च 'नानर्थकेऽलोन्त्यविधिः' (व्या० प० ६२) इत्यनाश्रित्योक्तम् ॥ ११९ ॥

**अत एकहल्मध्येऽनादेशादेर्लिटि ॥** एकशब्दोऽसहायवचनः, न सङ्ख्यावचनः; मध्याभावात् । द्विवचनान्तस्य च समासः; द्वयोरेव मध्यसम्भवात्, अत्र लिटीति यदि विधीयमानयोरेत्वाभ्यासलोपयोर्निमित्तनिर्देशः स्यात्, आदेशो न विशेषितः स्यात्; ततश्च नेमतुः, नेमुः, सेहे, सेहाते, सेहिरे—अत्रापि प्रतिषेधः स्यात्, [1]न त्वसत्वयोः कृतयोरङ्गस्यादेशादित्वात् । तस्याद् गुणभूतस्याप्यादेशस्यायं निमित्तनिर्देश इति दर्शयति—**लिटि परत इति ।** लिटि परत्रावस्थिते य आदेशो विधीयते स आदिर्यस्याङ्गस्य नास्तीत्यर्थः ।

**भावबोधिनी**

**विमर्श—**'अलोऽन्त्यस्य' के अनुसार केवल अन्त्य का लोप होना चाहिए सम्पूर्ण अभ्यास का कैसे ? 'लोपश्च' यहाँ दो शकार निर्दिष्ट है । इसमें प्रथम शकार प्रत्यय सु का स्थानापन्न है और दूसरा लोप से सम्बद्ध है, लोप शित् होता है । इसलिए "अनेकाल् शित् सर्वस्य" सूत्र से सम्पूर्ण अभ्यास का ही लोप होता है । क्योंकि यह 'अलोऽन्त्यस्य' का अपवाद है ॥ ११९ ॥

लिट् परे रहते जिस अङ्ग के आदि का आदेश नहीं है उसके एकहल्मध्य में = असहाय हलों के मध्य में जो अकार होता है, उस अ का एकार आदेश होता है और अभ्यास का लोप [ दोनों कार्य ] कित्, ङित् लिट् परे होते हैं । उदा० रेणतुः, रेणुः । [ रण् + लिट् = तस् = अतुस् द्वित्व रण् रण् + अतुस् प्रस्तुत सूत्र से अभ्यास का लोप अ का एत्व—रेण् अतुस्, स् का विसर्ग—रेणतुः । रण् + झि = उस् में भी पूर्वोक्त सब कार्य होते हैं । ] येमतुः, येमुः । [ यम + लिट् द्वित्वादि होते हैं । ] पेचतुः, पेचुः । [ डुपचष् पच् = लिट् = तस् = अतुस, द्वित्वादि के बाद एत्व, अभ्यास लोप ] देमतुः, देमुः । [ दम् + लिट् के रूप हैं । ]

---

१. प्रकाशितपाठः 'न त्वसत्वयोः कृतयोः' इति प्रमाद ग्रस्तः । √णम्—इत्यस्य नत्वम्, √षह—इत्यस्य सत्वं चादौ विधीयते ।

अत इति किम् ? दिदिवतुः। दिदिवुः। तपरकरणं किम् ? ररासे, ररासाते, ररासिरे। एकहल्मध्य इति किम् ? [ररक्षतुः, ररक्षुः[1]]। तत्सरतुः, तत्सरुः। अनादेशादेरिति किम ? चकणतुः, चकणुः। जगणतुः जगणुः। बभणतुः, बभणुः।

न्यास

ररास इति। 'राशृ शब्दे', आत्मनेपदी। शश्रमतुः, शश्रमुरिति। 'श्रमु तपसि खेदे च'।

केचित्तु—ततक्षतुः, ततक्षुरित्येतद् एकहल्मध्यस्य प्रत्युदाहरणं पठन्ति; एतच्चायुक्तम्; क्ङितीत्यनुवर्त्तते, न च तक्षेः परस्य लिटः कित्त्वमस्ति। 'असंयोगात्' इति प्रतिषेधात्। तत्सरतुः, तत्सरुरिति। 'त्सर छद्मगतौ'। चकणतुः, चकणुरिति। 'अण रण वण भण क्वण कण शब्दार्थाः'। तत्र कणतिर्भ्वादौ पठ्यते। जगणतुः, जगणुरिति। 'गण संख्याने' चुरादौ पठ्यते। ननु च चौरादिकत्वाण्णिचि कृते 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यामा भवितव्यम् ? 'अनित्यण्यन्ताश्चुरादयः' इत्यदोषः। अनित्यण्यन्तत्वं तु तेषां सप्तमे ज्ञापयिष्यते। बभणतुरिति। भणतिर्भ्वादौ पठ्यते शब्दार्थ एव।

नेमतुरिति। 'णम प्रह्वत्वे शब्दे'। 'णो नः' इति नत्वम्। सेहे इति। 'षह मर्षणे', 'धात्वादेः षः

पदमञ्जरी

ररक्षतुरिति। अयुक्तमिदमादेशादित्वात् क्वचित्तु ततक्षुरिति पठ्यते, तदप्ययुक्तम्; संयोगान्तत्वेन लिटः कित्वाभावात्। तस्मात्तत्सरतुः, तत्सरुरिति प्रत्युदाहरणम्। 'त्सर छद्मगतौ' (धा० पा० ५५४)। चकणतुरिति। कणतिः शब्दार्थधातुवर्गे भूवादौ पठ्यते। जगणतुरिति। 'गण संख्याने' (धा० पा० १८५३), चुरादित्वात्तत्र णिच् प्राप्नोति। यदि नेष्यते, 'अनित्यण्यन्ताश्चुरादयः' (हे० प० ९७)। एतच्च 'घुषिरविशब्दने' इत्यत्र वक्ष्यते। यद्यपि 'कुहोश्चुः' इति चुत्वं लिट्याहृत्य न विहितम्, अभ्यासनिमित्ते तु प्रत्यये विधानाल्लिण्निमित्तमपि

भावबोधिनी

अ का ए—इसका क्या फल है ? दिदिवतुः, दिदिवुः। [ दिव् + लिट् का रूप है। अकार न होने से न एत्व होता है और न अभ्यासलोप ] तपरकरण = ह्रस्व अ का ही—इसका क्या फल है ? ररासे, ररासाते, ररासिरे। [ रास् + लिट् के रूप हैं। आ होने से दोनों कार्य नहीं होते हैं। न्यासकार ने 'राशृ शब्दे' के रूप मान कर 'रराशे' आदि लिखे हैं। ] एकहल्मध्य = असहाय हलों के मध्य में—इसका क्या फल है ? ररक्षतुः, ररक्षुः। तत्सरतुः। तत्सरुः। [ रक्ष् रक्षणे' और 'त्सर गतौ' के रूप हैं। इसमें एकहल् नहीं संयुक्त दो हलों के मध्य में अकार होता है—ररक्ष + अतुस्, तत्सर् + अतुस् ]

विमर्श—अधिकांश प्रकाशित संस्करणों में 'ररक्षतुः। ररक्षुः' यह भी प्रत्युदाहरण है। किन्तु इसमें क् + ष् = क्ष् आदेशभूत है। जब कि 'अनादेशादि' का विधान है। अतः यह 'एकहल्मध्ये' का प्रत्युदाहरण ठीक नहीं है।

कुछ ने 'ततक्षतुः ततक्षुः' ऐसा लिखा है। किन्तु यह भी ठीक नहीं है क्योंकि संयोगान्त हो जाने के कारण लिट् कित् नहीं हो सकेगा क्योंकि 'असंयोगात्' ऐसा प्रतिषेध है। ररक्षतुः ररक्षुः में भी यह दोष है। इसलिए केवल—'तत्सरतुः, तत्सरुः' यही प्रत्युदाहरण तर्कसंगत है। न्यासकार ने 'शश्रमतुः' 'शश्रमुः ये भी प्रत्युदाहरण दिये हैं। 'श्रमु तपसि खेदे च' के रूप हैं। त्सर, श्रम दोनों के प्रत्युदाहरण ठीक हैं।

(अनु०) अनादेशादि [ जिसके आदि में आदेश नहीं हुआ है उसी का ] इसका क्या फल है ? चकणतुः चकणुः। जगणतुः जगणुः। बभणतुः, बभणुः। [ कण, गण, भण के रूप हैं। चुरादिगण अनित्य मानकर 'गण्' से णिच् नहीं भी होता है। इनमें आदि में जश्त्व और चुत्व होने से आदि का आदेश वाला हो जाने से यह सूत्र नहीं लगता है। ]

---

1. न्यासपदमञ्जर्योर्विरोधादेतस्य प्रत्युदाहरणत्वेन प्रदर्शनं नोचितम्।

**लिट आदेश-विशेषणं किम् ? इहापि यथा स्यात्—नेमतुः, नेमुः। सेहे, सेहाते, सेहिरे। अनैमित्तिके नत्वसत्वे, तदादिर्लिटचादेशादिर्न भवति।**

**इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति, तेन तदादिरप्यादेशादिर्भवति। तथा च फलिभजोरेत्वं**

**न्यासः**

सः' इति सत्वम्। कथं पुनर्नत्वे सत्वे च लिट्यादेशादी न भवतः? इत्यत आह—**अनैमित्तिके नत्वसत्वे इत्यादि।** नत्वसत्वविधाने हि न किञ्चिद् निमित्तमाश्रीयत इत्यनैमित्तिके एते भवतः, ततश्च प्रागेव लिडुत्पत्तेस्ताभ्यां भवितव्यम्। तेन तदादि यदङ्गं तल्लिटयादेशादि न भवति। यदि तर्हि लिटादेशो विशिष्यत एवं सत्यङ्गमविशेषितं स्यात्, ततश्च पक्वः, पक्ववानित्यत्रापि प्रसज्येत, पचेरपि ह्यङ्गस्य लिटि परभूते य आदेशः क्रियते स इहाप्यादिर्नास्ति? नैतदस्ति; अभ्यासलोपसन्नियोगेन ह्येत्वमुच्यते। तेन यत्रैवाभ्यासलोपः, तत्रैवैत्वेन भवितव्यम्। नचात्राभ्यासलोपः; असम्भवात्। इह तर्हि स्यात्—पापच्यत इति? अयमप्यदोषः; इह परत्वाद् 'दीर्घोऽकितः' इति दीर्घो भविष्यति। ह्रस्वहलादिशेषावुत्सर्गौ, तयोर्दीर्घत्वमेत्वञ्चापवादः। तत्र दीर्घस्यावकाशः—बाभास्यते, एत्वस्यावकाशः—पेचतुः, पेचुरिति; इहोभयं प्राप्नोति—पापच्यत इति, अपवादविप्रतिषेधे सति परत्वाद्दीर्घत्वं भविष्यति।

अथ बभणतुर्बभणुरित्यत्रैत्वं कस्मान्न भवति, 'अभ्यासे चर्च' इति जश्त्वे कृत आदेशादित्वादिति चेत्? न; एत्वे कर्त्तव्ये जश्त्वस्यासिद्धत्वात्। तस्माद् भवितव्यमेवैत्वेन। विप्रतिषेधस्य तु यत्र 'कुहोश्चुः' इति चुत्वं क्रियते—चकणतुः, चकणुः, जहसतुः, जहसुरित्यादाववकाशः स्यात्? इत्यत आह—**इहेत्यादि।** कथमेतज्ज्ञायते—नास्त्यसिद्धत्वम्? इत्याह—**तथा चेत्यादि।** तदैव 'तॄफलभजत्रपश्च' इति फलिभज्योरेत्वमुपपद्यते यदि जश्त्व-

**पदमञ्जरी**

भवति, सर्वथा लिट्युत्पन्ने पश्चाद्भवति। **अनैमित्तिके नत्वसत्वे इति।** ततश्च प्रागेव लिडुत्पत्तेस्ताभ्यां भवितव्यम्, तेन तदाद्यङ्गं लिटि य आदेशस्तदादि न भवति, यदि लिटा आदेशो विशेष्यते, एत्वमलिट्यपि प्राप्नोति—पक्वः, पक्ववानिति? नैष दोषः; चकारः समुच्चये, नान्वाचये; तेन यत्राभ्यासलोपस्तत्रैवैत्वम्। इह तर्हि स्यात्—पिपठिषति? क्ङितीति वर्त्तते। एवमपि पापठ्यते—अत्रापि प्राप्नोति? नैष दोषः; इह ह्यभ्यासकार्येषु ह्रस्वहलादिशेषावुत्सर्गौ, तयोरन्येऽपवादास्तत्रेह 'दीर्घोऽकितः' इति दीर्घत्वं च प्राप्नोति अनेन लोपश्च, तत्र दीर्घस्यावकाशः—बाभाष्यते, अस्य विधेरवकाशः—पेचतुः, पेचुः; पापच्यते—इत्यत्रोभयप्रसङ्गे अपवादविप्रतिषेधाद्दीर्घत्वेनायमभ्यासलोपो बाध्यते; तत्सन्नियोगशिष्टत्वादेत्वमपि न भविष्यति। अभ्यासविकारेषु उभयसमावेशो यत्र सर्वेषां प्रवृत्तिस्तत्र। इह तु यद्यपि दीर्घत्वे कृतेऽपि एत्वाभ्यासलोपयोः प्रसङ्गः, तयोश्च कृतयोर्न दीर्घस्य प्रसङ्ग इति न सर्वेषां प्रवृत्तिः।

ननु च बभणतुः, बभणुरित्यादावभ्यासजश्त्वचर्त्वयोरसिद्धत्वादनादेशादित्वात् एत्वाभ्यासलोपाभ्यां भाव्यम्, विप्रतिषेधस्य तु जहसतुर्जहसुरित्यादौ यत्र 'कुहोश्चुः' इति चुत्वं क्रियते सोऽवकाशः स्यात्? अत आह—**इहेति।** अत्रैव ज्ञापकमाह—**तथा चेति। रूपाभेदे त्विति।** यत्रादेशस्य स्थानिना सह रूपभेदो

**भावबोधिनी**

लिट् का आदेशविशेषण किसलिये है? यहाँ भी हो सके—नेमतुः, नेमुः। सेहे, सेहाते, सेहिरे। [ 'णो नः' और "धात्वादेः षः सः" से होने वाले ] नत्व और सत्व अनैमित्तिक हैं, तदादि (वे जिसके आदि में हैं ऐसा ] लिट् परे आदेशादि नहीं हैं। [ जो आदेश लिट् परे होता है वही यहाँ लिया जाता है। अतः उसी प्रकार के आदेशादि को छोड़ कर ही एत्व तथा अभ्यासलोप होते हैं। ]

यहाँ (पूर्वोक्त उदाहरण में) अभ्यास का जश्त्व और चर्त्व असिद्ध नहीं होता है, इसलिए जश्त्वादि और चर्त्वादि भी आदेशादि हो जाता है। [ अतः वहाँ यह सूत्र नहीं लागू होता है। ] और इसीलिये फल तथा भज का एत्व किया गया है [ 'तॄफलभजत्रपश्च' में फल तथा भज का ग्रहण इसलिये है कि जश्त्व, चर्त्व हो जाने पर प्रस्तुत सूत्र से एत्व,

**विधीयते। रूपाभेदे चादेशादिर्नाश्रीयत इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्, अन्यथा हि पेचतुः, पेचुः, देमतुः, देमुरित्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात्।**

**किङतीत्येव—अहं पपच। अहं पपठ।**

**न्यासः**

चर्त्वयोरसिद्धत्वं न भवति, नान्यथा। अनादेशादित्वादनेनैवैत्त्वस्य सिद्धत्वात् तन्नोपपद्यते। तस्मात् फलिभज्योरेत्वविधानादवसीयते—जश्त्वचर्त्वयोरसिद्धत्वमिह नास्तीति। **रूपाभेदे चेत्यादि।** 'शब्दरूपस्य स्थानिनोऽभेदे सति य आदेशः स इह नाश्रीयते' इत्यस्यार्थस्य 'न शसददवादिगुणानाम्' इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्। 'अभ्यासे चर्च' इत्यनेन प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचरो भवन्तीति शसः शकारस्य शकारो भवति, ददेर्दकारस्यापि दकारः; तेनोभावपि तावादेशादी भवतः। तत्र यदि स्थान्यभेदे सति य आदेशः सोऽपीहाश्रीयेत, तत आदेशादित्वादेव न भविष्यतीति शसिदद्योरेत्वप्रतिषेधो न विधीयेत; विहितश्च, तस्मादेतदेव प्रतिषेधवचनं ज्ञापयति—रूपाभेदे सति य आदेश; स इह नाश्रीयत इति। यदि तर्ह्याश्रीयेत किं स्यात्? इत्यत आह—**अन्यथा हीत्यादि।** अन्यथा योऽपि रूपाभेदादादेशः स्थानिनाभिन्नरूपः सोऽपीहाश्रीयेत, ततो यथा चकणतुरित्येवमादीनामेत्वं न भवति, तथा पेचतुः, पेचुरित्येवमादीनामपि प्रकृतिजश्च-

**पदमञ्जरी**

नास्ति तत्रेत्यर्थः। **शसिदद्योरिति।** 'अभ्यासे चर्च' इति सर्वत्र जश्चरोः प्राप्तयोरन्तरतमपरिभाषाव्यापारलब्धमिदं वक्ष्यते—प्रकृतिचरां प्रकृतिचरः, प्रकृतिजशां प्रकृतिजश इति। तेन शसेः शकारस्य शकारो ददेर्दकारस्य दकार इति, तावप्यादेशादी भवतः। यदि चाभिन्नरूपोऽप्यादेश इहाश्रीयेत, तत आदेशादित्वादेव प्रतिषेधे सिद्धे 'न शसददवादिगुणानाम्' इति शसिदद्योः प्रतिषेधोऽनर्थकः स्यात्, कृतस्तु; ज्ञापयति—रूपाभेदो य आदेशः स इह नाश्रीयते इति। यदि पुनराश्रीयेत किं स्यात्? इत्यत आह—**अन्यथेति।** प्रकृतिजंश् प्रकृतिश्चर्चादिर्येषां तेषां न स्यात्, वचनं तु रेणुरित्यादौ चरितार्थम्। **अहं पपचेति।** उत्तमे णलि णित्त्वाभावपक्षे रूपम्। णित्त्वपक्षे तु परत्वाद्वृद्धौ कृतायां तपरकरणादकाराभावादेवाप्रसङ्गः।

**भावबोधिनी**

अभ्यासलोप नहीं होता है, अतः इस सूत्र में स्वतन्त्ररूप से इन दोनों का ग्रहण किया गया है।] और रूप के अभेद में आदेशादि नहीं लिया जाता है; इसमें 'शसि' तथा 'ददि' का प्रतिषेधवचन [ "न शसददवादिगुणानाम्" यह एत्वाभ्यासलोप का प्रतिषेध करता है।] ज्ञापक है, अन्यथा पेचतुः, पेचुः, देमतुः देमुः—इत्यादि के भी प्रकृति के जश्चरादि का एत्व नहीं होता। [ प्रकृति का जश् और प्रकृति का चर् है आदि में जिनके ऐसे अकार का एत्व नहीं हो पाता।]

**विमर्श—**'अनादेशादेः' = लिट् परे आदेश आदि अङ्ग नहीं है जिसका वह अनादेशादिः है, ऐसे अङ्ग के अकार का एत्व किया जाता है। आदेश दो प्रकार के होते हैं-(१) रूप का परिवर्तन हो जाना, (२) पुनः उसी रूप का रह जाना। प्रस्तुत सूत्र में प्रथम प्रकार के ही आदेश लिये जाते हैं। रूप की अभिन्नता रहने पर होने वाला आदेश, आदेश नहीं लिया जाता है। इस कथन में प्रमाण है "न शशददवादिगुणानाम्" (६।४।१२६) यह एत्वाभ्यासलोप का निषेध करने वाला सूत्र है। "अभ्यासे चर्च" यह सूत्र प्रकृति के चर् वर्णों का चर् और जश् वर्णों का जश् ही करता है। इसके अनुसार शस् और दद ये भी आदेशादि हो जाते हैं। इस स्थिति में इसके एत्व, अभ्यासलोप की प्राप्ति ही नहीं हो सकती तब निषेध करने वाले सूत्र की क्या आवश्यकता? यही व्यर्थ होकर ज्ञापित करता है—'रूप का अभेद रह जाने पर जो आदेश होता है, वह इस सूत्र में नहीं लिया जाता है। जहाँ भिन्न रूप हो जाता है वही आदेशादि माना जाता है।' इस प्रकार से दद, शस् में भी एत्वाभ्यासलोप प्राप्त है क्योंकि ये दोनों अनादेशादि हैं, निषेधवचन चरितार्थ है।

(अनु०) कित् ङित् परे—अहं पपच। अहं पपठ। [ लिट् = मिप् = णल् में स्थानिवद्भाव से पित्व आने से कित् ङित् नहीं होता है। एत्वाभ्यासलोप नहीं होते हैं।]

**❀ [1]दम्भेरेत्वं वक्तव्यम् ❀ (का० वा० ५) । देभतुः । देभुः । नलोपस्यासिद्धत्वान्न प्राप्नोति ।**

**❀ नशिमन्योरलिट्येत्वं वक्तव्यम् ❀ (का० वा०) । अनेशम् । मेनका । अनेशमिति नशेर्लुङि पुषादित्वादङ् । मेनकेति मनेः 'आशिषि च' इति वुन् । क्षिपकादिषु प्रक्षेपादित्वं न क्रियते ।**

**❀ छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम् ❀ (म० भा०) । व्येमानम् । अमेर्विपूर्वस्य चानशि मुक् न क्रियते । लिङि—पेचिरन् । पेचिरन्नित्येतस्य छान्दसं ह्रस्वत्वम् ।**

### न्यासः

रादीनां न स्यात् । प्रकृतिजशः प्रकृतिचरश्चादयो येषां ते तथोक्ताः । अहं **पपठ,** अहं **पपचेति** । अत्र स्थानिवद्भावेन पित्त्वात् कित्त्वं नास्ति, तेनैत्त्वाभ्यासलोपो न भवतः । वृद्धिरपि न भवति; 'णलुत्तमो वा' इति पक्षे णित्वाभावात् । णित्त्वपक्षे तु परत्वाद् वृद्ध्या बाधितत्वादेत्त्वाभ्यासलोपाभ्यां न भवितव्यम् इत्यणित्त्वपक्ष एवोदाहृतम् ।

**दम्भेरिति** । किं पुनः कारणं दम्भेरेत्त्वं न भवति, यावता लिट्यनादेशाद् ह्येतदङ्गम् । 'अनिदिताम्' इत्यादिना नलोपे कृत एकहल्मध्य एवाकारः ? इत्यत आह—**नलोपस्येत्यादि** । 'ग्रन्थिश्रन्थिदम्भिस्वञ्जीनाम्' इति सूत्रे दम्भेः परस्य लिटः कित्त्वमुक्तम्, तस्मिन् सति य उपधाया लोपस्तस्य 'असिद्धवदत्रा भात्' इत्यसिद्धत्वान्न प्राप्नोति । तस्माद् दम्भेरेत्त्वं वक्तव्यम् । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'श्नसोरल्लोपः' इत्यत्राभाच्छास्त्रीयस्यासिद्धत्वस्यानित्यत्वं ज्ञापितम्, तेन दम्भेरेत्त्वे कर्त्तव्ये लोपस्यासिद्धत्वं न भवति, ततश्च दम्भेर्लिटयत्त्वं भविष्यतीति । अथ वा—'अत एकहल्मध्ये' इत्यत्र 'अतः' इति योगविभागः कर्तव्यः, तेन यत्र यत्रेत्त्वमिष्यते तत्र भविष्यतीति । एवञ्च कृत्वा **नशिमन्योरलिटेत्त्वमित्याद्यपि** नोपसंख्येयम्; योगविभागेनैव सिद्धत्वात् । वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थ इति सर्वत्र वेदितव्यम् । **अनेशमिति** । 'तस्थस्थ' इत्यादिना मिपोऽम्भावः ।

### पदमञ्जरी

**देभतुरिति** । 'श्रन्थिग्रन्थि' (वा०) इत्यादिना लिटः कित्त्वे सति नलोपः ।

**नशिमन्योरलिट्येत्त्वमिति** । अलिटीति पादपूरणार्थोऽनुवादः, श्लोकोह्येवं भाष्ये पठितः;—

नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि । अनेशन्मेनकेत्येतद्व्येमानं लिङि पेचिरन् ॥ इति । (वा० ७९३,९४)

**[2]अनेशन्निति** । झोऽन्तादेशः । अनेशन्नस्येषवः । **अनेशमिति** । तु प्रायेण पाठः, तत्र मिपोऽम्भावः । **क्षिपकादिष्विति** । क्षिपकादिषु हि इत्वप्रतिषेधो वक्ष्यते, एतच्च 'न यासयोः' इत्यत्र 'आशिषि चोपसङ्ख्यानम्' (वा० ८५१) इत्यनाश्रित्योक्तम्, छन्दसीतिवचनात् मेनकेति भाषायां न प्राप्नोति । यदोष्यते, पृषोदरादिषु द्रष्टव्यः । **लुग्न[3] क्रियत इति** । छान्दसत्वात्, 'बहुलं छन्दसि' इति वा शपो लुप्तत्वात् । **पेचिरन्निति** । पचेरन्निति प्राप्ते ।

### भावबोधिनी

* दम्भ् धातु का एत्व कहना चाहिए । * उदा० देभतुः । देभुः । इसमें न (म्) लोप के असिद्ध हो जावे से [ 'एकहल्मध्य' अकार न होवे से एत्व ] नहीं प्राप्त होता है । [अतः इस वार्तिक की आवश्यकता है ।]

* नश् तथा मन् का लिट् से भिन्न परे एत्व कहना चाहिए । * उदा० अनेशम् । मेनका । अनशेम्—यह नश् धातु से लुङ् = मिप् च्लि का 'पुषादि-द्युतादि०'' से अङ् = अ करने पर [ अनश् अ + मिप् में मिप् का अम्, अ का एत्व ] रूप होता है । मेनका—यहाँ 'मन्' से आशीषि च' (३।१।१५०) से वुन् = अक प्रत्यय होता है । [ मन् अक, टाप् मनका, एत्व मेनका ] क्षिपकादि गण में प्रक्षेप के कारण इत्व नहीं किया जाता है । [''न यासयोः'' ७।२।४५ सूत्र पर वार्तिक है ''क्षिपकादीनां चोपसंख्यानम्'' इससे इत्व का निषेध से 'मनिका' ऐसा नहीं होता है । प्रस्तुत सूत्र एत्व करता है ।]

---

१. भाष्ये तु 'दम्भएत्वम्' इति पाठः । २. मूले 'अनेशम्' इति पाठः । ३. मूले तु 'मुग् न' इति पाठः ।

❀ **यजिवप्योश्च** ❀ (म० भा०) आयेजे। आवेपे। **यजेर्वपेश्च लिङि इटि 'छन्दस्यपि दृश्यते'** (६.४.७३) इत्यनजादेरप्याडागमः ॥

## ३१२२. थलि च सेटि ॥ १२१ ॥ (२२६१)

**थलि च सेटि परतोऽनादेशादेरङ्गस्य एकहल्मध्यगतस्यातः स्थाने एकार आदेशो भवति अभ्यासलोपश्च। पेचिथ। शेकिथ।**

### न्यासः

अथ मेनकेत्यत्र 'प्रत्ययस्थात्' इत्यादिनेत्त्वं कस्मान्न भवति ? इत्याह—**क्षिपकादिष्वित्यादि**। क्षिपकादिष्वित्त्वस्य प्रतिषेधो वक्ष्यते। अस्य च क्षिपकादिषु प्रक्षेपः, तेनेत्त्वं न क्रियते।

**चानशीति**। 'ताच्छील्यवयोवचनशक्तिषु चानश्'। **मुक् न क्रियत** इति। 'आने मुक्' इति मुक् प्राप्नोति, स न भवति—'अनित्यमागमशासनम्' इति कृत्वा। छान्दसत्वाद्वा—'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति। **छान्दसं ह्रस्वत्वमिति**। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ङ्यापोर्विधीयमानं ह्रस्वत्वं बहुलवचनात् पेचिरन्नित्यत्रापि भवति। पचेर्लिङ्, सीयुट्, झस्य रन्, शप्, आद्गुणः। पचेरन्निति प्राप्त एत्वे ह्रस्वत्वे च कृते पेचिरन्निति भवति ॥ १२० ॥

**थलि च सेटि ॥ पेचिथ। शेकिथेति**। 'उपदेशेऽत्वतः' इतीट्प्रतिषेधप्राप्तः 'ऋतो भारद्वाजस्य' इति नियमाद् इहेड् भवति। तदयमत्रार्थः—ऋत एव भारद्वाजस्येति, नान्येषां धातूनामिति।

**पपक्थेति**। अन्येषामाचार्याणां मतेनेट्प्रतिषेधो भवत्येव।

### पदमञ्जरी

कचित्पठ्यते—**यजिवप्योश्च; आयेजे आवेपे, यजेर्वपेश्च लङि इति छन्दस्यपि दृश्यते इत्यनजादेरप्याडिति**। अपर आह—लिटि तस्य एकादेशः, सम्प्रसारणपूर्वत्वे 'वा छन्दसि' इत्यनुवृत्तेर्यणादेशः, एत्वाभ्यासलोपौ, उदात्तवता तिङेत्याङः समास इति। तथा चावगृह्णन्ति—यच्छथ्योश्च मनुरायजे पिता, आयेज इत्यायेजे इति ॥ १२० ॥

**थलि च सेटि ॥ पेचिथेति**। क्रादिनियमात्प्राप्तस्येटः 'उपदेशेऽत्वतः' इति प्रतिषेधे प्राप्ते 'ऋतो भारद्वाजस्य' इति नियमात्पक्षे इट्। **पपक्थेति**। अन्येषां मतेन प्रतिषेधः।

### भावबोधिनी

* वेद में अम् तथा पच् का भी अलिट् में एत्व कहना चाहिए। * उदा० व्येमानम्। विपूर्वक अम् धातु से चानश् = आन प्रत्यय करने पर मुक् का आगम नहीं किया जाता है। [ वि अम् आन, अ का एत्व वि + ऐमान, यण् ] लिङ् में—पेचिरन्। [ पच् + लिङ् सीयुट् = ईय् झ का रन्, शप्—पच ईय् रन् यलोप गुण, पचेरन्। प्रस्तुत सूत्र से अ का एत्व पेचेरन् में छान्दस ह्रस्व होकर पेचिरन् बनता है। यही लिखा है। ] पेचिरन् इसका छान्दस ह्रस्व होता है। [ अतः पेचेरन् के ए का इ होता है। ]

* यज् तथा वप् का भी एत्व होता है। * आयेजे। आवेपे। यज तथा वप् का लङ् = उत्तमपुरुष एकवचन = इट् प्रत्यय परे "छन्दस्यपि दृश्यते" (६।४।७३) सूत्र से अनजादि को भी आट् आगम। [ आयज + इ एत्व तथा गुण—आयेजे। इसी प्रकार आ वप + इ, एत्व, गुण—आवेपे ] ॥ १२० ॥

सेट् ( इट् सहित ) थल् प्रत्यय परे रहते अनादेशादि अङ्ग के एकहल्मध्य में वर्तमान अ के स्थान पर एकार आदेश होता है और अभ्यास का लोप होता है। उदा० पेचिथ। शेकिथ। [ पच + लिट् = सिप् = थल्, द्वित्व "ऋतो भारद्वाजस्य" (७।२।६३) सूत्रनियम से इट् करने पर पच् पच् + इथ में प्रस्तुत सूत्र से एत्व तथा अभ्यास का लोप—पेचिथ। इसी प्रकार शक् + लिट् = सिप् = थल् में भी इट् करने पर एत्वाभ्यासलोप होता है। ]

**सेटीति किम् ? पपक्थ ।**

**थल्ग्रहणं विस्पष्टार्थम् । अक्ङिदर्थमेतद्वचनमित्यन्यस्येटोऽसम्भवात् ।**

**अत इत्येव—दिदेविथ । 'एकहल्मध्यगतस्य' इत्येव—ततक्षिथ । ररक्षिथ । अनादेशादेरित्येव—चकणिथ । बभणिथ ॥**

## ३१२३. तॄफलभजत्रपश्च ॥ १२२ ॥ (२३०१)

**तॄ, फल, भज, त्रप—इत्येतेषामङ्गानामत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति**

**न्यासः**

अथ थल्ग्रहणं किमर्थम्, न सेटीत्येवोच्येत; यत्र हि पूर्वेण न सिध्यति तदर्थं वचनम्, अन्यत्रेडादौ कित्वात् पूर्वेणैव सिद्धम्, तत्रान्तरेणापि थल्ग्रहणं थल्येव भविष्यति ? इत्यत आह—**थल्ग्रहणमित्यादि** । असति थल्ग्रहणे, आरम्भसामर्थ्यादेतावान् निश्चयः स्याद्—यत्र पूर्वेण न सिध्यति तदर्थमेददिति । अक्ङिदर्थमित्येतत् तु दुरवसानम्; बहवो विशेषाः प्रक्रान्ताः, तत्र सन्देहः स्यात्—किमक्ङिदर्थमेतत् स्याद्, उतादेशार्थम् ? आहोस्विदनेकहल्मध्यार्थम् ? किमु अनेकाकारार्थमिति ? तत्रासन्देहार्थम् 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येते विशेषाः सर्व एवेहानुवर्त्तन्ते । क्ङिद्ग्रहणन्तु निवृत्तम् । तस्माद् क्ङिदर्थोऽयमारम्भः । न च थलोऽन्यदिहाक्ङिदस्ति सेड् । ततः सामर्थ्यात् थल्येवायं विधिर्व्याख्येयः । व्याख्यानद्वारेण प्रतिपत्तौ मन्दधियां प्रतिपत्तिगौरवं स्यात् । तस्माद् विस्पष्टार्थं थल्ग्रहणं क्रियते । थलो ह्यक्ङित उपादाने सुखमेव प्रतीयते—अक्ङिदर्थोऽयमारम्भ इति ॥ १२१ ॥

**तॄफलभजत्रपश्च ॥ तेरतुः, तेरुरिति ।** 'ऋच्छत्यॄताम्' इति गुणः । **फेलतुः, फेलुरिति ।** 'फल निष्पत्तौ', 'त्रिफला विशरणे' इति च ।

**पदमञ्जरी**

थल्ग्रहणमनर्थकम्, पेचिवेत्यादावन्यत्र सेटि कित्वात्पूर्वेण भवितव्यमेव ? अत आह—**थल्ग्रहणं विस्पष्टार्थमिति** । किमत्र विस्पष्टनीयम् तद्दर्शयति—**अक्ङिदर्थमित्यादि** । आरम्भसामर्थ्यादेवायं निश्चयः स्यात्—यत्र पूर्वेण न सिद्ध्यति तदर्थमिति, बहवश्च विशेषाः प्रकृता—'अत एकहल्मध्ये' इत्यादयः, तत्रासति थल्ग्रहणे सन्देहः स्यात्—किमनकारार्थं वचनम्—ददिविव, ररादिव इति ? अथानेकहल्मध्यार्थम्—तत्सरिवेति ? अथादेशार्थम्—बभणिवेति ? उतालिडर्थम्—पठित इति ? उताक्ङिदर्थमिति ? तत्र 'अत इत्यादयो विशेषा अनुवर्त्तन्ते, क्ङितीत्येतत्तु निवर्तते—इति व्याख्यानमन्तरेण दुर्ज्ञानम् । तस्माद्विस्पष्टार्थं थल्ग्रहणं कृतम् ॥ १२१ ॥

**तॄफलभजत्रपश्च ॥** 'फल निष्पत्तौ' (धा० पा० ५३०), 'त्रिफला विशरणे' (धा० पा० ५७६)—द्वयोरपि

**भावबोधिनी**

सेट् थल् परे—इसका क्या फल है ? पपक्थ । [ 'ऋतो भारद्वाजस्य' से पाक्षिक इट् न होने पर एत्वाभ्यासलोप भी नहीं होते हैं, हलादिशेष पपच् + थ, कुत्व ]

थल्ग्रहण स्पष्टता के लिये है । अकित् अङित् के लिये यह सूत्र है इसलिये थल् (सिप्) के अतिरिक्त किसी अन्य का इट् होना सम्भव ही नहीं है । [अतः "सेटि" से भी निर्वाह सम्भव रहने पर "थलि" के ग्रहण से स्पष्टतया शीघ्र प्रतीति होती है । ]

अकार का ही होता है—दिदेविथ । [ यहाँ इकार का इकार नहीं होता है, न अभ्यासलोप होता है । ]

एकहल्मध्यस्थ का ही होता है—ततक्षिथ । ररक्षिथ । [ यहाँ नहीं होता है । ] अनादेशादि का ही—चकणिथ । बभणिथ । [ यहाँ आदि का आदेश होने से एत्वाभ्यास लोप नहीं होते हैं । ] ॥ १२१ ॥

तॄ, फल, भज, त्रप—इनके अङ्गों के अकार का एकार आदेश तथा अभ्यास का लोप कित् ङित् लिट् परे और सेट् थल् के परे होता है । उदा० तेरतुः, तेरुः । तेरिथ । [ तॄ + लिट् = तस् = अतुस् द्वित्व तॄ तॄ + अतुस्, "उरत्" सूत्र

**परतस्थलि च सेटि । तेरतुः, तेरुः, तेरिथ । फेलतुः, फेलुः, फेलिथ । भेजतुः, भेजुः, भेजिथ । त्रेपे, त्रेपाते, त्रेपिरे ।**

**तरतेर्गुणार्थं वचनम् । फलिभजोरादेशाद्यर्थम् । त्रपेरनेकहल्मध्यार्थम् ।**

**॥ श्रन्थेश्चेति वक्तव्यम् ॥ ( ? ) । श्रेथतुः, श्रेथुः ॥**

## ३१२४. राधो हिंसायाम् ॥ १२३ ॥ (२५३२)

**राधो हिंसायामर्थेऽवर्णस्य एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । अपरेधतुः, अपरेधुः, अपरेधिथ ।**

**हिंसायामिति किम् ? रराधतुः, रराधुः, रराधिथ ।**

### न्यासः

**तरतेर्गुणार्थमिति ।** 'न शसददवादिगुणानाम्' इति प्रतिषेधं वक्ष्यति । अतस्तरतेरिदं वचनं गुण इत्येवमभिनिवृत्तस्यापि तथा स्यादित्येवमर्थम् ।

**श्रन्थेश्चेति वक्तव्यमिति ।** 'ग्रन्थ श्रन्थ सन्दर्भे' इत्यस्याप्येत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन श्रन्थेरपि भविष्यतीति । **श्रेथतुः, श्रेथुरिति ।** पूर्ववदुपसंख्यानेन लिटः कित्वे नकारलोपः ॥ १२२ ॥

**राधो हिंसायाम् ॥ राधो हिंसायामर्थ इत्यादि ।** यद्यपि 'राध साध संसिद्धौ' इति राधिः संसिद्धौ पठ्यते, इह तथाप्यनेकार्थत्वाद् धातूनां हिंसार्थता वेदितव्या । राधेर्हिंसायामर्थेऽवर्णस्यैकारादेशो भवतीत्युच्यते ।

### पदमञ्जरी

ग्रहणम् । **गुणार्थमिति ।** 'न शसददवादिगुणानाम्' इति प्रतिषेधं बाधितुमित्यर्थः । **श्रेथतुरिति ।** पूर्ववत्कित्व-नलोपौ ॥ १२२ ॥

**राधो हिंसायाम् ॥** अनेकार्थत्वाद्धातूनां राधो हिंसायां वृत्तिः ।

### भावबोधिनी

से अभ्यास ऋ का अ आदेश रपर हलादि शेष त तॄ + अतुस्, "ऋच्छत्यॄताम्" से गुण, रपर, ततर् + अतुस् प्रस्तुत सूत्र से एत्व तथा अभ्यास का लोप—तेर् अतुस्, विसर्ग—तेरतुः ] फेलतुः, फेलुः, फेलिथ । [ फल् + लिट् = तस् = अतुस् द्वित्व के बाद एत्वाभ्यासलोप फेल् अतुस्, स् का विसर्ग—फेलतुः । ] भेजतुः । [ भज् + लिट् = तस् = अतुस्, द्वित्व, एत्व, अभ्यासलोप ] त्रेपे, त्रेपाते, त्रेपिरे । [ त्रप् + लिट् = त = एश्, द्वित्व, एत्व अभ्यासलोप त्रेप् ए = त्रेपे ] ।

तॄ का वचन गुणार्थ है । [ तॄ धातु का "ऋच्छत्यॄताम्' से गुण होता है । अतः 'न शसददिवादिगुणानाम्' सूत्र से एत्वाभ्यासलोप का निषेध होता है । अतः वहाँ ये कार्य करने के लिये सूत्र में 'तॄ' का ग्रहण है । ] फल् तथा भज् का आदेशार्थ वचन है । [फ तथा भ का आदेश होने के कारण इन दोनों के एत्व अभ्यास करने के लिये ग्रहण है ।] त्रप् अनेक हल् मध्य के लिये वचन है । [ त्रप् का द्वित्व करने पर अनेकहल्मध्य अकार होने से प्राप्त नहीं है । यहाँ भी करने के लिये 'त्रप्' का ग्रहण है । इस प्रकार इन चारों में अप्राप्ति के कारण यह सूत्र बनाया गया है । ] ॥ १२२ ॥

* ग्रन्थ का भी कहना चाहिए । * उदा० श्रेथतुः, श्रेथुः । [ श्रन्थ् + लिट् = तस् = अतुस् कित्व के कारण न् लोप होने पर इस वचन से एत्व अभ्यासलोप होते हैं । अनेकहल्मध्यगत अकार होने से अप्राप्ति है । अतः वचन बनाया गया । ]

'राध्' का हिंसा अर्थ में अकार का एत्व और अभ्यासलोप कित् ङित् लिट् परे तथा सेट् थल् परे होता है । उदा० अपरेधतुः, अपरेधुः । अपरेधिथ । [ अप् पूर्वक राध् + लिट् = तस् = अतुस्, द्वित्व के बाद एत्व अभ्यासलोप—अपरेध् अतुस् विसर्ग । अपरेधिथ । इट् करने पर ये आदेश होते हैं । ] हिंसा अर्थ में—इसका क्या फल है ? रराधतुः रराधुः । रराधिथ । [ यहाँ हिंसा से भिन्न अर्थ है । ]

अत—इत्येतदिहोपस्थितं तपरत्वकृतमपास्य कालविशेषमसम्भवादवर्णमात्रं प्रतिपादयति ।
अथ वा—'श्नाभ्यस्तयोरातः' (६.४.१२)—'इत्यनुवर्त्तते' इति व्याख्येयम् ।
एकहल्मध्ये वा यः स स्थानी भविष्यति ॥

## ३१२५. वा जॄभ्रमुत्रसाम् ॥ १२४ ॥ (२३५६)

**जॄ, भ्रमु, त्रस—इत्येतेषामङ्गानामतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । जेरतुः, जेरुः, जेरिथ । जजरतुः, जजरुः, जजरिथ । भ्रेमतुः, भ्रेमुः, भ्रेमिथ । बभ्रमतुः, बभ्रमुः, बभ्रमिथ । त्रेसतुः, त्रेसुः, त्रेसिथ । तत्रसतुः, तत्रसुः, तत्रसिथ ॥**

### न्यासः

ननु च नात्र सूत्रेऽवर्णग्रहणमस्ति, योऽप्यत्रत्योऽवर्णः प्रकृतः सोऽपि मात्राकालः, न च राधेर्मात्राकालोऽवर्णोऽस्ति, तत् कथमवर्णस्य स्थान एत्वं लभ्यते ? इति यश्चोदयेत् तं प्रत्याह—**'अत इत्येतदिहोपस्थितमित्यादि ।** 'अतः' इति स्वरितत्वादिहोपस्थितम्, यदिहोपस्थितं तत् तपरत्वकृतस्य कालविशेषस्याभावात् तदपास्य = परित्यज्यावर्णमात्रं स्थानित्वेन प्रत्याययति = बोधयति; अन्यथा तस्योपस्थानमनर्थकं स्यात् ।

**अथ वेत्यादि ।** 'श्नाभ्यस्तयोः' 'इत्यनेन यतः सूत्रात् स्थान्यनुवर्त्तते तदुपलक्षयति । 'आतः' इत्यनेनापि यः स्थान्यनुवर्त्तते तं दर्शयति—**श्नाभ्यस्तयोरात इत्यत आत इत्यनुवर्त्तत इति व्याख्येयमिति ।** एवञ्च व्याख्यायमाने राधेरवर्णस्यैत्वं विज्ञायते यदि तर्ह्यात इत्यनुवर्त्तते, एवञ्च सति 'अत एकहल्मध्ये' इत्यत्रापि तस्यातः सन्निधानादिहापि प्राप्नोति—शशासिव, शशासिमेति ? नैष दोषः; मण्डूकप्लुतिन्यायेन तस्येहानुवृत्तिः ।

**एकहल्मध्ये वेत्यादि ।** अथवा—एकहल्मध्य इत्यनुवर्त्तते, तत्राप्यनुवर्त्तमानेऽसम्भवादत इतीह न व्याप्रियते । तेन राधेर्य एकहल्मध्येऽवयवः स स्थानी भवति, स पुनराकार एव भवति, तस्यैवैत्वं भविष्यति ॥ १२३ ॥

**वा जॄभ्रमुत्रसाम् ॥** 'जॄ वयोहानौ' इत्यस्य गुणार्थं वचनम् । भ्रमेरादेशार्थम्, अनेकहल्मध्यार्थञ्च । त्रसेश्चानेकहल्मध्यार्थम् । **जजरतुरिति ।** पूर्ववद् गुणः ॥ १२४ ॥

### पदमञ्जरी

ननु च नात्रापूर्ववर्णग्रहणमस्ति, प्रकृतश्च मात्रिकस्तपरकरणात्, तत्कथमवर्णस्थान एत्वं भवतीत्युक्तम् ? अत आह—**अत इत्येतदिति ।** 'अतः' इति तावत्स्वरितत्वादुपतिष्ठते, तत्तपरत्वकृतस्य कालविशेषस्य मात्रात्मकस्यासम्भवात् तमपास्यावर्णमात्र प्रतिपादयति । **अथ वेति ।** पूर्वत्र त्वत इति विरोध्युपादानादात् इत्यस्यानभिसम्बन्धः । **एकहल्मध्ये चेति ।** अत्र 'एकहल्मध्ये' इत्येव, 'अतः', 'आतः' इति च द्वयमपि नानुवृत्तम् । एकहल्मध्य इत्यनुवृत्तेर्यत्तच्छब्दाध्याहारेण स्थानी लभ्यत इत्यर्थः ॥ १२३ ॥ १२४ ॥

### भावबोधिनी

इस सूत्र में 'अतः' यह उपस्थित होकर तपरत्व मान कर होने वाले कालविशेष = एकमात्रिक ह्रस्व को असंभव होने से हटाकर अवर्णमात्र का प्रतिपादन करता है । [ 'अत एकहल्मध्ये' इससे 'अतः' यह तपर एकमात्रिक अकार यहाँ अनुवृत्त होता है । किन्तु "राध्" में तो एकमात्रिक है ही नहीं, द्विमात्रिक है, तब यह कैसे लागू होगा ? अतः 'अत्' यहाँ अवर्णमात्र का प्रतिपादक समझना चाहिए । इस प्रकार 'राध्' के आ का भी एत्व हो जाता है । ]

अथवा "श्नाभ्यस्तयोरातः" इससे 'आतः' की अनुवृत्ति होती है, ऐसी व्याख्या करनी चाहिए ।

अथवा एकहल्मध्य में जो है वही स्थानी होगा । [ अतः "अतः" या 'आतः' इनमें से किसी की अनुवृत्ति नहीं होती है । अ अथवा आ जो भी है, उसी का एत्व होता है । ] ॥ १२३ ॥

जॄ, भ्रम्, त्रस्—इनके अङ्गों के अकार के स्थान पर विकल्प से एकार आदेश और अभ्यासलोप कित् ङित् लिट् परे तथा सेट् थल् के परे होता है । उदा० जेरतुः, जेरुः । जेरिथ । जजरतुः, जजरुः, जजरिथ । [ जॄ + लिट् = तस् = अतुस्, द्वित्व, ऋ का अत्व, रपरत्व हलादिशेष जजॄ + अतुस् "ऋच्छत्यॄताम्" सूत्र से ऋ का गुण रपर ज जर् +

**३१२६. फणां च सप्तानाम् ॥ १२५ ॥ (२३५४)**

**फणादीनां सप्तानां धातूनामवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः, थलि च सेटि ।**

**(१) फेणतुः, फेणुः, फेणिथ । पफणतुः, पफणुः, पफणिथ ।**
**(२) रेजतुः, रेजुः, रेजिथ । रराजतुः, रराजुः, रराजिथ ।**
**(३) भ्रेजे, भ्रेजाते, भ्रेजिरे । बभ्राजे, बभ्राजाते, बभ्राजिरे ।**
**(४) भ्रेशे, भ्रेशाते, भ्रेशिरे । बभ्राशे, बभ्राशाते, बभ्राशिरे ।**
**(५) भ्लेशे, भ्लेशाते, भ्लेशिरे । बभ्लाशे, बभ्लाशाते, बभ्लाशिरे ।**
**(६) स्येमतुः, स्येमुः, स्येमिथ । सस्यमतुः, सस्यमुः, सस्यमिथ ।**

**न्यासः**

**फणाञ्च सप्तानाम् ॥** बहुवचननिर्देशादाद्यर्थो गम्यते । अत आह—**फणादीनामित्यादि ।** 'फण गतौ', 'राजृ दीप्तौ', 'टुभ्राजृ टुभ्राशृ टुम्लाशृ दीप्तौ' । 'स्यमु स्वन ध्वन शब्दे'—इत्येते ध्वनवर्जिताः फणादयः सप्त ।

**पदमञ्जरी**

**फणां च सप्तानाम् ॥** बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह—**फणादीनामिति ।** 'फण गतौ' (धा० पा० ८२१), 'राजृ दीप्तौ' (धा० पा० ८२२), 'टुभ्राशृ टुभ्राजृ टुभ्लाशृ दीप्तौ' (धा० पा० ८२४, ८२३, ८२५),

**भावबोधिनी**

अतुस्, एत्व तथा अभ्यासलोप विकल्प से—जेर् अतुः । पक्ष में जजरतुः । ] भ्रेमतुः, भ्रेमुः, भ्रेमिथ । बभ्रमतुः, बभ्रमुः, बभ्रमिथ । [भ्रम् + लिट् = तस् = अतुस् द्वित्व, हलादिशेष, जश्त्व बभ्रम् अतुस्, एत्व अभ्यासलोप—भ्रेमतुः । पक्ष में बभ्रमतुः । इसी प्रकार अन्यों में भी समझना चाहिए ।] त्रेसतुः, त्रेसुः त्रेसिथ । तत्रसतुः, तत्रसुः, तत्रसिथ । [ त्रस् + लिट्= तस् = अतुस् द्वित्व अभ्यासकार्य त त्रस् + अतुस्, एत्व, अभ्यासलोप त्रेस् + अतुः । पक्ष में तत्रसतुः । इसी प्रकार अन्य रूपों में भी विकल्प समझना चाहिए । ] ॥ १२४ ॥

फण आदि सात धातुओं के अवर्ण के स्थान पर विकल्प से एकार आदेश और अभ्यासलोप कित् ङित् लिट् परे तथा सेट् थल् परे रहते होता है ।

(१) फण—फेणतुः, फेणुः, फेणिथ । पफणतुः, पफणुः, पफणिथ । [ फण् + लिट् = तस्=अतुस्, द्वित्व अभ्यासकार्य, चर्त्व—पफण् अतुस् में अ का एत्व, अभ्यासलोप करने पर फेण् अतुस् = फेणतुः आदि होते हैं । पक्ष में पफणतुः आदि रूप होते हैं । ]

(२) राज्—रेजतुः, रेजुः, रेजिथ । रराजतुः, रराजुः, रेजिथ । [ राज् + लिट् = तस् = अतुस् द्वित्वादिकार्य, एत्व अभ्यासलोप रेजतुः । पक्ष में रराजतुः । ]

(३) भ्राज्—भ्रेजे, भ्रेजाते, भ्रेजिरे । बभ्राजे, बभ्राजाते, बभ्राजिरे । [ भ्राज् + लिट् = त = एश्, द्वित्व, अभ्यासकार्य जश्व ब भ्राज् + ए, एत्व, अभ्यासलोप—भ्रेजे । पक्ष में बभ्राजे । ]

(४) भ्राश्—भ्रेशे, भ्रेशाते, भ्रेशिरे । बभ्राशे, बभ्राशाते, बभ्राशिरे । [ भ्राश + लिट् = त = एश्, द्वित्व, अभ्यासकार्य, ब भ्राश् + ए, एत्व, अभ्यासलोप—भ्रेश् ऐ । पक्ष में बभ्राशे । ]

(५) भ्राश—भ्लेशे, भ्लेशाते, भ्लेशिरे । बभ्लाशे, बभ्लाशाते, बभ्लाशिरे । [भ्लाश् + लिट् = त = एश् शेष पूर्ववत् प्रक्रिया । ]

(६) स्यम्—स्येमतुः, स्येमुः स्येमिथ । सस्यमतुः, सस्यमुः, सस्यमिथ । [ स्यम् + लिट् = तस् = अतुस्, द्वित्वादिकार्य पूर्ववत् । ]

(७) स्वेनतुः, स्वेनुः, स्वेनिथ। सस्वनतुः, सस्वनुः, सस्वनिथ।
समानामिति किम्? दध्वनतुः, दध्वनुः, दध्वनिथ॥

**३१२७. न शसददवादिगुणानाम्॥ १२६॥ (२२६३)**

**शस, दद—इत्येतयोर्वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च। विशशसतुः, विशशसुः, विशशसिथ। दददे, दददाते, ददिरे।**

**वादीनाम्—ववमतुः, ववमुः, ववमिथ। गुणस्य—विशशरतुः, विशशरुः, विशशरिथ। लुलविथ,**

**न्यासः**

तत्राद्यस्य नित्ये प्राप्ते विकल्पार्थं वचनम्, इतरेषामप्राप्ते। तत्र राजृप्रभृतीनां चतुर्णामवर्णस्यैत्वस्य प्रतिपत्तये 'राधो हिंसायाम्' इत्यत्र 'अत इत्येतदिहोपस्थितम्' इत्यादिना यदुक्तं तद् यथासम्भवं वेदितव्यम्॥ १२५॥

**न शसददवादिगुणानाम्॥** अत्र यदि गुण इत्यनेन यस्यैत्वं विहितं स एवाकार उच्यते, ततोऽयमर्थः—अकारस्य गुणस्य न भवतीति। तथा चैत्वविधिरनवकाश एव स्यादित्येतद् बुद्धौ कृत्वा नात्र गुणेनाकार एवोच्यते, अपि तु गुणशब्दाभिनिर्वृत्त इति दर्शयन्नाह—**गुण इत्येवमभिनिर्वृत्तस्य चेत्यादि।** गुणशब्दमुच्चार्य्य योऽभिनिर्वृत्तः शब्दस्तस्य सम्बन्धी योऽकारस्तस्य स्थान एत्वं न भवतीत्यर्थः। तत्सम्बन्धित्वं पुनस्तस्य तत्स्थानिकत्वात् तदवयवत्वाच्च यथायोगं वेदितव्यम्। तदेवं गुणशब्दाभिनिर्वृत्तस्य सम्बन्ध्यकारः प्रतिषेधस्य निमित्तम्, इतरस्तु विधेरित्येव विधिप्रतिषेधयोर्विषयविभागः। **विशशसतुरिति।** 'शसु हिंसायाम्'। **ददद इति।** 'दद दाने'।

**ववमतुरिति।** 'टुवम उद्गिरणे'। **विशशरतुरिति।** 'शॄ हिंसायाम्'। गुणशब्दाभिनिर्वृत्तस्येत्यादिना

**पदमञ्जरी**

'स्यमुस्वनध्वन शब्दे' (धा० पा० ८२६, २७, २८), अन्त्यवर्जं फणादयः सप्त। अत्र राजप्रभृतीनामप्येत्वमवर्णस्य भवति। उक्तोऽत्र न्यायः 'राधो हिंसायाम्' (पा० सू० ६.४.१२३) इत्यत्र॥ १२५॥

**न शसददवादिगुणानाम्॥** अत्र वस्तुतो यो गुणसंज्ञकोऽकारस्तत्रैव यदि प्रतिषेधस्तर्हि विधिप्रतिषेधयोरेकविषयत्वाद्विकल्पः स्यात्, ततश्च 'वा जॄभ्रमुत्रसाम्' इति यद्वाग्रहणं तदेवादितः पाठ्यं स्यात्, तस्माद् गुणग्रहणेन तच्छब्दरुषितस्य तद्भावितस्य ग्रहणमित्याह—**गुण इत्येवमभिनिर्वृत्तस्य चेति।** तस्य सम्बन्धी योऽकार इत्यर्थः। सम्बन्धित्वमपि तस्य तत्स्थानिकत्वात्तदवयवत्वाच्च यथायोगं वेदितव्यम्। **शशसतुरिति।** 'शसु हिंसायाम्' (धा० पा० ७२७), 'दद दाने' (धा० पा० १७), अनुदात्तेत्, 'टुवम उद्गिरणे' (धा० पा० ८४९)। **विशशरतुरिति।** 'शॄ हिंसायाम्' (धा० पा० १४८८), 'ऋच्छत्यॄताम्' इति गुणः।

**भावबोधिनी**

(७) स्वन्—स्वेनतुः, स्वेनुः, स्वेनिथ। सस्वनतुः, सस्वनुः, सस्वनिथ। [ स्वन् + लिट् = तस् = अतुस्, द्वित्वादि पूर्ववत्। ]

सात का ही—इसका क्या फल है? दध्वनतुः दध्वनुः। दध्वनिथ। [ इसमें एत्वाभ्यासलोप नहीं होता है। ध्वन् + लिट् = तस् = अतुस् द्वित्व अभ्यास जश्त्वादि होता है। ] ॥ १२५॥

शस, दद—इन दोनों के और वकारादि धातुओं के तथा 'गुण' इस शब्द से किया गया जो अकार उसके स्थान पर—एकार आदेश तथा अभ्यासलोप नहीं होता है। उदा० विशशसतुः, विशशसुः, विशशसिथ। [ विपूर्वक शस् + लिट् = तस् = अतुस् द्वित्वादि के बाद प्राप्त एत्व अभ्यासलोप का निषेध होता है—वि श शस् अतुस् = विशशसतुः ] ददे, दददाते, ददिरे। [ दद + लिट् = त = एश्, द्वित्व, अभ्यासकार्य ददद् ए, एत्वाभ्यासलोप का निषेध। ]

वकारादि के उदा० ववमतुः, ववमुः, ववमिथ। [वम + लिट् = तस् = अतुस्, द्वित्व, अभ्यासकार्य ववम् +

**पुपविथ।**

**गुणशब्दाभिनिर्वृत्तस्यार्शब्दस्यौकारस्य चायमकार इति एत्वं प्रतिषिध्यते ॥**

**३१२८. अर्वणस्त्रसावनञः ॥ १२७ ॥ (३६४)**

**अर्वन्नित्येतस्याङ्गस्य 'तृ' इत्ययमादेशो भवति, सुश्चेत्ततः परो न भवति, स च नञ उत्तरो न भवति। अर्वन्तौ, अर्वन्तः। अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वता, अर्वद्भ्याम्, अर्वद्भिः। अर्वती। आर्वतम्।**

**न्यासः**

यदुक्तं तस्यार्थमुदाहरणे दर्शयति। विशशरतुरित्यत्रारित्ययं शब्दो गुणशब्दाभिनिर्वृत्तः। तत्सम्बन्ध्यकारस्य तदेकदेशत्वात्। **लुलविथेति।** अत्राप्योकारो गुणशब्दाभिनिर्वृत्तः; तत्सम्बन्ध्यकारस्य तत्स्थानिकत्वात्। ननु विशशरतुरित्यत्राकारमात्रं गुणशब्देनाभिनिर्वृत्तम्, नाऽर्शब्दः? नैतदस्ति; रेफस्य गुणभक्तत्वात्। तथा च भाष्यम्—'अर्भवति गुणो भवति, आर्भवति वृद्धिर्भवति—रेफसहितो गुणवृद्धिसंज्ञो भवति' इति ॥ १२६ ॥

**अर्वणस्त्रसावनञः ॥ 'तृ' इत्ययमादेशो भवतीति।** 'नानुबन्धकृतमनेकाल्त्वम्' इत्यन्तस्य भवति; ऋकारस्यानुबन्धत्वात्। उकारस्यानुबन्धत्वात् प्रथमैकवचनं सुशब्दो गृह्यते, तेन सप्तमीबहुवचने भवत्येव—अर्वस्त्विति। स च नञ उत्तरो न भवतीति चेदिति यत् प्रकृतं तदिहापि सम्बध्यते। **अर्वन्ताविति।** ऋकारस्योगित्कार्यार्थत्वाद् 'उगिदचाम्' इति नुम्। **अर्वतीति।** 'उगितश्च' इति ङीप्। **आर्वतमिति।** अपत्यार्थविवक्षा-

**पदमञ्जरी**

यदुक्तम्—'गुण इत्येवमभिनिर्वृत्तस्य' इति, तदुदाहरणं दर्शयति—**गुणशब्दाभिनिर्वृत्तस्येति।** 'उरण् रपरः' इत्यत्र 'सिद्धं तु प्रसङ्गे रपरत्वात्' (का० वा० ३५४) इति वचनाद् गुणो भवन्नेव रेफशिरस्कोऽभिनिर्वर्त्तते, एवमभिनिर्वृत्तस्यार्शब्दस्यावयवोऽकारः। लुलविथेत्यत्र तु अभिनिर्वृत्तस्योकारस्य स्थानेऽवादेशस्तदवयवोऽकारः। क्वचित्पठ्यते—**गुणशब्देनात्र शसादीनां ग्रहणसामर्थ्यात्तद्भावितस्य ग्रहणमिति।** अकारमात्रस्य हि ग्रहणे शशिदद्योर्वकारादीनां च ग्रहणमनर्थकं स्यादिति किल तस्यार्थः ॥ १२६ ॥

**अर्वणस्त्रसावनञः ॥** ऋकार उगित्कार्यार्थः, तेन सर्वनामस्थाने नुम् भवति। **स च नञ उत्तरो न भवतीति।** चेदित्यनुषङ्गः। **अर्वतीति** उगित्त्वान्नान्तत्वाद्वा ङीप्। **आर्वतमिति।** तद्धितेऽपि भवति, असाविति

**भावबोधिनी**

अतुस्, प्राप्त एत्व अभ्यासलोप का निषेध विसर्ग—ववमतुः। ] गुण का उदा० विशशरतुः विशशरुः विशशरिथ। [ शॄ धातु विपूर्वक से लिट् = तस् = अतुस्, द्वित्व ॠ का अ, रपर हलादि शेष—विशशॄ + अतुस्, "ॠच्छत्यॄताम्" से ॠ का गुण, रपर विशशर् + अतुस्, प्राप्त एत्वाभ्यासलोप का निषेध ] लुलविथ, पुपविथ। [ लु + लिट् = सिप् = थ, पु + लिट् = सिप् = थ, इट, द्वित्वादि के बाद गुण, अवादेश लुलविथ, पुपविथ। ]

गुणशब्द से अभिनिर्वृत्त (आदेश हुए) अर् शब्द तथा ओकार का यह अ—उसके एत्व का प्रतिषेध होता है। [ गुण—इस प्रकार का कह कर अर् का जो अ है और गुण शब्द कह कर ओ = अव् का जो अ है, उसके स्थान पर एत्व का प्रतिषेध होता है। इसलिये विशशरतुः तथा लुलविथ में अर् तथा अव् के अ का एत्व प्राप्त होता है। उसका निषेध किया जाता है। ] ॥ १२६ ॥

'अर्वन्' इस अङ्ग का 'तृ' यह आदेश होता है यदि इससे परे 'सु' प्रत्यय न हो और यह अर्वन् शब्द नञ् से परे न हो। उदा० अर्वन्तौम्, अर्वन्तः। अर्वन्त, अर्वन्तौ, अर्वतः। [ अर्वन् + औ, न् के स्थान पर तृ आदेश अर्वत् + औ, उकार की इत्संज्ञा लोप होने से उगित् हो जाने के कारण सर्वनामस्थान प्रत्यय परे रहते 'उगिदचां सर्वनामस्थाने' सूत्र से नुम् = न् आगम होता है। अर्वन्त् औ आदि रूप बनते हैं। शस् के आगे नुम् न होने से अर्वत् + शस् = अस् स् का रुत्व, विसर्ग—अर्वतः आदि रूप बनते हैं। यही लिख रहे हैं— ] अर्वतः। अर्वता, अर्वद्भ्याम्, अर्वद्भिः। [ स्त्रीलिङ्ग में उगित् होने से ङीप्—] अर्वती। आर्वतम्। [अर्वत् + अण्, अपत्यार्थकी विवक्षा में अण् होने पर आदिवृद्धि—आर्वतम्।]

असाविति किम् ? अर्वा । अनञ इति किम् ? अनर्वाणौ, अनर्वाणः । 'अनर्वाणं वृषभं मन्द्रजिह्वम्' (ऋ० १.१९०.१) ॥

## ३१२९. मघवा बहुलम् ॥ १२८ ॥ (३६०)

'मघवन्' इत्येतस्याङ्गस्य बहुलम् 'तृ' इत्ययमादेशो भवति । मघवान्, मघवन्तौ, मघवन्तः । मघवन्तम्, मघवन्तौ, मघवतः । मघवता । मघवती । माघवतम् ।

न च भवति—मघवा, मघवानौ, मघवानः । मघवानम्, मघवानौ, मघोनः । मघोना, मघवभ्याम्, मघवभिः । 'मघोनी' । (ऋ० १.४८.८) माघवनम् ॥

### न्यासः

यामण् । ननु च नञिवयुक्तन्यायेन सादृश्यात् सोरन्यत्र विभक्तावेव भवितव्यम् ? नैतत्; असाविति प्रसज्यप्रतिषेधोऽयम् । अत एव **वृत्तिकृतोक्तम्—सुश्चेत् ततः परो न भवतीति** । अन्यथा सोरन्यो यः सुप् स चेत् ततः परो भवतीति ब्रूयात् । अथापि पर्युदासः ? एवमप्यदोषः; अनित्यत्वान्नञिवयुक्तपरिभाषायाः । अनित्यत्वं तु तस्याः 'ओषधेश्च विभक्तावप्रथमायाम्' इत्यत्र विभक्तिग्रहणाद् विज्ञायते । यदि हि सा नित्या स्यात्, प्रथमापर्युदासेन विभक्तावेव भविष्यतीति विभक्तिग्रहणं न कुर्यात् । कुर्वन्नपि तज्ज्ञापयति—अनित्येयं परिभाषेति ॥ १२७ ॥

**मघवा बहुलम्** ॥ मघवेति सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमा । **मघोन इति** । 'श्वयुवमघोनाम्' इति सम्प्रसारणम्, परपूर्वत्वम्, 'आद्गुणः' । ननु च मघोऽस्यातीति मत्वर्थविवक्षायाम् 'छन्दसीवनिपौ वक्तव्यौ' इति वनिप्प्रत्ययान्तोऽयं मघवन्शब्दः, तत्र वनिपः सम्प्रसारणे भसंज्ञायां सत्याम् 'यस्येति च' इति लोपेन भवितव्यम्, ततश्च मघुन इत्यनिष्टं रूपं स्यात् ? नैतत्; अन्यदेव हीदमव्युत्पन्नं प्रातिपदिकम्, तथा हि भाषायामपि तस्य प्रयोगो दृश्यते । अथापि वनिप्प्रत्ययान्तः स्याद् ? एवमपि बहुलवचनाद् 'यस्येति' इति लोपो न भविष्यतीत्यदोषः । **मघोनीति** । 'ऋन्नेभ्यो ङीप्' । **माघवनमिति** । पूर्ववदण् । 'अन्' इति प्रकृतिवद्भावः ॥ १२८ ॥

### पदमञ्जरी

प्रसज्यप्रतिषेधो न पर्युदासः, तेन नञिवयुक्तन्यायाभावाद्विभक्तेरेव ग्रहणं न भवति, तथा च—सुश्चेत्परो न भवतीति प्रथमैकवचनस्य चात्र ग्रहणम्, न सप्तमीबहुवचनस्य; व्याख्यानात् ॥ १२७ ॥

**मघवा बहुलम्** ॥ **मघवेति** । षष्ठ्यर्थे प्रथमा । **मघोन इति** । 'श्वयुवमघोनाम्' इति सम्प्रसारणं पूर्वत्वम् 'आद्गुणः' । ननु च मघमस्यास्तीति मघवान्, मघमिति धननाम, 'छन्दसीवनिपौ वक्तव्यौ' (वा० ५८२) इति वनिप्, सम्प्रसारणे कृते पूर्वस्य भसंज्ञायां यस्येतिलोपप्रसङ्गः । व्याश्रयत्वादसिद्धत्वमपि नाशङ्कनीयम्; शसि सम्प्रसारणे यस्येतिलोपः । य एवं तर्ह्यन्यदेवेदमव्युत्पन्नं भविष्यति, तथा चैतस्य भाषायां प्रयोग उपपद्यते । यथा तु **भाष्यम्**, तथा न केवलमस्यैव अर्वणोऽपि भाषायामसाधुः प्रयोगः । आह हि—

### भावबोधिनी

असौ = सु परे न होने पर—इसका क्या फल है ? अर्वा । [ अर्वन्+सु यहाँ तृ न होने से नकारान्त की उपधा का दीर्घ, सुलोप, न् लोप ] नञ् से परे न हो—इसका क्या फल है ? अनर्वाणौ, अनर्वाणः । [ न अर्वा—इस नञर्थ में समास है । द्विवचनादि में 'तृ' नहीं होता है । उपधादीर्घ होता है । ] अनर्वाणं वृषभं मन्द्रजिह्वम् । [ यहाँ 'तृ' नहीं होता है । ] ॥ १२७ ॥

'मघवन्' इस अङ्ग का बहुलरूप से 'तृ' यह आदेश होता है । उदा० मघवान् मघवन्तौ, मघवन्तः । [मघवन्+सु में तृ, ऋ की इत्संज्ञा, लोप, उगित होने से नुम्—मघवन्त् + सु, उपधादीर्घ, सुलोप, संयोगान्त त् लोप—मघवा । द्विवचन में मघवन्+औ, तृ आदेश, नुम्—मघवन्तौ । यह नुम् सर्वनामस्थान परे ही होता है । अतः शस् से आगे नहीं होता है—मघवत् + शस् = अस्, स् का रुत्व विसर्ग ] मघवतः । मघवता । [ स्त्रीलिङ्ग में ङीप् होने से ] मघवती । [ अपत्यार्थ विवक्षा में अण् मघवत् +अण्, आदिवृद्धि— ] माघवतम् ।

**३१३०. भस्य ॥ १२९ ॥ (२३३)**

**'भस्य' इत्ययमधिकार आ अध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामो भस्येत्येवं तद्वेदितव्यम् । वक्ष्यति—"'पादः पत्' (६.४.१३०) । द्विपदः पश्य । द्विपदा कृतम् । भस्येति किम् ? द्विपादौ । द्विपादः" ॥**

**३१३१. पादः पत् ॥ १३० ॥ (१४४)**

**'पादः' इति पादशब्दो लुप्ताकारो गृह्यते, तदन्तस्याङ्गस्य भस्य 'पत्' इत्ययमादेशो भवति । स च**

**न्यास**

**भस्य** ॥ १२९ ॥

**पादः पत् ॥ पाद इति पादशब्दो लुप्ताकारो गृह्यत इति ।** अथ पादयतेः क्विबन्तस्य यः पाच्छदः सम्पद्यते स कस्मान्न गृह्यते ? तस्यासम्भवात् । पादयतेर्हि क्विब् 'अन्येभ्योऽपि दृश्यते' इत्यनेन स्यात् ? स च 'दृश्यते' इति वचनान्न भवति । यत्र लोके क्विबन्तप्रयोगो दृश्यते तत्र यथा स्यादित्येवमर्थं हि तत्र 'दृश्यते' इत्युक्तम्, न च पादयतेः क्विबन्तस्य प्रयोगो दृश्यते ? पादशब्दस्य समास एवाकारो लुप्यते, तेन सामर्थ्यात् तदन्तस्याङ्गस्य कार्यं विज्ञायत इत्याह—**तदन्तस्याङ्गस्येत्यादि** । यदि तर्हि पाच्छब्दान्तस्याङ्गस्य

**पदमञ्जरी**

'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्' ॥ (का० वा०)

ऋधातोर्वनिपि गुणे च कृते अर्वन्निति रूपम् । तस्माद्विचि मतुपि अर्वन्तावित्यादि सिद्धं भवति, वनिप्यर्वणामित्यादि, मघशब्दादपि प्रत्ययद्वये सिद्धं भवति, नार्थः सूत्रद्वयेनेत्यर्थः । मघोन इत्यादौ तु यस्येति-लोपाभावश्छान्दसत्वादेव । **माघवनमिति** । 'अन्' इति प्रकृतिभावः ॥ १२८ । १२९ ॥

**पादः पत् ॥ पादिति पादशब्दो लुप्ताकारो गृह्यत इति ।** पादयतेः क्विबन्तस्याप्यत्र ग्रहणमिति 'येन विधिस्तदन्तस्य' इत्यत्र **भाष्यकारेणोक्तम्** । तस्मादपिशब्दाध्याहारेणायं ग्रन्थो योज्यः । लुप्ताकारः पादशब्दोऽपि गृह्यते, पादयतिः क्विबन्तोऽपि । 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' (पु० प० वृ० ८५)

**भावबोधिनी**

और 'तृ' यह नहीं भी होता है—मघवा, मघवानौ, मघवानः । [ मघवन् + सु उपधादीर्घ आदि होता है सर्वनामस्थान परे रहते । अतः शसादि में दीर्घ नहीं होता है । ] मघवानम्, मघवानौ । मघोनः । मघोना, मघवभ्याम्, मघवभिः । [ मघवन् + शस् = अस् 'श्वयुवमघोनामतद्धिते' सूत्र से व् का सम्प्रसारण, अ का पूर्वरूप मघ उ न् + अस्, "आद्गुणः" से गुण—मघोनस्, स का रुत्व विसर्ग—मघोनः । अजादि प्रत्ययों में सम्प्रसारण होता है । ] मघोनी । [मघवन् + ङीप् = ई यहाँ भी पूर्ववत् सम्प्रसारण आदि होता है । ] माघवनम् । [मघवन् + अण् आदिवृद्धि करने पर रूप बनता है । ] ॥ १२८ ॥

'भस्य' यह अधिकार अध्याय की समाप्ति तक है । इसके आगे जिन्हें कहा जायगा 'भस्य' [ भ के स्थान पर होते हैं ]—ऐसा उन्हें समझना चाहिए । आगे कहा जायगा—"पादः पत्" (६।४।१३०) [ पाद् का पद् आदेश होता है । जिस जिसकी भ संज्ञा होती है उस उस पाद का 'पत्' आदेश होता है । ] उदा॰ द्विपदः पश्य । द्विपदा कृतम् । [ द्वौ पादौ अस्य—इस बहुव्रीहि में विभक्तिलोप करने पर—'द्विपाद' के अकार का लोप "संख्यासुपूर्वस्य" सूत्र से किया जाता है—द्विपाद् + शस् = अस्, भसंज्ञा होने से पाद् का पद् आदेश—द्विपदस्, विसर्ग ] भ का—इसका क्या फल है ? द्विपादौ । द्विपादः । [ प्रथमा द्विवचन, बहुवचन में पाद का अलोप होने से ये रूप होते हैं । भसंज्ञा न होने से 'पत्' नहीं होता है ] ॥ १२९ ॥

"पादः' यह लुप्त अकार वाले 'पाद्' शब्द का ग्रहण है, तदन्त अङ्ग के भ का 'पत्' यह आदेश होता है । और यह आदेश 'निर्दिश्यमान का ही आदेश होता है । इस परिभाषा से 'पाद्' का ही 'पत्' होता है, पाद्शब्दान्त सम्पूर्ण समुदाय

'निर्दिश्यमानस्यादेशा भवन्ति' (व्या० प० १०६) इति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य। द्विपदः पश्य। द्विपदा। द्विपदे। द्विपदिकां ददाति। त्रिपदिकां ददाति। वैयाघ्रपद्यः॥

**३१३२. वसोः सम्प्रसारणम् ॥ १३१ ॥ (४३५)**

**वस्वन्तस्य भस्य सम्प्रसारणं भवति। विदुषः पश्य। विदुषा। विदुषे। पेचुषः पश्य। पेचुषा। पेचुषे। पपुषः पश्य।**

**न्यासः**

पदित्ययमादेशो विज्ञायेत, एवं तर्हि 'येन विधिस्तदन्तस्य' इति सर्वस्य तदन्तस्य प्राप्नोतीत्याह—**स चेत्यादि**। **द्विपद इति**। द्वौ पादावस्येति बहुव्रीहिः। 'संख्यासुपूर्वस्य' इत्यकारलोपः। **द्विपदिकामिति**। द्वौ द्वौ पादौ ददातीति 'पादशतस्य' इत्यादिना वुन्। **वैयाघ्रपद्य इति**। व्याघ्रस्येव पादावस्येति बहुव्रीहिः, 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यकारलोपः, व्याघ्रपदोऽपत्यमिति गर्गादित्वाद् यञ्॥ १३०॥

**वसोः सम्प्रसारणम्**॥ प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यं विज्ञायत इत्याह—**वस्वन्तस्येत्यादि**। **विदुष इति**। 'विदेः शतुर्वसुः'। **पेचुष इति**। 'क्वसुश्च' इति लिटः क्वसुः, 'अत एकहल्मध्ये' इत्यादिनैत्त्वाभ्यासलोपौ। **पपुष इति**। 'आतो लोप इटि च' इत्याकारलोपः। ननु चाकारलोपे कर्त्तव्ये सम्प्रसारणमसिद्धम्, तत् कुतोऽत्राकारलोपः? इत्याह—**आकारलोपे कर्त्तव्य इत्यादि**। आकारलोपः सम्प्रसारणे, तत् तु विभक्ताविति व्याश्रयत्वम्, अतो नास्त्यसिद्धत्वम्। ननु च 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति, 'तदनुबन्धकग्रहणेना-

**पदमञ्जरी**

इति वक्तव्यात्तदन्तस्याङ्गस्येत्यत्रापि तस्य चाङ्गस्येति द्रष्टव्यम्। तदन्ते तु वक्तव्यमस्तीति तस्यैव प्राधान्येनोपन्यासः, तद्दर्शयति—**स चेति**। यद्यपि पाच्छब्देन तदन्तः समुदायः प्रत्याय्यते, तथापि विशेषणत्वेन यो निर्दिश्यते तत्रापि यतः षष्ठी श्रूयते तस्यैवादेशः, न प्रतीयमानस्य समुदायस्येत्यर्थः। **द्विपद इति**। द्वौ पादावस्येति बहुव्रीहिः, 'संख्यासुपूर्वस्य' इत्यन्तलोपः। **द्विपदिकामिति**। 'पादशतस्य संख्यादेः' इति वुन्, लोपश्च। व्याघ्रपाच्छब्दो गर्गादिः॥ १३०॥

**वसोः सम्प्रसारणम्**॥ **पेचुष इति**। पचेः क्वसुः, एत्वाभ्यासलोपौ।

**भावबोधिनी**

का नहीं होता है। द्विपदः पश्य। द्विपदा। द्विपदे। द्विपदिकां ददाति। त्रिपदिकां ददाति। [द्वौ द्वौ पादौ ददाति—इस विग्रह में "पादशतस्य संख्यादेः" सूत्र से वुन् = अक प्रत्यय अ लोप, पाद् का पद् आदेश, टाप् इत्व—द्विपदिकां ददाति। त्रीन् त्रीन् पादान् ददाति इसमें—त्रिपदिकां ददाति।] वैयाघ्रपद्यः। [व्याघ्रस्येव पादौ अस्य—इसमें बहुव्रीहि करने पर व्याघ्रपाद बनाकर "पादस्य लोपोऽहस्त्यादिभ्यः" सूत्र से अलोप के बाद षष्ठी में भसंज्ञा होने से पाद् का पद्—व्याघ्रपाद्। व्याघ्रपदः अपत्यम्—यहाँ 'गर्गादिभ्यो यञ्" से यञ्, व्याघ्रपद् + य, ऐच् आगम—वैयाघ्रपद्यः।]॥ १३०॥

वसुप्रत्ययान्त भसंज्ञक का सम्प्रसारण होता है। उदा०—विदुषः पश्य। विदुषा। विदुषे। [विद्वस् + शस् = अस् भसंज्ञा होने से व् का सम्प्रसारण, अ का पूर्वरूप विदुस् + अस् प्रत्ययावयव होने से 'स्' का ष् विदुष् + अस्, स् का रुत्व, विसर्ग-विदुषः।] पेचुषः पश्य। पेचुषा। पेचुषे। [पच् + लिट् 'क्वसुश्च' सूत्र से लिट् का क्वसु = वस् आदेश, लिट् मान कर होने वाले द्वित्वादि कार्य के बाद पपच् + वस् "अत एकहल्मध्येऽनादेशादेर्लिटि" सूत्र से एत्व तथा अभ्यासलोप पेच्वस् + शस् = अस्, भसंज्ञा, सम्प्रसारण, पूर्वरूप, षत्व—पेचुष् + अस्, स् का रुत्व विसर्ग—पेचुषः। अजादि परे ही भसंज्ञा होती है।] पपुषः पश्य। [पा + लिट् = क्वसु = वस्, द्वित्वादि के बाद पपावस् + शस् में व का सम्प्रसारण, अ का पूर्वरूप, "आतो लोप इटि च" सूत्र से आ का लोप पप् उस् + अस्, षत्व-पपुषस् विसर्ग।]

आकारलोपे कर्त्तव्ये वसुसम्प्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति ।

वसुग्रहणे[1] क्वसोरपि ग्रहणमिष्यते ।

## ३१३३. वाह ऊठ् ॥ १३२ ॥ (३२९)

**'वाहः' इत्येवमन्तस्य भस्य ऊठ् इत्येतत्सम्प्रसारणं भवति । प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । दित्यौहः । दित्यौहा । दित्यौहे । 'एत्येधत्यूठ्सु' (६.१.८९) इति वृद्धिः ।**

**न्यासः**

तदनुबन्धकस्य' इति वा न क्वसोरिह ग्रहणेन भवितव्यम्, तत् कथं पपुषः, पेचुष इत्यत्र सम्प्रसारणं भवति ? इत्याह—**वसुग्रहण इत्यादि** । एतत्तु शत्रादेशस्य वसोरुकारानुबन्धकरणाद् वेदितव्यम् । उकारानुबन्धस्य ह्येतदेव फलम्—इह सामान्येन ग्रहणं यथा स्यात् । ननु चोगित्वार्थं तत् स्यात् ? नैतत्; उगित्कार्यस्य स्थानिवद्भावेनैव सिद्धत्वात् ॥ १३१ ॥

**वाह ऊठ्** ॥ **वाह इति** । वहिरयं ण्विप्रत्ययान्तः, स चास्माद् सोपपदादेव ण्विर्विहितः । तेन सामर्थ्यात् तदन्तविधिर्विज्ञायत इत्याह—**वाह इत्येवमन्तस्येत्यादि । ऊडित्येतदिति** । ठिदयमूकारः । 'एत्येधत्यूठ्सु' इति विशेषणार्थः । **सम्प्रसारणं भवतीति** । सम्प्रसारणमित्येष विशेषः कुतो लभ्यते ? पूर्वसूत्रात् सम्प्रसारणमित्यस्यानुवृत्तेः । किमर्थं पुनः सम्प्रसारणमनुवर्त्यते ? स्थानिनियमार्थम् । यद्येतन्नानुवर्त्यत, 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात् । सम्प्रसारणमित्यस्मिंस्त्वनुवर्त्तमाने तेनाभिसम्बध्यमानेनोठा यण एव स्थाने 'इग्यणः सम्प्रसारणम्' इति भवितव्यम् । **प्रष्ठौह इति** । प्रष्ठं वहतीति 'भजो ण्विः' इत्यनुवर्त्तमाने 'वहश्च' इति ण्विः ।

**पदमञ्जरी**

कथं पुनर्द्व्यनुबन्धकस्य क्वसोर्ग्रहणम् ? इत्याह—**वसुग्रहण इति** । एतच्च शत्रादेशस्य वसोरुकारानुबन्धकरणाल्लभ्यते, तस्य ह्येतदेव प्रयोजनम्—इह सामान्यग्रहणं यथा स्यादिति; उगित्कार्यस्य स्थानिवद्भावेनैव सिद्धत्वात् ॥ १३१ ॥

**वाह ऊठ्** ॥ **वाह इति** वहेर्ण्विप्रत्ययान्तस्य ग्रहणम्, ण्विश्च सोपपदाद्विहित इति सामर्थ्यादत्र तदन्तविधिरित्याह—**वाह इत्येवमन्तस्येति । सम्प्रसारणं भवतीति** । सम्प्रसारणग्रहणानुवृत्तिं दर्शयति । तेन वकारस्य स्थाने भवति, अन्यथान्त्यस्य स्यात् । उदाहरणेषु 'छन्दसि सहः', 'वहश्च' इति ण्विः ।

**भावबोधिनी**

आकार का लोप करने के प्रसङ्ग में 'वसु' का सम्प्रसारण व्याश्रय होने के कारण असिद्ध नहीं होता है । [ आकार का लोप अजादि = उस् ( = वस्) परे होता है और वस् का सम्प्रसारण अजादि विभक्ति प्रत्यय परे होता है । दोनों के निमित्त अलग-अलग हैं । अतः लोप की कर्तव्यता में पहले किया गया 'व्' का सम्प्रसारण 'उ' असिद्ध नहीं होता है, सिद्ध ही रहता है । अतः आलोप में बाधा नहीं है । ]

* वसु के ग्रहण में क्वसु का भी ग्रहण इष्ट है । * [ इसीलिये विद्वस् यह वसु का और पेचिवस्—यह क्वसु का उदाहरण दिया गया है । ] ॥ १३१ ॥

वाह्—यह जिसके अन्त में है ऐसे भसंज्ञक का 'ऊठ्' यह सम्प्रसारण होता है । उदा० प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । [ प्रष्ठं वहति—इस अर्थ में 'ण्वि' प्रत्यय और उसका सर्वापहारी लोप करने के बाद उपपद समास—प्रष्ठवाह् + शस् = अस्, भसंज्ञा करने के बाद 'व्' का सम्प्रसारण ऊठ् = ऊ, आ का पूर्वरूप—प्रष्ठ + ऊह् + अस्, 'एत्येधत्यूठ्सु' सूत्र से वृद्धि—प्रष्ठौहस्, स् का रुत्व-विसर्ग—प्रष्ठौहः । अन्य अजादि प्रत्ययों में भी भसंज्ञा के कारण ऊठ् तथा वृद्धि होती है । ] दित्यौहः । दित्यौहा । दित्यौहे । [ दित्यं वहति—इस अर्थ में ण्वि प्रत्यय और सर्वापहारी लोप आदि सभी

---

१. 'वसुसम्प्रसारणे'—इति मुद्रितः पाठः ।

**अथ किमर्थमूठ् क्रियते, सम्प्रसारण एव कृते गुणे च 'वृद्धिरेचि' (६.१.८८) इति वृद्धौ सत्यां सिद्धं रूपं भवति—प्रष्ठौह इति, अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते? ज्ञापनार्थम्। एतज्ज्ञापयति—**

**न्यासः**

**अथ** किमर्थमूठ् क्रियते, न 'वाहः' इत्येतावदेव सूत्रं कर्त्तव्यमित्यभिप्रायः। **सम्प्रसारण एव कृत इति।** पूर्वसूत्रात् सम्प्रसारणग्रहणानुवृत्तेः। **गुणे चेति।** कृत इति सम्बन्धः। गुणस्तु 'पुगन्तलघूपधस्य च' इति लुप्तेऽपि ण्वौ प्रत्ययलक्षणेन। ननु च 'अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य' इति सम्प्रसारणे कृते गुणेन न भवितव्यम्? 'निष्ठितस्य' इति वचनाददोषः। निष्ठा हि शब्दस्य परिसमाप्तिः, सा च तदा भवति यदा शब्दस्य प्रयोगार्हता भवति। न च यावद् गुणादिसंस्कारो न क्रियते तावदस्य प्रयोगार्हता भवति। तस्मात् कृतेऽपि सम्प्रसारणे भवत्येव गुणः, तत्रैतत् स्यात्। यद्यूड् न क्रियते, तदा शालिं वहति, दितिं वहति शाल्यूहो दित्यूह इत्येवमाद्यनकारान्ते शालिदितिशब्द उपपदे वहेर्ण्विप्रत्यये विहिते सति न सिध्यतीत्यत आह— **अनकारान्ते चोपपद इत्यादि।** 'वहश्च' इत्यनेन 'छन्दसि सहः' इत्यतोऽत्र छन्दोग्रहणानुवृत्तेश्छन्दस्येव ण्विर्विधीयते, दृष्टार्थविधिश्छन्दसि, अकारान्त एव चोपपदे प्रष्ठादौ वहेश्छन्दसि ण्विर्दृश्यते न त्वकारान्ते शाल्यादौ। कथं पुनरनेन बहिरङ्गपरिभाषा ज्ञाप्यते? इत्याह—**तस्यां हीत्यादि।** बहिरङ्गत्वं पुनः सम्प्रसारणस्य बाह्याजादिप्रत्ययनिमित्तां भसंज्ञामाश्रित्य प्रवृत्तत्वात्। गुणस्य त्वन्तरङ्गत्वम्; अबाह्यप्रत्यये

**पदमञ्जरी**

**अथेत्यादि।** वाह इत्येतावता प्रकृतं सम्प्रसारणमेव विधेयमिति प्रश्नः। का रूपसिद्धिः? इत्याह— **सम्प्रसारणे कृत इति। गुणे चेति।** कृत इत्यनुषङ्गः। ण्विप्रत्ययमपेक्ष्य प्रत्ययलक्षणेन गुणः। नन्वेवं शालीन्वहतीत्यादावनकारान्त उपपदे शाल्यूह इति न सिध्यति? तत्राह—**अनकारान्ते चेति।** चकारादकारान्त उपसर्गेऽपीति द्रष्टव्यम्। तेन प्रौह इत्यादावेङि पररूपप्रसङ्ग इति न चोदनीयम्। **ज्ञापनार्थमिति।** कथमेत-

**भावबोधिनी**

पूर्वोक्त कार्य होते हैं। बछड़े आदि के गले में बाँधी जाने वाली लकड़ी—'प्रष्ठ' है। इसे ढोनेवाला बछड़ा—**प्रष्ठवाह्।** दित्य = राक्षस को ढोनेवाला—दित्यवाह्। ] इनमें 'एत्येधत्यूठ्सु' सूत्र से वृद्धि होती है।

(प्रश्न—) यह ऊठ् आदेश किसलिये किया जा रहा है, सम्प्रसारण (उ) ही कर देनेपर और [ "प्रत्ययलक्षण से 'पुगन्तलघूपधस्य च" सूत्र से ] गुण कर देनेपर [ प्रष्ठ + ओह् + अस् आदि में ] 'वृद्धिरेचि' सूत्र से वृद्धि कर देनेपर रूप सिद्ध होता है—प्रष्ठौहः। और अनकारान्त उपपद 'वह्' धातु से 'ण्वि' प्रत्यय देखा हो नहीं जाता है? [ अतः शालिं वहति—आदि में—शाल्यूहः आदि की अनुपपत्ति की शंका नहीं करनी चाहिए? ]

(उत्तर—) यह ज्ञापन के लिए है। यह ऊठ् ग्रहण ज्ञापित करता है—यह परिभाषा है—'अन्तरङ्ग की कर्तव्यता में बहिरङ्ग असिद्ध होता है।' इस परिभाषा के हो जाने पर बहिरङ्ग सम्प्रसारण के असिद्ध हो जाने के कारण अन्तरङ्ग गुण नहीं हो सकता।

**विमर्श—**यदि ऊठ् न करके सामान्य सम्प्रसारण 'उ' कर दिया जाय और लुप्त ण्वि प्रत्यय को प्रत्ययलक्षण से मान कर 'पुगन्तलघूपधस्य च' इसी से गुण कर देनेपर उ का ओ हो सकता है और प्रष्ठ + ओह् + अस् आदि में सामान्य वृद्धि से निर्वाह हो सकता है। अब ऊठ् करने का कोई फल नहीं है। वही व्यर्थ होकर यह ज्ञापित करता है कि 'अन्तरङ्ग की कर्तव्यता में बहिरङ्ग असिद्ध होता है।' यहाँ अन्तर्भूत ण्वि मात्र की अपेक्षा मानकर होने वाला गुण अन्तरङ्ग है और बाह्य अजादिप्रत्ययनिमित्तक भसंज्ञा बहिरङ्ग है। अब अन्तरङ्ग गुण = उ का ओ जब करना चाहेंगे तो बहिरङ्ग सम्प्रसारण 'उ' आदेश ही असिद्ध हो जायगा। इसलिए गुण और वृद्धि का प्रसङ्ग नहीं रह जाता है। इसीलिए ऊठ् करना और 'एत्येधत्यूठ्सु' सूत्र से ही ऊठ् की वृद्धि करना आवश्यक है॥ १३२॥

भवत्येषा परिभाषा 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या० प० ४२) इति। तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वाद् अन्तरङ्गो गुणो न स्यात् ॥

**३१३४. श्वयुवमघोनामतद्धिते ॥ १३३ ॥ (३६२)**

श्वन्, युवन्, मघवन्—इत्येतेषामङ्गानामतद्धिते प्रत्यये परतः सम्प्रसारणं भवति। शुनः, शुना, शुने। यूनः, यूना, यूने। मघोनः, मघोना, मघोने।

अतद्धित इति किम्? शौवं मांसम्। यौवनं वर्त्तते। माघवनः स्थालीपाकः। शुनो विकारे 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४), द्वारादित्वादैजागमः।

**न्यासः**

प्रवृत्तत्वात्। किं पुनरस्याः परिभाषाया ज्ञापनेन प्रयोजनम्? पचावेदम्, यजावेदमित्यत्रासिद्धत्वं बहिरङ्गलक्षणस्य। अतोऽन्तरङ्गलक्षणमेत ऐत्वं न भवति; बहिरङ्गलक्षणत्वाद् गुणस्य। बहिरङ्गत्वं तु पदद्वयाश्रितत्वाद्। ऐत्वस्य त्वन्तरङ्गत्वं विपर्ययात् ॥ १३२ ॥

**श्वयुवमघोनामतद्धिते ॥ यून इति।** सम्प्रसारणे कृते परपूर्वत्वे च सवर्णदीर्घत्वम्। **शौवमिति।** 'नस्तद्धिते' इति टिलोपः। **यौवनमिति।** यूनो भाव इति 'हायनान्तयुवादिभ्योऽण्' इत्यण्, 'अन्' इति प्रकृतिभावाट् 'टेः' इति टिलोपाल्लोपौ न भवतः। **माघवनमिति।** मघवा देवतास्येति 'सास्य देवता' इत्यण्, पूर्ववत् प्रकृतिभावः। शौवमित्येतद् व्युत्पादयितुमाह—**शुनो विकार इत्यादि।** युवशब्दस्य तिप्रत्ययान्तस्यापि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति सम्प्रसारणं प्राप्नोति। मघवन्नित्यस्यापि तृ-इत्यादेशे कृते 'एकदेशविकृतमनन्यवद्भवति' इति तकारान्तस्यापि प्राप्नोति। तत् कथं न भवति? इत्याह—**श्वादीनामित्यादि।**

**पदमञ्जरी**

ज्ञापकम्? इत्याह—**तस्यां हि सत्यामिति।** बहिरङ्गस्य बहिरङ्गत्वं बहिर्भूताजादिप्रत्ययापेक्षत्वात्, अन्तर्भूताण्यपेक्षत्वाद् गुणोऽन्तरङ्गः ॥ १३२ ॥

**श्वयुवमघोनामतद्धिते ॥ शौवमिति।** 'नस्तद्धिते' इति टिलोपः। **यौवनमिति।** यूनो भाव इति 'हायनान्तयुवादिभ्योऽण्', 'अन्' इति प्रकृतिभावः। मघवा **देवतास्य माघवनः।**

'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद्' (व्या० प० २९) युवतिशब्दस्यापि सम्प्रसारणप्रसङ्गः, तथा मघवत इत्यादौ 'मघवा बहुलम्' इति त्रादेशे कृते एकदेशविकृतस्यानन्यत्वात्प्रसङ्गः? इत्याह—

**भावबोधिनी**

श्वन्, युवन्, मघवन्—इन अङ्गों का अतद्धित प्रत्यय परे रहते सम्प्रसारण होता है। उदा० शुनः। शुना। शुने। [ श्वन् + शस् = अस्, व् का सम्प्रसारण उ, अ का पूर्वरूप—शुन् + अस्, स् का रुत्व विसर्ग—शुनः। ] यूनः, यूना, यूने। [ युवन् + शस् = अस् व् का सम्प्रसारण उ, अ का पूर्वरूप यु उ न् + अस्, सवर्णदीर्घ—यून् + अव् रुत्व, विसर्ग। ] मघोनः, मघोना, मघोने। [ मघवन् + शस् = अस् व् का सम्प्रसारण उ, अ का पूर्वरूप मघ उन् + अस्, गुण—मघोन् + अस्, स् का रुत्व, विसर्ग—मघोनः। ]

अतद्धित = तद्धितभिन्नप्रत्यय परे—इसका क्या फल है? शौवं मांसम्। यौवनं वर्तते। माघवनः स्थालीपाकः। शुनः विकारः—इस अर्थ में—"प्राणिरजतादिभ्योऽञ्" इस सूत्र से अञ् प्रत्यय, द्वारादिगण में होने के कारण "द्वारादीनाञ्च" सूत्र से ऐच् आगम—श् औ वन् + अ। [ यहाँ 'नस्तद्धिते' सूत्र से टि = अन् का लोप होता है—शौव्+अ,=शौवम्। युवन् + अण् में 'अन्' सूत्र से प्रकृतिभाव के कारण टिलोप नहीं होता है। मघवा देवता अस्य—इस अर्थ में "साऽस्य देवता" सूत्र से अण्, टि का प्रकृतिभाव होता है। दोनों में आदि अच् उ की वृद्धि होती है। ]

**श्वादीनामेतत्सम्प्रसारणं नकारान्तानामिष्यते (म० भा०)। इह न भवति—युवतीः पश्य। मघवतः, मघवता, मघवते। तदर्थमुत्तरत्र योगविभागं कुर्वन्ति—'अल्लोपः', 'अनः'; अन इत्युभयोः शेष इति ॥**

### ३१३५. अल्लोपोऽनः ॥ १३४ ॥ (२३४)

**'अन्' इत्येवमन्तस्य भस्य अकारलोपो भवति। राज्ञः पश्य। राज्ञा। राज्ञे। तक्ष्णः पश्य। तक्ष्णा। तक्ष्णे।**

**❀ अनो नकारान्तस्यायं लोप इष्यते ❀। इह न भवति—राजकीयमिति ॥**

**न्यासः**

**तदर्थमिति।** नकारान्तानामेव यथा स्यात्, अनकारान्तानां मा भूदित्येवमर्थम्। **अन इत्युभयोः शेष इति।** 'अनः' इत्यस्योभयोर्योगयोः शेषत्वेऽवयवत्वे सत्यन इत्यनेन सम्प्रसारणशेषस्यातिदेश इति न भवति ॥ १३३ ॥

**अल्लोपोऽनः ॥** तपरकरणम् 'नञ्समासोऽयम्' इत्याशङ्कानिरासार्थम्।

**राजकीय इति।** 'गर्त्तोत्तरपदाच्छः' इति छे प्रकृते 'राज्ञः क च' इति छः, ककारश्चान्तादेशः। अत्रापि 'एकदेशविकृतमनन्यवद्भवति' इति ॥ १३४ ॥

**पदमञ्जरी**

**श्वादीनामित्यादि।** कथमेतल्लभ्यते ? इत्याह—[2]**एतदर्थमिति। अन इत्युभयोः शेष इति।** न त्वनन्तरस्यैव; योगविभागसामर्थ्यात्। न चैवमपि मघवतेत्यादावेकदेशविकृतस्यानन्यत्वात्प्रसङ्गः; सामान्यातिदेशे विशेषानतिदेशात् ॥ १३३ ॥

**अल्लोपोऽनः ॥** अदिति पृथक् पदं लुप्तविभक्तिकम्, तेन 'आतो धातोः' इत्यादौ केवलस्य लोपशब्दस्य सम्बन्धः। **राजकीयमिति।** 'गर्त्तोत्तरपदाच्छः' इत्यधिकारे 'राज्ञः क च' इति छः, ककारश्चान्तादेशः। अत्रैकदेशविकृतस्यानन्यत्वात्प्रसङ्गः ॥ १३४ ॥

**भावबोधिनी**

श्वा आदि का यह सम्प्रसारण नकारान्तों का ही इष्ट है। ❀ इसलिये इनमें नहीं होता है—युवतीः पश्य। [ युवन् से स्त्री अर्थ में 'ति' प्रत्यय है। ] मघवतः, मघवता, मघवते। [ 'मघवा बहुलम्' सूत्र से तृज्वद्भाव करने से यह सम्प्रसारण नहीं होता है।] इसके लिये आगे सूत्र में योगविभाग करते हैं—(१) अल्लोपः, (२) अनः, 'अनः' यह दोनों का शेष है। [ अतः प्रस्तुत सूत्र में गृहीत शब्दों के अन्नन्त होनेपर ही सम्प्रसारण होता है। अतः इसी प्रकार से निर्वाह सम्भव है। ] ॥ १३३ ॥

'अन्' यह जिसके अन्त में है उस भसंज्ञक के अकार का लोप होता है। उदा० राज्ञः पश्य। राज्ञा। राज्ञे। तक्ष्णः पश्य। तक्ष्णा। तक्ष्णे। [ राजन् + शस् = अस्, भसंज्ञा के बाद प्रस्तुत सूत्र से अन् के अकार का लोप होनेपर—राज्न् + अस्, न् का श्चुत्व से ञ्, ज् + ञ् का ज्ञ् आदेश—राज्ञ् + अस् स् का रुत्व, विसर्ग। तक्षन् + शस् = अस्, अलोप, णत्व। ]

❀ नकारान्त अन् का यह लोप इष्ट है। ❀ यहाँ नहीं होता है—राजकीयम्। [ राज्ञः इदम्—इस अर्थ 'राज्ञः क च' सूत्र से छ = ईय प्रत्यय और न् का क् आदेश होनेपर नकारान्त न रहने से अ का लोप नहीं होता है—राजकीयम्। ] ॥ १३४ ॥

---

१. मुद्रितपुस्तके तु शौवनं मांसमिति पाठः। शौवमिति पाठे शुनः संकोच उपसंख्यानमिति संकोचेऽभिधेये एव टिलोपः स्यात्। शौवः सङ्कोचः। शौवनोऽन्यः। न्यासकारस्तु वार्त्तिकं नाजीगणदिति प्रतीयते। (द्र० ६.४.१४४ सूत्रव्याख्यानम्)।

२. काशिकायाम् 'तदर्थम्' इति पाठः।

## ३१३६. षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥ (११६०)

**षकारपूर्वो योऽन् हनो धृतराज्ञश्च तस्याकारलोपो भवति अणि परतः। औक्ष्णः। ताक्ष्णः। भ्रौणघ्नः[1]। धार्त्तराज्ञः।**

**षपूर्वहन्धृतराज्ञामिति किम्? सामनः। वैमनः। 'अन्' इति प्रकृतिभावेनाल्लोपटिलोपावुभावपि न भवतः। अणीति किम्? ताक्षण्यः॥**

### न्यासः

**षपूर्वहन्धृतराज्ञामणि॥** 'अन्' इति प्रकृतिभावेनाल्लोपस्य निवृत्तिर्मा भूदित्येवमर्थं वचनम्। **औक्ष्णः, ताक्ष्ण इति।** उक्षन्, तक्षन्—इत्येताभ्यामपत्यार्थेऽण्। **भ्रौणघ्न इति।** भ्रूणं हतवानिति 'ब्रह्म-भ्रूणवृत्रेषु हनः' इति क्विप्, तदन्तादण्, 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्। **धार्त्तराज्ञ इति।** धृतराज-शब्दाद् बहुव्रीहेरण्।

**सामनः, वैमन इति।** 'तस्येदम्' इत्यण्। **उभावपि न भवत इति।** अल्लोपटिलोपावुभावपि चापेक्ष्य प्रकृतिभावस्य विधानात्। **ताक्षण्य इति।** 'कुर्वादिभ्यो ण्यः' इति ण्ये प्रकृते सेनान्तलक्षणकारि-त्वाण्ण्यप्रत्ययः, 'ये चाभावकर्मणोः' इति प्रकृतिभावः॥ १३५॥

### पदमञ्जरी

**षपूर्वहन्धृतराज्ञामणि॥** किमिदं नियमार्थम्, आहोस्विद्विध्यर्थम्? कथं चेदं नियमार्थम्, कथं वा विध्यर्थम्? यद्यन्निति प्रकृतिभावोऽनन्तरस्यैव टिलोपस्य, तदाल्लोपस्म प्रकृतिभावेनानिर्वर्तितत्वात्पूर्वेणैव सिद्धे नियमार्थम्; अथाविशेषेणाल्लोपटिलोपयोर्द्वयोरपि प्रकृतिभावस्ततो विध्यर्थम्। तत्रापि नियमपक्षे यदि तावदेवं नियमः—षपूर्वादीनामण्येवेति, तत इह न स्यात्—ताक्षण्यः; सामनादौ तु प्रसङ्गः। अथाप्येवं नियमः—षपूर्वादीनामेवाणीति भवेत्, इह न स्यात्—सामनः, वैमनः; ताक्षण्य इत्यत्र तु प्रसङ्गः। अथाप्युभय-नियमः स्यात्, षपूर्वादीनामेवाणि, षपूर्वादीनामण्येवेति; एवमपि सामनः, वैमनः, ताक्षण्य इति सिद्धम्; सामसु साधुः सामन्योऽत्र प्राप्नोति। तस्मादुभयोः प्रकृतिभाव इत्याश्रित्य विध्यर्थमिदमित्याह—**तस्याकारस्य लोपो भवतीति। ताक्ष्ण इति।** इदमर्थेऽण्, अपत्ये तु कारिलक्षणो ण्यो भवति। **उभावपि न भवत इति।**

टिलोपमात्रव्यावृत्तिर्निषेधेनापि सिध्यति।
तत्प्रकृत्येति वचनान्निवृत्तिरुभयोरपि॥ १३५॥

### भावबोधिनी

षकार जिससे पूर्व है ऐसा जो अन् उसके तथा हन् और धृतराजन् के अकार का लोप अण् परे होता है। उदा० औक्ष्णः। ताक्ष्णः [ उक्षन् तथा तक्षन्—इनसे अपत्य अर्थ में अण् प्रत्यय और आदिवृद्धि करनेपर प्रस्तुत सूत्र से अन् के अकार का लोप होनेपर औक्ष्न् + अ, णत्व, तक्ष्न् + अ, णत्व—औक्ष्णः, ताक्ष्णः। ] भ्रौणघ्नः। धार्तराज्ञः। [ भ्रूणं हतवान्—इस अर्थ में क्विप् प्रत्यय, उपपद समास आदि के बाद अण् प्रत्यय आदिवृद्धि—भ्रौणहन् + अ, अलोप, कुत्व-भ्रौणघ्नः। धृतराजन् + अण्, अलोप, श्चुत्व, ज् + ञ् = ज्ञ्, आदिवृद्धि—धार्तराज्ञः। ]

षपूर्ववाला, हन्, धृतराजन्—इनके ही अ का लोप होता है—इसका क्या फल है? सामनः। वैमनः। [ इनके अ का लोप नहीं होता है। ] 'अन्' इससे प्रकृतिभाव के कारण अल्लोप और टिलोप ये दोनों नहीं होते हैं। अण् परे रहते—इसका क्या फल है? ताक्षण्यः। [ तक्षन् से ण्य = य प्रत्यय और प्रकृतिभाव होता है, अलोप नहीं होता है। धृताः राजातः येन सः—इस बहुव्रीहि में समासान्त टच् प्रत्यय न होने से—'धृतराज्ञाम्' हुआ है। ]॥ १३५॥

---

१. 'वार्त्रघ्नः' इत्यधिक पुस्तकान्तरे।

**३१३७. विभाषा ङिश्योः ॥ १३६ ॥ (२३७)**

**ङौ परतः शीशब्दे च अनो विभाषा अकारलोपो भवति। राज्ञि, राजनि। साम्नि, सामनि। साम्नी, सामनी ॥**

**३१३८. न संयोगाद्वमन्तात् ॥ १३७ ॥ (३५५)**

**वकारमकारान्तात्संयोगादुत्तरस्यानोऽकारस्य लोपो न भवति। पर्वणा, पर्वणे। अथर्वणा, अथर्वणे[1]। संयोगादिति किम्? प्रतिदीव्ना। प्रतिदीव्ने। साम्ना, साम्ने। वमन्तादिति किम्? तक्ष्णा। तक्ष्णे ॥**

**न्यासः**

**विभाषा ङिश्योः ॥ शीशब्दे चेति।** एतेन 'नपुंसकाच्च' इति यो विहितः शीशब्दस्तस्येदं ग्रहणम्, न तु 'जश्शसोः शिः' इति यो विहितः शिशब्दस्तस्येदं ग्रहणमिति दर्शयति। कुतः पुनरेतज्ज्ञायते? शिशब्दे भसंज्ञाया अभावात् ॥ १३६ ॥

**न संयोगाद् वमन्तात् ॥ प्रतिदीव्नेति।** 'हलि च' इति दीर्घः।

अथान्तग्रहणं किमर्थम्, न 'वमः' इत्येवोच्येत, वकारमकाराभ्यां संयोगेन विशिष्यमाणेन च तदन्तविधिर्भवतीत्यन्तरेणाप्यन्तग्रहणं तदन्तविधिर्लभ्यत एव? सत्यमेतत्, विस्पष्टार्थमन्तग्रहणम् ॥ १३७ ॥

**पदमञ्जरी**

**विभाषा ङिश्योः ॥** 'जसः शी', 'औङ आपः', 'नपुंसकाच्च' इति योऽयं शीशब्दस्तस्येह ग्रहणम्, न 'जश्शसोः शिः' इत्यस्य ह्रस्वान्तस्य; तत्र संज्ञाया अभावात् ॥ १३६ ॥

**न संयोगाद्वमन्तात् ॥** [2]स्याद्वकारमकाराभ्यां संयोगस्य विशेषणात् तदन्तविधिरत्रेति विस्पष्टार्थमन्तग्रहणम् ॥ १३७ ॥

**भावबोधिनी**

ङि परे और शी शब्द के परे रहते अन् के अकार का लोप विकल्प से होता है। उदा० राज्ञि, राजनि। साम्नि, सामनि। [ राजन् + ङि = इ, अन् के अकार का लोप होनेपर श्चुत्व से न् का ञ् राज् ञ् + इ, ज् + ञ् का ज्ञ करनेपर—राज्ञि, अलोप न होनेपर राजनि। नपुंसक शब्दों के बाद औ के स्थान पर "नपुंसकाच्च" सूत्र से शी = ई आदेश होता है। सामन् + औ = शी = ई, अन् के अ का लोप विकल्प से—साम्नी। पक्ष में—सामनी। ] ॥ १३६ ॥

वकारान्त और मकारान्त संयोग से उत्तरवर्ती अन् के अकार का लोप नहीं होता है। उदा० पर्वणा। पर्वणे। अथर्वणा। अथर्वणे। [ पर्वन् + टा = आ, प्राप्त अलोप का निषेध, णत्व। मकारान्त संयोग के उदा० चर्मणा ] संयोग से उत्तरवर्ती—इसका क्या फल है? प्रतिदीव्ना। प्रतिदीव्ने। साम्ना। साम्ने। [ प्रतिदिवन् + टा = आ, यहाँ संयोग से उत्तरवर्ती न होने से अलोप का निषेध नहीं होता है, अलोप होने के बाद 'हलि च' सूत्र से उपधा का दीर्घ होता है। ]

वकारान्त तथा मकारान्त से उत्तरवर्ती—इसका क्या फल है? तक्ष्णा। तक्ष्णे। [ यहाँ व् और म् कोई नहीं है। अतः अलोप का निषेध न होकर लोप ही होता है। ] ॥ १३७ ॥

---

१. 'चर्मणा, चर्मणे'—इत्यधिकमन्यस्मिन्पुस्तके।

२. अत्रायं श्लोक आसीत् कदाचिद् भ्रष्टः संजातः—

स्याद् वकारमकाराभ्यां संयोगस्य विशेषणात्।
तदन्तविधिरत्रेति........................... ॥

**३१३९. अचः ॥ १३८ ॥ (४१६)**

**'अचः' इत्ययमञ्चतिर्लुप्तनकारो गृह्यते, तदन्तस्य भस्य अकारस्य लोपो भवति। दधीचः पश्य। दधीचा, दधीचे। मधूचः पश्य। मधूचा, मधूचे॥**

**३१४०. उद ईत् ॥ १३९ ॥ (४२०)**

**उद उत्तरस्याच ईकारादेशो भवति। उदीचः। उदीचा। उदीचे॥**

**३१४१. आतो धातोः ॥ १४० ॥ (२४०)**

**न्यासः**

**अचः॥ अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यत इति।** कुत एतत्, प्रत्याहारः कस्मान्न गृह्यते? अल्लोप इत्यनुवृत्तेर्न शक्यते प्रत्याहारो ग्रहीतुम्। प्रत्याहारग्रहणे सति तेनाकारो विशिष्येत, तथा चानर्थकं प्रत्याहारग्रहणं स्यात्। न ह्यकारोऽच्त्वं व्यभिचरति। ननु चाङ्गं प्रकृतम्, तद् प्रत्याहारेण विशिष्यते—अजन्तस्याङ्गस्येति? न; एवं सत्यजन्तस्याल्लोपो भवतीत्येष सूत्रार्थः स्यात्। तथा च 'यस्येति च' इति लोपोऽनर्थकः स्यात्; अनेनैव सिद्धत्वात्। अपि च 'द्युप्रागपागुदक्प्रतीचो यत्' इत्येवमादिर्निर्देशो लिङ्गं ह्यत्राप्रत्याहारग्रहणस्य। यदि हि प्रत्याहारग्रहणं स्याद्, अत्राञ्चतेर्ग्रहणं न स्यात्, न ह्येतदजन्तमङ्गम्। अत एव निर्देशात् पचाद्यजपि न गृह्यते। न ह्येतत् पचाद्यजन्तमङ्गम्। **दधीच इति।** दध्यञ्चतीति ऋत्विगादिना क्विन्, 'अनिदिताम्' इत्यादिनानुनासिकलोपः, 'चौ' इति दीर्घः॥ १३८॥

**उद ईत्** ॥ १३९ ॥

**आतो धातोः। कीलालप इति।** 'विजुपेच्छन्दसि' इति विचि प्रकृते 'आतो मनिन्क्वनिब्वनिपश्च'

**पदमञ्जरी**

**अचः॥ अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यत इति।** प्रत्याहारग्रहणं तु न भवति, यदि स्याद्, अजन्तस्याङ्गस्य लोपो भवतीत्यर्थः स्यात्, ततश्च 'आतो धातोः' इत्येतदनर्थकं स्यात्। यच्च 'द्युप्रागपागुदक्प्रतीचो यत्' इति निर्दिशति, यच्च 'चौ' इत्याह, ततो ज्ञायते—अञ्चतेरेवात्र ग्रहणमिति। एतेन पचाद्यचोऽप्यग्रहणम्॥ १३८॥ १३९॥

**आतो धातोः॥ एवमादि सिद्धं भवतीति।** सूत्राद्बहिरस्मदादिप्रयोगेऽपीति भावः। सूत्रे तु सौत्रो

**भावबोधिनी**

'अचः' यह लुप्त नकार (नकार) वाली 'अञ्च्' धातु का ग्रहण होता है, ऐसी धातु जिसके अन्त में है उस भसंज्ञक के अकार का लोप होता है। उदा० दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। [ दधि अञ्चति—इस अर्थ में 'अञ्चु गतिपूजनयोः' इसमें गत्यर्थक नोपध से "ऋत्विक् दध्यृक्०" (३।२।५९) सूत्र से क्विन् प्रत्यय और उसका सर्वापहारी लोप करने के बाद उपपद समास, 'अनिदितां हल उपधायाः क्ङिति' (६।४।२४) से न् = ञ् का लोप—दधि—अच् + शस्=अस् में भसंज्ञा के बाद प्रस्तुत सूत्र से 'अ' का लोप—दधि—च् + अस्, "चौ" (६।३।१३८) सूत्र से पूर्व अण् 'इ' का दीर्घ—दधी—च् + अस् दधीचस्, रुत्व, विसर्ग। इसी प्रकार मधु अञ्चति—अर्थ में भी क्विन् प्रत्यय, न् लोप, अलोप, दीर्घ आदि करने पर रूप बनता है। ]॥ १३८॥

'उद्' से उत्तरवर्त्ती अकार का ईत् = ई आदेश होता है। उदा० उदीचः। उदीचा। उदीचे। [ उद् अञ्चति—यहाँ पूर्ववत् क्विन् आदि करने के बाद उद् + अच् + शस् = अस् में प्राप्त अलोप का बाध करके 'ई' आदेश होने पर—उद् ईच् + अस्, स् का रुत्व, विसर्ग—उदीचः। ]॥ १३९॥

आकारान्त धातु के भ—संज्ञक ( आ ) का लोप होता है। उदा० कीलालपः पश्य। कीलालपा, कीलालपे। [ कीलालं पाति—इस विग्रह में आकारान्त 'पा' धातु से विच् प्रत्यय और उसका सर्वापहारी लोप करके उपपद समास कीलालपा + शस् = अस्, भसंज्ञा, आ का लोप, स् का रुत्व, विसर्ग—कीलालपः। ] शुभंयः पश्य। शुभंया। शुभंये।

**आकारान्तस्य धातोर्भस्य लोपो भवति। कीलालपः पश्य। कीलालपा, कीलालपे। शुभंयः पश्य। शुभंया, शुभंये।**

**आत इति किम्? निया, निये। धातोरिति किम्? खट्वाः पश्य। मालाः पश्य।**

**'आतः' इति योगविभागः, तेन 'क्त्वो ल्यप्', (७.१.३७) 'हलः श्नः शानच्' (३.१.८३)—इत्येवमादि सिद्धं भवति॥**

**३१४२. मन्त्रेष्वाङ्यादेरात्मनः॥ १४१॥ (३५५४)**

**मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति। त्मना देवेभ्यः। त्मना सोमेषु।**

**मन्त्रेष्विति किम्? आत्मना कृतम्। आङीति किम्? यदात्मनस्तन्नो वरिष्ठा।**

**❀ आङोऽन्यत्रापि दृश्यते ❀ (?)। 'त्मन्यासमञ्जन् मह्यम् (ऋ० १०.११०.१०)॥**

**न्यासः**

इति विच्। **निय इति**। क्विप्, इयङ्॥ १४०॥

**मन्त्रेष्वाङ्यादेरात्मनः॥ आङिति** तृतीयैकवचनस्यैषा संज्ञा पूर्वाचार्यैर्विहिता।

**आङोऽन्यत्रापि दृश्यत इति।** मन्त्रेष्विति बहुवचननिर्देशादेतल्लभ्यते। बहुवचननिर्देशेन ह्ययमर्थः सूचितः—बहुविषयोऽयं निर्देश इति। एवञ्च बहुविषयो भवति यद्याङोऽन्यत्रापि क्वचिद् भवति, नान्यथा। **त्मन्यासमञ्जतेति**। सप्तम्येकवचने। अत्रादिलोपः।

आदिग्रहणमुत्तरार्थम्। इह तु पूर्वसूत्रात् 'आतः' इत्यनुवृत्तेरन्तरेणाप्यादिग्रहणमादेरेव लोपो भवतीति शक्यते विज्ञातुम्॥ १४१॥

**पदमञ्जरी**

निर्देश इत्येव सिद्धम्॥ १४०॥

**मन्त्रेष्वाङ्यादेरात्मनः॥** आङिति पूर्वाचार्यप्रक्रियया तृतीयैकवचनस्य ग्रहणम्।

**आङोऽन्यत्रापि दृश्यते इति।** तस्मादाङीति न वक्तव्यमित्यर्थः। 'आतः' इत्यनुवृत्तेरादेरित्यपि शक्यमकर्त्तुम्। **त्मन्येति**। सप्तम्येकवचनस्य याशब्द आदेशः॥ १४१॥

**भावबोधिनी**

[शुभं याति—इस विग्रह में शुभम् उपपद 'या' धातु से विच् प्रत्यय आदि पूर्वोक्त सभी प्रक्रिया होती है। द्वितीया बहुवचन आदि में आलोप के बाद उक्त रूप बनते हैं।]

आकारान्त धातु का—इसका क्या फल है? निया। निये। [नयति—इस अर्थ में क्विप् आदि के बाद 'नी' प्रातिपदिक से तृतीया एकवचन में—नी + आ, इयङ् होता है। आकारान्त न होने से लोप नहीं होता है।] धातु का—इसका क्या फल है? खट्वाः पश्य। मालाः पश्य। [इनमें धातु नहीं है। अतः आलोप नहीं होता है।]

'आतः' यह योग-विभाग किया जाता है, इतना सूत्र अलग बनाया जाता है, इस कारण [धातु न होने पर भी आकारान्त के आ का लोप हो जाने से] 'क्त्वो ल्यप्' (७।१।३७) 'हलः श्नः शानच्' (३।१।८३) आदि सूत्र-प्रयोग सिद्ध होते हैं। [क्त्वा + ङस् = अस्, श्ना + ङस् = अन्, आलोप होता है।]॥ १४०॥

मन्त्रों में आङ् (टा) परे रहते आत्मन् के आदि (आ) का लोप होता है। उदा० त्मना देवेभ्यः। त्मना सोमेषु। [आत्मन् + टा = आ में आत्मन् के आ का लोप होता है। आङ् यह 'टा' के लिये प्राचीनों का व्यवहार है। अतः उपसर्ग आङ् नहीं लेना चाहिए।]

मन्त्रों में—इसका क्या फल है? आत्मना कृतम्। [सामान्य वाक्य होने से आलुक् नहीं होता है।] आङ् = टा परे—इसका क्या फल है? यदात्मनः तन्नो वरिष्ठा। [यहाँ षष्ठी एकवचन परे है। अतः लोप नहीं होता है।]

* आङ् = टा से भिन्न में भी देखा जाता है। * उदा० त्मन्या समञ्जन्। [यहाँ ङि = सप्तमी एकवचन के स्थान पर व्यत्यय से 'या' आदेश होने पर भी आ का लोप देखा जाता है। न्यास में 'समञ्जत' पाठ है।]॥ १४१॥

**३१४३. ति विंशतेर्डिति ॥ १४२ ॥ (८४४)**

**भस्य विंशतेस्तिशब्दस्य डिति प्रत्यये परतो लोपो भवति । विंशत्या क्रीतः विंशकः । विंशं शतम् । विंशतेः पूरणो विंशः । एकविंशः ।**

**डितीति किम् ? विंशत्या ॥**

**३१४४. टेः ॥ १४३ ॥ (३१६)**

**टिसंज्ञकस्य डिति प्रत्यये परतो लोपो भवति । कुमुद्वान् । नड्वान् । वेतस्वान् । उपसरजः । मन्दु-**

**न्यासः**

**ति विंशतेर्डिति ॥ विंशक इति ।** 'विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्' इति ड्वुन्, तिशब्दस्य लोपे कृते 'अतो गुणे' पररूपत्वम् । **विंशं शतमिति ।** विंशतिरधिकाऽस्मिन्निति 'शदन्तविंशतेश्च' इति डप्रत्ययः । **विंशः, एकविंश इति ।** 'तस्य पूरणे डट्' ।

तिग्रहणमन्त्यस्य मा भूदित्येवमर्थम् ॥ १४२ ॥

**टेः ॥ कुमुद्वानित्यादि ।** कुमुदनडवेतसेभ्यश्चातुरर्थिको ड्मतुप् । **उपसरज** इति । 'सप्तम्यां जनेर्डः' । एवं **मन्दुरज इत्यत्रापि ।** अत्र हि 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति पूर्वपदस्य ह्रस्वत्वम् । **त्रिंशक इति ।** पूर्ववत् ड्वुन् । ननु च 'भस्य' इत्यनुवर्त्तते, न च ड्मतुपि डप्रत्यये च धातोर्विहिते पूर्वस्य भसंज्ञा प्राप्नोति, उभयोरनजादित्वात् अस्वादित्वाच्च यथायोगम्, तत् कथमत्र लोपो भवति ? इत्याह—**डित्यभस्यापीत्यादि ।** यदि टिलोपो न स्यात् तदा डित्त्वमनर्थकं स्यात् । अथैवं कस्मान्न विज्ञायते—प्रयोजनाभावादत्रेत्संज्ञैव न भवतीति, तस्याश्च सत्यां श्रवणार्थमेव डकारोच्चारणमिति ? अशक्यमेवं विज्ञातुम् । एवं तर्हि 'प्रावृट्शरत्काल-दिवां जे' इति कृतटिलोपस्य जनेर्निर्देशो नोपपद्येत ? तस्मादत एव निर्देशादवसीयते—भवति धातुप्रत्ययड-

**पदमञ्जरी**

**ति विंशतेर्डिति ॥** तिग्रहणं किम् ? अन्त्यस्य मा भूत् । सिद्धोऽन्त्यस्य लोप उत्तरसूत्रेण ? सिद्धे सत्यारम्भो नियमार्थः स्यात्—डित्येव यथा स्यादन्यत्र यस्येतिलोपो मा भूदिति । अथापि विधिनियमसम्भवे विधेरेव ज्यायस्त्वम् ? एवमप्यारम्भसामर्थ्यात् 'अलोऽन्त्यस्य' इत्येतस्मिन् बाधिते समुदायस्यैव षष्ठीनिर्दिष्टस्य लोपप्रसङ्गः, न त्वसंशब्दितस्य तिशब्दस्य लोपः सिध्यति । तिग्रहणे तु सति तत्सामर्थ्याद् 'अलोऽन्त्यस्य' इत्यस्यानुपस्थानात्सर्वस्य तिशब्दस्य भवति । विंशम्, विंशकमित्यादौ तिलोपे कृते 'अतो गुणे' पररूपत्वम् । यस्येतिलोपस्तु न भवति; तिलोपस्यासिद्धत्वात् ॥ १४२ ॥

**टेः ॥ डित्यभस्यापीति ।** श्रवणार्थस्तु डकारो न भवति, ड्मतुपि तावद् 'देशे तन्नाम्नि' इति वर्त्तते,

**भावबोधिनी**

भसंज्ञक विंशति के तिशब्द का डित् प्रत्यय परे रहते लोप होता है । उदा० विंशत्या क्रीतः—विंशकः । [ विंशति-त्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्' सूत्र से ड्वुन् = वु = अक प्रत्यय होता है, इसमें ड् की इत्संज्ञा होती है । अतः 'ति' का लोप करने पर विंश + अक, 'अतो गुणे' से अ का पररूप विंशकः । ] विंशं शतम् । [ विंशतिः अधिका अस्मिन्' इस अर्थ में 'शदन्तविंशतेश्च' सूत्र से ड = अ प्रत्यय, 'ति' का लोप, पररूप ] विंशतेः पूरणः—इसमें विंशः । एकविंशः । [ विंशति शब्द से पूरण अर्थ में "तस्य पूरणे डट्" सूत्र से डट् = अ प्रत्यय, ति का लोप—करने पर रूप बनते हैं । ]

डित् ( ड् की इत्संज्ञा वाले ) प्रत्यय के परे रहते—इसका क्या फल है ? विंशत्या । [ विंशति + टा में तिलोप नहीं होता है । ] ॥ १४२ ॥

डित् प्रत्यय परे रहते टिसंज्ञक का लोप होता है । उदा० कुमुद्वान् । नड्वान् । वेतस्वान् । [ कुमुदाः सन्ति अस्मिन् देशे, नडाः सन्ति अस्मिन् देशे—इन चातुरर्थिकों में "कुमुदनडवेतसेभ्यो ड्मतुप्" (४।२।८७) सूत्र से ड्मतुप्=मत् यह डित् प्रत्यय होने पर टिसंज्ञक अच् या अच् हल् समूह का लोप होने पर कुमुद्मत्, नड् मत् में "झयः" सूत्र से म्

रजः । त्रिंशता क्रीतः त्रिंशकः । डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् टिलोपो भवति ॥

**३१४५. नस्तद्धिते ॥ १४४ ॥ (६७९)**

नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः । आग्निशर्मिः । औडुलोमिः । बाह्वादित्वादिञ्प्रत्ययः ।

न इति किम् ? सात्वतः । तद्धित इति किम् ? शर्मणा । शर्मणे ।

❀ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्प्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानं कर्तव्यम् ❀ (का० वा० १) । अत्र ये इन्नन्तास्तेषाम् 'इनण्यनपत्ये' (६.४.१६४) इति प्रकृतिभावः प्राप्तः, ये त्वन्नन्तास्तेषाम् 'अन्' (६.४.१६७) इति । सब्रह्मचारिण इमे साब्रह्मचाराः । पीठसर्पिणः

**न्यासः**

कारस्येत्संज्ञेति । तस्याश्चासत्यां यदि टिलोपो न स्यात्, तस्यास्तदा वैयर्थ्यं स्यात् । ड्मतुपोऽपि यदि डकारस्य लोपो न स्यात्, तदन्तेन तन्नामादेशो न गम्येत, तत्र च 'देशे तन्नाम्नि' इति वर्त्तते । तस्मादवश्यं तत्रापि डकारस्येत्संज्ञया भवितव्यम्, तस्यां च तत्सामर्थ्याट्टिलोपेन ॥ १४३ ॥

**नस्तद्धिते ॥ सात्वत इति ।** सत्वतोऽपत्यमित्यण् । **नान्तस्य टिलोप इत्यादि ।** किं पुनः कारणं न सिध्यति यत उपसंख्यानं कर्त्तव्यम् ? इत्याह—**अत्र य इन्नन्ता इत्यादि । ये त्वन्नन्तास्तेषाम् 'अन्' इति ।** प्रकृतिभावः प्राप्त इति प्रकृतेन सम्बन्धः । **साब्रह्मचारा इति ।** 'तस्येदम्' इत्यण् । **पीठसर्पिण इति ।** इम इति प्रकृतेन सम्बन्धः । **पैठसर्पा इति ।** पूर्ववदण् । **कालापा इति ।** पूर्ववत्प्रोक्तार्थे 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति वैशम्पायनान्तेवासित्वाण्णिनिप्रत्यये प्राप्ते तदपवादः 'कलापिनोऽण्', ततः 'तदधीते तद्वेद' इत्यण्,

**पदमञ्जरी**

न च डकारवता प्रत्ययेन तन्नामा गम्यते देशः । डेऽपि 'प्रावृट्शरत्कालदिवां जे' इति निर्दिष्टत्वान्न श्रवणार्थो डकारः । **मन्दुरज इति ।** 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः ॥ १४३ ॥

**नस्तद्धिते ॥ तेषामिति ।** 'अन्' इति प्रकृतिभावः प्राप्त इत्यनुषङ्गः । पीठेन सर्पतीति पीठसर्पी । कलापिशब्दात्प्रोक्तार्थे कलापिनोऽण्, 'छन्दोब्राह्मणानि च तद्विषयाणि', तदधीते' इत्यण्, प्रोक्ताल्लुक्,

**भावबोधिनी**

का व् और वेतस्मत् में "मादुपधायाश्च" सूत्र से म् का व् करने के बाद सु प्रत्यय और विभक्तिसम्बन्धी कार्य होते हैं । ]
उपसरजः । मन्दुरजः । [ उपसरे जातः, मन्दुरायां जातः—इन अर्थों में 'सप्तम्यां जनेर्डः' सूत्र से ड = अ प्रत्यय परे रहते टि = अन् का लोप होता है । [ संज्ञा होने से ह्रस्व होता है । मन्दुरा = घुड़शाल । ] त्रिंशता क्रीतः—यहाँ त्रिंशकः । [ त्रिंशत् + ड्वुन् = वु = अक, टि = अत् का लोप । ] डित् परे रहते अनुबन्धकरण के सामर्थ्य से अभसंज्ञक की भी टि का लोप होता है ॥ १४३ ॥

तद्धित परे रहते नकारान्त भसंज्ञक का लोप होता है । उदा० आग्निशर्मिः । औडुलोमिः । [ अग्निशर्मणः अपत्यम् उडुलोम्नः अपत्यम्—इस अर्थ में "बाह्वादिभ्यश्च" (४।१।९६) सूत्र से इञ् प्रत्यय परे टि=अन् का लोप, आदिवृद्धि—आग्निशर्मिः, औडुलोमिः । ]

नकारान्त का—इसका क्या फल है ? सात्वतः । [ सत्वतः अपत्यम्—यहाँ अण् तद्धित प्रत्यय परे है । किन्तु नकारान्त न होने से टि = अत् का लोप नहीं होता है । ] तद्धित प्रत्यय परे रहते—इसका क्या फल है ? शर्मणा । शर्मणे । [ टा, ङे तद्धित प्रत्यय नहीं हैं । ]

❀ नान्त के टिलोप में सब्रह्मचारिन्, पीठसर्पिन्, कलापिन्, कुथुमिन्, तैतिलिन्, जाजलिन्, लाङ्गलिन्, शिलालिन्, शिखण्डिन्, सूकरसद्मन्, सुपर्वन्—इनका उपसंख्यान करना चाहिए, इनका टिलोप करना चाहिए ।❀

**—पैठसर्पाः।** कलापिना प्रोक्तमधीयते **कालापाः। कुथुमिनः—कौथुमाः। तैतिलिजाजलिनावाचार्यौ,** तत्कृतो ग्रन्थ उपचारात् तैतिलिजाजलिशब्दाभ्यामभिधीयते, तं ग्रन्थमधीयते **तैतिलाः, जाजलाः। शैषिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति। एवं लाङ्गलाः। शैलालाः। शिखण्डिनः—शैखण्डाः। सूकरसद्मनः—सौकरसद्माः। सुपर्वणः—सौपर्वाः।**

**❀ अश्मनो विकार उपसंख्यानम् ❀ (म० भा०)। अश्मनो विकारः आश्मः। आश्मनोऽन्यः।**

**न्यासः**

तस्य 'प्रोक्ताल्लुक्' इति लुक्, 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यध्येतृवेदितृविषयता। **कौथुमा इति।** 'तस्येदम्' इत्यण्। **तत्कृतो ग्रन्थ उपचारादित्यादि।** उपचारस्य तु तत्कृतत्वमेवात्र निबन्धनम्। भवति हि तत्कृतत्वे तदुपचारः, यथा—सर्वमिदं पुराणं कर्म शुभाशुभं भज्यत इति। अथ कस्मादुपचार आश्रीयते, न 'अधिकृत्य कृते ग्रन्थे' इत्येवमादिशैषिकार्थविवक्षायां तद्धित एव क्रियेत ? इत्यत आह—**शैषिकेष्वर्थेष्वित्यादि।** तैतिलिजाजलिशब्दौ वृद्धसंज्ञकौ, तयोर्वृद्धत्वात् शैषिकेष्वर्थेषु विधीयमानोऽसौ तद्धितः 'वृद्धाच्छः' इति छः प्रसज्येत। तस्मिंश्च सति तैतिलाः, जाजला इति न सिध्येत्, तस्मान्मा भूदेष दोष इत्युपचार आश्रितः। **एवमित्यनेनानन्तरोक्तां** व्युत्पत्तिं दर्शयति छप्रत्ययनिवृत्तये। लाङ्गलिशब्दस्याप्येवं व्युत्पत्तिः कर्त्तव्या। **लाङ्गलिः**=आचार्यः, तत्कृतो ग्रन्थ उपचारात् लाङ्गलिशब्देनाभिधीयते। **लाङ्गला इति। शिखण्डा** इत्याद्युदाहरणत्रयेऽपि 'तस्येदम्' इत्यण्।

**आश्म इति।** अत्रापि 'तस्य विकारः' इत्यण्। **आश्मनोऽन्यत्रेति।** अत्रापि 'तस्येदम्' इत्यत्रार्थाभिधाने। **चार्म** इत्यत्रापि 'तस्येदम्' इत्यणेव।

**पदमञ्जरी**

**कालापाः। एवं कौथुमाः।** किं पुनः कारणमुपचार आश्रीयते, न पुनर्मुख्यार्थवृत्तिभ्याम् 'तेन प्रोक्तम्' इत्याद्यर्थेऽण् क्रियते ? इत्यत आह—**शैषिकेष्विति।** केचित्तितलिशब्दं पठन्ति—तिलानां तलं तितलम्, पृषोदरादिः, तदस्यास्तीति तितली। **एवं लाङ्गला इति।** उपचारादि सर्वमतिदिशति। उत्तरेषु त्रिष्विदमर्थेऽण्।

**एवमाश्मन** इत्यत्रापि। **चार्म** इत्यत्र विकारे। **चार्मण** इत्यत्रेदमर्थे, विकारेऽपि कोशादन्यत्र।

**भावबोधिनी**

इस वार्तिक में जो इनन्त हैं उनका प्रकृतिभाव "इनण्यपत्ये" सूत्र से प्राप्त है और जो अन्नन्त हैं उनका प्रकृतिभाव "अन्" इस सूत्र से प्राप्त है। [ उसमें यह टिलोप करता है। ] उदा० सब्रह्मचारिण इमे—इस अर्थ में [ "तस्येदम्" सूत्र से अण् प्रत्यय करने परे आदिवृद्धि और टि = इन् का लोप करने पर—] साब्रह्मचाराः। पीठसर्पिणः इमे—इस अर्थ में—पैठसर्पाः। [ पीठसर्पिन्+अण्, आदिवृद्धि, टिलोप ] कलापिना प्रोक्तमधीमते—इस अर्थ में—कालापाः। [ कलापिन्+अण्, आदिवृद्धि, टिलोप ] कुथुमिनः इमे—इस अर्थ में—कौथुमाः। [ कुथुमिन्+अण्, अण्, आदिवृद्धि, टिलोप ] तैतिलिन् और जाजलिन् ये आचार्य हैं, इनके द्वारा बनाये गये ग्रन्थ भी उपचारवशात् (लक्षणा से) तैतिलिन् और जाजलिन् शब्दों से ही कहे जाते हैं, उस ग्रन्थ को जो पढ़ते हैं वे—तैतिलाः, जाजलाः हैं। [ तैतिलिन्, जाजलिन् से 'तदधीते तद्वेद' सूत्र से अण् प्रत्यय, टिलोप होनेपर रूप बनते हैं। ] शैषिक अर्थों में इन शब्दों से वृद्धसंज्ञक होने के कारण 'छ' प्रत्यय प्राप्त होता है। [ इसलिये उपचार मानकर ग्रन्थ से अध्येता अर्थ में अण् प्रत्यय किया जाता है। ] इसी प्रकार—लाङ्गलाः। शैलालाः। [ यहाँ भी लाङ्गलिन् तथा शिलालिन् को उपचारवशात् उनके द्वारा बनाये ग्रन्थों के अर्थ में मानकर अध्येता अर्थ में अण् प्रत्यय, टिलोप, आदिवृद्धि करनी चाहिए। ] शिखण्डिनः इमे—इस अर्थ में—शैखण्डाः। [ शिखण्डिन्+अण् ] सूकरसद्मनः इमे—इस अर्थ में—सौकरसद्माः। सुपर्वणः इमे—इस अर्थ में—सौपर्वाः। [ सभी में अण् प्रत्यय, आदिवृद्धि, टि = इन्, अन् का लोप होता है। ]

❀ चर्मणः कोश उपसंख्यानम् ❀ (म० भा०)। चार्मः कोशः। चार्मणोऽन्यः।

❀ शुनः सङ्कोच उपसंख्यानम् ❀ (म० भा०)। शौवः सङ्कोचः। शौवनोऽन्यः।

❀ अव्ययानां च सायम्प्रातिकाद्यर्थमुपसंख्यानम् ❀ ( म० भा० )। के पुनः सायम्प्रातिकादयः? येषामव्ययानामविहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायम्प्रातिकप्रकारा ग्रहीतव्याः। सायम्प्रातर्भवः सायम्प्रातिकः। पौनःपुनिकः। बाह्यः। कौतस्कुतः। 'कालाट्ठञ्' (४.३.११) इति ठञ्प्रत्ययः।

**न्यासः**

**चार्मणोऽन्य इति**। चर्मणो विकार इति।

**शौव इति**। 'द्वारादीनाञ्च' इत्यैजागमः।

सायम्प्रातिकादयः प्रातिपदिकेषु न पठ्यत इत्यन्तः पृच्छति—**के पुनः सायम्प्रातिकादय इति**। **सायम्प्रातिकप्रकारा** इत्यनेन प्रकारवचनतामादिशब्दस्य दर्शयति।

ननु च 'सायञ्चिरम्' इत्यादिनाव्ययेभ्यष्ट्युट्युलभ्यां भवितव्यम्, तत् कथं ठञ् भवति? इत्याह—**ट्युट्युलौ तु नेष्यते इति**। अनभिधानात्। अत्र च सर्वत्रोपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—मन्त्रेष्वित्यादेः सूत्रादादिग्रहणमनुवर्त्तते, तद्धितग्रहणञ्चेदमर्थमेव कृतम्। तदनुवृत्तौ चायमर्थो भवति। नान्तादीनां तद्धिते परतष्टिलोपो भवतीति। आदिशब्देन सायम्प्रातिकादयो गृह्यन्ते। तेन सर्वत्र टिलोपः सिद्धो भवति।

**पदमञ्जरी**

**शौव इति**। तस्येदमित्यण्, अत्र परत्वाद्वृद्धिप्राप्तौ द्वारादित्वात्तत्प्रतिषेधे ऐजागमे च कृते टिलोपः। **शौवनोऽन्य इति**। विकारावयवयोस्तु प्राणित्वादञिति प्रकृतिभावाभावात् शौव इत्येव भवति।

**के पुनरिति**। प्रातिपदिकगणे पाठाभावात्प्रश्नः। आदिशब्दस्य प्रकारवचनत्वादाकृतिगणोऽयमित्युत्तरम्। **'सायम्प्रातिकमिति**। 'यथाकथञ्चित्कालवृत्तेरपि भवति' इत्युक्तत्वात्कालसमुदायेऽपि ठञ् एव भवति,

**भावबोधिनी**

❀ अश्मन् [ की टिलोप ] का विकार अर्थ में उपसंख्यान करना चाहिए।❀ उदा० अश्मनः विकारः—इस अर्थ में आश्मः। [ अश्मन्+अण्, टिलोप, आदिवृद्धि ] विकार से भिन्न—आश्मनः। [ अश्मन्+अण्, टिलोप नहीं होता है। आदिवृद्धि। ]

❀ चर्मन् [ की टिलोप ] का कोश अर्थ में उपसंख्यान करना चाहिए।❀ उदा० चार्मः कोशः। चार्मणः अन्यः। [ चर्मन्+अण् आदिवृद्धि, कोश अर्थ में टिलोप। अन्य अर्थ में टिलोप नहीं होता है। ]

❀ श्वन् [ की टिलोप ] का संकोच अर्थ में उपसंख्यान करना चाहिए।❀ उदा० शौवः संकोचः, शौवनः अन्यः। [ श्वन्+अण्, "द्वारादीनाञ्च" सूत्र से ऐच्=औ का आगम श् औवन्+अ, टिलोप—शौवः। अन्य अर्थों में शौवनः। ]

❀ अव्ययों [ की टिलोप ] का उपसंख्यान सायम्प्रातिक आदि की सिद्धि के लिए करना चाहिए।❀ वे सायम्प्रातिक आदि कौन-कौन हैं? जिन अव्ययों की टिलोप का विधान नहीं किया गया है, किन्तु प्रयोग में टिलोप देखा जाता है वे सायम्प्रातिक जैसे शब्द समझने चाहिए। उदा० सायम्प्रातः भवः—इस अर्थ में सायंप्रातिकः। [ सायंप्रातर् से "कालाठ्ठञ्" से ठ=इक प्रत्यय होनेपर टि=अर् का लोप होता है। ] पौनःपुनिकः। [ पुनः पुनः भवति—इस अर्थ में पुनः पुनर्+ठञ्=ठ=इक, आदिवृद्धि, टिलोप ] बाह्यः। [ बहिः भवः—अर्थ में "बहिषष्टिलोपो यञ्च" वार्तिक से यञ् प्रत्यय, टिलोप, आदिवृद्धि। ] कौतस्कुतः। [ कुतः कुतः आगतः अर्थ में अण्, आदिवृद्धि, टिलोप, सत्व ] "कालाट्ठञ्" से ठञ् (आदि) प्रत्यय [आदिवृद्धि, टिलोप] होते हैं।

---

१. सायंप्रातिकः—अयं पाठो मूले।

टयुटयुलौ तु नेष्येते । आरातीयः, शाश्वतिकः, शाश्वतः—इत्येवमादिषु न दृश्यते टिलोपः ॥

**३१४६. अह्नष्टखोरेव ॥ १४५ ॥ (७८९)**

'अहन्' इत्येतस्य टखोरेव परतष्टिलोपो भवति । द्वे अहनी समाहृते द्व्यहः । त्र्यहः । द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः । त्र्यहीनः । अह्नां समूहः क्रतुः अहीनः ।

❀ अह्नः समूहे खो वक्तव्यः ❀ ( ? ) । सिद्धे सत्यारम्भो नियमार्थः । इह मा भूत्—अह्ना निर्वृत्त-माह्निकम् ।

**न्यासः**

**इत्येवमादिषु न दृश्यते टिलोप इति** । एतेनारातीयः—इत्येवमादीनामसायम्प्रातिकत्वं दर्शयति । अथ **शाश्वत** इत्यत्र कथमण्, यावता 'कालाट्ठञ्' इति ठञा भवितव्यम् ? नैतदस्ति; 'कालाट्ठञ्' इत्यत्र 'कालात्' इति योगविभागः कर्त्तव्यः, तेन शश्वच्छब्दाद् यथाविहितमण् भवति । न च योगविभागेन ठञ् बाध्यते; 'येषाञ्च विरोधः शाश्वतिकः' इति निपातनात् । तेन पक्षे ठञपि भवत्येव । टयुटयुलौ तु शाश्वतशब्दान्नेष्येते, अनभिधानादेव । अथ **शाश्वतिक** इत्यत्र 'इसुसुक्तान्तात् कः' इति ठञः कादेशः कस्मान्न भवति ? अत एव निर्देशात् ॥ १४४ ॥

**अह्नष्टखोरेव** ॥ **द्व्यह इति** । 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः, 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः । अत्र 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः प्राप्तः । स च 'न संख्यादेः समाहारे' इति प्रतिषेधान्न भवति । **द्व्यहीन इति** । तद्धितार्थे 'समायाः' इति वर्त्तमाने 'रात्र्यहःसंवत्सराच्च' इति खः ।

केन पुनरहीन इत्यत्र खप्रत्ययः ? इत्याह—**अह्नः समूहे खो वक्तव्य इति** । ननु च अह्नो नकारान्तत्वात् पूर्वेणैव सिद्धष्टिलोपः, तत् किमर्थोऽयमारम्भः ? इत्याह—**सिद्धे सतीत्यादि** । **आह्निकमिति** । आर्हीयष्ठक् ।

**पदमञ्जरी**

'येषां च विरोधः शाश्वतिकः' इति निर्द्देशात् 'इसुसुक्तान्तात्कः' इति कादेशाभावः । **शाश्वतमिति** । **भाष्यकार**-वचनादण् प्रत्ययः ॥ १४४ ॥

**अह्नष्टखोरेव** ॥ **द्व्यह इति** । 'न सङ्ख्यादेः समाहारे' इति अह्नादेशस्य प्रतिषेधः । **द्व्यहीन इति** । तद्धितार्थे द्विगुः, 'समायाः खः', 'द्विगोर्वा', 'रात्र्यहःसंवत्सराच्च' इति खः ।

**आह्निकमिति** । आर्हीयष्ठक् ।

**भावबोधिनी**

ट्यु और ट्युल् प्रत्यय तो इष्ट नहीं हैं । [ अव्यय शब्दों से ट्यु, ट्युल् प्रत्ययों का विधान "सायंचिरं-प्राह्णेप्रगे अव्ययेभ्यष्ट्युट्युलौ तुट् च" सूत्र से होता है । किन्तु इन उदाहरणों में ये प्रत्यय इष्ट नहीं हैं । ] आरातीयः, शाश्वतिकः, शाश्वतः—इत्यादि जैसे शब्दों में टिलोप नहीं देखा जाता है । [ आरात् + छ = ईय, शश्वत् + ठञ् = इक, शश्वत् + अण् इनमें टिलोप नहीं होता है । अतः उक्त रूप बनते हैं । शश्वत् + ठ में 'इसुसुक्तान्तात्' से 'क' आदेश न होने में 'येषां च विरोधः शाश्वतिकः" यह सूत्र-निर्देश प्रमाण है । ठ का इक ही होता है । ] ॥ १४४ ॥

'अहन्' इसकी टि का लोप ट तथा ख प्रत्ययों के परे ही होता है । उदा० द्वे अहनी समाहृते—इस अर्थ में द्व्यहः । त्र्यहः । [ त्रीणि अहानि समाहृतानि—इस अर्थ में उक्त रूप है । इनमें "तद्धितार्थोत्तरपदसमाहारे च" सूत्र से समास के बाद "राजाहःसखिभ्यष्टच्" सूत्र से टच् = अ यह समासान्त प्रत्यय करनेपर इस सूत्र से टि = अन् का लोप करनेपर—द्वि-अह् + अ, त्रि अह् + अ, यण् सु, विसर्ग ] द्वे अहनी अधीष्टः, भृतः, भूतः, भावी वा—इस अर्थ में द्व्यहीनः । त्र्यहीनः । [ यहाँ "तमधीष्टो भृतो भूतो भावी वा" सूत्रनिर्दिष्ट अर्थों में "रात्र्यहःसंवत्सराच्च" सूत्र से ख = ईन प्रत्यय, टिलोप—द्व्यह् + ईन, त्र्यह् + ईन ] अह्नां समूहः क्रतुः—अहीनः ।

**एवकारकरणं विस्पष्टार्थम्। अह्न एव टखोः—इत्येवं नियमो न भविष्यति; 'आत्माध्वानौ खे' (६.४.१६९) इति प्रकृतिभावविधानात्॥**

**३१४७. ओर्गुणः ॥ १४६ ॥ (८४७)**

**उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। परशव्यमयः। औपगवः। कापटवः।**

**न्यासः**

यदि सिद्धे सति नियमार्थोऽयमारम्भः, एवं सत्येवग्रहणमनर्थकं स्यात्, विनापि तेन सिद्धे सत्यारम्भो नियमार्थो विज्ञास्यते ? इत्याह—**एवकारकरणं विस्पष्टार्थमिति**। अथ विपरीतनियमाशङ्कानिरासार्थं कस्मान्न भवति ? इत्याह—**अह्न एवेत्यादि**। यद्यह्न एव टखोः—इत्येष विपरीतनियमः स्याद्, एवं सत्यन्यस्य खे टिलोपप्रसङ्ग एव नास्ति। 'आत्माध्वानौ खे' इति प्रकृतिवद्भावविधानमनर्थकं स्यादित्यभिप्रायः॥ १४५॥

**ओर्गुणः॥ बाभ्रव्य इति।** 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति बभ्रुशब्दादपत्यार्थे यञ्। **माण्डव्य इति।** अत्रापि गर्गादित्वात्। 'वान्तो यि प्रत्यये' इत्यवादेशः। **शङ्कव्यमित्यादौ** 'तस्मै हितम्' इत्यस्मिन्नर्थे 'उगवादिभ्यो यत्'। **औपगवः, कापटव इति।** अत्राप्यपत्यार्थेऽण्। तद्धित इत्येव—'वोतो गुणवचनात्' इति ङीष्, पट्वी।

**पदमञ्जरी**

**एवकारकरणं विस्पष्टार्थमिति।** विपरीतनियमनिरासार्थं तु न भवतीत्याह—**अह्न एवेति।** विपरीते हि नियमे अन्यस्य खे टिलोपप्रसङ्गाद् 'आत्माध्वानौ खे' इति प्रकृतिभावविधानमनर्थकं स्यादिति भावः॥ १४५॥

**ओर्गुणः॥ बाभ्रव्यादौ** गोत्रे यञ्। शङ्कव्यादौ प्राक्क्रीतीयः 'उगवादिभ्यो यत्' **औपगवादावपत्येऽण्।**

**भावबोधिनी**

* अहन् से समूह अर्थ में 'ख' प्रत्यय कहना चाहिए। * [ यहाँ पूर्ववर्ती सूत्र से टिलोप के ] सिद्ध रहने पर भी यह वचन करना नियम के लिये है। [ ट और ख परे रहते ही टि का लोप होता है, अन्यत्र नहीं ] यहाँ न हो सके—अह्ना निर्वृत्तम् आह्निकम्। [ अहन्+ठक्, यहाँ उपधा के अ का लोप, आदिवृद्धि होती है। टिलोप नहीं होता है। ]

'एव' कार का प्रयोग स्पष्टता के लिए है। अहन् का ही ट और ख परे लोप हो—ऐसा विपरीत नियम नहीं होगा क्योंकि 'आत्माध्वानौ खे'' सूत्र से प्रकृतिभाव का विधान किया है। [ ख प्रत्यय परे आत्मन् और अध्वन् का प्रकृतिभाव होता है। यह व्यर्थ होने लगेगा क्योंकि ट तथा ख परे अहन् का ही टिलोप प्राप्त है, आत्मन् और अध्वन् का नहीं प्राप्त है। परन्तु जब यह नियम किया जाता है कि—अहन् का ट और ख परे ही टिलोप होता है; तब अन्य शब्दों का भी टिलोप प्राप्त है। उसका वारण करने के लिये प्रकृतिभाव-विधायक सूत्र चरितार्थ है। ]॥ १४५॥

तद्धित प्रत्यय परे रहते उवर्णान्त भसंज्ञक का गुण होता है। उदा० बाभ्रव्यः। माण्डव्यः [ बभ्रु शब्द से अपत्यार्थ में ''मधूबभ्र्वोर्ब्राह्मणकौशिकयोः'' सूत्र से यञ् प्रत्यय और मण्डु शब्द से ''गर्गादिभ्यो यञ्'' से किये गये यञ् परे रहते आदिवृद्धि और उकार का गुण होनेपर बाभ्रो+य, माण्डो+य, ''वान्तो यि प्रत्यये'' सूत्र से ओ का अव् आदेश—बाभ्रव्यः, माण्डव्यः। ] शङ्कव्यं दारु। पिचव्यः कार्पासः। [ शङ्कवे हितम्, पिचवे हितम्—इस अर्थ में ''उगवादिभ्यो यत्'' से यत् प्रत्यय उ का गुण, ओ का अव् आदेश ] कमण्डलव्या मृत्तिका। परशव्यम् अयः। [ कमण्डलवे हितम्, परशवे हितम्—इस अर्थ में यत् प्रत्यय, गुण, अव् आदेश ] औपगवः। कापटवः। [ उपगु तथा कपटु से अपत्यार्थ में अण् प्रत्यय, उ का गुण, ओ का अव् आदेश, आदिवृद्धि। ]

'ओरोत्' इति वक्तव्ये गुणग्रहणं 'संज्ञापूर्वको विधिरनित्यो' (व्या० प० ६४) यथा स्यात्, तेन स्वायम्भुव इति सिद्धं भवति ॥

**३१४८. ढे लोपोऽकद्र्वाः ॥ १४७ ॥ (११४२)**

ढे परत उवर्णान्तस्य भस्याकद्र्वा लोपो भवति। कामण्डलेयः। शैतबाहेयः। जाम्बेयः। माद्रबाहेयः।

अकद्र्वा इति किम् ? काद्रवेयो मन्त्रमपश्यत् ॥

**३१४९. यस्येति च ॥ १४८ ॥ (३११)**

**न्यासः**

**ओरोदिति वक्तव्य इति।** एवमुच्यमाने लघु सूत्रं भवतीति भावः। **स्वायम्भुव इति।** स्वयम्भवतीति क्विप्—स्वयम्भूः, स्वयम्भुव इदमित्यण्। संज्ञापूर्वकस्य विधेरनित्यत्वादत्र गुणो न भवति, तस्मिंश्चासत्युवङेव क्रियते ॥ १४६ ॥

**ढे लोपोऽकद्र्वाः ॥ कामण्डलेयः, शैतबाहेय इति।** 'चतुष्पाद्भ्यो ढञ्' इति ढञ्। एवं **जाम्बेय** इत्यत्रापि। **माद्रबाहेय इति।** मद्रबाहुशब्दाद् 'बाह्वन्तात् संज्ञायाम्, इत्यूङ्, तदन्तात् 'स्त्रीभ्यो ढक्'। **काद्रवेय इति।** 'कद्रुकमण्डल्वोश्छन्दसि संज्ञायाम्' इत्यूङ् तदन्तात् पूर्ववड् ढक् ॥ १४७ ॥

**यस्येति च ॥** अत्र यस्येति यकारस्येदं ग्रहणं वा स्यात्, इवर्णावर्णयोर्वा ? अत्र यदि यकारस्येदं ग्रहणं

**पदमञ्जरी**

**संज्ञापूर्वको विधिरित्यादि।** भाष्येऽनुक्तमपि प्रयोगो बाहुल्यादुक्तम्। तद्धित इत्येव—'वोतो गुणवचनात्', पट्वी ॥ १४६ ॥

**ढे लोपोऽकद्र्वाः ॥** मद्रबाहुशब्दाद् 'बाह्वन्तात्संज्ञायाम्' इत्यूङ्, कद्रुशब्दादपि 'कद्रुकमण्डल्वोश्छन्दसि संज्ञायाम्' इत्यूङ्, ताभ्यामपत्ये 'स्त्रीभ्यो ढक्', अन्यत्र 'चतुष्पाद्भ्यो ढञ्', कमण्डलुपद आदधीतेति वह्वृग्ब्राह्मणम्। शृगालः = जम्बुः, शिवा = जम्बूः। जम्बुरेव जम्बजम्बुकः[1] ॥ १४७ ॥

**यस्येति च ॥** इश्च अश्च यम्, समाहारद्वन्द्वे 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' (का० वा० १४२६)

**भावबोधिनी**

'ओरोत्' (उ का ओ होता है) ऐसा कहने के प्रसङ्ग में 'गुण' शब्द का ग्रहण 'संज्ञापूर्वक विधि अनित्य होती है' इसको बताने के लिए है, इस कारण 'स्वायम्भुवः' यह सिद्ध होता है। [ गुण यह संज्ञा है। इसको मानकर प्रस्तुत विधि है। अतः यह अनित्य समझनी चाहिए। इसलिए स्वयं भवति—इस अर्थ में क्विप् प्रत्यय—स्वयम्भूः। स्वयम्भुवः इदम्—इस अर्थ में अण् होता है। यहाँ गुण नहीं होता है; उवङ् आदेश होता है। यदि 'ओरोत्' यह सूत्र रहता तो यहाँ गुण रोकना सम्भव नहीं था। अतः संज्ञापूर्वक विधि की अनित्यता के ज्ञापनार्थ ही यहाँ 'गुण' का उल्लेख है ] ॥१४६॥

ढ परे रहते कद्रू को छोडकर भसंज्ञक उवर्णान्त का लोप होता है। उदा० कामण्डलेयः। शैतबाहेयः। [ कमण्डलु तथा शितबाहु शब्दों से ढञ् = एय प्रत्यय, आदिवृद्धि, उकार का लोप—कामण्डल् + एय, शैतबाह् + एय। ] जाम्बेयः। [ जम्बू + ढञ् ] माद्रबाहेयः। [ मद्रबाहु + ढञ् उकार का लोप होता है। ]

अकद्रू का—इसका क्या फल है ? काद्रवेयो मन्त्रमपश्यत्। [ कद्रू + ढक् = एय, आदिवृद्धि, उ का गुण ओ, अव् आदेश—काद्र् अव् एय = काद्रवेयः। यहाँ उ का लोप नहीं होता है। ] ॥ १४७ ॥

ईकार और तद्धित प्रत्यय के परे रहते भसंज्ञक इवर्णान्त तथा उवर्णान्त का लोप होता है। [ 'अलोऽन्त्यस्य' के अनुसार केवल इवर्ण तथा अवर्ण का ही लोप होता है। ] उदा० ईकार परे इवर्णलोप—दाक्षी। प्लाक्षी। सखी। [ दक्षस्य अपत्यम्—इसमें इञ् प्रत्यय करके 'दाक्षि' बनाने के बाद "इतो मनुष्यजातेः" सूत्र से ङीष् = ई—दाक्षि +

---

१. जम्बुकः—इत्येवोचितः पाठः।

**इवर्णान्तस्यावर्णान्तस्य च भस्य ईकारे परे तद्धिते च लोपो भवति । इवर्णान्तस्य ईकारे—दाक्षी । प्लाक्षी । सखी ।**

**सवर्णदीर्घत्वे हि सत्यतिसखेरागच्छतीत्यत्र एकादेशस्यान्तवत्त्वादसखीति (१.४.७) घिसंज्ञायाः प्रतिषेधः स्यात् ।**

**न्यासः**

स्याद्, उत्तरसूत्रे पुनर्यग्रहणं न कुर्यात्, एतदेव हि तत्रानुवर्त्तिष्यते । तस्मादिवर्णावर्णयोरिदं ग्रहणम् । तत्र वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिर्विज्ञायते—इत्येतच् चेतसि कृत्वाऽऽह—**इवर्णावर्णान्तस्येत्यादि । दाक्षी, प्लाक्षीति ।** दाक्षिप्लाक्षिशब्दाभ्याम् 'इतो मनुष्यजातेः' इति ङीष् । खसीत्यत्रापि 'सख्यशिश्वीति भाषायाम्' इति निपातनात् । ननु चात्र सवर्णदीर्घत्वेनाप्येतत् सिद्धम्, तत् किमर्थमत्र लोपो विधीयते ? इत्यत आह—**सवर्णदीर्घत्वे हीत्यादि ।** अतिक्रान्ता सखी एनमिति 'प्रादिभ्यो धातुजस्य' इति बहुव्रीहिरुत्तरपदलोपश्च, उपसर्जनह्रस्वत्वम् । तत्र यदि सवर्णदीर्घत्वं क्रियेत, न तु लोपस्तदा सखीकारेकारयोरेकादेशः सखिशब्दस्यान्तवद् भवतीति 'शेषो घ्यसखि' इति घिसंज्ञायाः प्रतिषेधः स्यात् । ततश्चातिसखेरागच्छतीति 'घेर्ङिति' इति गुणो न स्यात् । लोपे सत्युपसर्जनह्रस्वत्वे सति यद्यपि प्रविशिष्टं रूपम्, तथापि लाक्षणिकम् । अतो लक्षणप्रतिपदोक्त-परिभाषया, तन्न गृह्यत इति न भवति प्रतिषेधः । तस्माल् लोप एव कर्त्तव्यः ।

**पदमञ्जरी**

इति अशब्दस्य पूर्वनिपातः सौत्रत्वान्न भवति । यशब्दस्य तु ग्रहणं न भवति, लिङ्गात्, यदयं गर्गशब्दस्य यञि कुमारशब्दस्य तु ङीपि लोपं निर्दिशति—'ओतो गार्ग्यस्य', 'कुमार्यां वयसि' इति । अत एव निर्देशादकारे तावद् ह्रस्वस्य ग्रहणम्, तत्साहचर्यादिकारेऽपि । कार्यं तु दीर्घस्यापि भवति; सवर्णग्रहणात् । **दाक्षीति ।** 'इतो मनुष्यजातेः' इति ङीष्, सखिशब्दादपि 'सख्यशिश्वीति भाषायाम्' इति । सर्वत्र सवर्णदीर्घत्वेन रूपं सिध्यति, किं लोपेन ? तत्राह—**सवर्णदीर्घत्वे हीति । अतिसखेरिति ।** अतिक्रान्तः सखीमिति तत्पुरुषे लिङ्गविशिष्ट-परिभाषया 'राजाहःसखिभ्यष्टच्' इति टज्न भवति; तस्यानित्यत्वात् । तत उपसर्जनह्रस्वत्वम् । **एकादेशस्येति ।** ङीषा सह कृतस्य । **असखीति प्रतिषेधः स्यादिति ।** कथं पुनः सखिशब्दस्योच्यमानोऽतिसखिशब्दस्य प्रतिषेधः स्यात् ? तदन्तविधिना; 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' (व्या० प० ८९) । एवं मन्यते—'कार्यकालं संज्ञापरिभाषम्' (व्या० प० ५८) इति पक्षे 'घेर्ङिति' इत्यत्र घिसंज्ञाया उपस्थानाद् 'अङ्गाधिकारे तस्य च

**भावबोधिनी**

ई, यहाँ पूर्व इ का लोप होता है । इसी प्रकार अन्य में भी होता है । [ इनमें लोप न करके सवर्णदीर्घ से भी रूप बन सकते हैं ? ] सवर्णदीर्घ होने पर तो 'अतिसखेः आगच्छति' इसमें (सवर्णदीर्घरूप) एकादेश का अन्तवद्भाव होने से 'शेषो घ्यसखि' सूत्र से असखि इस पर्युदास के कारण घि संज्ञा का प्रतिषेध होने लगेगा । [ जब इ का लोप करते हैं तो ङीष् का ई है, उस उपसर्जन का ह्रस्व होने से घिसंज्ञा और गुण होता है । ]

इवर्णान्त का लोप तद्धित परे उदा० दुलि—दौलेयः । [ दुलि + ढ = एय, इलोप ] वलि—वालेयः । [ वलि + ढ = एय, इलोप ] अत्रि—आत्रेयः । [ अत्रि + ढ = एय, इलोप । इन तीनों उदाहरणों में 'इतश्चानिञः' सूत्र से अपत्यार्थ में ढक् प्रत्यय होता है । ]

ईकार परे अवर्णान्तलोप के उदा० कुमारी । गौरी । शार्ङ्गरवी । [ कुमार + ङीप् "वयसि प्रथमे" सूत्र द्वारा । गौर + ङीष् "षिद्गौरादिभ्यश्च" सूत्र द्वारा । शार्ङ्गरव + ङीन् "शार्ङ्गरवाद्यञो ङीन्" सूत्र द्वारा । सभी में अनुबन्धलोप के बाद 'ई' शेष बचता है । इसे परे मान कर अलोप होता है । ]

तद्धित परे अवर्णान्तलोप के उदा० दाक्षिः । प्लाक्षिः । चौडिः । बालाकिः । सौमित्रिः । [ दक्ष, प्लक्ष, बलाका, सुमित्रा—इनसे अपत्य अर्थ में इञ् तद्धित प्रत्यय करने पर अ, आ का लोप और आदिवृद्धि होने से ये रूप बनते हैं । ]

**इवर्णान्तस्य तद्धिते—दुलि, दौलेयः। वलि, वालेयः। अत्रि, आत्रेयः।**

**अवर्णान्तस्य ईकारे—कुमारी। गौरी। शार्ङ्गरवी।**

**अवर्णान्तस्य तद्धिते—दाक्षिः। प्लाक्षिः। चौडिः। बालाकिः। सौमित्रिः।**

**❀ 'यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः ❀ (का० वा० १)। काण्डे। कुड्ये। सौर्ये हिमवतः शृङ्गे। औङः शीभावे कृते 'यस्येति च' इति, 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' (६.४.१४९) इति च लोपः प्राप्नोति।**

**❀ इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन ❀ (का० वा० २)। वत्सान्प्रीणाति वत्सप्रीः, तस्यापत्यं वात्सप्रेयः। 'चतुष्पाद्भ्यो ढञ्' (४.१.१३५) इति ढञ् प्रत्ययः। लेखाभ्रूः शुभ्रादिः, तस्या अपत्यं लैखाभ्रेयः॥**

**न्यासः**

**दौलेय** इति उदाहरणत्रये 'इतश्चानिञः' इत्यपत्यार्थे ढक्।

**कुमारीति**। 'वयसि प्रथमे' इति ङीप्। **गौरीति**। 'षिद्गौरादिभ्यश्च' इति ङीष्। **शार्ङ्गरवीति**। 'शार्ङ्गरवाद्यञो ङीन्'। **बालाकिः, सौमित्रिरिति**। बलाकासुमित्राभ्यां बाह्वादित्वादिञ्।

**यस्येत्यादाविति**। आदिशब्देनोत्तरो विधिः परिगृह्यते। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'विभाषा ङिश्योः' इत्येतत्सूत्राद्विभाषाग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते, सा च व्यवस्थितविभाषा। तेन चानेन सूत्रेण लोपो विधीयते, यश्चोत्तरसूत्रेण, तावुभावपि न भवत इति। **काण्डे, कुड्ये इति**। 'औङ आपः' इति, 'नपुंसकाच्च' इति शीभाव इति, तत्र यस्येत्यकारलोपः प्राप्नोति। **सौर्ये इति**। 'तेनैकदिक्' इति सूर्यशब्दादण्, तदन्तादौङः शीभावः, तत्रानेनाकारलोपः प्राप्नोति, उत्तरसूत्रेण यकारलोपश्च। **इयङुवङ्भ्यामित्यादि**। इयङुवङोरवकाशः—श्रियौ, श्रियः, भ्रुवौ, भ्रुवः, लोपस्यावकाशः—कामण्डलेयः, माद्रबाहेय इति; वात्सप्रेयः, लैखाभ्रेय इत्यत्रोभयं प्राप्नोति, लोपो भवति विप्रतिषेधेन। **वत्सप्रीरिति**। क्विबन्तमेतत्॥ १४८॥

**पदमञ्जरी**

तदुत्तरपदस्य च' इत्यस्ति तदन्तविधिरिति। यद्वा—शेषस्येकारोकारमात्रस्य घिसंज्ञा, न तदन्तस्य, ततः किम्? असखीत्यपि सखिशब्देकारस्य प्रतिषेधः, न सखिशब्दस्य। एकादेशे च सखिशब्देकार एवायमिति तदन्तेऽपि प्रतिषेधः स्यादेव। लोपे तु सति यद्यप्युपसर्जनह्रस्वत्वे कृते रूपमविशिष्टम्; तथापि तस्य लाक्षणिकत्वान्न भवति प्रतिषेधः। **दौलेयादौ** 'इतश्चानिञः' इति ढक्। बलाका—सुमित्राशब्दौ बाह्वादौ। **सौर्य इति**। 'तेनैकदिक्' इत्यण्, एतच्च 'सूर्यागस्त्ययोश्छेच ङ्यां च' (वा० ७०८) इत्यनपेक्ष्योदाहृतम्।

**इयङुवङ्भ्यामिति**। इयङुवङोरवकाशः-श्रियौ, भ्रुवौ, लोपस्यावकाशः—दौलेयः, कामण्डलेयः॥१४८॥

**भावबोधिनी**

❀ औङ् का शी आदेश कर देने पर 'यस्य' (इ अ का लोप) इसका प्रतिषेध करना चाहिए। ❀ [ औङ यह औ का नाम = संज्ञा है। ] उदा० काण्डे। कुड्ये। [ काण्ड + औ, कुड्य + औ, "नपुंसकाच्च" सूत्र से औ का शी = ई आदेश। यहाँ भी अलोप प्राप्त है, उसका प्रतिषेध कर दिया जाता है। अ + ई का गुण करके उक्त रूप बनते हैं। ] सौर्ये हिमवतः शृङ्गे। [ सौर्य + औ, शृङ्ग + औ, शी = ई आदेश अलोप का प्रतिषेध, गुण ] औङ् का शी = ई भाव कर देने पर 'यस्येति च' इससे अलोप कर देने पर [ सौर्य + ई में ] "सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः" इस सूत्र से य्लोप प्राप्त होता है। ]

इयङ् और उवङ् की अपेक्षा लोप विप्रतिषेध से होता है। ❀ उदा० वत्सान् प्रीणाति—इस अर्थ में—वत्सप्रीः, इसका अपत्य—वात्सप्रेयः। वत्सप्री शब्द से "चतुष्पाद्भ्यो ढञ्" सूत्र से ढञ् प्रत्यय [ वत्सप्री + ढ = एय, ईलोप, आदिवृद्धि ] लेखाभ्रूः—यह शुभ्रादिगणीय है, इसका अपत्य—लैखाभ्रेयः। [ "शुभ्रादिभ्यश्च" सूत्र से ढञ् होता है। इनमें इयङ् और उवङ् की प्राप्ति तथा लोप की प्राप्ति में परवर्त्ती विप्रतिषेध से लोप ही होता है। ] ॥ १४८॥

---

१. भाष्ये—'यस्येत्यादौ श्यां प्रतिषेधः' इति दृश्यते।

## ३१५०. सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ।। १४९ ।। (४९९)

**सूर्य, तिष्य, अगस्त्य, मत्स्य—इत्येतेषां यकारस्य उपधाया भस्य लोपो भवति ईति परतस्तद्धिते च । सूर्येणैकदिक् सौरी बलाका । अणि यो यस्येति लोपस्तस्यासिद्धत्वं नास्ति; व्याश्रयत्वात् । ईकारे तु यस्तस्यासिद्धत्वाद् उपधायकारो भस्याणन्तस्य सूर्यस्य सम्बन्धीति लुप्यते । तिष्य—तैषमहः । तैषी रात्रिः । अगस्त्यस्यापत्यं स्त्री, ऋषित्वादणि कृते—आगस्ती । आगस्तीयः । मत्स्य—गौरादित्वान् ङीष्, मत्सी ।**

**न्यासः**

**सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥** यद्यत्र भसंज्ञया सूर्यादयो विशिष्येरन्—सूर्यादीनां भसंज्ञकानामिति, तदा सौरी बलाकेत्यत्र लोपो न स्यात् । न हि सूर्यशब्द इह भसंज्ञक इति, किं तर्हि ? अन्यदेवाणन्तं शब्दान्तरमिति बुद्धौ निधायानाश्रितरूपभेदस्य लोपेन सम्बन्धः सूर्यादिभिः सम्बन्धिभिर्यकारो विशिष्यत इति दर्शयन्नाह—**सूर्यतिष्यागस्त्यमत्स्य—इत्येतेषामित्यादि । भस्येति ।** भसंज्ञकस्य । यो यकार उपधा तस्य लोपो भवति स चेद् यकारः सूर्यादीनां सम्बन्धी भवति—अयमत्रार्थो विवक्षितः । ते तु सूर्यादयो भत्वेन न विशिष्यन्ते । तेन यदापि तेषां भसंज्ञा न भवति, तदापि तस्योपधायकारस्य लोपो भवत्येव यद्यसौ यकारः सूर्यादीनां सम्बन्धी भवति । **सौरी बलाकेति ।** ननु चात्राकारलोपस्य व्याश्रयत्वेनासिद्धत्वं नास्तीत्युपधायकारो न भवतीत्येतदुक्तम् ? इत्याह—**अणि यो यस्येतिलोप इत्यादि ।** अत्र हि द्वौ यस्येतिलोपौ—एकोऽणि परतः, अपर ईकारे । तत्र प्रथमो व्याश्रयः, तथा हि—लोपोऽणमाश्रित्य भवति, यलोपस्त्वीकारम्, अतो व्याश्रयत्वादसिद्धत्वाभावस्तस्य युक्तः । इतरस्त्वीकारमाश्रित्य भवति समानाश्रय एव, ततश्च तस्यासिद्धत्वादुपधायकारो भवति । **भस्याणन्तस्येत्यादिना** सूत्रार्थमुदाहरणे दर्शयति । **तैषम्, तैषीति ।** 'नक्षत्रेण युक्तः कालः' इत्यण्, 'टिड्ढाणञ्' इति

**पदमञ्जरी**

**सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥** यद्यत्र भत्वेन सूर्यादयो विशेष्यन्ते—सूर्यादीनां भसंज्ञानामिति, ततः सूर्यस्य स्त्री सूरी, आगस्त्यस्य अगस्तीत्यादौ यत्र सूर्याद्येव भसंज्ञकं तत्रैव स्यात्; सौरी बलाकेत्यत्र तु न स्यात्, न ह्यत्र सूर्यशब्द ईति भसंज्ञकः, किं तर्हि ? अणन्तम् । तस्मादनाश्रितरूपस्य भमात्रस्य लोपेन संबन्धः । सूर्यादिभिर्यकारो विशेष्यते इति दर्शयन्नाह—**सूर्यतिष्यागस्त्यमत्स्येत्येतेषामिति ।** भसंज्ञकस्य यो यकार उपधा तस्य लोपो भवति, स चेत्सूर्यादीनां सम्बन्धीत्यर्थः । **सौरीति ।** अत्र ईति परतो भसंज्ञकमङ्गमणन्तं तस्य यकार उपधा यथा भवति तथा दर्शयति—**अणि यो यस्येति लोप इति । व्याश्रयत्वादिति ।** अणि यस्येति लोपः, ईति यलोपः इति व्याश्रयत्वम् । **ईकारे तु य इति ।** लोप इत्यपेक्षते । **भस्याणन्तस्येति ।** भसंज्ञकस्याणन्तस्य यकार उपधा भवतीत्यर्थः । स्थानिवद्भावस्तु द्वयोरपि यस्येतिलोपयोर्यलोपविधिं प्रति प्रतिषिद्धः ।

**भावबोधिनी**

सूर्य, तिष्य, अगस्त्य, मत्स्य इनके भसंज्ञक के यकार उपधा का लोप ई परे और तद्धित परे होता है । उदा० सूर्येण एकदिक्—सौरी बलाका । [ सूर्य + अण् आदिवृद्धि, अलोप—सौर्य + ङीप् = ई, यहाँ अलोप करने के बाद प्रस्तुत सूत्र से उपधा य् का लोप होता है । ] यहाँ [ सम्बन्धार्थ में विहित ] अण् परे रहते जो य = इ, अ का लोप होता है, वह [ असिद्धवदत्रा भात्" से ] असिद्ध नहीं होता है क्योंकि विभिन्न आश्रय ( = निमित्त ) वाला है । [ प्रस्तुत उदाहरण में दो बार अ का लोप होता है–(१) अण् प्रत्यय परे रहते और दूसरी बार (२) ई प्रत्यय परे रहते हैं । इसलिये पहले वाला लोप असिद्ध नहीं होता है, तब य्लोप में बाधा नहीं है । ] किन्तु ईकार परे रहते जो [ दुबारा अण् के अ का ] लोप होता है वह तो असिद्ध हो जाता है इसलिये भसंज्ञक अण्प्रत्ययान्त सूर्य का सम्बन्धी उपधायकार हो जाता है, उसका लोप होता है । [ यदि असिद्ध नहीं माना जायगा तो उपधा में न होकर अन्त में ही य् मिलेगा, लोप नहीं हो सकेगा । ] तिष्य—तैषम् अहः । तैषी रात्रिः । [ तिष्य + अण् "नक्षत्रेण युक्तः कालः" इस सूत्र से सूत्रोक्त अर्थ में अण्, भसंज्ञा अलोप, य्लोप—तैषम् । ङीप् करने पर तैषी । तिष्य पुष्य पर्याय हैं ] अगस्त्य की स्त्री अपत्य—आगस्ती, ऋषिवाचक होने

**उपधाया इति किम् ? मत्स्यचरी ।**

**यग्रहणमुत्तरार्थम् । विषयपरिगणनमत्र कर्त्तव्यम्—**

**❀ [1]मत्स्यस्य ङ्यामिति वक्तव्यम् ❀ (का० वा० ५) । इह मा भूत्—मत्स्यस्येदं मांसं मात्स्यम् ।**

**❀ सूर्यागस्त्ययोश्छे च ङ्यां च ❀ (का० वा० ६) । सौरीयः । सौरी । आगस्तीयः । आगस्ती । इह मा भूत्—सौर्यं चरुं निर्वपेत् । आगस्त्यः ।**

**❀ तिष्यपुष्ययोर्नक्षत्राणि ❀ (का० वा० ७) । तिष्येण नक्षत्रेण युक्तः कालः तैषः । पौषः ।**

**न्यासः**

ङीत् । **ऋषित्वादणि कृत इति ।** 'ऋष्यन्धक' इत्यादिना । **मत्स्यचरीति ।** मत्स्यो भूतपूर्वः—'भूतपूर्वे चरट्', पूर्ववन् ङीप् । भवत्यत्र मत्स्यचर इति भसंज्ञकमत्स्यसम्बन्धो यकारः, न त्वसौ भसंज्ञकस्योपधेति लोपो न प्रवर्त्तते ।

अथ किमर्थं यग्रहणम्, यावता सूर्यादिभिरुपधायां विशिष्यमाणायाम् अन्तरेणापि यग्रहणं यकारस्योपधाभूतस्य लोपो विज्ञास्यते, यकार एव हि तेषामुपधा, न तु वर्णान्तरम् ? इत्यत आह—**यग्रहणमुत्तरार्थमिति ।** वक्तव्यमिति व्याख्येयमित्यर्थः । व्याख्यानं त्विहापि पूर्ववद् विभाषामाश्रित्य कर्त्तव्यम् । **मात्स्यमिति ।** 'तस्येदम्' इत्यण् ।

**सौरीयमिति ।** अणन्ताद् 'वृद्धाच्छः' । **एवमागस्तीयमिति । सौर्यमिति ।** सूर्यो देवतास्येति 'सास्य देवता' इत्यण् । **आगस्त्य इति ।** अपत्यार्थ ऋष्यण् ।

**नक्षत्राणीति ।** नक्षत्रसम्बन्धो योऽण् तस्मिन्नित्यर्थः ।

**पदमञ्जरी**

**मत्स्यचरीति ।** मत्सो भूतपूर्वेति चरट्, तसिलादिष्विति पुंवद्भावः, टित्वान्ङीप्, भवत्यत्र मत्स्यचर-शब्दे ईति भसंज्ञकः, मत्स्यसम्बन्धी च यकारः, न त्वसौ भसंज्ञकस्योपधेति लोपाभावः ।

**यग्रहणमुत्तरार्थमिति ।** इह तु सूर्यादिसम्बन्धी भसंज्ञकस्योपधायकार एव न वर्णान्तरमिति नार्थस्तेन ।

**सौरीय इति ।** सौर्यशब्दाद्वृद्धाच्छः । एवम्—**आगस्तीयः । आगस्त्य इति ।** अपत्ये ऋष्यण् ।

**तिष्यपुष्ययोरिति ।** तिष्यस्य सूत्रेणैव प्राप्ते नक्षत्राणि नियमः, पुष्यस्याप्राप्ते विधिः सूत्रे त्वर्थग्रहणे सिध्यत्यस्यापि प्रसङ्गः ।

**भावबोधिनी**

से [ ऋष्यन्धकवृष्णिकुरुभ्यश्च" से अण् करने पर [ अलोप, य्‌लोप होता है ] । आगस्तीयः [ सम्बन्ध अर्थ में छ = ईय करने पर अलोप, य्‌लोप करने पर रूप बनता है । ] मत्स्य—मत्सी, गौरादि में होने से—"षिद्गौरादिभ्यश्च" सूत्र से ङीष् = ई प्रत्यय होता है । [ अलोप, यलोप होने पर रूप बनता है । ]

उपधा यकार का—इसका क्या फल है ? मत्स्यचरी । [ भूतपूर्वः मत्स्यः—इस अर्थ में "भूतपूर्वे चरट्" से चरट् प्रत्यय, ङीप् होते हैं । यहाँ उपधा य् न होने से लोप नहीं होता है । ]

य—का ग्रहण उत्तरवर्ती सूत्र के लिए है । यहाँ विषय का परिगणन कर देना चाहिए—❀ मत्स्य का ङी परे ही लोप होता है—ऐसा कहना चाहिए ।❀ जिससे यहाँ न हो सके—मत्स्यस्य इदं मांसं—मात्स्यम् । [ मत्स्य + अण्, आदिवृद्धि, अलोप । य् लोप नहीं होता है । ] ❀ सूर्य तथा अगस्त्य का छ प्रत्यय और ङी प्रत्यय परे ही लोप होता है । ❀ उदा० सौरीयः, सौरी । [ सूर्य से अण् करने के बाद छ और ङीप् किये जाते हैं । तब अलोप, यलोप होते हैं । ] आगस्तीयः, आगस्ती । [ अगस्त्य से अण् करने के बाद वृद्ध मान कर छ और स्त्री अर्थ में ङीप् होता है । ] यहाँ न हो सके—सौर्यं चरुं निर्वपेत् । आगस्त्यः [ सम्बन्ध अर्थ में अण् और अपत्य अर्थ में अण् है । ]

---

१. 'सूर्यमत्स्ययोर्ङ्याम्' एतद् भाष्ये दृश्यते ।

❀ **अन्तिकस्य तसि कादिलोप आद्युदात्तं च** ❀ (का० वा० ८)। अन्तिकशब्दस्य तसिप्रत्यये परतः ककारादेः शब्दस्य लोपो वक्तव्यः, आद्युदात्तं च। अन्तितो न दूराद्।

❀ **तमे तादेश्च** ❀ (म० भा०)। तमप्रत्यये अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः। तत्र तादिलोपे—अन्तमः। कादिलोपे—अन्तितमः।

❀ **कादिलोपे बहुलमिति वक्तव्यम्** ❀ (म० भा०)। अन्यत्रापि हि दृश्यते—अन्तिके सीदतीति अन्तिषत्। 'पूर्वपदात्' इति षत्वम्।

❀ **ये च** ❀ (म० भा०)। अन्तियः॥

**न्यासः**

**ककारादेः शब्दस्येति**। ककारस्याकारस्येत्यर्थः। **आद्युदात्तत्वं चेति**। प्रत्ययस्वरेणान्तोदात्तत्वे प्राप्ते सत्याद्युदात्तार्थं वचनम्। **अन्तित इति**। 'अपादाने चाहीयरुहोः' इति तसिः।

**तादेश्चेति**। तिकशब्दस्येत्यर्थः। चकारात् कादेश्च। **अन्तम इति**। 'अतिशायने तमप्'।

**अन्तिषदिति**। 'सत्सूद्विष' इत्यादिना क्विप्।

**ये चेति**। दृश्यत इति प्रकृतेन सम्बन्धः। **अन्तिय इति**। 'भवे छन्दसि' इति यः, 'तत्र साधुः' इति वा। केचित् सर्वमेव लोपविधानं छन्दस्येवेच्छन्ति॥ १४९॥

**पदमञ्जरी**

**अन्तिकस्येत्यादि**। छन्दस्येतदिष्यते। **ककारादेः शब्दस्येति**। ककारस्याकारस्य चेत्यर्थः। **आद्युदात्तञ्चेति**। प्रत्ययस्वरस्यापवादः। **अन्तित इति**। 'अपादाने चाहीयरुहोः' इति तसिः। **कादेश्चेति**। कशब्दस्येत्यर्थः। **अन्तिषदिति**। 'सत्सूद्विष' इत्यादिना क्विप्। बह्वृचास्तु व्यस्तमधीयते।

**ये चेति**। दृश्यत इत्यपेक्षते। **अन्तिय इति**। 'भवे छन्दसि' इति यत्। कादिलोपस्यासिद्धत्वाद्यस्येति लोपाभावः॥ १४९॥

**भावबोधिनी**

❀ तिष्य तथा पुष्य का लोप नक्षत्र अर्थ में अण् में होता है। ❀ उदा० तिष्येण नक्षत्रेण युक्तः कालः—तैषः। [ पुष्येण नक्षत्रेण युक्तः कालः ] पौषः। [ अलोप, यलोप होने पर रूप बनते हैं। ]

❀ तस् परे अन्तिक का कादिलोप और आद्युदात्त होता है। ❀ तस् प्रत्यय परे रहते अन्तिक शब्द के ककारादि = ककार और अकार का लोप तथा आद्युदात्त कहना चाहिए। उदा० अन्तितो न दूरात्। [ अन्तिक+तस् क् और अ दोनों का लोप होता है। अपादान अर्थ में तस् प्रत्यय है। ]

❀ तम परे तादि का लोप ❀ तम प्रत्यय परे रहते अन्तिक शब्द के तकारादि और ककारादि (तिक और क दोनों) का लोप कहना चाहिए। इनमें तादिलोप का उदा० अन्तमः [ 'अतिशयेन अन्तिकः' अर्थ में 'अतिशायने तमबिष्ठनौ" से तमप् प्रत्यय, 'तिक' शब्द का लोप अन्+तम = अन्तमः। कादिलोप का उदा० अन्तितमः। [ यहाँ पूर्ववत् तमप् प्रत्यय और 'क' का लोप—अन्ति + तम। ]

❀ कादिलोप में बहुल ऐसा कहना चाहिये। ❀ क्योंकि अन्य स्थलों में यलोप देखा जाता है—अन्तिके सीदति—इस अर्थ में अन्तिषद्। [ अन्तिके उपपद सद् धातु से क्विपादि करने के बाद 'क' का लोप—अन्ति सद् ] यहाँ "पूर्वपदात्" (८।३।१०६) से स् का ष् होता है।

❀ और य परे भी कादिलोप होता है। ❀ उदा० अन्तियः। [ यहाँ भव अर्थ में या साधु अर्थ में 'अन्तिक' से 'य' प्रत्यय करने पर 'क' का लोप होता है। ]॥ १४९॥

**३१५१. हलस्तद्धितस्य ॥ १५० ॥ (४७२)**

**'तद्धिते'[1] इति निवृत्तम्[1]। हल उत्तरस्य तद्धितयकारस्य उपधाया ईति परतो लोपो भवति। गार्गी। वात्सी।**

**हल इति किम्? कारिकेयी। तद्धितस्येति किम्? वैद्यस्य भार्या वैद्यी॥**

**३१५२. अपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥ (१०८२)**

**अपत्ययकारस्य हल उत्तरस्य तद्धिते अनाकारादौ यलोपो भवति। गर्गाणां समूहो गार्गकम्। वात्सकम्।**

**आपत्यस्येति किम्? साङ्काश्यकः। काम्पिल्यकः।**

**न्यासः**

**हलस्तद्धितस्य ॥** तद्धित इति निवृत्तमिति। उत्तरसूत्रे तद्धितग्रहणात्। [2]तेनायमीत्येव विधिः। **गार्गीत्यादि।** गर्गादिशब्देभ्यो यञन्तेभ्यः 'यञश्च' इति ङीप्। **कारिकेयीति।** 'स्त्रीभ्यो ढक्', तदन्ताद् 'टिड्ढाणञ्' इति ङीप्। **वैद्यीति।** 'पुंयोगादाख्यायाम्' इति ङीष्॥ १५०॥

**आपत्यस्य च तद्धितेऽनाति ॥ गार्गकमिति।** 'गोत्रोक्षोष्ट्रोरभ्र' इत्यादिना गार्ग्यशब्दाद्वुञ्, तत्र यञो लोपः। **साङ्काश्यक इति। काम्पिल्यक इति।** पूर्ववत् सङ्काशकम्पिलशब्दभ्याञ्चातुरर्थिकः 'वुञ्छण्' इत्यादिना ण्यः, तदन्ताज्जातादौ शैषिकेऽर्थे 'धन्वयोपधाद्वुञ्' इति वुञ्।

अथ तद्धितग्रहणं किमर्थम्, 'नस्तद्धिते' इति तद्धितग्रहणमनुवर्त्तिष्यते? इत्यत आह—**तद्धितग्रहणमित्यादि।** सोमो देवतास्येति 'सोमाट्ट्यण्', 'टिड्ढाणञ्' इति ङीप्। तत्र परतोऽनपत्ययकारस्यापि 'हलस्तद्धितस्य' इत्यनेन लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम्; अन्यथा यदि तदेव प्रकृतं तद्धितग्रहणमिहानुवर्त्तते, तदा तत्सम्बद्धमीद्ग्रहणमनुवर्त्तेत। तथा चोभयमिहानुवर्त्तमानं पूर्वयोगेऽप्यनुवर्त्तेत। तथा च—पूर्वेणैव योगेन

**पदमञ्जरी**

**हलस्तद्धितस्य ॥ तद्धित इति निवृत्तमिति। उत्तरसूत्रे पुनस्तद्धितग्रहणात्, [2]तेनायमीत्येव विधिः ॥१५०॥**

**आपत्यस्य च तद्धितेऽनाति ॥ गार्गकमिति।** 'गोत्रोक्षोष्ट्र' इत्यादिना वुञ्, 'सङ्काशादिभ्यो ण्यः' इति वुञ्छणादिसूत्रेण चातुरर्थिकः, ततः 'धन्वयोपधाद्वुञ्' इति जातादावर्थे।

**तद्धितग्रहणमित्यादि।** सोमो देवतास्येति 'सोमाट्ट्यण्' टित्त्वान्ङीप्, तत्र परतोऽनापत्ययकारस्याप्यस्य 'हलस्तद्धितस्य' इति लोपो यथा स्यादित्येवमर्थमिह तद्धितग्रहणं कृतम्; अन्यथा हि प्रकृतं तद्धितग्रहण-

**भावबोधिनी**

'तद्धिते' ( तद्धित परे रहते )—इसकी निवृत्ति होती है। ईत् = ई परे रहते हल् से उत्तरवर्त्ती तद्धित यकार उपधा का लोप होता है। उदा० गार्गी। वात्सी। [ गार्ग्य + ङीप् वात्स्य + ङीप् = ई, यकार उपधा है, उसका लोप। 'यस्येति च' इससे पहले अ का लोप होता है किन्तु य् लोप के प्रसङ्ग में अलोप असिद्ध हो जाने के कारण य उपधा हो जाता है। ]

हल् से उत्तरवर्त्ती का—इसका क्या फल है? कारिकेयी। [ कारिका + ढक् – एय; आलोप कारिकेय + ङीप् यहाँ हल् से उत्तरवर्त्ती य् नहीं है। अतः लोप नहीं होता है। ] तद्धित का (लोप होता है)—इसका क्या फल है? वैद्यस्य भार्या वैद्यी। [ वैद्य + ङीप् = ई। यहाँ हल् से उत्तर य है किन्तु वह तद्धित नहीं है। अतः लोप नहीं होता है। ] ॥१५०॥

अनाकारादि ( जिसके आदि में आकार नहीं है ऐसा) तद्धित प्रत्यय परे रहते हल् से उत्तरवर्त्ती, अपत्यप्रत्यय-सम्बन्धी यकार का लोप होता है। उदा० गर्गाणां समूहः—गार्गकम्। वत्सानां समूहः—वात्सकम्। [ गार्ग्य, वात्स

---

१–१. पाठोऽयं मुद्रितमूलपुस्तके नास्ति।　　२. 'तेन अयम् ईति (ईकारे परे) एव विधि' पदच्छेदः।

**तद्धितग्रहणमीत्यनापत्यस्यापि लोपार्थम्—सौमी इष्टिः ।**

**अनातीति किम् ? गार्ग्यायणः । वात्स्यायनः ।**

**न्यासः**

सिद्धे सत्युभयत्र तद्धित ईति च नियमार्थोऽयमारम्भः स्यात्—आपत्यस्येवानाकारादौ तद्धिते लोपो भवति ईति च, नानापत्ये च । एवं च यथानपत्यस्य साङ्काश्यक इत्यत्र लोपो न भविष्यति, तथा सौमी इष्टिरित्यत्रापि न स्यात्; नियमेन व्यावर्त्तितत्वात् । इह तु तद्धितग्रहणे क्रियमाणे पूर्वयोगे तद्धितग्रहणस्य निवृत्तिराख्यायते । तेन पूर्वयोगेन तद्धितमात्रस्य यकारस्यानपत्यस्य चापत्यस्य चाविशेषेण लोपो विधीयते । सौमी इष्टिरित्यत्रापि लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम् । ननु च यद्युभयत्र तद्धित ईति चायं नियमः स्यात् सूत्रद्वयस्यार्थोऽपार्थकः स्यात् । 'हल आपत्यस्यानाति' इत्येकमेव योगं कुर्यात् । तस्मात् सूत्रद्वयस्यारम्भसामर्थ्यादन्यतरस्यैवेहानुवृत्तिर्भविष्यति, न तूभयस्यापि । इह त्वेतावान् सन्देहः स्यात्—किं तद्धितग्रहणमिहानुवर्त्तते, उतेद्ग्रहणमिति ? अत्रापि तद्धितग्रहणमनुवर्त्तते, तेद्ग्रहणमिति; व्याख्यानात् । सर्वसन्देहेष्विदमुपतिष्ठते—'भवति व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति । तद्धितग्रहणे च केवल इहानुवर्त्तमाने तद्धितविषय एवायं नियमो भविष्यति, न त्वीद्विषय इति । तथा चासत्यपि पुनरिह तद्धितग्रहण ईति नियमाभावात् पूर्वसूत्रेण सौमी इष्टिरित्यत्रापि लोपः सिध्यत्येव । तत् कथमिदमुक्तम्—तद्धितग्रहणमीत्यनपत्यस्यापि लोपार्थमिति ? सुखेन लोपः प्रतीयत इत्येतदर्थमिदमित्यभिप्रायो द्रष्टव्यः । ततश्चायमत्रार्थः सम्पद्यते—प्रतिपत्तिगौरवपरीहारार्थं तद्धितग्रहणम् ।

**गार्ग्यायण इति ।** 'यञिञोश्च' इति फक् ।

**पदमञ्जरी**

मिहानुवर्त्तनीयम्, तस्मिंश्चानुवर्त्तमाने तत्सम्बद्धमीतीत्यपि सम्बध्येत, [1]तच्चोभयमिह सम्बध्यमानं पूर्वसूत्रेऽपि सम्बध्येत[1], ततश्च पूर्वेणैव सिद्धे सत्युभयत्र तद्धित ईति चेति नियमोऽयं विज्ञायते—आपत्यस्यैवानाकारादौ तद्धिते ईति चेति । ततो यथा तद्धितेऽनापत्यस्य न भवति—साङ्काश्यक इत्यादौ, तथा इत्यपि न स्यात्—सौमी इष्टिरिति । तद्धितग्रहणे तु सति तेन पूर्वयोगे तद्धितग्रहणस्य निवृत्तिराख्यातेत्यापत्यानापत्ययोर्द्वयोरपि पूर्वेण ईति लोपो विधीयत इति सौमी इष्टिरित्यत्रापि यलोपः सिध्यतीत्यतस्तद्धितग्रहणम् । ननु च यद्युभयस्यायं नियमः स्याद्, योगविभागोऽनर्थकः स्याद्, 'हल आपत्यस्य तद्धितस्यानाति' इत्येकमेव योगं कुर्यात्, ततो योगविभागादन्यतरस्यैवानुवृत्तिः, तत्रापि 'अनाति' इति वचनात्तस्यैव ? एवमपि दोषः; अनापत्यस्य तद्धितेऽपि प्राप्नोति,

**भावबोधिनी**

शब्दों से 'गोत्रोक्षोष्ट्रोरभ्र' (४।२।३९) सूत्र से वुञ् = अक प्रत्यय, अलोप के बाद य् लोप होता है । ]

आपत्य = अपत्यसम्बन्धी—इसका क्या फल है ? साङ्काश्यकः । काम्पिल्यकः । [ सङ्काश और कम्पिल—शब्दों से "वुञ्छण्कठजिल०" (४।२।८०) सूत्र से ण्य = य प्रत्यय, आदिवृद्धि—साङ्काश्य, काम्पिल्य । इनसे जात = वहाँ पैदा हुआ—इस अर्थ में "धन्वयोपधाद् वुञ्" से वुञ् प्रत्यय साङ्काश्य + वु = अक, काम्पिल्य + वु = अक, इनमें 'य' अपत्य-सम्बन्धी नहीं है अपि तु चातुरर्थिक प्रत्यय है । अतः लोप नहीं होता है । ]

[ अपत्यार्थक प्रत्यय तो तद्धित ही है तब तद्धित का स्वतन्त्ररूप से उल्लेख क्यों किया गया ? ] तद्धित का ग्रहण अपत्यसम्बन्धी से भिन्न य का भी लोप कराने के लिये है—सौमी इष्टिः । [ सोम + ट्यण् = य, आदिवृद्धि, टित् होने से ङीप् = ई—सौम्य = ई, अलोप, यलोप । यहाँ 'य' प्रत्यय 'साऽस्य देवता' अर्थ में है फिर भी लोप हो जाता है ।]

अनाति—अनाकारादि परे—इसका क्या फल है ? गार्ग्यायणः । वात्स्यायनः [ गार्ग्यस्य गोत्रापत्यम्, वात्स्यस्य गोत्रापत्यम् अर्थ में—"यञिञोश्च" सूत्र से फक्—आयन प्रत्यय होता है । यह आकारादि ही है । अतः यलोप यहीं होता है । ]

---

१–१. पाठोऽयमेकस्मिन् पुस्तके नास्ति ।

हल इत्येव—कारिकेयस्यापत्यं कारिकेयिः ॥

**३१५१. क्यच्व्योश्च ॥ १५२ ॥ (२११९)**

क्य, च्वि—इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य लोपो भवति । वात्सीयति । गार्गीयति । [1]वात्सायते । गार्गायते । च्वौ—गार्गीभूतः । वात्सीभूतः ।

आपत्यस्येत्येव—साङ्काश्यायते । साङ्काश्यभूतः ।

**न्यासः**

**कारिकेयिरिति** । कारिकाया अपत्यमिति 'स्त्रीभ्यो ढक्', ततस्तस्यापत्यम्, 'अत इञ्' कारिकेयिः ॥ १५१ ॥

**क्यच्व्योश्च** । अतद्धितार्थोऽयमारम्भः । 'क्य' इति क्यच्क्यङोः सामान्येन ग्रहणम् । **गार्गीयतीति** । 'सुप आत्मनः क्यच्', 'क्यचि च' इतीत्वम् । **गार्गीय इति** । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्, 'अकृत्सार्व-

**पदमञ्जरी**

कथम् ? आपत्यस्य यदि भवति अनाकारादावेवेति नियमसम्भवात्, साङ्काश्यकादौ लोपः स्यादेव । अनाकारादाविति नियमः, तत आकारादावापत्यानापत्ययोर्द्वयोरपि लोपप्रसङ्गो यद्यनापत्ये आकारादौ सम्भवति । अथ न सम्भवति तदा न कश्चिद्दोषः; आपत्यस्यैव तद्धिते, तत्राप्यनाकारादेवेति नियमद्वयाश्रयणात् ॥ १५१ ॥

**क्यच्व्योश्च** ॥ **गार्गीयतीति** । 'क्यचि च' इतीत्वम् । **गार्गीयत इति** । 'अकृत्सार्वधातुकयोर्दीर्घः',

**भावबोधिनी**

हल् से उत्तरवर्त्ती का ही लोप—कारिकेयस्य अपत्यम्—कारिकेयिः । [ कारिकेय + इञ् में हल् से उत्तरवर्त्ती य न होने से लोप नहीं होता है । ] ॥ १५१ ॥

क्य और च्वि—इन प्रत्ययों के परे रहने पर हल् से उत्तरवर्त्ती अपत्य-सम्बन्धी यकार का लोप होता है । उदा०—वात्सीयति । गार्गीयति । वात्सायते । गार्गायते । [ गार्ग्यमात्मन इच्छति, वात्स्यमात्मन इच्छति—इस अर्थ में "सुप आत्मनः क्यच्" सूत्र से क्यच् = य प्रत्यय, धातुसंज्ञा, सुप् प्रत्ययलोप—गार्ग्य + य, वात्स्य+य, यहाँ य् लोप प्रस्तुत सूत्र से करने के बाद 'क्यचि च' सूत्र से अ का ईत्व—गार्गीय, वात्सीय, लट् का रूप है—गार्गीयति, वात्सीयति । वात्स्य इव आचरति, गार्ग्य इव आचरति—इनमें "कर्तुः क्यङ् सलोपश्च" सूत्र से क्यङ् = य प्रत्यय—गार्ग्य + य, वात्स्य + य, प्रस्तुत सूत्र से यलोप गार्ग + य, वात्स + य, 'अकृत्सार्वधातुकयोः' सूत्र से दीर्घ—गार्गाय, वात्साय । क्यङ् के ङित् होने से आत्मनेपद लट् त, एत्व शप्, पररूप होने पर—गार्गायते, वात्सायते ] च्वि के उदा० गार्गीभूतः, वात्सीभूतः । [ इनमें "अभूततद्भावे सम्पद्यकर्तरि कृभ्वस्तियोगे च्वि" से च्वि प्रत्यय और सर्वापहारी लोप के बाद प्रस्तुत सूत्र से य् का लोप "अस्य च्वौ" सूत्र से अ का ई—क्त प्रत्यय के साथ रूप है । ]

अपत्यसम्बन्धी य् का ही लोप होता है—साङ्काश्यायते । साङ्काश्यभूतः । [ यहाँ सङ्काश से चातुरर्थिक ण्य प्रत्यय किया गया है । अपत्यसम्बन्धी न होने से लोप नहीं होता । "अकृत्सार्वधातुकयोः" से यकारादि में दीर्घ होता है । ]

हल् से परे का ही—कारिकेयीयति । कारिकेयीभूतः । [ कारिकेयम् इच्छति अर्थ में क्यच् = य, सुब्लोप आदि के बाद ईत्व कारिकेयीय + लट् । कारिकेय + च्वि । यहाँ हल् से परे नहीं है । अतः य् लोप नहीं होता है । ]

**विमर्श**—प्रस्तुत सूत्र की काशिकावृत्ति में उदाहरण अशुद्ध प्रकाशित है । वात्सीयते गार्गीयते—ये रूप बनना सम्भव नहीं है । क्योंकि प्रस्तुत सूत्र में 'क्य' इसमें क्यच् और क्यङ् दोनों का सामान्यरूप से ग्रहण है । क्यच् के उदा० वात्सीयति, गार्गीयति—में "क्यचि च" (७।४।३३) सूत्र से ईत्व किया जाता है । परन्तु क्यङ् प्रत्यय परे रहते ईत्व का विधायक कोई वचन नहीं है । इसीलिये 'कर्तुः क्यङ् सलोपश्च' (३।१।११) इस सूत्र पर काशिकावृत्ति में—श्येनायते, पुष्करायते तथा सिद्धान्तकौमुदी में—'कृष्णायते' आदि ईत्वरहित ही उदा० दिये गये हैं । इसलिये यहाँ की काशिका और पदमञ्जरी दोनों में 'गार्गायते' यही पाठ शुद्ध समझना चाहिए । प्रकाशित न्यास में 'गार्गीयः' ऐसा पाठ उपलब्ध है ।

---

१. वात्सीयते, गार्गीयते—इति ईत्वविशिष्टोऽपपाठः ईत्वाप्राप्तेः ।

हल इत्येव—कारिकेयीयति । कारिकेयीभूतः ॥

**३१५४. बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥ (१३११)**

नडादिषु बिल्वादयः पठ्यन्ते । 'नडादीनां कुक्च' (४.२.९१) इति कृतकुगागमा बिल्वकादयो भवन्ति, तेभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति । बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवाः बैल्वकाः । वेणुकीयाः, वैणुकाः । वेत्रकीयाः, वैत्रकाः । वेतसकीयाः, वैतसकाः । तृणकीयाः, तार्णकाः । इक्षुकीयाः; ऐक्षुकाः । काष्ठकीयाः, काष्ठकाः । कपोतकीयाः, कापोतकाः ।

❀ क्रुञ्चाह्रस्वत्वं च ❀ (ग० सू० ९२) । क्रुञ्चकीयाः, क्रौञ्चकाः ।

**न्यासः**

धातुकयोः' इति दीर्घः । **गार्गीभूत इति** । 'अभूततद्भावे' इति च्विः, 'अस्य च्वौ' इतीत्वम् ॥ १५२ ॥

**बिल्वकादिभ्यश्छस्य लुक् ॥ बिल्वकादिभ्य इति** । आगन्तुकेनाकारेण निर्देशः । **बिल्वकीया इति** । 'उत्करादिभ्यश्छः' 'नडादीनां कुक्च' इति चातुरर्थिकश्छः, कुगागमः । **बैल्वका इति** । 'प्राग्दीव्यतोऽण्' ।

अथ छग्रहणं किमर्थम्, यावता कृतकुगागमा बिल्वकादयो गृहीताः, एभ्यश्छप्रत्ययः सम्भवतीत्यन्तरेणापि छग्रहणं छस्यैव लोपो भविष्यतीति ? अत आह—**छग्रहणमित्यादि** । यदि छग्रहणं न क्रियेत, तदा सन्नियोगशिष्टपरिभाषया छकारे निवर्तमाने कुकोऽपि निवृत्तिः स्यात् । तस्याश्च परिभाषाया एतदेव छग्रहणं ज्ञापकम् । अथ लुङ्ग्रहणं किमर्थम्, प्रकृत एव लोपो विधीयेत ? इत्यत आह—**लुग्ग्रहणमित्यादि** । यकारग्रहणमेकदेशोपलक्षणार्थं द्रष्टव्यम् । स हि लोप उपधाया इत्यनेन सम्बन्ध इति तस्मिन्ननुवर्त्तमाने 'य उपधायाः'

**पदमञ्जरी**

क्यषस्त्वापत्यादसम्भवः । **गार्गीभूत इति** । 'अस्य च्वौ' इतीत्वम् ॥ १५२ ॥

**बिल्वकादिभ्यश्छस्य लुक् ॥** बिल्वकादीनामस्मिन्प्रदेशे प्रातिपदिकगणे पाठाभावात्तत्परिज्ञानार्थमाह—**नडादिष्विति** । नडादिषु बिल्वादयस्तावत्पठ्यन्ते, तत्र कुकि कृते यद्रूपं ककारान्तं तदिहानुकृतम् । बिल्वक् आदिर्येषामिति विगृह्य समासः । जश्त्वे तु क्रियमाणे रूपविनाशप्रसङ्गान्न कृतमित्यर्थः । तेन बिल्वक आदिर्येषामिति अज्ञातादिषु यः कस्तदन्तानां ग्रहणं नाशङ्कनीयम्; पाठाभावात् ।

**भावबोधिनी**

इसके पहले 'गार्गीयति' लिखा है । अतः 'गार्गीयः' के स्थान पर भी 'गार्गीयते' शुद्ध पाठ होगा क्योंकि 'क्यङ् प्रत्यय और दीर्घ' का सम्बन्ध 'गार्गीयते' के साथ ही उचित है, 'गार्गीयः' के साथ नहीं । विद्वज्जन इस संशोधित पाठ का औचित्य विचार करें ॥ १५२ ॥

नडादि में बिल्वादि शब्द पढ़े जाते हैं । 'नडादीनां कुक् च' सूत्र से किये गये कुक् आगम वाले 'बिल्वक' आदि हो जाते हैं, इन शब्दों से उत्तरवर्ती भसंज्ञक छ प्रत्यय का लुक् तद्धित प्रत्यय परे रहते होता है । उदा० बिल्वाः सन्तिः यस्याम्—इस अर्थ में—बिल्वकीया [ बिल्व शब्द से 'नडादीनां कुक् = क् आगम होता है—बिल्वक् ईय, टाप = आ—बिल्वकीया ] तस्यां भवः (उस बिल्वकीया में होने वाला)—इस अर्थ में बैल्वकाः । [ बिल्वकीया + अण् = अ, आदिवृद्धि, छ = ईय का लुक् । इसी प्रकार आगे के रूपों में भी समझना चाहिए— ] वेणुकीया—वैणुकाः [ वेणुकीयायां भवः—अर्थ में अण् ] वेत्रकीया—वैत्रकाः । [ वेत्रकीयायां भवाः ] वेतसकीया—वैतसाः । [ वेतसकीयायां भवाः ] तृणकीया—तार्णकाः । [ तृणकीयायां भवाः ] इक्षुकीया—ऐक्षुकाः [ इक्षुकीयायां भवाः ] काष्ठकीया—काष्ठकाः । [ काष्ठकीयायां भवाः ] कपोतकीया—कापोतकाः [ कपोतकीयायां भवाः ] सभी में 'बैल्वकाः' के समान ही प्रक्रिया समझनी चाहिए । ] * क्रुञ्चा का ह्रस्व भी होता है । * क्रुञ्चकीया—क्रौञ्चकाः । [ क्रुञ्चकीया—अण्, छ = ईय् लोप । क्रुञ्चाक में ह्रस्व भी होता है—क्रुञ्चक + अण्, आदिवृद्धि ] ।

छग्रहणं किम् ? छमात्रस्य लुग्यथा स्याद् कुको निवृत्तिर्मा भूदिति; अन्यथा हि 'सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव' (व्या० प० ४८) इति कुगपि निवर्त्तेत । लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत् ॥

**३१५५. तुरिष्ठेमेयस्सु ॥ १५४ ॥ (२००८)**

इष्ठन्, इमनिच्, ईयसुन्—इत्येतेषु परतः तृशब्दस्य लोपो भवति । आसुतिं करिष्ठः । विजयिष्ठः । वहिष्ठः । दोहीयसी धेनुः ।

**न्यासः**

इत्येतदप्यनुवर्त्तेत, छस्येयादेशे कृते यकारमात्रस्य स्यात् । अथापि 'उपधायाः' इत्येतन्नानुवर्त्तेत ? एवमपि 'आदेः परस्य' इतीकारमात्रस्य स्यात् । **लुग्ग्रहणमिति** । लुगिति प्रत्ययादर्शनस्यैषा संज्ञा, न तु प्रत्ययस्यैकदेशस्यादर्शनस्येति । लुग्ग्रहणे सति सर्वस्यैव लुक् सिध्यति । तदर्थं हि लुग्ग्रहणम् ॥ १५३ ॥

**तुरिष्ठेमेयस्सु ॥ तुरिति** विशेषकराननुबन्धानुत्सृज्य तृंस्तृचोः सामान्येन ग्रहणम् । **करिष्ठ इति** । करोतेस्तृन्, तदन्तादतिशायन इष्ठन्, तृशब्दस्य लोपः । **विजयिष्ठ इति** । विपूर्वाज्जयतेस्तृन् । **वहिष्ठ इति** । अत्रापि वहेस्तृन् । तदन्तादिष्ठन्, 'हो ढः' इति ढत्वम्, तृशब्दस्य लोपे कर्त्तव्ये 'पूर्वत्रासिद्धम्' इत्यसिद्धम्, तेन पूर्वलोप एव क्रियते, तस्मिन् कृते झलि पदान्ते च विधीयमानं ढत्वं निमित्ताभावान्न प्रवर्त्तते । **दोहीयसीति** । दुहेस्तृजन्तादीयसुन्, 'उगितश्च' ङीप् । अत्रापि लोपे कर्त्तव्ये 'दादेर्धातोर्घः' इत्येतदप्यसिद्धमिति पूर्वं लोपः, तस्मिन् सति पूर्ववद् घत्वं न प्रवर्त्तते ।

**पदमञ्जरी**

**छग्रहणं किमिति** । कृतकुगागमेभ्यः परस्तादन्यो न सम्भवतीति प्रश्नः । कथं पुनः कुको निवृत्तिप्रसङ्गः ? इत्याह—**अन्यथा हीति** । इदमेव छग्रहणं ज्ञापकम्—अस्त्येषा परिभाषेति । **यकारमात्रस्येति** । उपधाया इत्यनुवृत्तेस्तस्यैव स्याद् । अथापि तन्निवृत्तम्, एवमपि, 'आदेः परस्य' इति परस्य प्रसङ्गादनिष्टमेव ॥ १५३ ॥

**तुरिष्ठेमेयस्सु ॥** दोहीयसीत्यत्र घत्वादीनामसिद्धत्वात्पूर्वं तृशब्दस्य लोपे कृते पश्चान्निमित्ताभावात्तेषामभावः ।

**भावबोधिनी**

छ का ग्रहण किसलिए है ? जिससे केवल 'छ' का लुक् हो, कुक् की निवृत्ति न हो, अन्यथा (अर्थात् छ का ग्रहण न करने पर तो) 'सन्नियोग से अनुशिष्ट दो में किसी एक के अपाय = लोप में दूसरे का भी अपाय हो जाता है'—इस नियम से कुक् की भी निवृत्ति होने लगती । लुक् का ग्रहण इसलिए है कि सम्पूर्ण छ का लोप हो, केवल य का न होने लगे । [ इसलिये सूत्र में 'छ' और 'लुक्' दोनों के ग्रहण की उपयोगिता है । ] ॥ १५३ ॥

इष्ठन्, इमनिच्, ईयसुन्—इन प्रत्ययों के परे रहते 'तृ' शब्द का लोप होता है । उदा० आसुतिं करिष्ठः । [ अयम् अनयोः अतिशयन कर्त्ता—इस अर्थ में कर्तृशब्द से "अतिशायने तमबिष्ठनौ" सूत्र से इष्ठन् प्रत्यय—कर्तृइष्ठन्, 'तृ' का लोप—कर् = इष्ठ = करिष्ठः । ] विजयिष्ठः । [ अयम् अनयोः अतिशयेन विजेता—इस अर्थ में—विपूर्वकजितृ + इष्ठन्, तृ का लोप, ए का गुण, अय् आदेश—विजयिष्ठः । ] वहिष्ठः । [ अतिशयेन वोढा—इस अर्थ में इष्ठन् प्रत्यय, यहाँ जो ढत्व किया गया है वह 'तृ' लोप की कर्तव्यता में असिद्ध हो जाता है, इसलिये पहले 'तृ' लोप ही होता है, इसके बाद झल् और पदान्त न होने से ढत्व नहीं होता है—वह् इष्ठ = वहिष्ठः ] दोहीयसी धेनुः । [ इयम् अनयोः अतिशयेन दोग्ध्री—इस अर्थ में ईयसुन्—दोग्धृ ईयसुन, लोप की कर्तव्यता में घत्व असिद्ध हो जाता है, तृ लोप दोह् + ईयस्, उगित् होने से 'उगितश्च' सूत्र से ङीप् = ई—दोहीयसी । ]

**सर्वस्य तृशब्दस्य लोपार्थं वचनम्। अन्त्यस्य हि 'टेः' (६.४.१५५) इत्येव सिद्धः। लुगित्येतदत्र नानुवर्त्तते; तथा हि सति 'न लुमताङ्गस्य' (१.१.६३) इति प्रतिषेधाद् गुणो न स्यात्। इमनिज्ग्रहणमुत्तरार्थम्। इतरौ तु 'तुश्छन्दसि' (५.३.५९) इति भवतः॥**

**न्यासः**

अथ 'अलोऽन्त्यस्य' इत्यन्त्यस्यायं लोपः कस्मान्न भवति ? इत्याह—**सर्वस्येत्यादि**। तत्रैव कारणमाह—**अन्त्यस्येत्यादि**। यद्यन्त्यस्य स्याद् वचनवैयर्थ्यमापद्येत; अन्त्यस्य टेरित्येवं सिद्धत्वात्। तस्मादन्त्यलोपवचने प्रयोजनं नास्तीति सर्वस्य तृशब्दस्य लोपो यथा स्यादित्येवमर्थमिदं वचनं विज्ञायते।

यदि तर्हि तृशब्दस्य लोपार्थं वचनमनन्तरो लुगेव कस्मान्न विधीयते, एवं तर्हि सर्वस्य सुखमेव लोपोऽवसीयते, प्रत्ययादर्शनस्य लुग्विधानात् ? इत्यत आह—**लुगित्येतत् त्वित्यादि**। कः पुनस्तत्र सति दोषः स्याद् ? इत्यत आह—**तथा हीत्यादि**। यदि लुगित्येतदिहानुवर्तेत, ततः 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति कृत्वा पूर्वं लुका भवितव्यम्, ततश्च 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधः स्यात्; करिष्ठः, विजयिष्ठ इत्यत्रार्धधातुकलक्षणो गुणो न स्यात्। तस्मान्मा भूदेष दोष इति लुगित्येतदिहानुवर्तते। अथेमनिज्ग्रहणं किमर्थम्, यावता तृशब्दात् पर इमनिज् न सम्भवति ? तथापि 'पृथ्वादिभ्य इमनिज्वा', 'वर्णादृढादिभ्यः ष्यञ्च'—इत्यनेन योगद्वयेन स विहितः, न तृशब्दान्तं किञ्चित् पृथ्वादिषु दृढादिषु वा मध्ये पठ्यते, नापि वर्णवाच्यस्तीत्यत आह—**इतरौ त्वित्यादि**॥ १५४॥

**पदमञ्जरी**

'लोपो भवति' इत्युक्तम्, तत्रान्त्यस्य प्राप्नोत्यत आह—**सर्वस्येति**। कारणमाह—**अन्त्यस्य हीति**।

नन्वेवमनन्तरो लुगेव विधेयः, एवं सुखमेव सर्वस्य निवृत्तिर्लभ्यते ? अत आह—**लुगित्येतत्त्विति**। कः पुनस्तदनुवृत्तौ दोषः स्याद् ? अत आह—**तथा हीति**। न च पूर्वमेव गुणो भवति; 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' (व्या० प० १२८) इति वचनात्।

**इमनिज्ग्रहणमुत्तरार्थमिति**। नेहार्थम्; तृशब्दात्तस्यासम्भवात्। न चेदमेव कल्पकं भवितुमर्हति, उत्तरार्थतयाप्युपपत्तेः। नन्वेवम् 'अजादी गुणवचनादेव' इति नियमादिष्ठेयसुनोरपि न सम्भवः ? अत आह—**इतरौ त्विति**॥ १५४॥

**भावबोधिनी**

सम्पूर्ण 'तृ' शब्द का लोप करने के लिए यह सूत्र है। क्योंकि केवल 'ऋ' अन्त्य का लोप तो 'टि' के लोप से ही सम्भव था। [ 'अलोऽन्त्यस्य' के अनुसार सामान्य लोप से ही सम्भव होनेपर भी इस सूत्र का बनाना सम्पूर्ण 'तृ' लोप की सिद्धि के लिए ही है। ]

[ यहाँ 'विल्वकादिभ्यश्छस्य लुक्' ६।४।१५३ इस अव्यवहितपूर्ववर्ती सूत्र से लुक् की अनुवृत्ति ही होनी चाहिए न कि 'ढ्रलोपोऽकद्र्वाः' या अन्य व्यवहित सूत्र से लोप की ? ] लुक् इसकी यहाँ अनुवृत्ति नहीं होती है क्योंकि ऐसा होनेपर तो ''न लुमताङ्गस्य'' सूत्र से प्रत्ययलक्षण का प्रतिषेध हो जाने से गुण नहीं हो सकता। [ अतः लुक् की अपेक्षा व्यवहित भी 'लोपः' की ही अनुवृत्ति माननी चाहिए। ]

इमनिच् का ग्रहण उत्तरवर्त्ती सूत्र के लिए है, अन्य = इष्ठन् और ईयसुन् तो 'तुश्छन्दसि' (५।३।५९ अन्त से अजादि दोनों प्रत्यय वेद में होते हैं।) इस सूत्र से होते हैं। [भाव यह है कि 'तृ' शब्द से परे इमनिच् होता ही नहीं है क्योंकि 'पृथ्वादिभ्य इमनिज्वा' (५।१।१२२) और 'वर्णदृढादिभ्यः ष्यञ्च' (५।१।१२३) इन दो सूत्रों से ही इमनिच् विहित है, इनमें तृ शब्दान्त का ग्रहण कहीं नहीं है, न गुणवाची ही है अतः इमनिच् का ग्रहण उत्तरवर्त्ती सूत्र के लिए है। 'तुश्छन्दसि' (५।३।५९) से इष्ठन् और ईयसुन् होते हैं ] ॥ १५४॥

## ३१५६. टेः ॥ १५५ ॥ (१७८६)

भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः। पटु—पटिष्ठः, पटिमा, पटीयान्। लघु—लघिष्ठः, लघिमा, लघीयान्।

❀ णाविष्ठवत्प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम् ❀ (का० वा० १)।

किं प्रयोजनम्? पुंवद्भावरभावटिलोपयणादिपरार्थम् (म० भा०)। पुंवद्भावः—एनीमाचष्टे एतयति। श्येतयति। 'तसिलादिष्वाकृत्वसुचः' (६.३.३५) इति इष्ठे पुंवद्भाव उक्तः। रभावः—पृथुमाचष्टे प्रथयति। म्रदयति। टिलोपः—पटुमाचष्टे पटयति। लघयति। यणादिपरम्—स्थूलमाचष्टे स्थवयति[1]।

**न्यासः**

टेः॥ **णाविष्ठवदिति**। 'तसिलादिष्वाकृत्वसुचः' इष्ठनि पुंवद्भाव उक्तः, 'र ऋतो हलादेर्लघोः' इति रभावः, 'टेः' इति टिलोपः, 'स्थूलदूरयुवह्रस्व' इत्यादिना यणादिपरस्य लोपः, पूर्वस्य च गुणः, 'विन्मतोर्लुक्' इति लुक्, 'युवाल्पयोः कनन्यतरस्याम्' इति कन्। 'प्रियस्थिर' इत्यादिना प्रादय आदेशाः—एतानि कार्याणि यथेष्ठनि भवन्ति, तथा णावपि यथा स्युरिति णाविष्ठवत् प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम्।

प्रातिपदिकग्रहणं शक्यमकर्तुम्, अन्यस्यातिदेशस्यासम्भवात्। वतिरिह सादृश्यार्थः, तेन यस्येष्ठनि यत्कार्यं विवक्षितं ततोऽन्यस्यातिदेशस्यासम्भवात् तद्व्यवच्छेदार्थं प्रातिपदिकग्रहणं न कर्त्तव्यम्। तत् क्रियते विस्पष्टार्थम्। केचित् तु ब्रुवते—प्रत्ययस्य कार्याणामतिदेशो मा भूदित्येवमर्थं प्रातिपदिकग्रहणम्, तेन बहुमाचष्टे बहयतीत्यत्र 'इष्ठस्य यिट् च' इति यिड् न भवति? एतच्चायुक्तम्; इष्ठवदित्यत्र हि सप्तमीसमर्थाद्वतिर्विहितः; णाविति प्रतियोगिनि सप्तमीश्रवणात्। तेनेष्ठनि यत् कार्यं विहितं तदतिदिश्यते, न त्विष्ठस्य यत् कार्यं तदपि। न च यिड् इष्ठनि यत् कार्यम्, अपि त्विष्ठन एव। तस्येह प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन प्रातिपदिकग्रहणेन? **एनीमिति**। एतशब्दाद् 'वर्णादनुदात्तात्तोपधात्' इत्यादिना ङीष्, तकारस्य च नकारः। **एतयतीति**। णौ कृते पुंवद्भावेन ङीष्नकारावुभावपि निवर्त्तेते। ननु च ङीषा व्यवहितोऽत्र णिरिति णावतिदेशः क्रियमाणस्त-

**पदमञ्जरी**

टेः। **णाविष्ठवदिति**। सप्तमीसमर्थाद्वतिः, णाविति प्रतियोगिनि सप्तमीनिर्द्देशात् तेनेष्ठनि यत्कार्यं तदतिदिश्यते, न त्विष्ठनो यत्कार्यं तदपि। तेन बहूनाचष्टे बहयतीत्यत्र 'इष्ठस्य यिट् च' इति णेर्यिण्न भवति, तदभावे तत्सन्नियोगशिष्टो भूभावोऽपि न भवति। केचित्तु भूभावमुदाहरन्ति—भावयतीति। **एतयतीति**। टिलोपातिदेशेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तावपि सिद्धायां पुंवद्वचनं सन्नियोगशिष्टपरिभाषाया (व्या० प० ४८) अनित्यत्वज्ञापनार्थम्; तेन श्यैवेयः, ऐनेय इत्यादि सिद्धं भवति।

**भावबोधिनी**

इष्ठन्, इमनिच् और ईयसुन्—परे रहते भसंज्ञक की टि का लोप होता है। उदा० पटिष्ठः, पटीयान्, पटिमा। [पटु+इष्ठन्, पटु+ईयसुन्, पटु+इमनिच्। इसमें 'टि = उ' का लोप होता है।] लघिष्ठः, लघीयान् लघिमा। [लघु+इष्ठन्, लघु+ईयसुन्, लघु+इमनिच्। टि = उ का लोप होता है।]

❀ णि परे रहते प्रातिपदिक का इष्ठवद् भाव का कार्य होता है—ऐसा कहना चाहिए। ❀ इसका क्या प्रयोजन है? पुंवद्भाव, रभाव, टिलोप, यणादिपर (लोप, गुण आदेश) कार्यों के लिये। क्रमशः उदा० पुंवद्भाव—एनीम् आचष्टे—इसमें एतयति। श्येनीमाचष्टे—श्येतयति। [इन शब्दों में "तत्करोति तदाचष्टे" इस वचन से णिच् = इ प्रत्यय होनेपर प्रस्तुत वचन से पुंवद्भाव होने से स्त्रीत्वसम्बन्धी प्रत्यय और नत्व निवृत्त हो जाते हैं—एतद्+णि, टिलोप होने के बाद णि = इ का गुण, अयादेश होने से रूप बनते हैं।] "तसिलादिष्वाकृत्वसुचः" (६।३।३५) सूत्र से इष्ठन् परे पुंवद्भाव कहा गया है। [जैसे यहाँ पुंवद्भाव इष्ठन् परे होता है वैसे ही णि परे भी होता है।] रभाव

---

१. 'द्रवयति'—इत्यधिकं पुस्तकान्तरे।

**भारद्वाजीयास्तु पठन्ति—'णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थम्' (म० भा०) इति। स्रग्विणमाचष्टे स्रजयति। वसुमन्तमाचष्टे वसयति। युवानमाचष्टे यवयति। कनयति। एतदुभयमप्युदाहरणमात्रम्, न परिगणनम्।**

**न्यासः**

द्व्यवधाने न प्राप्नोतीति ? नैष दोषः; इष्ठन्यपि हि ङीपा व्यवधान एव प्रातिपदिकस्य पुंवद्भावः। तस्मादिहापि व्यवधानेऽपि तद्वदेव भविष्यति।

**स्रग्विणमिति**। 'अस्मायामेधास्रजो विनिः' इति विनिः। स्रजयतीत्यत्र 'संज्ञापूर्वको विधिरनित्यः' इति 'अत उपधायाः' इति वृद्धिर्न भवति। 'अङ्गवृत्तेः पुनरङ्गवृत्तावविधिर्निष्ठितस्य' इति वा। **प्रापयतीत्येव**मादौ भवत्येवानिष्ठितत्वात्। अत्र 'अर्तिह्री' इत्यादिना पुक्। ननु **भारद्वाजीयपाठे** प्रादयो न सिध्यन्ति; अपि तु स्रजयति वसयतीति लुक्, कनयतीत्यत्र च कन्नित्यत आह—**तदेतदुभयमप्युदाहरणमात्रमित्यादि**। तदेतद्भारद्वाजीयपाठे अन्येषाञ्च प्रयोजनमुपदर्शितम्, न त्वेतदुदाहरणमात्रपरिगणनम्। एतावदेव प्रयोजन-

**पदमञ्जरी**

अपर आह—इडविडमाचष्टे ऐडविडयति, दरदमाचष्टे दारदयतीत्येवमादौ पुंशब्दातिदेशार्थं पुंवद्वचनमिति। ननु चेडविडादीनामिष्ठनि पुंवद्भावो न दृष्टः, इष्ठन एव तत्रासम्भवात्। नेष्ठनि दृष्टस्यातिदेशः, किं तर्हि ? सम्भावितस्य; अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात्।

प्रातिपदिकग्रहणं प्रकृतिमात्रोपलक्षणम्। तेन द्रोणीमाचष्टे इत्यादावपि टिलोपो भवति। नात्र पुंवद्भावोऽस्ति; अभाषितपुंस्कत्वात्। लिङ्गविशिष्टपरिभाषया (कात० प० १८) वा ङीबन्तस्य ग्रहणम्। उक्तं हि प्राक्—'यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टं गृह्यते' (व्या० प० २९) इति। **स्थवयतीत्यादौ** 'अत उपधायाः' इति वृद्धिर्न भवति; 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (व्या० प० ३८) इति वचनात्। अस्यार्थः—अङ्गाधिकारविहिते कस्मिंश्चित्कार्ये वृत्ते पुनः कार्यान्तरस्य वृत्तौ प्राप्तायामविधिस्तस्य कार्यस्य, तच्चेदङ्गं निष्ठितं

**भावबोधिनी**

के उदा० पृथुम् आचष्टे—प्रथयति। मृदुम् आचष्टे—म्रदयति। [ पृथु + णिच् में इष्ठवद्भाव के कारण "र ऋतो हलादेर्लघोः" (६।४।१६१) सूत्र से ऋ का र होता है—प्रथु + इ, टिलोप, गुण, अयादेश – प्रथयति। इसी प्रकार मृदु = म्रदु = म्रद् + इ म्रदयति ] टिलोप के उदा० पटुम् आचष्टे—पटयति। लघुमाचष्टे—लघयति। [ पटु + णिच्, लघु + णिच्, इष्ठवद्भाव के कारण टि का लोप, गुण, अयादेश—पटयति, लघयति। ] यणादिपर [ के लोप तथा पूर्व के गुण के उदा० स्थूलम् आचष्टे—स्थवयति। [ स्थूल + णिच्, इष्ठवद्भाव के कारण "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" (६।४।१५६) सूत्र से यणादि हैं जिसका ऐसे परवर्त्ती 'ल' का लोप होता है—स्थू + इ, ऊ का गुण भी इसी सूत्र से होनेपर—स्थो + इ, अव् आदेश–स्थवयति। ]

भारद्वाजीय तो यह पढ़ते हैं—'णि परे इष्ठवद्भाव होता है प्रातिपदिक के पुंवद्भाव, रभाव, टिलोप, यणादिपर विन्, मतुप् का लुक्, कन् आदेश के लिए।* पूर्व उदाहरणों से भिन्न के उदा० स्रग्विणम् आचष्टे—यहाँ स्रजयति [ स्रग्विन् + णि, यहाँ मत्वर्थ में "अस्मायामेधास्रजो विनिः" सूत्र से विनि प्रत्यय हुआ है, उसका लोप होता है। यहाँ संज्ञापूर्वक विधि के अनित्य होने से उपधावृद्धि नहीं होती है। ] वसुमन्तम् आचष्टे—वसयति [ मतुप् का लुक् तथा टि का लुक् होता है। ] युवानम् आचष्टे—यहाँ यवयति, कनयति। [ 'युवाल्पयो कनन्यतरस्याम्' (५।३।६४) से विकल्प से युवन् का कन् आदेश—कनयति। पक्ष में "स्थूलदूरयुव" इत्यादि अग्रिम सूत्र से यणादि पर का लोप उ का गुण, अव् आदेश—यवयति। ] ये दोनों केवल उदाहरण के रूप में दिये गये हैं, यह परिगणन नहीं है। [ अन्य भी हो सकते हैं। ]

प्रादयोऽपि हीष्यन्ते—प्रियमाचष्टे प्रापयति ॥

**३१५७. स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥१५६॥(२०१५)**

स्थूल, दूर, युव, ह्रस्व, क्षिप्र, क्षुद्र—इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति। स्थूल—स्थविष्ठः, स्थवीयान्। दूर—दविष्ठः, दवीयान्। युवन्—यविष्ठः, यवीयान्। ह्रस्व—ह्रसिष्ठः, ह्रसीयान्, ह्रसिमा। क्षिप्र—क्षेपिष्ठः, क्षेपीयान्, क्षेपिमा। क्षुद्र—क्षोदिष्ठः, क्षोदीयान्, क्षोदिमा। ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते।

परग्रहणं किम्? यविष्ठः, यवीयान्; ह्रसिष्ठः, ह्रसीयान्—इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत्।

**न्यासः**

मिति यस्मात् प्रादयोऽपीष्यन्ते। ननु 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति चुरादिगण एव पठ्यते, तत् कस्मात् पुनरिह णाविष्ठवद्भाव उच्यते? अस्यैव प्रपञ्चार्थमित्येके। गणे वा स वक्तव्यः। असौ इतर इति विकल्पप्रदर्शनार्थमित्यन्ये ॥ १५५ ॥

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः॥** यद्यपि पूर्वं भावसाधनो लोपशब्द उपात्तः, तथापीह कर्मसाधनो गृह्यते; यणादिपरमिति निर्देशात्। भावसाधने हि तस्मिन् 'कर्तृकर्मणोः कृति' इति षष्ठी स्यात्। कर्मसाधने तु कर्मणस्तेनैवाभिहितत्वात् प्रथमैव युज्यत इति मन्यमानो लोपशब्दस्य कर्मसाधनतां दर्शयन्नाह—**यणादिपरं लुप्यत इति।** कथं पुनस्तस्यैव भावसाधनस्य सतः कर्मसाधनतोपपद्यते? कः पुनराह—तस्यैवेति! प्रतिसूत्रं ह्यनुवर्त्तमानो लोपशब्दो भिद्यते।

**पदमञ्जरी**

भवति=प्रयोगार्हं भवति। यत्र त्वनिष्ठितमङ्गं तत्र भवत्येव वृत्तिः—प्रापयति, स्थापयतीति। कर्तारमाचष्ट इत्यादौ तृशब्दस्य 'तुरिष्ठेमेयःसु' इति लोपो भवति न वेति चिन्त्यम् ॥ १५५ ॥

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः।** यद्यपि प्रकृतो लोपशब्दो भावसाधनः, तथापीह कर्मसाधनोऽपि ज्ञायते; यणादि परं लोप इति सामानाधिकरण्येन निर्द्देशात्। तदाह—**यणादिपरं लुप्यत**

**भावबोधिनी**

* प्र आदि आदेश भी इष्ट है।* उदा० प्रियम् आचष्टे—प्रापयति। [ प्रिय + णि, इष्ठवद्भाव के कारण "प्रियस्थिर०" (६।४।१५७) सूत्र से 'प्र' आदेश, वृद्धि करनेपर आकारान्त हो जाने से "अर्तिह्रीब्लीरी०" सूत्र से पुक्=प् आगम प्राप् + इ, गुणादि करने पर रूप बनता है—प्रापयति। कहीं-कहीं स्थिरम् आचष्टे में स्थापयति। स्थिर = णिच्, स्थ आदेश, वृद्धि, पुक्, गुणादि होते हैं। ] ॥ १५५ ॥

इष्ठन्, इमनिच्, ईयसुन् परे रहते स्थूल, दूर, युव, ह्रस्व, क्षिप्र, क्षुद्र—इनके यणादि पर [ यण् है आदि में जिसके ऐसे परवर्त्ती ] का लोप होता है और उससे पूर्व का गुण होता है। उदा० स्थूल-स्थविष्ठः, स्थवीयान्। [ अयम् एषु अतिशयेन स्थूलः—इनमें क्रमशः इष्ठन् तथा ईयसुन् प्रत्यय करनेपर प्रस्तुत सूत्र से यणादि = ल का लोप तथा 'उ' का गुण होता है—स्थविष्ठः; स्थवीयान् ] दूर दविष्ठः, दवीयान्। [ दूर शब्द से इष्ठन् तथा ईयसुन् परे रहते 'र' का लोप, उ का गुण अव् आदेश ] युवन्—यविष्ठः, यवीयान्। [ युवन् + इष्ठन्, ईयसुन्, यणादिपर का लोप, पूर्व का गुण, अव् आदेश ] ह्रस्व—ह्रसिष्ठ, ह्रसीयान्, ह्रसिमा। [ ह्रस्व-से इष्ठन्, ईयसुन्, इमनिच् परे 'व' का लोप करनेपर रूप होते हैं। ] क्षिप्र—क्षेपिष्ठः, क्षेपीयान्, क्षेपिमा। [ क्षिप्र—इष्ठन् आदि परे यणादि 'र' शब्द का लोप, गुण—क्षेप् + इष्ठ आदि ] क्षुद्र—क्षेदिष्ठः, क्षोदीयान्, क्षेदिमा। [ क्षुद्र + इष्ठन् आदि में यणादि 'र' शब्द का लोप, गुण—क्षोदिष्ठः आदि ] ह्रस्व, क्षिप्र, क्षुद्र—ये शब्द पृथ्वादि में पठित हैं। [ अतः इनसे इमनिच् भी होता है। ]

पर-ग्रहण का क्या फल है—यविष्ठः, यवीयान्, ह्रसिष्ठः, ह्रसीयान्—इनमें पूववर्त्ती यण्। (य् व् र्) का लोप न होने लगे। [ इसके लिये परवर्त्ती जो यणादि शब्द उसी का लोप करने के लिए 'परम्' का ग्रहण है। ]

पूर्वग्रहणं विस्पष्टार्थम् ॥

**३१५८. प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥ १५७ ॥ (२०१६)**

प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ, वृन्दारक—इत्येतेषां प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि, वृन्द—इत्येते यथासंख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः। प्रिय—प्रेष्ठः। प्रेमा। प्रेयान्। स्थिर—स्थेष्ठः। स्थेयान्। स्फिर—स्फेष्ठः। स्फेयान्। उरु—वरिष्ठः। वरिमा। वरीयान्। बहुल—बंहिष्ठः। बंहिमा। बंहीयान्। गुरु—गरिष्ठः। गरिमा। गरीयान्। वृद्ध—वर्षिष्ठः। वर्षीयान्। तृप्र—त्रपिष्ठः त्रपीयान्। दीर्घ—द्राघिष्ठः। द्राघीयान्। द्राघिमा। वृन्दारक—वृन्दिष्ठः। वृन्दीयान्।

**न्यास**

ननु च यणादौ परस्मिन् लुप्ते सामर्थ्यात् तत्पूर्वस्यैव गुणो विज्ञास्यते, तत् किमर्थं पूर्वग्रहणम्? इत्याह—**पूर्वग्रहणं विस्पष्टार्थमिति** ॥ १५६ ॥

**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** ॥ किं पुनः कारणं प्रियोरुगुरुदीर्घाणामेवेमनिजुदाह्रियते, नान्येषाम्? इत्याह—**प्रियोरुबहुलगुरुदीर्घा इत्यादि**। 'प्रियादिभ्य एवेमनिच् सम्भवति, नान्येभ्यः' इत्येवम्परमेतद्वाक्यमित्यर्थः। अन्यथा यद्यपि प्रियादय एव पृथ्वादिषु पठ्यन्ते,

**पदमञ्जरी**

इति। **पूर्वग्रहणं विस्पष्टार्थमिति**। 'इको गुणवृद्धी' इति वचनाल्लुप्तावशिष्टस्य य इक् तस्य गुणो भविष्यतीति भावः। अत एव वचनादजादी प्रत्ययी भवत इति। इमनिच तु पृथ्वादिष्वपठितेभ्यो न भवति; अनभिधानात् ॥ १५६ ॥

**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** ॥ प्रियस्थिरोरु-

**भावबोधिनी**

'पूर्व' इसका ग्रहण स्पष्टता के लिए ही है। [ क्योंकि परवर्त्ती का लोप होवे पर पूर्व का ही गुण होना स्वतः सिद्ध है। ] ॥ १५६ ॥

प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ और वृन्दारक—इनके स्थान पर क्रमशः प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि और वृन्द—ये आदेश इष्ठन्, इमनिच्, ईयसुन् प्रत्यय परे रहते होते हैं। उदा० प्रिय—प्रेष्ठः। प्रेमा। प्रेयान्। [ प्रिय + इष्ठन्, प्रिय + इमनिच्, प्रिय + ईयसुन्, प्रिय का 'प्र' आदेश ] स्थिर—स्थेष्ठः। स्थेयान्। [ स्थिर + इष्ठन्, स्थिर + ईयसुन्, स्थिर का 'स्थ' आदेश। इससे इमनिच् नहीं होता है। ] स्फिर—स्फेष्ठः, स्फेयान्। [ स्फिर का 'स्फ' आदेश। स्फिर = प्रचुर, बहुत। अतिशय प्रकर्ष में ये प्रत्यय होते हैं। ] उरु—वरिष्ठः वरिमा। वरीयान्। [ उरु + इष्ठन्, इमनिच्, ईयसुन्, उरु का वर् आदेश। उरु = प्रशस्त, बड़ा ] बहुल—बंहिष्ठः। बंहिमा। बंहीयान्। [ बहुल से पूर्वोक्त तीनों प्रत्ययों में बंहि आदेश ] गुरु—गरिष्ठः। गरिमा। गरीयान्। [ गुरु का गर् आदेश। गुरु = भारी ] वृद्ध—वर्षिष्ठः, वर्षीयान्। [ वृद्ध का वर्षि आदेश ] तृप्र—त्रपिष्ठः। त्रपीयान्। [ तृप्र का त्रप् आदेश ] दीर्घ—द्राघिष्ठः। द्राघीयान्। द्राघिमा। [दीर्घ का 'द्राघि' आदेश।] वृन्दारक—वृन्दिष्ठः। वृन्दीयान्। [बंहि, वर्षि और द्राघि—इन तीनों में इकार उच्चारणार्थ ही है। इसीलिये लोप और स्थानिवद्भाव का प्रश्न नहीं है। इनके अर्थ अमर कोषकार ने इस प्रकार लिखे हैं—

'क्षेपिष्ठ-क्षोदिष्ठ-प्रेष्ठ-वरिष्ठ-स्थविष्ठ-बंहिष्ठाः।
क्षिप्र-क्षुद्राभीप्सित-पृथु-पीवर-बहु-प्रकर्षार्थाः।
साधिष्ठ-द्राघिष्ठ-स्फेष्ठ-गरिष्ठ-ह्रसिष्ठ-वृन्दिष्ठाः।
बाढ-व्यायत-बहु-गुरु-वामन-वृन्दारकातिशये ॥ (अमरकोष ३।१।११९-१२)

प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनान्येषामिमनिज् न भवतीति नोदाह्रियते ॥

## ३१५९. बहोर्लोपो भू च बहोः ॥ १५८ ॥ (२०१७)

बहोरुत्तरेषामिष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने 'भू' इत्ययमादेशो भवति। भूयान्। भूमा।

बहुशब्दः पृथ्वादिषु पठ्यते। 'बहोः' इति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम्; अन्यथा हि प्रत्ययानामेव भूभावः स्यात् ॥

### न्यासः

तथापि यद्यन्ये वा दृढादिषु पठ्यन्ते, वर्णवाचिनो वा स्युः, तदोदाह्रियेतेमनिच् तेषामित्यकारणमेतद् इमनिचोऽत्र उदाहरणं स्यात् ॥ १५७ ॥

**बहोर्लोपो भू च बहोः ॥ बहोरुत्तरेषामिति।** एतेन प्रथमस्य बहोः पञ्चम्यन्ततां दर्शयति, तस्य च बहोरित्यनेनापि द्वितीयस्य षष्ठ्यन्तताम्। **भूयानिति।** 'आदेः परस्य' इतीकारस्यैव लोपः।

अथ किमर्थं बहोरिति पुनर्ग्रहणम्? इत्याह—**बहोरिति पुनरित्यादि।** असति हि बहोरिति ग्रहणे बहुशब्दस्य स्थानित्वं न प्रतीयेत; पञ्चम्यन्तेन निर्देशात्। तस्मात् स्थानित्वप्रतिपत्तये पुनर्बहोरित्युच्यते। **अन्यथा हीत्यादि।** यदि बहोरिति नोच्येत, तदा प्रत्ययानामेव भूभावः स्यात्; 'तस्मादित्युत्तरस्य' इति वचनात्। ननु पृथग्निर्देशादेव प्रत्ययानां न भविष्यति, अन्यथा 'भूलोपौ' इत्ययं ब्रूयात्? नैतदस्ति; अस्ति ह्यन्यत् पृथग्निर्देशस्य प्रयोजनम्। किम्? पृथक्स्थानिकौ यथा स्याताम्, आदेर्मा भूतामिति। यदि 'भूलोपौ' इत्येवमुच्येत, तदा 'आदेः परस्य' इत्याद्यस्यैव वर्णस्य पर्यायेण भूलोपौ स्यातामिति। अतो भिन्नस्थानिकौ यथा स्यातामित्येवमर्थः पृथग्योगनिर्देशः स्यात्। तस्माद् युक्तमुक्तम्—'अन्यथा हि प्रत्ययानामेव भूभावः स्यात्' इति। चकारोऽत्र सन्नियोगार्थः ॥ १५८ ॥

### पदमञ्जरी

बहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनैतेष्विमनिजनुवृत्तेश्चरितार्थत्वादितरेष्विमनिचः कल्पकमेतद्वचनं न भवति, तदाह—**तेनान्येषामिति** ॥ १५७ ॥

**बहोर्लोपो भू च बहोः ॥ भूयानिति।** 'आदेः परस्य' इत्यादेर्लोपः। **अन्यथा हीति।** यदि पुनः 'बहोः' इति नोच्येत, ततो यथा लोपः प्रत्ययानां भवति, तथा भूभावोऽपि तेषामेव स्यात्। पर्यायेण तत्र लोप आदेर्भूभावः सर्वस्य शक्यते वक्तुम्? पृथग्निर्देशात्प्रत्ययानां न भविष्यति, अन्यथा 'भूलोपौ बहोः' इति ब्रूयात्। एवं च कृत्वा 'उत्तरपदभूम्नि' इति निर्देश उपपद्यत इति ॥ १५८ ॥

### भावबोधिनी

प्रिय, उरु, गुरु, बहुल तथा दीर्घ शब्दों का ही पाठ पृथ्वादि में है, इस कारण अन्य से इमनिच् नहीं होता है इसलिये उनके उदाहरण नहीं दिए जाते हैं ॥ १५७ ॥

'बहु' से उत्तरवर्त्ती इष्ठन्, इमनिच् और ईयसुन् का लोप होता है और उस 'बहु' के स्थान पर 'भू' यह आदेश होता है। [ पञ्चमीनिर्देश है अतः 'आदेः परस्य' के अनुसार परवर्त्ती प्रत्ययों के केवल आदि वर्ण का लोप होता है। ] उदा० भूयान्। भूमा। [ बहु+ईयसुन्, इमनिच् परे रहते, ई, इ का लोप, बहु का 'भू' आदेश भू+यस्, भू+मन्। ]

बहुशब्द पृथ्वादि में पठित है। 'बहोः' इसका दुबारा उल्लेख स्थानित्व का ज्ञान कराने के लिए है अर्थात् 'बहु' के स्थान पर ही 'भू' होता है इसके ज्ञान के लिए है अन्यथा प्रत्ययों के स्थान पर ही 'भू' यह आदेश होने लगता ॥१५८॥

**३१६०. इष्ठस्य यिट् च ॥ १५९ ॥ (२०१८)**

**बहोरुत्तरस्य इष्ठस्य यिडागमो भवति बहोश्च भूरादेशो भवति । भूयिष्ठः ।**

**लोपापवादो यिडागमः तस्मिन्निकार उच्चारणार्थः ॥**

**३१६१. ज्यादादीयसः ॥ १६० ॥ (२०१२)**

**ज्यादुत्तरस्य ईयस आकार आदेशो भवति । ज्यायान् ।**

**लोपस्य यिटा व्यवहितत्वादादित्युच्यते । लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायानिति सिध्यति ॥**

**३१६२. र ऋतो हलादेर्लघोः ॥ १६१ ॥ (१७८५)**

**रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोरिष्ठेमेयस्सु परतः । प्रथिष्ठः, प्रथिमा, प्रथीयान् । म्रदिष्ठः, म्रदिमा, म्रदीयान् ।**

**न्यासः**

**इष्ठस्य यिट् च ॥ लोपापवादो यिडागम इति ।** नाप्राप्ते तस्मिन्नस्यारम्भात् । **तस्मिन्निकार उच्चारणार्थ इति ।** प्रयोजनान्तराभावात् । चकारः 'बहोश्च भूः' इत्यनुकर्षणार्थः ॥ १५९ ॥

**ज्यादादीयसः ॥ ज्यायानिति ।** 'प्रशस्यस्य श्रः', 'ज्य च' इति ज्यादेशः । **लोपस्य यिट् चेत्यादि ।** यद्यत्र लोपो यिटा न व्यवधीयते तदा तेनैव ज्यायानित्येतत् सिध्यतीति कृत्वाऽऽदिति नोच्येत इत्यभिप्रायः । कथं पुनरादित्यनुच्यमाने लोपेन सिध्यति ? इत्यत आह—**लोपे हि सतीत्यादि ।** अथ दीर्घोच्चारणं किमर्थम्, यावतान्तरतम्यादेव दीर्घस्य दीर्घ एव भविष्यति ? नैतदस्ति; न हि भाव्यमानोऽण् सवर्णान् न गृह्णातीति ॥१६०॥

**र ऋतो हलादेर्लघोः ॥ कर्त्तव्यमिति ।** व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—उत्तरसूत्रे यद्विभाषा-

**पदमञ्जरी**

**इष्ठस्य यिट् च । लोपापवादो यिडागम इति ।** नाप्राप्ते तस्मिन्नारम्भात् । **तस्मिन्निति ।** लोपापवादभूते । यदि तु लोपोऽप्यनुकृष्य विधीयते तदा इकारो नोच्चारणार्थः ॥ १५९ ॥

**ज्यादादीयसः ॥ लोपस्येति ।** यदि लोपो यिटा न व्यवहितः स्यात्तेनैव ज्यायानिति सिध्यतीति कृत्वा आदिति न वक्तव्यं स्यादिति भावः । कथं पुनर्लोपे सिद्धिः ? इत्याह—**लोपे हीति । अकृद्यकार इति ।** अत्र क्ङितीति नानुवर्त्तत इति भावः । उरुयेत्यादौ छान्दसत्वाद्दीर्घाभावः ॥ १६० ॥

**र ऋतो हलादेर्लघोः ॥ परिगणनं कर्त्तव्यमिति ।** एवं च 'हलादेर्लघोः' इति न वक्तव्यम् । **मातय-**

**भावबोधिनी**

'बहु' से उत्तरवर्त्ती इष्ठन् प्रत्यय को 'यिट्' का आगम होता है और बहु का 'भू' आदेश होता है । उदा० भूयिष्ठः । [ भू + इष्ठन्, यिट् = य् आगम भू य् इष्ठ । ]

यिट् का आगम लोप का अपवाद है, इसमें इकार उच्चारणार्थ है । [ और कोई प्रयोजन नहीं है । ] ॥१५९ ॥

'ज्य' से उत्तरवर्त्ती ईयस् [ के ई ] का 'आ' आदेश होता है । उदा० ज्यायान् । [ अतिशयेन प्रशस्यः—इस अर्थ में इष्ठन् प्रत्यय, प्रशस्य का 'ज्य' आदेश ज्य + इष्ठ, इ का आत्व—ज्यायास्, नुमादि करने पर ज्यायान् । ]

लोप का यिट् से व्यवधान होने के कारण 'आत्' ऐसा कहा गया है । क्योंकि लोप कर देने पर कृद्भिन्न यकार परे होने से अ का दीर्घ होकर ज्यायान् सिद्ध हो जाता है । [ इस लोप की अनुवृत्ति न करके 'आत्' आदेश किया गया है । ] ॥ १६० ॥

हलादि लघु शब्द के ऋकार का 'र शब्द आदेश इष्ठन्, इमनिच्, ईयसुन् परे रहते होता है । उदा० प्रथिष्ठः प्रथिमा, प्रथीयान् । [ पृथु + इष्ठन्, इमनिच्, ईयसुन् में ऋ का 'र' शब्द आदेश टि का लोप ] म्रदिष्ठः, म्रदिमा, म्रदीयान् । [ मृदु + इष्ठन्, इमनिच्, ईयसुन्, ऋ का 'र' शब्द आदेश, टिलोप । ]

ऋत इति किम् ? पटिष्ठः, पटिमा, पटीयान् । हलादेरिति किम् ? ऋजिष्ठः, ऋजिमा, ऋजीयान् । लघोरिति किम् ? कृष्णिष्ठः, कृष्णीयान्, कृष्णिमा ।

परिगणनं कर्त्तव्यम्—

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥ (?)

तत इह न भवति—कृतमाचष्टे कृतयति, मातरमाचष्टे मातयति, भ्रातयति ॥

### ३१६३. विभाषर्जोश्छन्दसि ॥ १६२ ॥ (३५५५)

'ऋजु' इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतश्छन्दसि विषये । रजिष्ठमेति पन्थानम् [रजिष्ठमनु नेषि पन्थाम् ऋ० १.९१.१] । त्वमृजिष्ठः ॥

### ३१६४. प्रकृत्यैकाच् ॥ १६३ ॥ (२०१०)

**न्यासः**

ग्रहणं तदिहापि सम्बध्यते, सा च व्यवस्थितविभाषा, तेन पृथ्वादीनामेव भविष्यति । यद्येवम्, 'हलादेर्लघोः' इत्येतन्न कर्त्तव्यम्, व्यवस्थितविभाषया हलादेर्लघोश्च भविष्यति ? सत्यमेतत्; तद् विस्पष्टार्थं क्रियते ।

**तत इह न भवतीत्यादि** । अक्रियमाणे तु परिगणने कृतयतीत्यादावपीष्ठवद्भावेन स्यादेवेति भावः ॥ १६१ ॥

**विभाषर्जोश्छन्दसि** ॥ १६२ ॥

**प्रकृत्यैकाच्** ॥ **स्रजिष्ठ इति** । अत्र प्रकृतिवद्भावेन टिलोपो न भवति । ननु च 'विन्मतोर्लुक्' टिलोपं बाधिष्यते, नाप्राप्ते त्वस्मिंस्तस्यारम्भात् ? नैतदस्ति; द्वौ टिलोपौ—एको विन्मत्वन्तस्य, अन्यो लुकि कृते सत्यवशिष्टस्य; तत्र योऽसौ विन्मत्वन्तस्य टिलोपस्तस्मिन्नाप्राप्ते लुगारभ्यत इति युक्तं यदसौ तं बाधते । यस्त्व-

**पदमञ्जरी**

तीति । उणादीनामव्युत्पन्नत्वात् 'तुरिष्ठेमेयःसु' इति तृशब्दस्य लोपो न भवति, अत्र परत्वाट्टिलोपं बाधित्वा रभावः प्राप्नोति ॥ १६१ ॥ १६२ ॥

**प्रकृत्यैकाच्** ॥ **इष्ठेमेयस्सु परत इति** । यदि त्विष्ठादीनामिहानुवृत्तिर्न स्यात्, तदा श्रिये हितम् 'प्राक् क्रीताच्छः' श्रीयम्, ज्ञा देवतास्य ज्ञः स्थालीपाक इत्यत्र यस्येतिलोपो न स्यात्, ततश्च श्रीयमित्यत्रे-

**भावबोधिनी**

ऋ का र—इसका क्या फल है ? पटिष्ठः, पटिमा, पटीयान् । [ पटु + इष्ठन् आदि में ऋ नहीं अ है । अतः 'र' आदेश नहीं होता है । ] हलादि का—इसका क्या फल है ? ऋजिष्ठः, ऋजिमा, ऋजीयान् । [ ऋजु + इष्ठन् आदि में ऋ का र नहीं होता है । क्योंकि 'ऋजु' हलादि नहीं है । ]

लघु का—इसका क्या फल है ? कृष्णिष्ठः, कृष्णीयान्, कृष्णिमा । [कृष्ण वर्णवाचक है । संयोग से पूर्व होवे से ऋ गुरु है लघु नहीं है । अतः 'र' नहीं होता है । ]

इस सूत्र के लक्ष्यों का परिगणन करना चाहिए—'पृथु, मृदु, भृश, कृश, दृढ और परिपूर्वक वृढ—इन छः शब्दों को हो [ ऋ का र आदेश ] विधि में स्मरण करे, माने ।

इसी कारण यहाँ 'र' नहीं होता है—कृतम् आचष्टे—कृतयति, मातयति भ्रातयति । [ कृत + णि, मातृ + णि, भ्रातृ + णि में टि का लोप होता है । परिगणन के बाहर होने से ऋ का र नहीं होता है । ] ॥ १६१ ॥

'ऋजु' इसके ऋ के स्थान पर रेफ आदेश इष्ठन्, इमनिच्, ईयसुन्, परे रहते विकल्प से होता है वेदविषय में । उदा० "रजिष्ठमनु नेषि पन्थाम् ।" [ ऋजु + इष्ठन्, ऋ का र आदेश । नहीं होने पर— ] "त्वमृजिष्ठः ।" ॥ १६२ ॥

"एकाच् जो भसंज्ञक है वह इष्ठन्, इमनिच्, ईयसुन् परे प्रकृतिरूप" से रहता है । [ उसका लोप नहीं होता

एकाज् यद्भसंज्ञकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति। स्रग्विन्नित्येतस्य विन्नन्तस्य—स्रजिष्ठः, स्रजीयान्, स्रजयति। स्रग्वदित्येतस्य मत्वन्तस्य—स्रुचिष्ठः, स्रुचीयान्, स्रुचयति।

एकाजिति किम्? वसुमदित्येतस्य वसिष्ठः। वसीयान्।

❀ प्रकृत्याऽके राजन्यमनुष्ययुवानः ❀ (म० भा०)। अके प्रत्यये परतो राजन्य, मनुष्य, युवन्—

**न्यासः**

वशिष्टस्य टिलोपस्तस्य प्राग्लुक्प्राप्त्यसम्भवादप्राप्त एव तस्मिन्नारभ्यमाणः कथं पश्चादुपजातप्राप्तिकं लोपं बाधेत! तस्मादारब्धव्यमिदम्।

**प्रकृत्याके राजन्येत्यादि**। किं वक्तव्यमेतत्? न; कथं तर्हि 'तुरिष्ठेमेयस्सु' इत्येतन्निवृत्तम्। सामान्येनायं प्रकृतिवद्भावो विधेयः, विभाषेति चानुवर्त्तते, सा च व्यवस्थितविभाषा। तेन यत्र यत्रेष्यते तत्र सर्वत्र भविष्यति, यत्र तु नेष्यते तत्र न भविष्यत्येव। एवम् 'इनण्यनपत्ये' इत्येवमादिकं प्रकृतिभावविधानमनर्थकं स्यादिति चेत्? न; प्रपञ्चार्थत्वात्। **राजन्यकमिति**। राज्ञोऽपत्यमिति 'राजश्वसुराद् यत्', तस्मात्

**पदमञ्जरी**

यङादेशः स्यात्, तस्मादनुवर्त्या इष्ठादयः। **स्रजिष्ठ इति**। अथ प्रादयः किमित्युपेक्षिताः—प्रेष्ठः, प्रेयान्, स्थेष्ठः, स्थेयानिति? असिद्धत्वात्प्रादीनां टिलोपो यस्येतिलोपश्च न भविष्यति। इह तर्हि श्रेष्ठः, श्रेयानिति? अकारोच्चारणसामर्थ्याल्लोपो न भविष्यति। तस्माद्विन्मतोर्लुक्येवास्योदाहरणस्य सम्भवः। यद्येवम्, नाप्राप्ते टिलोपे आरभ्यमाणो विन्मतोर्लुक् लोपं बाधिष्यते? सत्यम्; विन्नन्तस्य मत्वन्तस्य च टिलोपः प्राप्तस्तं बाधते। यस्तु तयोर्लुकि कृते अवशिष्टस्य टिलोपः प्राप्नोति, तस्य कथं बाधकः स्यात्! न हि तस्मिन्नप्राप्ते विन्मतोर्लुगारभ्यते। अवश्यं चैतदेवं विज्ञेयम्—अवशिष्टस्य यष्टिलोपस्तं न बाधत इति; अन्यथा यत्रावशिष्टमनेकाच् तत्रापि टिलोपो न स्यात्, ततश्च वसिष्ठः, वसीयानिति प्रत्युदाहरणं नोपपद्यते। एवं चातिशयेन ब्रह्मवान् ब्रह्मिष्ठः, अवशिष्टस्य 'नस्तद्धिते' इति टिलोपो भवति। बह्वृच्ब्राह्मणं च—'तस्माद्ब्राह्मणं ब्रह्मिष्ठं कुर्वीत' इति, तथातिशयेन पयस्वी पयिष्ठ इति भवति, न तु पयसिष्ठ इति।

अपर आह—

इष्ठेमेयस्स्वनेकाचोऽप्यवशिष्टस्य नेष्यते।
टिलोपो, भाष्यकारेण प्रवृत्ते विन्मतोर्लुकि॥ इति।

**भावबोधिनी**

है।] स्रग्विन् इस विन् प्रत्ययान्त का—स्रजिष्ठः, स्रजीयान्, स्रजयति। [स्रग्विन् + इष्ठन्, ईयसुन्, णिच् परे रहते "विन्मतोर्लुक्" सूत्र से विन् का लुक् कर देने पर स्रज् + इष्ठ आदि में एकाच् भसंज्ञक है, इसका टिलोप प्राप्त होता है, इस सूत्र से प्रकृतिभाव के कारण नहीं होता है। यहाँ यह ध्यान रखना चाहिए कि दो बार टिलोप प्राप्त है। पहला विनन्त और मत्वन्त का, दूसरा विन् और मतुप् का लुक् कर देने के बाद अवशिष्ट एकाच् प्रकृति का। यहाँ बाद वाले टिलोप को रोकने के लिये प्रकृतिभाव आवश्यक है क्योंकि पहले वाले हो टिलोप को तो 'विन्मतोर्लुक्' बाधित कर लेता है। अतः सूत्र की आवश्यकता है।] स्रुग्वत्—इस मत्वन्त का स्रुचिष्ठः, स्रुचीयान्, स्रुचयति। [स्रुग् अस्ति अस्य—इस मत्वर्थ में प्रत्यय के बाद जश्त्व और वत्व करके स्रुग्वत्+इष्ठन् आदि में मतुप् = वत् के लोप के बाद टिलोप प्राप्त है। प्रकृतिभाव के कारण नहीं होता है।]

एक अच् वाला—इसका क्या फल है? वसुमत्—इसका वसिष्ठः, वसीयान्। [वसु अस्ति अस्य—इस अर्थ में मतुप् करने के बाद इष्ठन् आदि करने पर मतुप् का लुक् हो जाने पर—वसु+इष्ठ, ईयसुन् में प्रकृतिभाव नहीं होता है क्योंकि 'वसु' एकाच् नहीं, दो अचों वाला है। अतः टिलोप होता है।]

❀ अक प्रत्यय परे राजन्य, मनुष्य, युवन्—ये प्रकृतिरूप से [रहते हैं] ❀ अक प्रत्यय परे रहते राजन्य,

इत्येते प्रकृत्या भवन्ति। राजन्यानां समूहो राजन्यकम्। मनुष्याणां समूहो मानुष्यकम्। 'आपत्यस्य च तद्धितेऽनाति' (६.४.१५१) इति यलोपः प्रकृतिभावेन न भवति। यूनो भावः यौवनिका। मनोज्ञादित्वाद् वुञ्, तस्य 'नस्तद्धिते' (६.४.१४४) इति टिलोपो न भवति॥

## ३१६५. इनण्यनपत्ये॥ १६४॥ (१२४५)

इन्नन्तमनपत्यार्थेऽणि परतः प्रकृत्या भवति। सांकूटिनम्। सांराविणम्। सांमार्जिनम्। 'अभिविधौ भावे इनुण्', (३.३.४४) 'अणिनुण', (५.४.१५) इत्यण्[1]। स्रग्विण इदं स्राग्विणम्[1]।

अणीति किम्? दण्डिनां समूहो दाण्डम्। 'अनुदात्तादेरञ्' (४.२.४४) इत्यञ्प्रत्ययः। अनपत्य इति किम्? मेधाविनोऽपत्यं मैधावः॥

### न्यासः

समूहेऽर्थे 'गोत्रोक्षोष्ट्रोरभ्र' इत्यादिनात्र वुञ्। **मानुष्यकमिति**। मनोरपत्यमिति 'मनोर्जातावञ्यतौ षुक्च' इति येषां मतेऽपत्यार्थे यत्, तेषां पूर्वसूत्रेण वुञि कृते लोपः प्राप्नोति, स प्रकृतिभावान्निवर्त्तते। येषां तु मतेन जातिमात्रे यत्, नापत्ये, तेषां नार्थः प्रकृतिभावेन; अनापत्ययकारत्वादेव हि लोपो न भविष्यति॥ १६३॥

**इनण्यनपत्ये॥ साङ्कूटिनम्, सांराविणम्, साम्मार्जिनमिति**। 'कूट दाहे', 'रु शब्दे', 'मृजू शुद्धौ'। 'अभिविधौ भावे इनुण्', 'मृजेर्वृद्धिः' सांकूटिन्, सांराविन्, सांमार्जिन्—इति स्थिते 'अणिनुणः' इति स्वार्थेऽण्। **मैधाव इति**। 'अस्माया' इत्यादिना विनिः, तदन्तात् प्राग्दीव्यतोऽणपत्यार्थे॥ १६४॥

### पदमञ्जरी

**प्रकृत्येत्यादि**। राज्ञोऽपत्यं राजन्यः, 'राजश्वशुराद्यत्', मनोरपत्यं मनुष्यः, 'मनोर्जातावञ्यतो षुक्च', ताभ्यां समूहे 'गोत्रोक्षोष्ट्र' इत्यादिना वुञ्। **आपत्यस्य चेत्यादि**। एतच्चानयोरपत्यवाचित्वमङ्गीकृत्योक्तम्। यदा तु जातिमात्रमुभयत्र शब्दार्थः, अपत्यार्थस्तु नास्त्येवेति पक्षः, तदानापत्यत्वादेव लोपस्याप्रसङ्गान्नार्थः प्रकृतिभावेन॥ १६३॥

**इनण्यनपत्ये॥ सांकूटिनमिति**। 'कूट दाहे' (धा० पा० १८९०), दीर्घोपधः, 'अभिविधौ भावे इनुण्', 'अणिनुणः'॥ १६४॥

### भावबोधिनी

मनुष्य, युवन्—ये शब्द प्रकृतिरूप से रहते हैं, अर्थात् टिलोप नहीं होता है। उदा० राजन्यानां समूहः—राजन्यकम्। मनुष्याणां समूहः—मानुष्यकम्। [ इनमें समूह अर्थ में 'गोत्रोक्षोष्ट' (४।२।३९) सूत्र से वुञ् = अक् प्रत्यय होता है। ] यहाँ "आपत्यस्य च तद्धितेऽनाति' (६।४।१५१) सूत्र से य का लोप प्रकृतिभाव के कारण नहीं होता है। यूनः भावः—इसमें यौवनिका। इसमें "द्वन्द्वमनोज्ञादिभ्यश्च" (५।१।१३३) सूत्र से वुञ् = अक होता है, 'नस्तद्धिते' (६।४।१४४) सूत्र से इस युवन् का टिलोप नहीं होता है। [ क्योंकि प्रस्तुत सूत्र से प्रकृतिभाव हो जाता है। ]॥ १६३॥

अपत्यभिन्न अर्थ वाले अण् के परे रहते इन्नन्त का प्रकृतिभाव होता है। उदा० सांकूटिनम्। सांराविणम्। सांमार्जिनम्। [ इनमें संपूर्वक कूट, रु तथा मृज्—इन धातुओं से ] "अभिविधौ भावे इनुण्" इस सूत्र से इनुण् (= इन्) प्रत्यय [ वृद्धि आदि करने पर—सांकूटिन्, सांराविन्, सांमार्जिन् बनते हैं। तब स्वार्थ में ] "अणिनुणः" इस सूत्र से अण् प्रत्यय होता है। [ भसंज्ञा टिलोप प्राप्त है। प्रकृतिभाव हो जाता है। ] स्रग्विणः इदम्—इस अर्थ में स्राग्विणम् [स्रग्विन्+अण्, आदिवृद्धि, प्रकृतिभाव के कारण लोप नहीं। ]

अण् परे रहते—इसका क्या फल है? दण्डिनां समूहः—इस अर्थ में दाण्डम्। [ दण्डिन् से] "अनुदात्तादेरञ्" सूत्र से अञ् है। [ अण् न होने से प्रकृतिभाव न होकर टिलोप होता है। ] अपत्य से भिन्न अर्थ में—मेधाविनः अपत्यम्—मैधावः। [ मेधाविन् + अण् में प्रकृतिभाव नहीं होता है। क्योंकि अपत्यार्थ में ही अण् है ]॥ १६४॥

---

१–१. पाठोऽयं बहुत्र नास्ति।

**३१६६. गाथिविदथिकेशिगणिपणिनश्च ॥ १६५ ॥ (१२७५)**

गाथिन्, विदथिन्, केशिन्, गणिन्, पणिन्—इत्येते चाणि प्रकृत्या भवन्ति। गाथिनोऽपत्यं गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः।

अपत्यार्थोऽयमारम्भः॥

**३१६७. संयोगादिश्च ॥ १६६ ॥ (११५६)**

संयोगादिश्च इनणि प्रकृत्या भवति। शाङ्खिनोऽपत्यं शाङ्खिनः। माद्रिणः। वाज्रिणः॥

**३१६८. अन् ॥ १६७ ॥ (११५५)**

अन्नन्तमणि प्रकृत्या भवति अपत्ये चानपत्ये च। सामनः। वैमनः। सौत्वनः॥ जैत्वनः॥

**३१६९. ये चाभावकर्मणोः ॥ १६८ ॥ (११५४)**

यकारादौ च तद्धितेऽभावकर्मणोरर्थयोरन् प्रकृत्या भवति। सामसु साधुः सामन्यः। वेमन्यः[1]।

अभावकर्मणोरिति किम्? राज्ञो भावः कर्म वा राज्यम्। 'राजन्' इति पुरोहितादिषु (५.१.१२८) पठ्यते, ततोऽयं यक् प्रत्ययः॥

**न्यासः**

**गाथिविदथिकेशिगणिपणिनश्च ॥** अपत्यार्थोऽयमारम्भः; अनपत्ये पूर्वेणैव सिद्धत्वात् इन्नन्तत्वादेषाम्॥ १६५॥

**संयोगादिश्च ॥** अयमप्यपत्यार्थ आरम्भः। **शाङ्खिन इति**। शङ्खमद्रवज्रशब्देभ्यो मत्वर्थे इनिः, तदन्तात् पूर्ववदण्॥ १६६॥

**अन् ॥** 'अनपत्ये' इति निवृत्तम्। सामान्येनाण्मात्रे विधिः। **सामनः, वैमन इति**। 'तस्येदम्' इत्यण्। **सौत्वन इति**। 'षुञ् अभिषवे', 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्, 'ह्रस्वस्य पिति कृति तुक्' ॥ १६७॥

**ये चाभावकर्मणोः ॥ सामन्यः, वेमन्य इति**। 'तत्र साधुः' इति यत्॥ १६८॥

**पदमञ्जरी**

**गाथिविदथिकेशिगणिपणिनश्च ॥** मत्वर्थीयेन्नन्ता एते। गाथाशब्दो व्रीह्यादिः। विदथः=यज्ञः॥१६५॥

**संयोगादिश्च ॥** अयमपत्यार्थ आरम्भः॥ १६६॥

**अन् ॥** 'अनपत्ये' इति निवृत्तम्। **सामनः, वैमन इति**। 'तस्येदम्' इत्यण् 'सुयजोर्ङ्वनिप्', ह्रस्वस्य तुक्—सुत्वा, तस्यापत्यं **सौत्वनः** ॥ १६७॥ १६८॥ १६९॥ १७०॥

**भावबोधिनी**

गाथिन्, विदथिन्, केशिन्, गणिन् और पणिन्—ये शब्द अण् परे रहते प्रकृतिरूप से होते हैं। [टिलोप आदि नहीं होता है।] उदा० गाथिनः अपत्यम्—गाथिनः। [गाथिन् से अपत्य अर्थ में अण् करने पर प्रस्तुत सूत्र से प्रकृतिभाव होने से टिलोप नहीं होता है—गाथिनः, गाथिनौ, गाथिनाः आदि रूप होते हैं। इसी प्रकार सभी में समझना चाहिए।] वैदथिनः। [विदथिनः अपत्यम्—अण्] कैशिनः। [कशिनः अपत्यम्—इसमें अण्] गाणिनः। [गथिनः अपत्यम्—इसमें अण्] पाणिनः। [पणिनः अपत्यम्—इसमें अण्] इसी से पुनः इञ् प्रत्यय करने पर 'पाणिनिः' शब्दरूप होता है।]

यह सूत्र अपत्य अर्थ में [अण् परे] प्रकृतिभाव के लिए है॥ १६५॥

संयोगादि इन् (इन्नन्त) अण् परे रहते प्रकृतिभाव से होता है। उदा० शङ्खिनः अपत्यम्—इसमें शाङ्खिनः। [शङ्खिन् + अण्, आदिवृद्धि, प्रकृतिभाव के कारण टिलोप नहीं होता है।] माद्रिणः। वाज्रिणः। [मद्रिन् + अण्, वज्रिन् + अण् आदिवृद्धि, प्रकृतिभाव।] ॥ १६६॥

अपत्य और अनपत्य अर्थ में विहित अण् परे रहते अन्नन्त प्रकृतिभाव से रहता है। उदा० सामनः। वैमनः। सौत्वनः। जैत्वनः। [सामन्, विमन् से अण्। सु + ङ्वनिप् = वन् में तुक् = त, सुत्वन्, जि + वनिप् = तुक् जित्वन् = सुत्वन् और जित्वन् से अपत्य अर्थ में अण् करने पर प्रकृतिभाव के कारण टिलोप नहीं होता है।] ॥ १६७॥

भाव और कर्म से भिन्न अर्थों में यकारादि तद्धित परे रहते भी 'अन्' का प्रकृतिभाव होता है। उदा० सामसु साधुः—इस अर्थ में सामन्यः। [विमसु साधुः अर्थ में] वेमन्यः। [यत् प्रत्यय है।] भाव तथा कर्म में नहीं—इसका

---

१-१. 'ब्राह्मण्यः' इति मुद्रितः पाठः। न्यासे तु अयमेव पाठो लभ्यते।

## ३१७०. आत्माध्वानौ खे ॥ १६९ ॥ (१६७०)

आत्मन्, अध्वन्—इत्येतौ खे परतः प्रकृत्या भवतः। आत्मने हित आत्मनीनः। अध्वानमलङ्गामी अध्वनीनः।

ख इति किम्? प्रत्यात्मम्। प्राध्वम्। प्रत्यात्मम्—इत्यव्ययीभावे 'अनश्च' (५.४.१०८) इति समासान्तष्टच्प्रत्ययः। प्राध्वम्—इति 'उपसर्गादध्वनः' (५.४.८५) इति अच्प्रत्ययः॥

## ३१७१. न मपूर्वोऽपत्येऽवर्मणः ॥ १७० ॥ (११५७)

मपूर्वोऽन् अवर्मणोऽणि परतोऽपत्येऽर्थे न प्रकृत्या भवति। सुषाम्णोऽपत्यं सौषामः। चान्द्रसामः।

मपूर्व इति किम्? सौत्वनः। अपत्य इति किम्? चर्मणा परिवृतो रथः चार्मणः। अवर्मण इति किम्? चक्रवर्मणोऽपत्यं चाक्रवर्मणः।

❀ मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम् ❀ (म० भा०) हितनाम्नोऽपत्यं हैतनामः, हैतनामनः॥

न्यासः

आत्माध्वानौ खे॥ आत्मनीनमिति। 'आत्मन्विश्वजनभोगोत्तरपदात् खः'। अध्वनीनमिति। अत्रापि 'अध्वनो यत्खौ' इति खप्रत्ययः।

प्रत्यात्ममिति। आत्मानं प्रतीति 'अव्ययं विभक्ति' इत्यादिना यथार्थेऽव्ययीभावः। ततः 'अनश्च' इति टच्। प्राध्वमिति। प्रगतमध्वानमिति प्रादिसमासः, 'उपसर्गादध्वनः' इत्यच्॥ १६९॥

न मपूर्वोऽपत्येऽवर्मणः॥ चामर्ण इति। 'परिवृतो रथः' इत्यर्थे 'प्राग्दीव्यतोऽण्'।

वा हितनाम्न इति वक्तव्यमिति। हितनामशब्दस्य वा प्रतिषेधो भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—इहापि तदेव विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा। तेन हितनाम्नो वा प्रतिषेधो भविष्यति॥ १७०॥

भावबोधिनी

क्या फल है? राज्ञः भावः कर्म वा—इस अर्थ में राज्यम्। राजन् शब्द पुरोहितादि गण में पठित है अतः [ "पत्यन्तपुरोहितादिभ्यो यत्" से ] राजन् से यत् प्रत्यय है। [ यहाँ प्रकृतिभाव न होने से टिलोप हो जाता है। ] ॥ १६८॥

आत्मन् और अध्वन्—ये दोनों शब्द ख = ईन परे प्रकृतिभाव से रहते हैं। आत्मने हितः—आत्मनीनः। [ आत्मन् से हित अर्थ में "आत्मन् विश्वजनभोगोत्तरपदात् खः" सूत्र से ख = ईन होने पर प्रकृतिभाव होता है। ] अध्वानम् अलं गामी—इस अर्थ में अध्वनीनः। [ अध्वन् से "अध्वनो यत्खौ" से ख = ईन होता है। ]

ख परे—इसका क्या फल है? प्रत्यात्मम्। प्राध्वम्। [इनमें ख नहीं है। प्रकृतिभाव भी नहीं होता है। टिलोप होता है। आत्मानम् आत्मानं प्रति—इस अर्थ में ] प्रत्यात्मम्—इस अव्ययीभाव में "अनश्च" इस सूत्र से समासान्त टच् = अ प्रत्यय होता है। [ प्रगतम् अध्वानम्—यहाँ प्रादिसमास में ] प्राध्वम्—इसमें "उपसर्गादध्वनः" सूत्र से अच् प्रत्यय होता है। [ प्रकृतिभाव न होने से टिलोप होता है। ] ॥ १६९॥

वर्मन् से भिन्न मपूर्वक जो अन् वह अपत्यार्थक अण् परे रहते प्रकृतिभाव से नहीं रहता है, अर्थात् उसका टिलोप होता है। उदा० सुषाम्णः अपत्यम्—इस अर्थ में—सौषामः। [ चन्द्रसाम्नः अपत्यम्—इस अर्थ में ] चान्द्रसामः। [ सुषामन् + अण्, चन्द्रसामन् + अण्, आदिवृद्धि, प्रकृतिभाव न होने से टि = अन् का लोप होता है। ]

मपूर्व ( म है पूर्व में जिसके ऐसा )—इसका क्या फल है? सौत्वनः। [ सुत्वनः अपत्यम् अर्थ में अण् होने पर मपूर्व न होने से प्रकृतिभाव का निषेध नहीं होता है। ] अपत्य अर्थ में—इसका क्या फल है? चर्मणा परिवृतः रथः—चार्मणः। [ चर्मन् से "तेन परिवृतः" अर्थ में अण् है। प्रकृतिभाव का निषेध नहीं होता है। ]

वर्मन् को छोड़कर—इसका क्या फल है? चक्रवर्मणः अपत्यम्—इस अर्थ में चाक्रवर्मणः। [ प्रकृतिभाव के कारण टिलोप नहीं होता है। ]

* मपूर्वक अन् के प्रकृतिभाव के प्रतिषेध में 'हितनामन्' का विकल्प कहना चाहिए। * उदा० हितनाम्नः अपत्यम्—इस अर्थ मे [ अण् करने पर विकल्प से प्रकृतिभाव होने पर और टिलोप होने पर दो रूप होते हैं ] हैतनामः, हैतनामनः॥ १७०॥

## ३१७२. ब्राह्मोऽजातौ ॥ १७१ ॥ (११५८)

**योगविभागोऽत्र क्रियते 'ब्राह्मः' इत्येतदपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्रापि टेर्लोपार्थं निपात्यते। ब्राह्मो गर्भः। ब्राह्ममस्त्रम्। ब्राह्मं हविः। ततः 'जातौ', अपत्य इत्येव—अपत्ये जातावणि ब्रह्मणष्टि-**

न्यासः

**ब्राह्मोऽजातौ ॥** यद्येतदेकमेव सूत्रं स्यात् ततो नियमार्थं वा स्यात्? विध्यर्थं वा? यद्यपत्य इति वर्त्तते, ततोऽनन्तरसूत्रेणैव प्रकृतिभावे प्रतिषिद्धे 'नस्तद्धिते' इति टिलोपः सिध्यत्येव, सिद्धे सत्येतन्नियमार्थं भविष्यति—अजातावेवापत्यार्थे यथा स्यादिति। तथा च 'तस्येदम्' इत्यणि विहिते ब्राह्मो गर्भः, ब्राह्ममस्त्रम्, ब्राह्मं हविः, ब्राह्मी ओषधिरिति न सिध्यति; अपत्याणोऽभावात्। अथापत्य इति निवृत्तम्, ततो विध्यर्थमेव भविष्यति। अपत्ये हि पूर्वसूत्रेण प्रकृतिभावः प्रतिषिद्धः, ततश्च 'अन्' इति प्रकृतिभावे प्राप्तेऽजातौ ब्राह्म इत्येत-ट्टिलोपार्थं निपात्यते। एवञ्च विध्यर्थेऽस्मिन् सिद्धम्—ब्राह्मो गर्भः, ब्राह्ममस्त्रम्, ब्राह्मं हविरिति; ब्राह्मण इयं ब्राह्मी ओषधिरित्येतत्तु न सिध्येत्; अजाताविति प्रतिषेधात्। अपत्ये जातौ च 'न मपूर्वोऽपत्येऽवर्मणः' इति प्रकृतिभावे प्रतिषिद्धे सति 'नस्तद्धिते' इति भवति टिलोपः—ब्राह्मो नारद इति, तथेहापि स्याद्—ब्रह्मणोऽपत्यमिति ब्राह्मण इति। एवमेकयोगे दोषप्रसङ्गमभिवीक्ष्य तत् परिजिहीर्षुराह—**योगविभागोऽत्र क्रियत इति।** योगविभागे सति यद्यपत्य इत्यनुवृत्तेरपत्य एव टिलोपो निपात्यते, पूर्ववत् सिद्धे सति नियमार्थमेव निपातनं स्यात्, ततश्च दोषस्तदवस्थ एव स्याद् यः प्राङ् नियमपक्षे उक्तः। तथा च योगविभागकरणमनर्थकं स्यात्। तस्मादपत्या-धिकारेऽपि योगविभागकरणसामर्थ्यादन्यत्र 'ब्राह्म' इत्येतन्निपात्यते। एवमनपत्येऽपि 'ब्राह्म' इति निपातनाद् ब्राह्मो गर्भः, ब्राह्ममस्त्रम्, ब्राह्मं हविरित्येतत् सिध्यति। ततः 'अजातौ' इत्ययं द्वितीयो योगः। 'न मपूर्वोऽपत्येऽवर्मणः' इति प्रकृतिभावे प्रतिषिद्धे यः 'नस्तद्धिते' इति टिलोपः, स मा भूदित्येवमर्थोऽपत्य इत्येतेति। एतेनास्मिन् द्वितीये योगे 'अपत्य' इत्यनुवर्त्तत इत्याचष्टे। 'अजातौ' इति च प्रसज्यप्रतिषेधोऽयम्। तत्र जातेरपत्यार्थेन

पदमञ्जरी

**ब्राह्मोऽजातौ ॥ योगविभागोऽत्र क्रियते इति।** यदि न क्रियेत, तदापत्य इत्यनुवर्त्तते वा, न वा? तत्रानुवृत्तावनन्तरसूत्रेण प्रकृतिभावप्रतिषेधात् 'नस्तद्धिते' इत्येव टिलोपस्य सिद्धत्वान्नियमार्थमेतद्भवति—अजातावेवापत्ये इति, तत्रापत्ये सिद्धमिष्टम्—ब्राह्मो नारदः, ब्राह्मणजातिरिति। अनपत्ये तु जातावजातौ च न कचिट्टिलोपः स्याद्—ब्राह्मी ओषधिः, ब्राह्मं हविरिति। अननुवृत्तौ तु 'विधिनियमसम्भवे विधिरेव ज्यायानिति' (व्या० प० १३०) अनपत्ये 'अन्' इति प्रकृतिभावे प्राप्ते अजातौ टिलोपार्थं विध्यर्थमेतद्भवति; तत्र ब्राह्मं हवि-रित्यादि सिद्धम्, ब्राह्मो ओषधिरिति न सिध्यति; अजाताविति प्रतिषेधात्, ब्राह्मणी ओषधिरिति प्राप्नोति। अपत्ये च जातौ ब्राह्मण इति न सिध्यति, पूर्वसूत्रेण प्रकृतिभावे प्रतिषिद्धे टिलोपप्रसङ्गादिति भावः। विभक्त-स्यार्थमाह—**ब्राह्म इत्येतदिति। सामर्थ्यादिति।** अपत्ये पूर्वेणैव टिलोपस्य सिद्धत्वाद्ब्राह्म इत्येतावता नियमस्य

भावबोधिनी

इसमें योगविभाग किया जाता है। 'ब्राह्मः' यह अपत्य के अधिकार में भी सामर्थ्य से अपत्य से भिन्न अर्थ में भी टि के लोप के लिए निपातित होता है। उदा० ब्राह्मः गर्भः। ब्राह्मम् अस्त्रम्। ब्राह्मं हविः। [ इनमें 'तस्येदम्' 'साऽस्य देवता' इनसे अण् होता है। टि का लोप होता है। ] इसके बाद दूसरा सूत्र है—"जातौ" 'अपत्ये' का सम्बन्ध है—अपत्य जाति अर्थ में अण् परे रहते ब्रह्मन् का टिलोप नहीं होता है। उदा० ब्रह्मणः अपत्यम्—ब्राह्मणः। [ 'अजातौ' के नञ् का भवति क्रिया के साथ सम्बन्ध होता है। इसलिए अपत्य अर्थ में जाति की प्रतीति में 'ब्राह्मणः' यहाँ टि लोप नहीं होता है। ऐसा न्यासकार मानते हैं। ]

अपत्य में ही—ब्राह्मी ओषधिः। [ यहाँ टिलोप होता है। ]

लोपो न भवति । ब्रह्मणोऽपत्यं ब्राह्मणः ।

अपत्य इत्येव—ब्राह्मी ओषधिः ॥

**३१७३. कार्मस्ताच्छील्ये ॥ १७२ ॥ (१६१३)**

'कार्मः' इति ताच्छील्ये टिलोपो निपात्यते । कर्मशीलः कार्मः । 'शीलम्' 'छत्रादिभ्यो णः' (४.४.६१–६२) इति णप्रत्ययः ।

यद्येवम्, किमर्थमिदम् 'नस्तद्धिते' (६.४.१४४) इत्येव टिलोपः सिद्धः ? सत्यमेतत्; ज्ञापकार्थं तु;

**न्यासः**

सम्बन्धः, नञस्तु भवतिना । तमेवार्थं वृत्तौ दर्शयन्नाह—**अपत्ये जातावणि ब्राह्मण' इति लोपो न भवतीति ।** जातिविशिष्टेऽपत्ये विवक्षितेऽणि परतो ब्राह्मण इत्यत्र टिलोपो न भवतीत्यर्थः ।

**अपत्य इत्येव—ब्राह्मी ओषधीरिति ।** प्रत्युदाहरणव्याजेन योगविभागे सति जातिमात्रविवक्षायां ब्राह्मी ओषधिरित्येतदपि सिद्धं भवतीति दर्शयति ॥ १७१ ॥

**कार्मस्ताच्छील्ये ॥ यद्येवमिति ।** यदि णकारोऽत्र प्रत्ययः, एवं सति किमर्थमिदम् ? नैवास्य प्रयोजनं किञ्चिदित्यर्थः । किं कारणम् ? इत्याह—**नस्तद्धित इत्येवं हीत्यादि ।** यद्धि लक्षणेन न प्राप्नोति तदर्थं निपातनमारभ्यते, इह तु 'नस्तद्धिते' इत्येवं सिद्धः, न हि णे केनचित् प्रकृतिभाव उक्तो यतस्तत्र टिलोपार्थमारभ्यमाणमिदमर्थवत् स्यात् । अणि हि प्रकृतिभावोऽणन्तस्योक्तः, न तु णे । अनन्तरोक्तमर्थमभ्युपगच्छति—यदि सत्यम्, किमर्थमिदम् ? इत्याह—**ज्ञापकार्थमित्यादि । अण्कृतानीत्यादि ।** अणि कृतानि कार्याणि अण्कृतानि, 'सप्तमी' इति योगविभागात् समासः । अथ वा—अणा कृतानि, 'कर्तृकरणे कृता बहुलम्' इति समासः । किमेतस्य ज्ञापनेन प्रयोजनम् ? इत्याह—**तेनेत्यादि ।** चुरा शीलमस्याः, तपः शीलमस्य इति 'छत्रादिभ्यो णः' इति णः, तदन्तान्

**पदमञ्जरी**

कर्तुमशक्यत्वाच्च, तत्रापत्येऽपि ब्राह्मो नारद इति परत्वादनेनैव टिलोपः । **अपत्ये वेति ।** अन्यथा अनपत्ये वापत्ये च जातौ प्रतिषेधः स्यात्, प्रसज्यप्रतिषेधश्चायमित्याह—**अपत्ये जाताविति** ॥ १७१ ॥

**कार्मस्ताच्छील्ये । यद्येवमिति ।** यदि तु णप्रत्ययोऽयमित्यर्थः । **नस्तद्धित इति टिलोपः सिद्ध इति ।** अणि हि प्रकृतिभावः । [2]**ज्ञापनार्थमिति ।** एवं च 'छत्रादिभ्योऽण्' इति लाघवाय कर्त्तव्यम्; णवचने प्रयोजना-

**भावबोधिनी**

**विमर्श—**प्रस्तुत सूत्र का आकार सन्दिग्ध है । काशिका में "ब्राह्मोऽजातौ" ऐसा मान कर योगविभाग किया गया है—"ब्राह्मः" 'अजातौ' नञ् को प्रसज्यप्रतिषेधार्थक मान कर भवति क्रिया के साथ अन्वित किया गया है । भाष्य में भी यही भाव है ।

इस सूत्र पर सिद्धान्तकौमुदी की तत्त्वबोधिनी व्याख्या के अनुसार भी उक्त रूप है । किन्तु बालमनोरमाकार 'ब्राह्मो जातौ' ऐसा सूत्र मानते हैं और 'न' की अनुवृत्ति करके 'अपत्ये जातौ न भवति' ऐसी व्याख्या करते हैं । ऐसा सम्भवतः नञ् को प्रसज्यप्रतिषेध मानने के लिए ही किया गया है ॥ १७१ ॥

'कार्मः' इसमें ताच्छील्य अर्थ में टिलोप निपातित होता है । उदा० कर्मशीलः—इसमें—कार्मः । "शील अर्थ में" "छत्रादि शब्दों से ण प्रत्यय होता है" (४।४।६२) सूत्र से अण् प्रत्यय होता है । [ कर्मन् + अण्, आदिवृद्धि, टिलोप ] ।

यदि ऐसा है तब इस सूत्र की क्या आवश्यकता, "नस्तद्धिते" इसी सूत्र से टि का लोप सिद्ध है ? यह कहना सच है, किन्तु यह सूत्र ज्ञापन के लिए है । यह ज्ञापित करता है—ताच्छीलिक (तच्छील सम्बन्धी) 'ण' परे रहते अण्कृत (अण् परे किये जाने वाले) कार्य होते हैं । इसलिये चौरी, तापसी—इनमें णान्त से भी [ अणन्त मानकर

---

१. मूले तु '.....ब्राह्मणष्टि लोपो न भवती'ति पाठः ।　२. मूले न्यासे च 'ज्ञापकार्थम्' इति पाठः ।

**एतज् ज्ञापयति—ताच्छीलिके णेऽण्कृतानि भवन्तीति। तेन चौरी, तापसीति णान्तादपीकारः सिद्धो भवति।**

**ताच्छील्य इति किम्? कर्मण इदं कार्मणम्॥**

**३१७४. औक्षमनपत्ये॥ १७३॥ (११५९)**

**औक्षमित्यनपत्येऽणि टिलोपो निपात्यते। औक्षं पदम्।**

**अनपत्य इति किम्? उक्ष्णोऽपत्यमौक्ष्णः, 'षपूर्वहन्धृतराज्ञामणि' (६.४.१३५) इत्यल्लोपः॥**

**३१७५. दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौण-हत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि॥ १७४॥ (११४५)**

**दाण्डिनायन, हास्तिनायन, आथर्वणिक, जैह्माशिनेय, वासिनायनि, भ्रौणहत्य, धैवत्य, सारव, ऐक्ष्वाक, मैत्रेय, हिरण्मय—इत्येतानि निपात्यन्ते।**

**न्यास**

ङीप्। 'ताच्छीलिके णः' इत्यस्यार्थस्य ज्ञापितत्वात् 'तदस्यां प्रहरणमिति क्रीडायां णः' इति दण्डात् णे दाण्डेति–अण्कृतं कार्यं न भवति।

यदि तर्हि ताच्छीलिकेष्वण्कृतमिष्यते, अणेव छत्रादिभ्यः कस्मान्नोच्येत, तत्राप्ययमर्थः—ज्ञापनार्थं निपातनं कर्त्तव्यं न भवति? युक्तमेतदुक्तवानसि; वैचित्र्यार्थं त्वण्कृतः।

**कार्मणमिति।** 'तद् युक्तात् कर्मणोऽण्' इत्यण्। कर्मणा युक्तं कार्मणमिति॥ १७२॥

**औक्षमनपत्ये। औक्षं पदमिति।** 'तस्येदम्' इत्यण्॥ १७३॥

**दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि॥ उपचाराद् ग्रन्थोऽप्यथर्वन्नित्युच्यत इति।** उपचारस्य तु तत्प्रोक्तत्वमेव निबन्धनम्। **आथर्वणिक इति।** 'वसन्तादिभ्यष्ठक्'।

**पदमञ्जरी**

भावात्। **ताच्छीलिक इति।** तुल्यजातीयविषयत्वाज्ज्ञापनस्यैतल्लभ्यते, तेन 'तदस्यां प्रहरणम्', 'प्रज्ञाश्रद्धार्चा' इत्यादिके णे ङीन्न भवति॥ १७२॥ १७३॥

**दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्यानि॥ उपचारादिति।** मुख्यस्याध्ययनासम्भव उपचारे हेतुः।

**भावबोधिनी**

'टिड्ढाणञ्' सूत्र से होने वाला ] ईकार = ङीप् प्रत्यय सिद्ध होता है।

ताच्छील्य में—इसका क्या फल है? कर्मण इदं—कार्मणम्। [ सम्बन्ध अर्थ में अण् है। तच्छील = उस प्रकार का स्वभाव, ताच्छील्य = उस प्रकार के स्वभाव वाला होना। ]॥ १७२॥

'औक्षम्' यह अनपत्य अर्थ में अण् परे रहते टिलोप निपातित होता है। उदा० औक्षं पदम्। [ उक्षन् + अण्, आदिवृद्धि, अन् = टि का लोप। यहाँ 'तस्येदम् से अण् है ]।

अपत्यभिन्न अर्थ में—इसका क्या फल है? उक्ष्णः अपत्यम्—औक्ष्णः, [ यहाँ अपत्य अर्थ में अण् होने से टिलोप नहीं होता है—अपि तु ] "षपूर्वहन्राज्ञामणि" इस सूत्र से अकार का लोप होता है॥ १७३॥

दाण्डिनायन, हास्तिनायन, आथर्वणिक, जैह्माशिनेय, वासिनायनि, भ्रौणहत्य, धैवत्य, सारव, ऐक्ष्वाक, मैत्रेय तथा हिरण्मय—ये शब्द निपातित होते हैं।

दण्डिन् तथा हस्तिन्—ये दोनों नडादियों में पठित हैं, 'आयन' परे रहते इन दोनों का प्रकृतिभाव निपातित होता है। [ दण्डिन् + फक् = आयन, आदिवृद्धि, प्रकृतिभाव-निपातन के कारण टिलोप नहीं होता है। ] कुछ के मत में

दण्डिन्, हस्तिन्—इत्येतौ नडादिषु (४.१.९९) पठ्येते, तयोरायने परतः प्रकृतिभावो निपात्यते। केषाञ्चित्तु—हस्तिन्निति नडादिषु न पठ्यते, तेषामत एव निपातनात् फगपि भवति। दण्डिनोऽपत्यं दाण्डिनायनः। हस्तिनोऽपत्यं हास्तिनायनः।

अथर्वन्—इति वसन्तादिषु (४.२.६३) पठ्यते। अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचाराद् अथर्वन्नित्युच्यते, तमधीते यः स आथर्वणिकः। इके प्रकृतिभावो निपात्यते।

जिह्माशिन्—इति शुभ्रादिषु (४.१.१२३) पठ्यते, तस्य ढे[1] (एये) परतः प्रकृतिभावो निपात्यते। जिह्माशिनोऽपत्यं जैह्माशिनेयः।

वासिनोऽपत्यम्, 'उदीचां वृद्धादगोत्रात्' (४.१.१५७) इति फिञ्, तत्र प्रकृतिभावो निपात्यते—वासिनायनिः।

भ्रूणहन्, धीवन्—इत्येतयोः ष्यञि परतस्तकारादेशो निपात्यते। भ्रूणघ्नो भावः भ्रौणहत्यम्।

**न्यासः**

**भ्रौणहत्यमिति**। भ्रूणं हतवानिति 'ब्रह्मभ्रूणवृत्रेषु क्विप्', तदन्तात् ष्यञ्। 'हनस्तोऽचिण्णलोः' इत्यनेनैव तकारः सिद्धः, तत् किं निपात्यते ? इत्याह—**हनस्तोऽचिण्णलोरित्यादि**। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यसम्प्रत्यय एव'। 'धातोः' इत्येवं यो विहितः प्रत्ययः, तत्र कार्यं विज्ञायत इत्यर्थः। न च ष्यञ्प्रत्ययो धातुप्रत्ययः, किं तर्हि ? प्रातिपदिकप्रत्ययः। तेन तत्र 'हनस्तोऽचिण्णलोः' इति तकारो न प्राप्नोति, अतो निपात्यते। कथं पुनर्विज्ञायते—धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं भवतीति ? अत एव निपातनात्। ननु च

**पदमञ्जरी**

**भ्रौणहत्येति** तु निपातनानर्थक्यम्; 'हनस्तोऽचिण्णलोः' इति तकारस्य सिद्धत्वात्। न च 'नस्तद्धिते' इति टिलोपप्रसङ्गः, उभयोरनित्ययोः परत्वात्तस्यैव भावादत आह—**हनतोऽचिण्णलोरिति**। धातुस्वरूपग्रहणे तत्प्रत्यये धातोरित्येवं विहितो यस्तत्रैव कार्यं विज्ञायते, न च ष्यञेवं विहितः, किं तर्हि ? प्रातिपदिकादित्येवम्, तेनात्र तो निपात्यते। कथं पुनर्ज्ञायते—'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते' (जै० प० ३१) इति ?

**भावबोधिनी**

हस्तिन्—यह नडादियों में नहीं पठित है, उनके अनुसार इसी सूत्र से निपातन से फक् भी होता है। दण्डिनः अपत्यम् ( = दण्डी का अपत्य ) दाण्डिनायन। हस्तिनः अपत्यम्—हास्तिनायनः।

अथर्वन्—यह शब्द वसन्तादि में पठित है। अथर्वा द्वारा प्रोक्त ग्रन्थ भी उपचार से 'अथर्वन्' ऐसा कहा जाता है, उस ग्रन्थ को जो पढ़ता है वह 'आथर्वणिकः' कहा जाता है। 'इक' परे रहते प्रकृतिभाव निपातित होता है। [ अथर्वाणम् अधीते—इस अर्थ में "वसन्तादिभ्यष्ठक्" (४।२।६३) सूत्र से ठक् होता है। ठ का इक करनेपर भसंज्ञा और टिलोप प्राप्त होनेपर प्रकृतिभाव निपातित होता है। ]

जिह्माशिन्—यह शब्द शुभ्रादियों में पठित है, ढ=एय प्रत्यय परे रहते इसका प्रकृतिभाव निपातित होता है। जिह्माशिनः अपत्यम्—इस अर्थ में—जैह्माशिनेयः। [ "शुभ्रादिभ्यश्च" (४।२।१२३) सूत्र से ढक् = एय प्रत्यय, आदिवृद्धि, प्रकृतिभाव से टिलोप नहीं होता है। ]

**विमर्श**—काशिका के प्रकाशित उपलब्ध सभी संस्करणों में प्रस्तुत स्थल का पाठ कुछ भ्रष्ट प्रतीत होता है—"जिह्माशिन् इति शुभ्रादिषु पठ्यति, तस्य ण्ये परतः प्रकृतिभावो निपात्यते।" "शुभ्रादिभ्यश्च" (४।१।१२३) यह सूत्र ढक् प्रत्यय करता है और 'ढ' के स्थान पर "आयनेयीनीयियः" इत्यादि सूत्र से एय होता है। इसलिये जिह्माशिन् + ढक् = ढ = एय, आदिवृद्धि होने और प्रकृतिभाव होनेपर 'जैह्माशिनेयः' बनता है ] अतः 'ण्ये' = ण्य प्रत्यय का कोई उपयोग नहीं है। अतः 'ण्ये' के स्थान पर 'ढे' (एये) ऐसा पाठ ही शुद्ध है। इसीलिये प्रस्तुत सूत्र पर बालमनोरमा में लिखा है—"जिह्माशिनोऽपत्यं जैह्माशिनेयः। शुभ्रादित्वाड्ढक् निपातनात् टिलोपः।" अशुद्ध पाठ की परम्परा के दुष्परिणाम का यह एक अति सुन्दर निदर्शन है।

---

१. 'ण्ये' इति प्रकाशितपाठोऽसङ्गतः, 'शुभ्रादिभ्यश्च' इत्यनेन ढगिति विधानात्।

**धीव्नो भावो धैवत्यम् । 'हनस्तोऽचिण्णलोः' (७.३.३२) इति यत्तत्वं तद्धातुप्रत्यय एवेति—भ्रौणघ्नः, वार्त्रघ्न इत्यत्र न भवति, अतो भ्रौणहत्ये तत्वं निपात्यते ।**

**सारव—इति 'सरयू' इत्येतस्य अणि परतोऽयूशब्दस्य 'व' इत्यादेशो निपात्यते । सरय्वां भवं सारवमुदकम् ।**

**ऐक्ष्वाक—इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते । ततोऽयमाद्युदात्तोऽन्तोदात्तश्च निपात्यते । इक्ष्वाकोरपत्यम्, 'जनपदशब्दात्क्षत्रियादञ्' (४.१.१६६) इत्यञ्, तत्र उकारलोपो निपात्यते । ऐक्ष्वाकः । इक्ष्वाकुषु जनपदेषु भवः 'कोपधादाण्' (४.२.१३२) इत्यण् । ऐक्ष्वाकः ।**

**न्यासः**

'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वप्रतिषेधार्थं निपातनं स्यात् ? नैतदस्ति; 'न क्वादेः' इत्यत्र हि नेति योगविभागादपि शक्यते कुत्वनिवृत्तिः कर्त्तुम् । **भ्रौणघ्नः, वार्त्रघ्न इति** । अपत्यार्थेऽण् । इक्ष्वाकुशब्दाद् यदा 'जनपदशब्दात्' इत्यादिनाञ् भवति, तदैक्ष्वाकशब्दो ञित्स्वरेणाद्युदात्तः । यदा तु 'कोपधात्' इति शैषिकोऽण्, तदाऽन्तोदात्तः ।

ननु चैवंविधसूत्र एकस्योपादानेऽपरस्य ग्रहणं न सिध्यति, तस्मादुभयोरपि स्वरभिन्नयोरुपादानं कर्त्तव्यम्—ऐक्ष्वाकः, ऐक्ष्वाक इति ? एतच्चोद्यमपाकर्त्तुमाह—**स्वरसर्वनाम्नेत्यादि** । उदात्तादीनां स्वराणामविभागेनोच्चारणम् = एकश्रुतिः । सा च स्वराणां सर्वनामेव सर्वनाम । यथैव हि 'तस्यापत्यम्' इत्यादौ निर्देश उपगुप्रभृतीन् विशेषान् विभागेन प्रतिपादयति, तथैकश्रुतिरप्युदात्तादीन् स्वरविशेषान् । तथात्रायमैक्ष्वाकशब्दः पठ्यते—नाप्याद्युदात्तो नाप्यन्तोदात्तः; तस्य त्वेवं पठितस्य प्रत्ययविशेषात् स्वरविशेषो भवति—यदाञ् तदाद्युदात्तः, यदाण् तदान्तोदात्तः ।

**पदमञ्जरी**

अत एव निपातनात् । एवं तर्हि कुत्वनिवृत्त्यर्थं निपातनम् ? मैवम्; तथाहि—'न क्वादेः' इत्यत्र प्रकरणे 'भ्रूणघ्नः ष्यञि' इत्यवक्ष्यत्, अतस्तत्त्वार्थमपि निपातनं सत् ज्ञापकमेव ।

ऐक्ष्वाकशब्दोऽयमाद्युदात्तोऽन्तोदात्तश्चेष्यते, तत्रान्यतरस्य पाठे इतरस्योकारलोपो न सिद्ध्यति, तत्राह—**स्वरसर्वनाम्नेति** । उदात्तादीनामविभागेनावस्थानम्=एकश्रुतिः, सर्वनामवत्सर्वनाम । यथैव हि 'तस्यापत्यम्' इत्यादौ उपगुप्रभृतीन्विशेषान्सर्वनाम प्रतिपादयति, तथैकश्रुतिरप्युदात्तादीन्स्वरविशेषानिति एकश्रुतेः सर्वनामत्वम् ।

**भावबोधिनी**

(अनु०) वासिनः अपत्यम्—इस अर्थ में "उदीचां वृद्धादगोत्रात्" (४।१।१५०) से फिञ् प्रत्यय होता है, इसके परे रहते प्रकृतिभाव निपातित होता है—वासिनायनिः । [ वासिन् + फिञ्, फ् का आयन्, वासिन् + आयन्, इ = वासिनायनिः । ]

भ्रूणहन्, धीवन्—इन दोनों का 'ष्यञ्' परे रहते तकार आदेश निपातित होता है । भ्रूणघ्नः भावः—भ्रौणहत्यम् । धीव्नः भावः - धैवत्यम् । [ इन शब्दों से भाव अर्थ में ष्यञ् = य प्रत्यय, आदिवृद्धि—भ्रौणहन् + य, धीवन् + य, न् का 'त्' निपातित होते हैं ।] "हनस्तोऽचिण्णलोः" इस सूत्र से न् का त् होता है वह धातुसम्बन्धी प्रत्यय परे ही होता है, इसलिए भ्रौणघ्नः, वार्त्रघ्नः वहाँ 'त्' नहीं होता है, इसलिए 'भ्रौणहत्य' शब्द में न् का त् निपातित होता है ।

सारवः—यह 'सरयू' इसके अण् परे रहते 'यू' शब्द का 'व' यह आदेश निपातित होता है । सरय्वां भवम् उदकम् इस अर्थ में सारवम् । [ सरयू = अण्, यू का 'व' आदेश—निपातित, आदिवृद्धि—सारवम् । ]

ऐक्ष्वाकः—यह स्वरसर्वनाम से एकश्रुति से पठित है । इस कारण यह शब्द आद्युदात्त और अन्तोदात्त निपातित होता है । इक्ष्वाकोः अपत्यम्—इस अर्थ में "जनपदशब्दात् क्षत्रियादञ्" (४।१।१६६) इससे अञ् प्रत्यय होता है, इसके परे रहते 'उ' का लोप निपातित होता है—ऐक्ष्वाकः । [ इस प्रकार से भी यह शब्द बन सकता है—] इक्ष्वाकुषु

**मैत्रेय—इति, मित्रयुशब्दो गृष्ट्यादिषु (४.१.१३६) पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते। मित्रयोरपत्यं मैत्रेयः।**

**अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव (४.१.१०४) न पठ्यते, तत्राञि कृते यादेरिति इयादेशेनैव सिद्धम्; एवं च युलोपार्थं निपातनं कर्त्तव्यं न भवति; यस्कादिषु (२.४.६३) च बहुषु लुगर्थः पाठो न कर्त्तव्यो भवति, मित्रयव इत्यञो 'यञञोश्च' (२.४.६४) इत्येव हि लुकः सिद्धत्वात्? नैतदस्ति; मित्रयूणां सङ्घ इत्यत्र गोत्रचरणाद् वुञं बाधित्वा मैत्रयकः सङ्घ इत्यत्र 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' (४.३.१२७) इत्यण् प्राप्नोति।**

**न्यासः**

**इयादेशापवाद इति।** केकयादिसूत्रेणेयादेशः प्राप्नोति, तदपवादो लोपो निपात्यते। 'अतो गुणे' पररूपत्वम्।

**अथ किमर्थमिति।** येनाभिप्रायेण पृष्टवाँस्तं स्वयमेवाविष्कर्त्तुमाह—**ततोऽञि कृत इत्यादि। सिद्धमिति।** रूपस्वरूपयोरभेदात्। **यलोपार्थश्चेत्यादिना** बिदादिषु पाठे यो गुणस्तं दर्शयति। **यस्कादिषु चेत्यादि।** तत्र हि तस्य बहुषु गोत्रप्रत्ययस्य लुग् यथा स्यादित्येवमर्थः पाठः। स च लुग् बिदादिषु पाठे सति 'यञञोश्च' इत्यनेनैव सिध्यतीति नार्थो यस्कादिषु पाठेन। **मैत्रेयः सङ्घ इत्यादि।** एतेन बिदादिषु पाठे यो दोषस्तं दर्शयति। बिदादिषु पाठे सति सर्वमेतदुपपद्यते यदुक्तवानसि; किन्तु मैत्रेयशब्दादञन्तात् 'सङ्घाङ्कलक्षण' इत्यादिनाण्-प्रत्ययः स्यात्, ततो मैत्रेय इत्यनिष्टं रूपं स्यात्, न तु मैत्रेयक इत्यभीष्टम्। ढञन्तात् तु 'गोत्रचरणाद्वुञ्' भवतीति मैत्रेयक इत्यभीष्टं सिध्यति।

**पदमञ्जरी**

**इयादेशापवाद इति।** केकयादिसूत्रेण प्राप्त इयादेशः।

इह मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते—१—गृष्ट्यादिषु प्रत्ययसिद्ध्यर्थम्, २—यस्कादिषु लुगर्थम्, ३—केकयादिसूत्रे इयादेशार्थम्, ४—इदं चतुर्थं युलोपार्थम्; तत्र द्विर्ग्रहणमकर्त्तुं शक्यमित्यभिप्रायेणाह—**अथ किमर्थमिति। लुगर्थः पाठो न कर्त्तव्य इति।** यञञोरित्येव सिद्धत्वात्। परिहरति—**नैतदस्तीति। अण्प्राप्नोतीति।** यदि तु 'सङ्घाङ्कलक्षणेषु' इत्यस्यानन्तरं न मैत्रेयादित्युच्येत, तदा त्रीणि ग्रहणानि, नार्थो निपातनेन। **यलोप इति।** युशब्दस्य लोप इत्यर्थः ॥ १७४ ॥

**भावबोधिनी**

जनपदेषु भवः—इस अर्थ में "कोपधादण्" (४।२।१३२) इस सूत्र से अण् होता है। [ इसमें भी 'उ' का लोप निपातन, आदिवृद्धि होती है। इस प्रकार दो शब्द रूप हैं। ]

मैत्रेय—यह 'मित्रयु' शब्द गृष्ट्यादियों में पठित है इसलिये [ "गृष्ट्यादिभ्यश्च" (४।१।१३६) सूत्र से ] ढञ् प्रत्यय करनेपर यादि (य् है आदि जिसका = यु) के 'इय' आदेश का अपवाद 'यु' शब्द का लोप निपातित होता है। मित्रयु + एय में 'यु' का लोप होता है। यह लोप 'केकयमित्रयुप्रलयानां यादेरियः' (७।३।२) से 'यु' के 'इय' आदेश का अपवाद है। मैत्र + इय, गुण—मैत्रेयः ] मित्रयु का अपत्यम्—मैत्रेयः।

प्रश्न यह है कि 'मित्रयु' शब्द को बिदादियों में ही क्यों नहीं पढ़ दिया जाता है, उसमें अञ् करने के बाद [ केकयमित्रयुप्रलयानां यादेरियः" सूत्र से ] यादि ( = यु ) के इय आदेश और गुण से ही सिद्ध हो जाता है; और इस प्रकार 'यु' के लोप के लिए निपातन नहीं करना पड़ता है, और बहुवचन के अर्थ में रूपसिद्धि के लिये यस्कादिगण में पाठ भी नहीं करना पड़ता है क्योंकि 'मित्रयवः' यह तो 'यञञोश्च' (२।४।६४) इससे अञ् का लोप कर देने से सिद्ध हो जाता है? उत्तर—ऐसा नहीं है क्योंकि 'मित्रयूणां सङ्घः' इस अर्थ में 'गोत्रचरण' (४।३।१२६) से वुञ् का बाध करके 'मैत्रयकः सङ्घः' यहाँ 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' (४।३।१२७) इससे अण् प्राप्त होता है। [ इसी के वारण के लिये 'यु' शब्द के लोप आदि निपातन की आवश्यकता है। ]

**हिरण्मयम्**—इति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः हिरण्मयः ।

**३१७६. ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ॥ १७५ ॥ (३५५६) ।**

**ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी, हिरण्यय**—इत्येतानि निपात्यन्ते छन्दसि विषये । ऋतु, वास्तु—इत्येतयोर्यति यणादेशो निपात्यते । ऋतौ भवम् ऋत्व्यम् । (पै० १९.२५.१४) वास्तौ भवं वास्त्व्यम् । वस्तुशब्दस्याणि यणादेशो निपात्यते । वस्तुनि भवो वास्त्वः । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते—'माध्वीर्नः सन्त्वोषधीः' (ऋ० १.९०.६) । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते (म० भा०) हिरण्ययम् (ऋ० १.२५.१३) ॥

॥ [1]इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ षष्ठाध्यायस्य चतुर्थः पादः ॥

**न्यासः**

**हिरण्मय इति** । 'मयड्वैतयोर्भाषायाम्' इति मयट् ॥ १७४ ॥

**ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ॥ ऋत्व्यम्, वास्त्व्यमिति** । 'भवे छन्दसि' इति यत् । **वास्त्वमिति** । तस्येदम्' इत्यण् । एवं **माध्वीत्यत्रापि** । **हिरण्यय इति** । पूर्ववन्मयट् ॥ १७५ ॥

**इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां**
**काशिकाविवरणपञ्जिकायां षष्ठाध्यायस्य चतुर्थः पादः ।**

—: ० :—

**पदमञ्जरी**

**ऋत्व्यवास्त्यवास्त्वमाध्वीहिरण्ययानि छन्दसि । मलोपो निपात्यत इति** । तस्यासिद्धत्वाद्यस्येतिलोपाभावः । एवमपि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः प्राप्नोति, 'अङ्गवृत्तेः पुनर्वृत्तौ' (व्या० प० ३८) इति वचनान्न भविष्यति । क्वचित्तु **मकारलोप** इति पठन्ति । तत्र यस्येति लोपे कृते प्रत्ययाकारस्य श्रवणम् ॥ १७५ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां षष्ठस्याध्यायस्य चतुर्थः पादः ॥

—: ० :—

**भावबोधिनी**

हिरण्मय—हिरण्य शब्द का मयट् परे रहते यादि (य) का लोप निपतित होता है, हिरण्यस्य विकारः—हिरण्मयः । [ हिरण्य + मयट्, यलोप—हिरण्मयः ] ॥ १७४ ]

ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी, हिरण्यय—ये शब्द वेदविषय में निपातित होते हैं । ऋतु तथा वस्तु—शब्दों का यण् आदेश यत् परे रहते निपातित होता है । [ ऋतु + यत्, उ का व्—ऋत्व्य, वास्तु + य, उ का व्—वास्त्व्य । ] वस्तु शब्द का अण् परे यण् आदेश निपातित होता है । [ वस्तु + अण्, अदिवृद्धि, उ का यण् व्—वास्तवः ] वस्तुनि भवः—वास्त्वः । मधु शब्द का अण् परे स्त्रीलिङ्ग में यण् आदेश निपतित होता है—माध्वीर्नः सन्त्वोषधीः । [ मधु + अण्, आदिवृद्धि, ङीप् = ई, माध्वी । ] हिरण्य शब्द से विहित मयट् के म शब्द का लोप निपातित होता है—हिरण्ययम् । [ हिरण्य + मयट्, म का लोप—हिरण्ययम् । ] ॥ १७५ ॥

॥ इस प्रकार उपाध्याय श्री वामन-विरचित काशिका वृत्ति में षष्ठ अध्याय का चतुर्थ पाद समाप्त हुआ ॥

॥ इस प्रकार जयशङ्करलाल-त्रिपाठिविरचित 'भावबोधिनी' हिन्दी-व्याख्या में
काशिकावृत्ति के षष्ठ अध्याय का चतुर्थ पाद समाप्त हुआ ॥

**कृपया विश्वनाथस्य वाग्देव्याश्च प्रसादतः ।**
**षष्ठे चतुर्थं व्याचष्ट त्रिपाठी 'जयशङ्करः' ॥**

---

१. 'उपाध्याय'—इदं विशेषणं बहुत्र नोपलभ्यते ।

**समाप्तश्च षष्ठोऽध्यायः**

— ० —

# अथ सप्तमाध्याये प्रथमः पादः

## ३१७७. युवोरनाकौ ॥ १ ॥ (१२४७)

**यु, व—इत्येतयोरुत्सृष्टविशेषणयोरनुनासिकयणोः प्रत्यययोर्ग्रहणम्, तयोः स्थाने यथासङ्ख्यम् अन, अक—इत्येतावादेशौ भवतः । योरनः, वोरकः । नन्द्यादिभ्यो (३.१.१३४) ल्युः—नन्दनः । रमणः । सायमा-**

न्यासः

**युवोरनाकौ** ॥ शास्त्रस्य लाघवार्थमिह युवू प्रत्ययावुपदिष्टौ, तयोः स्थानेऽनाकावादेशौ विधीयते। यदि हि यत्र यत्र युवोरुपदेशस्तत्र तत्रानाकावादेशौ विधीयेयाताम्, तदा शास्त्रस्य गौरवं स्यात्; तयोः प्रभूतवर्णसमुदायात्मकत्वात्। इह युवोरनुनासिकयणोः प्रत्यययोरिदं ग्रहणम्, न च तथाविधावननुबन्धकौ युवू शास्त्रे सम्भवतः, तत्र सामर्थ्याद् विशेषकराननुबन्धानुत्सृज्य सामान्येन तयोर्ग्रहणं विज्ञायते ? इत्याह—**युवु-इत्येतयोरुत्सृष्टविशेषणयोरिति**। इदं ग्रहणमिति वक्ष्यमाणेन सम्बन्धः। विशेषणं यथायोगं लकारादि, तदुत्सृष्टं = परित्यक्तं ययोस्तौ तथोक्तौ। एतेन 'युवो' इति ल्युडादीनां सामान्येन निर्देश इति दर्शयति। यद्यत्र युवोरित्यविशेषेण ग्रहणं स्यात् तदा 'यु मिश्रणे'—युतः, युतवान्, युत्वा; 'दिवु क्रीडादौ'—द्यूतः, द्यूतवान्, द्यूत्वा; 'ऊर्णाया युस्' उर्णायुरित्येवमादावप्यनाकौ स्याताम्, अतोऽस्यातिप्रसङ्गनिरासायाह—**अनुनासिकयणोरिति**। अनुनासिको यण् ययोरिति बहुव्रीहिः। सन्ति हि यणः सानुनासिकाः, निरनुनासिकाश्च, तत्र हि ययोरनुनासिको यण् तयोरिदं ग्रहणम्। अनुनासिकयणौ च यौ युवू तौ प्रत्ययावेव, नाप्रत्ययाविति दर्शयितुमाह—**प्रत्यययोरिति**। अन्ये त्वप्रत्ययनिवृत्त्यर्थं प्रत्यययोरित्युक्तमिति वर्णयन्ति, तदयुक्तम्; अनुनासिकयोरित्यनेनैवाप्रत्ययनिवृत्तेः सिद्धत्वात्। न ह्यप्रत्ययावनुनासिकयणौ युवू शास्त्रे स्तः। तस्मादनुनासिकयणौ यौ युवू तौ प्रत्ययावेव, नाप्रत्ययाविति

पदमञ्जरी

**युवोरनाकौ** ॥ शास्त्रस्य लाघवार्थं युवू प्रत्ययौ उपदिष्टौ, तयोरनेनानाकावादेशौ विधीयेते; तत्रतत्र ह्यनाकयोरेवोपदेशे शास्त्रस्य गौरवं स्यात्। इह कस्मान्न भवति—'यु मिश्रणे' (धा० पा० १०३३) युतः, युतवान् ? उदितोर्युवोरिदं ग्रहणम्। कथम् ? ल्युडादिषूकारोऽनुनासिक इत्संज्ञकः। एवमपि द्यूत्वा, द्यूतः, द्यूतवान्—अत्र प्राप्नोति, ऊठस्त्वनुदिदवकाशः ? अथार्थवतो युवुशब्दस्य ग्रहणम्, अनर्थकश्चायम्; तेन धात्वन्तस्य न भवति। भुज्युः, मृत्युः, कंयुः, शंयुः, ऊर्णायुरित्यादावुकारस्यानित्संज्ञकत्वादादेशाभावः। यदि तर्हि ल्युडादिषूकार इत्संज्ञकः—नन्दनः, कारकः, 'उगिदचाम्' इति नुम् प्राप्नोति ? उगितो झलन्तस्य नुम्, न चैतो झलन्तौ। तर्त्तर्हि झल्ग्रहणं कर्त्तव्यम् ? नेत्याह; यदेतत् 'नपुंसकस्य झलचः' इति झल्ग्रहणं तत्पुरस्तादपकृक्ष्यते, 'उगिदचां सर्वनामस्थानेऽधातोर्झलः' 'युजेरसमासे', ततः—'नपुंसकस्य', 'झलः' इत्येव, ततः 'अचः', 'नपुंसकस्य' इत्येव, तच्चावश्यं झल्ग्रहणमपकृष्टव्यम्; अन्यथोगितो लिङ्गविशिष्टस्यापि नुम् प्रसज्येत—गोमती

भावबोधिनी

नत्वा सरस्वतीं देवीं गणेशं च कपीश्वरम्।
सप्तमे प्रथमं पादं व्याचष्टे "जयशङ्करः" ॥

अब सप्तम अध्याय में प्रथम पाद प्रारम्भ होता है—

यु और वु—इन, विशेषणों से रहितों अनुनासिक यण् वाले प्रत्ययों का ग्रहण है। [ इन विशेषताओं का फल आगे कहा जायगा। ] इन 'यु' और 'वु' के स्थान पर क्रमशः 'अन' और 'अक' ये आदेश होते हैं। यु का अन और वु का अक [ आदेश ] होता है। नन्दि आदि धातुओं से ल्यु प्रत्यय होता है—नन्दनः। रमणः। [ 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४) सूत्र से कर्त्ता अर्थ में 'नन्दयति' और 'रमते' इन विग्रहों में √टुनदि = नन्द् और √रमु धातुओं से ल्यु = यु

**दिभ्यष्ट्युटयुलौ तुट् च (४.३.२३)—सायन्तनः । चिरन्तनः । ण्वुल्तृचौ—कारकः । हारकः । 'वासुदेवार्जुनाभ्यां वुन्' (४.३.९८)—वासुदेवकः । अर्जुनकः ।**

**अनुनासिकयणोरिति किम् ? 'ऊर्णाया युस्', (५.२.१२३) ऊर्णायुः । 'भुजिमृङ्भ्यां युक्त्युकौ' (उणादि० ३०८)—भुज्युः, मृत्युरिति । एवमादीनां हि यणोऽनुनासिकत्वं न प्रतिज्ञायते, 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' (व्या० प० १२१) ।**

**न्यासः**

सम्भवप्रदर्शनार्थं प्रत्यययोरित्युक्तमिति विज्ञायते । अनुनासिकयणोश्च प्रत्यययोर्ग्रहणे सत्यङ्गस्येति सम्बन्धलक्षणेयं षष्ठी विज्ञेया । अङ्गसम्बन्धिनोर्युवोरिति सम्बन्धः । स पुनर्निमित्तभावलक्षणः प्रत्ययनिमित्तो ह्यङ्गस्यात्मलाभ इत्यङ्गं निमित्ति, प्रत्ययो निमित्तम् । **योरनो वोरक इति ।** अनेन यथाक्रमं स्थान्यादेशसम्बन्धमाचष्टे । **नन्द्यादिभ्यो ल्युरिति ।** 'नन्दिग्रहि' इत्यादिना । **नन्दनः, रमण इति ।** 'टुनदि समृद्धौ', 'रमु क्रीडायाम्' । हेतुमति णिच्, तदन्ताल्ल्युः । **सायन्तन इति ।** सायमादिभ्यष्ट्युष्ट्युलाविति 'सायञ्चिरम्'इत्यादिना । जातादौ शैषिकेऽर्थे तद्धितः । **वासुदेवकः, अर्जुनक इति ।** वसुदेवस्यापस्यं वासुदेवः, वासुदेवो भक्तिरस्येति 'वासुदेवार्जुनाभ्यां वुन्' इति वुन्—वासुदेवकः, अर्जुनकः ।

ऊर्णा अस्य सन्तीत्यूर्णायुः, तत्रानुनासिकयण्त्वाभावान्न भवति । किं पुनः कारणमेवमादीनां यणोऽनुनासिकत्वं नास्ति ? इत्याह—**एवमादीनामित्यादि । प्रतिज्ञानुनासिक्याः पाणिनीया इति ।** यत्र तैरनुनासिकत्वं प्रतिज्ञायते तत्रैव भवति, नान्यत्र । न च युस्प्रभृतीनां तैस्तत् प्रतिज्ञायते, लक्ष्यानुरोधात् । तेन तेषां यणोऽनुनासिकत्वं न भवति । आदिशब्देन 'अहंशुभमोर्युस्' इत्येवमादयो गृह्यन्ते । ननु च 'अहंशुभमोर्युस्', 'कंशंभ्यां

**पदमञ्जरी**

भवती । इह तर्हि नन्दना, कारिका—'उगितश्च' इति ङीप् प्राप्नोति ? ज्ञापकात्सिद्धम्, यदयं क्वचिद्युवू षिट्टितौ करोति—'शिल्पिनि ष्वुन्', 'ट्युट्युलौ तुट् च' इति, तज्ज्ञापयति—न युवोरीकारो भवतीति । नैतदस्ति ज्ञापकम्; षित्करणं ङीषर्थम्, टित्करणमनुपसर्जनार्थम्, टितो ह्यनुपसर्जनात् ङीप् भवति, उगितः पुनरविशेषेण । तथा शातनपातनशब्दौ ल्युडन्तौ गौरादिषु पठितौ, तत्र शातनितरा, पातनितरा, 'नद्याः शेषस्यान्यतरस्याम्', 'उगितश्च' इत्युगिल्लक्षणो ह्रस्वविकल्पः प्राप्नोति । ननु चोगित इत्येवमुगित्संज्ञाशब्देनेन या नदी विहिता तस्यास्तत्र ग्रहणम् ? नेत्याह; इह हि दोषः स्यात्—भोगवतितरा, गौरिमतितरा शार्ङ्गरवादिङीनन्तावेतौ, तत्र ह्रस्वविकल्पो न स्यात्, इष्यते चात्रापि ह्रस्वविकल्पो **भाष्यकारेण ।** तस्मान्नैवं शक्यम्—उदितोर्युवोर्ग्रहणम् इति । न चेदेवं युतः, युत्वा, भुज्युः, शंयुरित्यत्रापि प्राप्नोति ? तत्राह—**अनु-**

**भावबोधिनी**

प्रत्यय होता है, इस यु का अन होने पर णत्वादि करने पर रूप बनते हैं । ] सायम् आदि शब्दों से ट्यु और ट्युल् प्रत्यय होते हैं तथा तुट् आगम होता है—सायन्तनः । चिरन्तनः [ "सायंचिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" ४।३।२३ सूत्र से सायम् तथा चिरम् शब्दों से ट्यु या ट्युल् प्रत्यय और तुट् आगम होता है, यु का अन सायम् त् अन, चिरम् त् अन, अनुस्वार परसवर्ण होने पर रूप बनते हैं । ] 'ण्वुल् और तृच् कर्ता अर्थ में होते हैं' (३।१।१३३) से ण्वुल् होता है—कारकः । हारकः । [ करोति तथा हरति—इन विग्रहों में कर्ता अर्थ में "ण्वुल् तृचौ" सूत्र से ण्वुल् = वु प्रत्यय √कृ तथा √हृ धातुओं से करने पर वु का अक, ऋ की वृद्धि और रपर करने पर कार् अक, हार् अक रूप बनते हैं । ] 'वासुदेव तथा अर्जुन शब्दों से वुन् होता है' (४।३।९८)—वासुदेवकः । अर्जुनकः । [ वासुदेवः = श्रीकृष्णः भक्तिः अस्य, अर्जुनः भक्तिः अस्य—इन विग्रहों में वुन् प्रत्यय होता है । वु का अक होने पर रूप बनते हैं । ]

अनुनासिक यणों (यु वु) का—इस कथन का क्या प्रयोजन है ? 'ऊर्णायाः युस्' (५।२।१२३) ऊर्णायुः । [ऊर्णा शब्द से मत्वर्थ में युस् प्रत्यय होता है । ऊर्णा अस्य अस्ति इस विग्रह में युस् प्रत्यय होता है । यह 'यु' अनुनासिक नहीं है ।

इह 'युवोः' इति निर्देशाद् द्वन्द्वैकवद्भावपक्षे 'अनित्यमागमशासनम्' (व्या० प० ९९) इति नुम् न क्रियते।

**न्यासः**

वभयुस्तितुतयसः' इत्यत्र सित्करणादेव न भविष्यति, सित्करणं हि पदसंज्ञार्थम्, पदसंज्ञा चानुस्वारार्था—तस्यां सत्याम् 'मोऽनुस्वारः' इत्यनुस्वारो यथा स्यात्। यदि चात्रानादेशः स्यात् तदा सित्करणमनर्थकं स्यात्, न ह्यनादेशे कृतेऽनुस्वारो भवति; तद्विधौ 'हलि सर्वेषाम्' इत्यतो हलीत्यनुवृत्तेः। आदेशे कृते न भवति; हलादित्वाभावात् ? नैतदस्ति; वचनसामर्थ्यादजादावप्यनुस्वारः स्यात्। सित्करणस्यान्यदपि प्रयोजनम्—पदसंज्ञा। तत् प्रयोजनम्—भसंज्ञाबाधः। भसंज्ञायामव्ययानां भमात्रे टिलोपः स्यात्। अवग्रहार्थं वा सित्करणं स्यात्, कुतस्तस्यानर्थक्यम् ?

इह युवोरिति निर्देशे समाहारे वा द्वन्द्व आश्रीयते, इतरेतरयोगे वा; तत्र पूर्वस्मिन् पक्षे षष्ठ्येकवचने कृते 'स नपुंसकम्' इति नपुंसकत्वात् 'इकोऽचि विभक्तौ' इति नुमा भवितव्यम्, ततश्च 'युवुनः' इति निर्देशः स्यात्। इतरस्मिंस्तु पक्ष ओसि परतो यणादेशे कृते युव्वोरिति द्वितीयवकारश्रवणमापद्येत ? इत्येतच्चोद्यनिरासायाह—इह **युवोरिति निर्देश इत्यादि। अनित्यमागमशासनमिति।** आगमानां शासनम्=विधानम्, तदनित्यमिति; क्वचित् तदभावात्। अथवा—आगमाः शिष्यन्ते विधीयन्ते येन शास्त्रेण तदागमशासनं शास्त्रम्,

**पदमञ्जरी**

**नासिकयणोरिति।** सन्ति हि यणः सानुनासिकाः, निरनुनासिकाश्च, तत्र येषामादेश इष्यते तेषु यकारवकारावनुनासिकौ पठितव्यौ, तेन न क्वाप्यनिष्टप्रसङ्गः। **प्रत्यययोरिति।** वस्तुकथनमेतत्, न त्वप्रत्ययनिवृत्त्यर्थम्, तथाविधस्यानुनासिकस्य यणोऽसम्भवात्॥

**मृत्युरिति।** 'भुजिमृङ्भ्यां युक्त्युकौ' (द० उ० १-१३५) इति सूत्रे सहनिर्दिष्टत्वादिदमुदाहृतम्, शक्यते ह्यत्र वक्तुम्—अङ्गस्य यौ युवू, कौ चाङ्गस्य युवू, ? ययोरङ्गमित्येतद्भवति, कयोश्चैतद्भवति ? प्रत्यययोः, न चैष प्रत्यय इति। आनर्थक्याच्च ट्युट्युलोस्त्वनादेशे कृते पश्चात्तुडित्यर्थवत्त्वं प्रत्ययत्वं च। किमुच्यतेऽनुनासिकत्वं न प्रतिज्ञायत इति, न पुनर्न पठ्यते ? इत्यत आह—**प्रतिज्ञानुनासिक्या इति।** प्रतिज्ञयानुनासिक्यं येषां ते तथोक्ताः। सर्वत्र पाठाभावात्सतोऽपि वा पाठस्य सङ्कीर्णत्वात्प्रतिज्ञासमधिगम्यमेवानुनासिकत्वमित्यर्थः।

**भावबोधिनी**

अतः इसका 'अन' आदेश नहीं होता है।] "भुजि और मृङ् धातुओं से युक् और त्युक् प्रत्यय होते हैं।' ( उणादि ३०८ ) भुज्युः, मृत्युः। [ भुज् + युक् = यु, मृ + त्युक् = त्यु। इनका भी अन आदेश नहीं होता है।] कारण यह है कि इस प्रकार के शब्दों के यणों का अनुनासिकत्व प्रतिज्ञात नहीं है। "पाणिनीय शब्द प्रतिज्ञा से अनुनासिकत्ववाले होते हैं।' [ भाव यह है कि आचार्य पाणिनि ने जिस शब्द की अनुनासिकत्व प्रतिज्ञा की है, वही शिष्यपरम्परा से अनुनासिक माना जाता है। प्रस्तुत स्थलों में 'यु' में यण् की अनुनासिकता प्रतिज्ञाविषय नहीं है। अतः इसका अन आदेश नहीं होता है।]

[ 'युवोः' यहाँ यु तथा वु का द्वन्द्व समास समाहार में या इतरेतरयोग में हैं। परन्तु यदि समाहारद्वन्द्व माना जायगा तो नपुंसक होने से "इकोऽचि विभक्तौ" इस सूत्र से अजादि विभक्ति परे नुम् आगम होना चाहिये और 'युवुनः अनाकौ' ऐसा स्वरूप होगा। यदि इतरेतरयोगद्वन्द्व है तब तो द्विवचन में ओस् प्रत्यय परे रहते यु वु + ओस् में उ का यण् व् हो जावे पर 'युव्वोः' ऐसा स्वरूप होना चाहिए। तब "युवोः" यह निर्देश कैसे सम्भव है ? इसका समाधान दे रहे हैं— ]

इस सूत्र में 'युवोः' इस निर्देश के कारण द्वन्द्व एकवद्भावपक्ष में "आगम शासन अनित्य होता है" इस नियम से नुम् आगम नहीं किया जाता है। [ इसलिये 'युवु + ङस् = अस् में 'घेर्ङिति' (७।३।१११) सूत्र से उ का गुण ओ और "ङसिङसोश्च" ६।१।११० से अ का पूर्वरूप करने पर युवोस्, रुत्व—'युवोरनाकौ' बनता है।]

**इह तु कतरत्पश्येति स्थानिवद्भावादमि पूर्वत्वेनापि सिद्धयति। एवं तर्हि तकारादेश एव कस्मान्न विधीयते? हे कतरदिति सम्बुद्धेर्लोपो मा भूत्।**

**अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु।**

**न्यासः**

किं पुनः कारणम्—प्रथमैकवचनस्यैव डित्करणस्य दीर्घाभावः प्रयोजनमुच्यते, न तु द्वितीयैकवचनस्य? इत्यत आह—**इह त्वित्यादि**। अमो हि स्थाने य आदेशस्तस्य 'स्थानिवदादेशेऽनल्विधौ' इति स्थानिवद्भावादमि पूर्वत्वेनापि सिध्यति—कतरदित्येतत्, तस्मान्न तत्र डित्करणस्य दीर्घत्वाभावः प्रयोजनमिति नोच्यते। **तकारादेश एव कस्मान्न क्रियत इति**। यद्यत्र दीर्घत्वं नेष्यते तदा तकारादेश एव कर्त्तव्यः। तत्राप्ययमर्थः—दीर्घनिवृत्यर्थं डित्करणं न कर्त्तव्यमिति। **हे कतरदित्यादि**। यदि तकारादेश एव क्रियते तदा तस्य स्थानिवद्भावेन सम्बुद्धिभावोऽस्तीति 'एङ् ह्रस्वात् सम्बुद्धेः' इति लोपः प्राप्नोति, अतः स मा भूदित्येवमर्थं तकारादेशो न क्रियते।

**अपृक्तश्चेदित्यादि**। 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तम्' इत्यतश्चेदपृक्तग्रहणं सम्बुद्धिलोपेऽनुवर्त्तते

**पदमञ्जरी**

ननु च सम्बुद्धिलोपे 'हल्ङ्याब्भ्यः' इत्यतोऽपृक्तग्रहणमनुवर्तयिष्यते, इह च 'आदेः परस्य' इत्यमोऽकारस्य दकारे कृते मकारस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नायमपृक्तः, एवमदादेशो नापृक्तः, यद्यपृक्तग्रहणमनुवर्त्तते, हे काण्डेत्यमोऽपि न स्यादिति दोषः। तदिदमुक्तम्—**अपृक्तश्चेदमो दोष इति**। सम्बुद्धिलोपे अपृक्तश्चेल्लुप्यते अमो न स्यादिति दोषः। अथ निवृत्तमपृक्तग्रहणम्, ततो निवृत्ते डतरादिषु दोषः—हे कतरदित्यादौ लोपः स्यादिति। अतो डित्वाददड्डादेशविधानात्तस्य च डित्वान्न सम्बुद्धिलोपः, नापि पूर्वसवर्णदीर्घत्वमित्यर्थः।

**भावबोधिनी**

पाँच से परे—इसका क्या फल है? नेमं पश्य। [ यह पाँच के अन्तर्गत नहीं है। अतः अद्ड् न होकर 'अतोऽम्' से 'अम्' आदेश ही होता है। ]

डित्करण किस लिए है? कतरत् तिष्ठति—यह पूर्व सवर्णदीर्घ न होने लग जाय। [ यदि अद्ड् न करके केवल 'अद्' इतना ही आदेश होता तो टिलोप नहीं होता और "प्रथमयोः पूर्वसवर्णः" सूत्र से दीर्घ होने लगता, 'कतरात् तिष्ठति' ऐसा अनिष्टरूप बनने लगता। डित् करने से टिलोप होने पर अतिप्रसङ्ग नहीं होता है।]

'कतरत् पश्य' यहाँ पर तो स्थानिवद्भाव से अम् परे [ मानकर 'अमि पूर्वः' सूत्र से ] पूर्वरूप से भी सिद्ध हो सकता है। [ इसलिये प्रथमा एकवचन का 'कतरत् तिष्ठति' यही प्रत्युदाहरण दिया गया। ] यदि ऐसा है तब तो केवल तकार आदेश ही क्यों नहीं कर दिया जाता? 'हे कतरत्' इसमें [ "एङ्ह्रस्वात् सम्बुद्धौ" सूत्र से ] सम्बुद्धि का लोप न होने लगे। [ क्योंकि 'त्' आदेश में भी स्थानिवद्भाव से सम्बुद्धित्व अतिदिष्ट मानकर उसका लोप हो सकता है। इसीलिये 'अद्ड्' यही किया गया। ] [ यदि 'एङ् ह्रस्वात् सम्बुद्धेः' सूत्र में पूर्वसूत्र 'हल्ङ्यादि' से अपृक्त = एकाल् प्रत्यय की अनुवृत्ति कर ली जाय। और 'अम्' में 'आदेः परस्य' सूत्र के अनुसार अ का द् कर दिया जाय, म् का संयोगान्तलोप कर दिया जाय। इस लोप के असिद्ध हो जाने से अपृक्त नहीं रहता, लोप नहीं होगा। परन्तु ऐसा मानने पर 'हे काण्ड' यहाँ अम् का भी लुक् नहीं हो सकेगा। क्योंकि यहाँ भी अपृक्त नहीं मिल सकेगा। अतः अपृक्त की अनुवृत्ति नहीं माननी चाहिए।

यदि अपृक्त की अनुवृत्ति नहीं मानी जायगी तब तो 'हे कतरत्' आदि में लोप होने लगेगा। इन्हीं दोषों के कारण 'अद्ड्' यह डित् आदेश करके टिलोप किया गया है जिससे ह्रस्व से परे न होने से लुक् नहीं होता है और न पूर्वसवर्णदीर्घ का ही प्रसङ्ग आता है—यही भाव श्लोक से व्यक्त किया गया है। ]

अदड्डित्वाड्डतरादीनां न लोपो नापि दीर्घता ॥ [ ? ]

### ३२०२. नेतराच्छन्दसि ॥ २६ ॥ (३५५६)

इतरशब्दादुत्तरयोः स्वमोश्छन्दसि विषये अद्डादेशो न भवति । 'मृतमितरमितरमाण्डमजायत (मै० १.६.१२) । वार्त्रघ्नमितरम् । छन्दसीति किम् ? इतरत्काष्ठम् । इतरत्कुण्डचम् ।

'अतोऽम्' (७.१.२४)—इत्यस्मादनन्तरमितराच्छन्दसीति वक्तव्यम् ? 'नेतराच्छन्दसि' इति वचनं योगविभागार्थम् ।

❀ [1]एकतराद्धि सर्वत्र छन्दसि भाषायां प्रतिषेध इष्यते ❀ (म० भा० ७.१.२६ वा० १) । एकतरं तिष्ठति । एकतरं पश्येति ॥

न्यासः

तदामो दोषः—हे कुण्डेत्यत्र । निवृत्तेऽपृक्ताधिकारे डतरादिषु दोषः—हे कतरदिति । तस्माड् डित्करणादेवाकारलोपे कृते ह्रस्वाभावान्न लोपः, न च दीर्घतेति ॥ २५ ॥

नेतराच्छन्दसि । पूर्वेणाद्डादेशस्य प्रसक्तस्यायं प्रतिषेधः ।

अथ 'अतोऽम्' इत्यस्यानन्तरम् 'इतराच्छन्दसि' इति कस्मान्नोक्तम्, एवं हि नेति प्रतिषेधः कर्त्तव्यो न भवति, अमादेशोऽद्डादेशस्यापवादो भविष्यति ? इत्याह—अतोऽमित्यस्मादनन्तरमित्यादि । योगविभागार्थमिति । नेत्येकयोगविभागो यथा स्यादिति । किमर्थं पुनर्योगविभाग इष्यते ? इत्याह—एकतराद्धीत्यादि । एकशब्दाद्धि सर्वत्र प्रतिषेध इष्यते, स च नेति योगविभागाल्लभ्यते । तस्माद् योगविभाग इष्यते । स च यथान्यासे सिध्यति, नान्यथेति 'नेतराच्छन्दसि' इत्युच्यते ॥ २६ ॥

पदमञ्जरी

यदि पुनः पूर्वसूत्रविहितममनुवर्त्य तस्यैवादादेशो विधीयते शक्यं डित्वमकर्त्तुम् ॥ २५ ॥

नेतराच्छन्दसि । अतोऽमित्यस्यानन्तरमेवेति । अमादेश एवाद्डादेशस्यापवादो भविष्यति, ततश्च 'न' इति वक्तव्यं न भवतीति भावः ॥ २६ ॥

भावबोधिनी

यदि अपृक्त है तो अम् का दोष होता है यदि अपृक्त नहीं है तो डतर आदि में दोष है । इसलिये अद्ड् के डित् होने के कारण न लोप होता है और न पूर्वसवर्णदीर्घ होता है ॥ २५ ॥

वेदविषय में 'इतर' शब्द से उत्तरवर्त्ती सु और अम् का अद्ड् आदेश नहीं होता है । उदा० 'मृतमितरमितर० माण्डमवापद्यत ।' "वार्त्रघ्नमितरम् ।" [ इनमें 'इतर' से सु तथा अम् का अद्ड् न होकर 'अतोऽम्' से अम् और पूर्वरूप ही हुआ है । ]

वेद में—इसका क्या फल है ? इतरत् काष्ठम् । इतरत् कुड्यम् । [ लोक में अद्ड् आदेश होता ही है । ]

"अतोऽम्" इसके बाद "इतर शब्द से वेद में होता है" ऐसा कहना चाहिए था ? 'नेतराच्छन्दसि' यह वचन योगविभाग के लिए है । [ इस कारण 'न' यह अलग सूत्र बन जाता है । ]

❀ एकतर शब्द से सर्वत्र = भाषा में और वेद में प्रतिषेध इष्ट है ।❀ [ अर्थात् सु, अम् का अद्ड् नहीं होता है । ] उदा० एकतरं तिष्ठति । एकतरं पश्य । [ इसमें डतर होने पर भी प्रतिषेध के कारण अद्ड् न होकर अम् ही आदेश किया जाता है । ] ॥ २६ ॥

---

१. भाष्ये तु 'इतराच्छन्दसि प्रतिषेध एकतरात् सर्वत्र ।' इति वचनं दृश्यते ।

## ३२०३. युष्मदस्मद्भ्यां ङसोऽश् ॥ २७ ॥ (३९९)

**युष्मदस्मद्—इत्येताभ्यामुत्तरस्य ङसः 'अश्'—इत्ययमादेशो भवति । तव स्वम् । मम स्वम् ।**
**शित्करणं सर्वादेशार्थम्; अन्यथा ह्यादेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात्, ततश्च 'योऽचि'**

**न्यासः**

**युष्मदस्मद्भ्यां ङसोऽश् ।** यदि 'शेषे लोपः' इत्यन्तलोपः, तदा स्यभावे प्राप्त इदं वचनम् । अथ टिलोपः, तदा विभक्तेः श्रवणप्राप्त आदेशार्थं वचनम् । **तव स्वम्, मम स्वमिति ।** 'तवममौ ङसि' इति मपर्यन्तयोर्युष्मदस्मदोस्तव-ममादेशौ भवतः । 'शेषे लोपः' इति दकारलोपे कृते 'अतो गुणे' पररूपत्वम् । **शित्करणं सर्वादेशार्थमिति ।** असति शित्करणे 'आदेः परस्य' इत्याकारस्यादेशोऽकारः स्यात् । ननु चाकारस्याकारवचने प्रयोजनं नास्तीत्यन्तरेणापि शित्करणं सर्वादेशो भविष्यति, अन्तस्य वा । तत्र द्वयोरकारयोरतो गुणे पररूपत्वेनेष्टं सिध्यति ? अत आह—**अन्यथा हीत्यादि ।** अन्यथा यदि शित्करणं न स्यात् तदाऽऽदेश इति योऽयं व्यपदेशस्तस्य या प्रक्लृप्तिः = निष्पत्तिस्तदर्थमादेरेव स्यात्; 'आदेः परस्य' इति वचनात् । स्यादेतत्—यद्यादेशव्यपदेशप्रक्लृप्तितः कश्चिदर्थः सम्पद्यते तदा स्यात् तदर्थमादेरेव वचनम्, न च ततः कश्चिदर्थः सम्पद्यते तस्मादयुक्तमेवेति ? इत्यत आह—**ततश्चेत्यादि ।** चशब्दो हेतौ । लिङ् सम्भावनायाम् । तत आदेशव्यपदेशप्रक्लृप्तेः

**पदमञ्जरी**

**युष्मदस्मद्भ्यां ङसोऽश् । शित्करणं सर्वादेशार्थमिति ।** अन्यथा 'आदेः परस्य' इत्यादेः स्यात् । ननु चाकारस्याकारवचने प्रयोजनाभावादाद्यनुसंहारे बाधिते **'अलोन्त्यस्य'** इति मकारस्याकारे सति 'अतो गुणे' इति पररूपेणैव सिद्धम् ? अत आह—**अन्यथा हीति ।** आदेश इति व्यपदेश आदेशव्यपदेशः, यस्यादेशस्य प्रयोजनं नास्तीति मन्यसे तस्यैव स्यादित्येवशब्दार्थः । किं पुनरादेशव्यपदेशेन प्रयोजनं यत आदेरेव स्यात् ? तत्राह—**ततश्चेति ।** ह्यर्थे चः पठितः । ततो ह्यादेशव्यपदेशाद् 'योऽचि' इति यत्वं न स्यात्, यत्वाभावः प्रयोजनमादेशव्यपदेशस्य स्यादित्यर्थः । 'योऽचि' इत्यत्र 'युष्मदस्मदोरनादेशे' इति वर्त्तते । ननु चानादेशो या विभक्तिरित्येवं तत्र विज्ञास्यते, न हि तदादिविधिरस्ति यत अनादेशादाविति विज्ञायेत, ततश्च सत्यप्यादेशादित्वे विभक्तेरनादेशत्वात्स्यादेव यत्वमिति व्यर्थमेवाकारस्याकारविधानम् ? एवं मन्यते—'सर्वे सर्वपदादेशाः' इति न्यायेनादि-

**भावबोधिनी**

युष्मद् और अस्मद्—इनसे उत्तरवर्त्ती ङस् का 'अश्' यह आदेश होता है । उदा० तव स्वम् । मम स्वम् ।
[ युष्मद् + ङस् अस्मद् + ङस्, ङस् = अश् का अश् = अ आदेश, "तवममौ ङसि" (७।२।९६) से क्रमशः 'तव' और 'मम' आदेश 'द्' पर्यन्त भाग के होते हैं । 'शेषे लोपः' (७।२।९०) सूत्र से 'द्' का लोप, अ का पररूप होने पर तव, मम—बनते हैं । ]

अश् के 'श्' की इत्संज्ञा करना सम्पूर्ण ङस् = अस् के स्थान पर 'अश्' आदेश करने के लिये है । अन्यथा (यदि शित् नहीं किया जाता तो) आदेश के व्यपदेश (व्यवहार) की प्रक्लृप्ति =निष्पन्नता के लिए आदि के स्थान पर ही यह आदेश होने लगता, इसके कारण 'योऽचि' (७।२।८९) यह नहीं होता ।

**विमर्श—**भाव यह है कि प्रस्तुत सूत्र से अश् के शित् करने का क्या प्रयोजन है केवल 'अ' ही क्यों नहीं किया गया ? यदि ङस् = अस् का शित् आदेश नहीं होगा तो 'अनेकाल् शित् सर्वस्य' न लग कर "आदेः परस्य" सूत्र से केवल आदि अ के स्थान पर 'अ' आदेश होने लगेगा । परन्तु 'अ' का 'अ' आदेश करने का कोई प्रयोजन न होने के कारण 'अलोऽन्त्यस्य' सूत्र से अन्त्य 'स्' का होगा—तव + अ अ में दो बार पररूप होकर रूप बन जायगा । परन्तु यह गौरवग्रस्त है । शित् करके सम्पूर्ण के स्थान पर आदेश करने में कोई गौरव नहीं है । अकार का अकार आदेश करना व्यर्थ नहीं है क्योंकि आदेश व्यपदेश हो जाने से 'योऽचि' (७।२।२९) सूत्र से यत्व नहीं होता है । यहाँ केवल 'अ' का 'अ' आदेश

(७.२.८९) इत्येतन्न स्यात् ॥

**३२९४. ङे प्रथमयोरम् ॥ २८ ॥ (३८२)**

**'ङे' इत्यविभक्तिकोऽयं निर्देशः। 'ङे' इत्येतस्य प्रथमयोश्च विभक्त्योः=प्रथमाद्वितीययोर्युष्मदस्मद्भ्यामुत्तरयोः 'अम्' इत्ययमादेशो भवति। तुभ्यं दीयते। मह्यं दीयते।**

**न्यासः**

'योऽचि' इति कार्यं न स्यात्। एतद्धि यत्र विभक्तावादेशो नास्ति तत्र विधीयते; 'अनादेशे' इत्यधिकारात्। तस्मात् प्रयोजनवत्यादेशव्यपदेशप्रक्लृप्तिरिति तदर्थमादेरेव स्यात्, ततश्चेष्टं रूपं न सिध्येत्। तस्मात् सर्वादेशार्थः शकारः कर्त्तव्यः ॥ २७ ॥

**ङे प्रथमयोरम्**। **ङे इत्यविभक्तिकोऽयं निर्देशः**। 'सुपां सुलुक्' इति षष्ठ्या लुप्तत्वात्। प्रथमयोरिति षष्ठीद्विवचनान्तम्—प्रथमा च प्रथमा च ते प्रथमे, तयोः प्रथमयोः। षष्ठीनिर्देशस्योभयत्र तुल्यत्वात् प्रथमयोः प्रत्यययोः स्वीकारयोर्ग्रहणमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**विभक्त्योरिति**। एतदेव स्पष्टीकर्तुमाह—**प्रथमाद्वितीययोरिति**। कथं पुनर्द्वितीया प्रथमाशब्देनोच्यते ? उपदेशे प्रथमासामीप्यात्। भवति हि सामीप्यात् ताच्छब्दयम्, यथा—गङ्गायां घोष इति। अथ विभक्त्योरिदं ग्रहणं न प्रत्यययोः—इति कुतोऽयं निश्चयः ? लिङ्गात्। तत् पुनर्लिङ्गम्—'द्वितीयायाञ्च' इत्यात्त्वविधानम्। तद्ध्यादेशार्थमुच्यते; अनादेशे हि 'युष्मदस्मदोरनादेशे' इत्यनेनैव सिद्धत्वात्। यदि च विभक्त्योरिदं ग्रहणम्, न च प्रत्यययोः, एवमस्यादेशार्थतोपपद्यते, नान्यथा। ननु च 'योऽचि' इति यत्वबाधनार्थम् 'द्वितीयायाञ्च' इत्याद्वचनं स्यात् ? नैतदस्ति; तदर्थे द्विवचने यकारमेव विशेषणं विदध्याद्—'योऽच्यद्वितीयाम्' इति, 'योऽच्यनचि' इति वा ब्रूयात्। अतो द्वितीयायामात्त्वविधानं ज्ञापकमेवैतद् विभक्तिग्रहणस्य। **तुभ्यम्, मह्यमिति**। मपर्यन्तयोर्युष्मदस्मदोस्तुभ्यमह्यावादेशौ। 'शेषे लोपः', 'अमि पूर्वः'।

**पदमञ्जरी**

विकारद्वारेण विभक्तेरेवादेशो विधीयत इति विभक्तिरेवादेश इति। 'सर्वे सर्वपदादेशाः' इत्यत्र न पदशब्देन सुप्तिङन्तमुच्यते, किं तर्हि ? पद्यते गम्यतेऽनेनार्थ इति पदम्; ततश्च पचत्वित्यत्र यथा तिशब्दस्य तुशब्दो भवति, तद्वदत्रापि ङसोऽशेव विधीयत इति भवत्येवादेशत्वं विभक्तेः॥ २७ ॥

**ङे प्रथमयोरम्**। **ङे इत्यविभक्तिकोऽयं निर्देश इति**। 'प्रथमयोरिति प्रथमाद्वितीययोर्ग्रहणम्' इति वक्ष्यति, तदत्र समासे सति बहुवचनप्रसङ्ग इति भावः। प्राधान्यलक्षणस्य प्रथमार्थस्येहासम्भवात्सन्निवेशविशेषापेक्षया प्रथमस्य ग्रहणमिति तावन्निश्चितम्। तिङ्प्रथमयोस्तु युष्मदस्मद्भ्यामसम्भव एव, तत्र प्रत्यययोर्ग्रहणम्, विभक्त्योर्वेति संशयः। यदि स्त्रीलिङ्गनिर्देशस्ततो विभक्त्योर्ग्रहणम्, पुंल्लिङ्गनिर्देशे तु प्रत्यययोः। तत्र निर्णयमाह—**प्रथमयोश्च विभक्त्योरिति**। एतदेव स्पष्टयति—**प्रथमाद्वितीययोरिति**। कथं पुनः प्रथमाशब्देन द्वितीयोच्यते, साहचर्यात्। ननु सकृत्प्रयुक्तः शब्दो मुख्यवृत्तिर्वा भवतु, जघन्यवृत्तिर्वा; न पुनरुभयवृत्तिः ? सत्यम्;

**भावबोधिनी**

है पूरे 'अस्' का नहीं, अतः आदेश व्यपदेश नहीं होगा—ऐसी शंका नहीं करनी चाहिए क्योंकि "सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपजायते।" ऐसा भाष्यकार का मत है। अतः शित् अश् आदेश सम्पूर्ण ङस् के स्थान पर करने में ही लाघव और औचित्य है ॥ २७ ॥

'ङे' यह विना विभक्तिवाला निर्देश है। 'ङे' इसका और प्रथम = पहलेवाली दो विभक्तियों = प्रथमा तथा द्वितीया विभक्तियाँ जो युष्मद् तथा अस्मद् से उत्तरवर्ती हैं उनका 'अम्' यह आदेश होता है। उदा० तुभ्यं दीयते। मह्यं दीयते। [ युष्मद् + ङे, अस्मद् + ङे, ङे का अम् आदेश, "तुभ्यमह्यौ ङयि" (७।२।९५) सूत्र से मपर्यन्त का 'तुभ्य' तथा 'मह्य' आदेश, तुभ्य अद् + अम्, मह्य अद् + अम् 'अतो गुणे' से पररूप, "शेषे लोपः" सूत्र से अन्त्य 'द्' का लोप, "अमि पूर्वः" सूत्र से पूर्वरूप—तुभ्यम्, मह्यम्। ]

**प्रथमयोः—त्वम्, अहम् । युवाम्, आवाम् । यूयम्, वयम् । त्वाम्, माम् । युवाम्, आवाम् ॥**

## ३२०५. शसो न ॥ २९ ॥ (३९१)

**युष्मदस्मद्भ्यामुत्तरस्य शसो नकारादेशो भवति । युष्मान् ब्राह्मणान् । अस्मान् ब्राह्मणान् । युष्मान् ब्राह्मणीः । अस्मान् ब्राह्मणीः । युष्मान् कुलानि । अस्मान्कुलानि ।**

**न्यासः**

**त्वम्, अहमिति ।** 'त्वाहौ सौ' । **युवाम्, आवामिति ।** 'युवावौ द्विवचने' इति युवावौ, 'प्रथमायाश्च' इत्यादिनाऽत्वम् । **यूयम्, वयमिति ।** 'यूयवयौ जसि' । **त्वाम्, मामिति ।** 'त्वमावेकवचने', 'द्वितीयायाञ्च' इत्यात्वम् । अथ किमर्थममादेश उच्यते, न मकार एवोच्येत ? स चैकाल्त्वादादेर्भविष्यति, तत्र परस्य संयोगान्तलोपेन सिद्धम्, 'शेषे लोपः' इति टिलोपान्न सिध्यतीति चेत् ? नैष दोषः; शेषेलोपो यद्यपि टिलोपः स्यात्, तथापि 'त्वाहौ सौ' इत्येवमादीनामकारान्तत्वात् सिद्धयत्येव; ते चावश्यकमकारान्ता विधेयाः, अन्तोदात्तत्वं यथा स्यात् । न च मकारादेशे 'सुपि च' इति दीर्घत्वं प्राप्नोति; 'अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य' इति वचनात् । एवं तर्हि वैचित्र्यार्थममादेशविधानम् । अथ वा—मकार एवादेशः, अकारस्तूच्चारणार्थः; न ह्यन्यथास्मिन्निर्देश आदावन्ते वाऽकारमकृत्वा मकार उच्चारयितुं शक्यते 'ङेसुटोः' इति वक्तव्ये 'ङेप्रथमयोः' इति वचनं वैचित्र्यार्थम् ॥ २८ ॥

**शसो न ॥** पूर्वेणामादेशे प्राप्ते शसो नो विधीयते । **युष्मान् ब्राह्मणान् । अस्मान् ब्राह्मणानिति ।** 'आदेः परस्य' इत्यकारस्य नकारः, संयोगान्तलोपः, पूर्ववदात्त्वम् । ननु चैतदुदाहरणद्वयमादेशे कृत आत्त्वे च

**पदमञ्जरी**

प्रथमाद्वितीयासमुदाये जघन्यवृत्तिरेवायमुद्भूतावयवभेदश्च समुदाय इति द्विवचनम् । कथं पुनर्ज्ञायते—विभक्त्योर्ग्रहणमिति ? 'द्वितीयायां च' इत्यात्वविधानात् । तद्ध्यादेशार्थमुच्यते, अनादेशे 'युष्मदस्मदोरनादेशे' इत्येव सिद्धत्वात् । यदि चात्र विभक्त्योर्ग्रहणं स्यात्, एवमस्यादेशार्थतोपपद्यते । ननु च 'योऽचि' इति यत्वबाधनार्थं तत्स्यात्, यद्येतावत्प्रयोजनं स्यात्, यत्वमेवायं विशिष्य ब्रूयात्—योऽच्यापीति । आबिति प्रत्याहारः 'अनाप्यकः' इतिवत् । यतस्तु द्वितीयायामात्वं शास्ति, ततो ज्ञायते—विभक्त्योरिह ग्रहणमिति ॥ २८ ॥

**शसो न ।** नेत्यविभक्तिको निर्देशः, तथा च पूर्वसूत्रेण प्राप्तस्यायममः प्रतिषेध इति **भाष्ये** शङ्कितम्—**कः पुनः** प्रतिषेधे सति दोषः, यावताऽमि प्रतिषिद्धे 'योऽचि' इति यत्वे प्राप्ते 'द्वितीयायां च' इत्यात्वे कृते

**भावबोधिनी**

प्रथमा और द्वितीया के [ अम् आदेश के ] उदा० त्वम् अहम् । [ युष्मद् + सु, अस्मद् + सु, "त्वाहौ सौ" (७।२।९४) से क्रमशः 'त्व' और 'अह' आदेश, सु का अम् आदेश—त्व अद् + अम्, अहअद् + अम्, 'अतो गुणे' से अ का पररूप, "शेषे लोपः" सूत्र से 'द्' का लोप—त्व + अम्, अह + अम्, 'अमि पूर्वः' से पूर्वरूप ] । युवाम् आवाम् । [युष्मद् + औ, अस्मद् + औ, "युवावौ द्विवचने" (७।२।९२) सूत्र से मपर्यन्त के 'युव' 'आव' आदेश "प्रथमायाश्च द्विवचने भाषायाम्" (७।२।८८) से अन्त्य = द् का आत्व, 'औ' का 'अम्' आदेश—युवाम्, आवाम् ।] यूयम्, वयम् । [ युष्मद् + जस्, अस्मद् + जस्, "यूयवयौ" (७।२।९३) से यूय और वय आदेश, जस् का अम् आदेश, पूर्वरूप यूयम्, वयम् । ] त्वाम्, माम् । [ युष्मद् + अम्, अस्मद् + अम्, "त्वमावेकवचने" (७।२।९७) सूत्र से मपर्यन्त का 'त्व' और 'मा' आदेश, "द्वितीयायाञ्च" (७।२।८७) सूत्र से आकार अन्तादेश—त्वाम्, माम् । द्विवचन में ] युवाम् आवाम् ॥ २८ ॥

युष्मद् और अस्मद् से उत्तरवर्त्ती शस् का नकार [ अन्त्य ] आदेश होता है । उदा० युष्मान् ब्राह्मणान् । अस्मान् ब्राह्मणान् । युष्मान् ब्राह्मणीः । अस्मान् ब्राह्मणीः । युष्मान् कुलानि । अस्मान् कुलानि । [ तीनों लिङ्गों के द्वितीया बहुवचन में एक प्रकार के ही रूप होते हैं । युष्मद् + शस्, अस्मद् + शस् पूर्ववर्त्ती सूत्र से प्राप्त अम् आदेश का अपवाद प्रस्तुतसूत्र से शस् = अस् के अकार का न् आदेश 'आदेः परस्य" सूत्र के अनुसार होने पर युष्मद् + न् स्, अस्मद् + न् स्,

'तस्माच्छसो[1] नः पुंसि' इति सिद्धे स्त्रीनपुंसकार्थं वचनम । अलिङ्गे वा युष्मदस्मदी[1] ॥

**३२०६. भ्यसो भ्यम् ॥ ३० ॥ (३९५)**

**युष्मदस्मद्भ्यामुत्तरस्य भ्यसः 'भ्यम्' इत्ययमादेशो भवति । युष्मभ्यं दीयते । अस्मभ्यं दीयते ।**

**भ्यमादेशे कृते शेषेलोपे च 'बहुवचने झल्येत्' (७.३.१०३) इत्येवं प्राप्नोति, तद् 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (व्या० प० ३८) इति न भवति ।**

**केचित् पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं कुर्वन्ति । येषां तु शेषेलोपष्टिलोपः, तेषामभ्यमादेश एव ।**

**न्यासः**

'प्रथमयोः पूर्वसवर्णः' इति दीर्घत्वे च 'तस्माच्छसो नः पुंसि' इति नत्वेनैव सिध्यति ? नैतदस्ति; न ह्यत्र पूर्वसवर्णदीर्घत्वं प्राप्नोति, अमि पूर्वत्वेन बाधितत्वात् ॥ २९ ॥

**भ्यसो भ्यम् । युष्मभ्यम्, अस्मभ्यमिति ।** 'शेषे लोपः' इत्यन्तलोपः ।

यदि भ्यमादेशोऽयम्, एवं सति तत्र विहिते शेषेलोपे च 'बहुवचने झल्येत्' इत्येत्वं प्राप्नोति, ततश्चानिष्टरूपमापद्येत ? इत्यत आह— **भ्यमादेशे कृत इत्यादि ।** वर्त्तनं वृत्तम्, अङ्गे वृत्तं यस्य तदङ्गवृत्तं कार्यम्, तस्मिन्नङ्गवृत्ते कार्ये पुनरुत्तरकालमङ्गवृत्तावपरस्य कार्यस्य प्राप्तौ तस्य कार्यस्याविधिः = अविधानम् । निष्ठितस्येत्येनेन यत्सम्बन्धिनः कार्यस्याविधिर्भवति तदङ्गं विशिष्यते । निष्ठितम् = परिसमाप्तम्, प्रयोगार्हमङ्गम् । तत्सम्बन्धिनः कार्यस्याविधिर्भवति, नान्यसम्बन्धिन इत्यर्थः ।

**केचित्यादित्यादि ।** तेषामन्त्यलोपे कृते 'अतो गुणे' पररूपत्वं भवति । **येषां त्वित्यादि ।** यैः 'शेषे

**पदमञ्जरी**

प्रथमयोः पूर्वसवर्णदीर्घत्वे कृते 'तस्माच्छसो नः पुंसि' इति नत्वे च युष्मानिति सिद्धयत्येव ? सत्यं पुंसि सिद्धयति, स्त्रीनपुंसकयोस्तु न सिद्धयति, तदिदं दर्शितम्—**युष्मान् अस्मान् ब्राह्मणीरित्यादि ।**

**अलिङ्गे वा युष्मदस्मदी इति ।** लिङ्गानुशासने तथा पाठात् । उदाहरणे तु 'आदेः परस्य' इत्यकारस्य नकारे सकारस्य संयोगान्तलोपः ॥ २९ ॥

**भ्यसो भ्यम् ॥ एत्वं प्राप्नोतीति ।** 'सुपि च' इति दीर्घस्याप्युपलक्षणमेतत् । **अङ्गवृत्त इत्यादि ।** अस्यार्थः पूर्वमेव व्याख्यातः ।

**केचित्पुनरित्यादि ।** येषां शेषेलोपोऽन्त्यस्य लोपः, तेषाम् 'अतो गुणे' पररूपत्वमेकादेशः, स्वरश्च ।

**भावबोधिनी**

संयोगान्त स् का लोप; "द्वितीयायाञ्च" सूत्र से आकारान्त आदेश—युष्मान्, अस्मान् । ] "तस्माच्छसः नः पुंसि" (६।१।१०३) इसी से [ पुंलिङ्ग में नत्व ] सिद्ध रहते स्त्रीलिङ्ग और नपुंसकलिङ्ग के लिये यह वचन है । अथवा 'युष्मद् और अस्मद् का कोई लिङ्ग नहीं होता है ।' [ अतः पुंलिङ्गत्वनिमित्तक नत्व स्त्री और नपुंसक लिङ्ग में प्राप्त न होने के कारण यह सूत्र बनाया गया । ] ॥ २९ ॥

युष्मद् तथा अस्मद् से उत्तरवर्ती 'भ्यस्' का 'भ्यम्' यह आदेश होता है । उदा० युष्मभ्यं दीयते । अस्मभ्यं दीयते । [ युष्मद् + भ्यस्, अस्मद् + भ्यस्, भ्यस् का भ्यम् आदेश, "शेषे लोपः" सूत्र से अन्त्यलोप होता है—युष्मभ्यम्, अस्मभ्यम् । ]

'भ्यम्' आदेश करने पर और 'शेषे लोपः' सूत्र से द् का लोप कर देने पर [ अकारान्त रह जाने के कारण ] "बहुवचने झल्येत्" सूत्र से एत्व प्राप्त होता है परन्तु वह 'अङ्गवृत्त में पुनः वृत्ति में निष्ठित की विधि नहीं होती है' [ भाव यह है अङ्गसंज्ञा-सम्बन्धी कार्य हो जाने पर पुनः अङ्ग-सम्बन्धी कार्य नहीं किया जाता है । इसी को इस रूप में भी कहा गया है—"अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्" ]—इसके कारण नहीं होता है ।

---

१-१. पाठोऽयं मुद्रितपुस्तके टिप्पण्यामस्ति ।

**उदात्तनिवृत्तिस्वरश्चादेरेव भवति ॥**

**३२०७. पञ्चम्या अत् ॥ ३१ ॥ (३६७)**

**पञ्चम्या भ्यसो युष्मदस्मद्भ्यामुत्तरस्य 'अत्' इत्ययमादेशो भवति । युष्मद् गच्छन्ति । अस्मद् गच्छन्ति ॥**

**३२०८. एकवचनस्य च ॥ ३२ ॥ (३६६)**

**पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यामुत्तरस्य 'अत्' इत्ययमादेशो भवति । त्वद् गच्छन्ति । मद् गच्छन्ति ॥**

**न्यासः**

लोपः' इत्यन्तलोपः क्रियते, तेषां मतभेदः—ते हि केचिद् भ्यमादेशमिच्छन्ति, केचिदभ्यमादेशम् । येषां तु शेषेलोपष्टिलोपः, तेषां मतेनायमभ्यमादेश एव, न भ्यमादेशः; अन्यथा युष्मभ्यमिति न सिध्येदित्यभिप्रायः । यदि तर्हि शेषेलोपष्टिलोपः, एवं सति 'अनुदात्तस्य यत्रोदात्तलोपः' इत्यनेनाभ्यम् शब्दस्यान्तोदात्तत्वं स्यात् ? इत्यत आह—**उदात्तनिवृत्तिस्वरश्चेत्यादि** । पूर्वपक्षवादिनोदात्तनिवृत्तिस्वरविधौ 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यतोऽन्तग्रहणमनुवर्त्तत इति मन्यमानेन चोदितम् । उत्तरपक्षवादिना तु 'अन्तग्रहणं तत्र निवृत्तमुच्चारणक्रम-प्रत्यासत्त्या चादेरेवोदात्तत्वेन भवितुं युक्तम्'—इति मन्यमानेन परिहृतम् ॥ ३० ॥

**पञ्चम्या अत्** । पूर्वेण प्राप्तस्य भ्यमोऽयमपवादः ॥ ३१ ॥

**एकवचनस्य च** । चकारोऽदादेशानुकर्षणार्थः, भ्यसपेक्षया समुच्चयार्थो वा । 'ङसेश्च' इति वक्तव्ये, एकवचनस्येति वचनं वैचित्र्यार्थम् ॥ ३२ ॥

**पदमञ्जरी**

**एत्वनिवृत्त्यर्थमिति** । अत्रापि दीर्घस्याप्युपलक्षणम्, एत्वनिवृत्त्या चाकारोच्चारणस्यार्थवत्त्वात्सवर्णदीर्घत्वं तेषां न भवति । **येषां त्विति** । अन्त्यलोपपक्षे मतभेदः—भ्यमादेशः, अभ्यमादेश इति । टिलोपपक्षे त्ववश्यम-भ्यमादेशः, अन्यथा रूपासिद्धेः । नन्वेवं स्वरे दोषः, कथम् ? 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यत्र 'कर्षात्वतो घञोन्त उदात्तः' इत्यन्तोदात्तग्रहणमनुवर्त्तते, ततश्च भ्यमोऽन्तोदात्तत्वं प्राप्नोति ? अत्यत आह—**उदात्त-निवृत्तिस्वरश्चेति** । न तत्रान्तग्रहणमनुवर्त्तते, उच्चारणक्रमे प्रत्यासत्या चादेरेवोदात्तत्वं भवतीत्यर्थः ॥ ३० ॥ ३१ ॥ ३२ ॥

**भावबोधिनी**

कुछ लोग एत्व की निवृत्ति = वारण करने के लिए 'अभ्यम्' आदेश करते हैं । [ अब झल् परे न होने से एत्व की प्राप्ति ही नहीं है । ] जिनके मत में "शेषे लोपः" इस सूत्र से टि = अद् का लोप होता है उनके मत में [ भ्यस् का ] 'अभ्यम्' आदेश ही होता है । [ अन्यथा युष्मभ्यम् अस्मभ्यम् रूप नहीं बन सकते । ] और उदात्तनिवृत्ति-स्वर आदि का ही होता है अर्थात् आदि का ही उदात्तत्व होता है ।

**विमर्श**—'भ्यसोभ्यम्' इस सूत्र का दो प्रकार से सन्धिविच्छेद हो सकता है—(१) भ्यसः भ्यम्, (२) भ्यसः अभ्यम् । अभ्यम् मानना इसलिए आवश्यक है क्योंकि 'शेषे लोपः' सूत्र से जब टि = अद् लोप का पक्ष है तब युष्म् + भ्यम् ऐसा अनिष्ट रूप प्रसक्त होगा । स्वर की अनुपपत्ति भी नहीं होती है ॥ ३० ॥

युष्मद् तथा अस्मद् से उत्तरवर्त्ती पञ्चमी के भ्यस् का 'अत्' यह आदेश होता है । उदा० युष्मद् गच्छन्ति ते । अस्मद् गच्छन्ति ते । [ युष्मद् + भ्यस्, अस्मद् + भ्यस्, 'अत्' आदेश, टिलोप । अपादान में पञ्चमी मानकर पार्थक्य के लिये क्रियासहित उदा० है । साथ ही मूल रूप 'युष्मद् अस्मद्' का भ्रम निवारण करने के लिए भी वाक्य के घटक के रूप में उदा० दिये गये । ] ॥ ३१ ॥

युष्मद् और अस्मद् से उत्तरवर्त्ती पञ्चमी के एकवचन अर्थात् ङसि के स्थान पर भी 'अत्' यह आदेश होता है । उदा० त्वद् गच्छन्ति ते । मद् गच्छन्ति ते । [ युष्मद् + ङसि, अस्मद् + ङसि, 'अत्' आदेश, "त्वमावेकवचने" सूत्र से मपर्यन्त के 'त्व' और 'म' आदेश होते हैं, 'शेषे लोपः' सूत्र से टिलोप—त्वत्, मत् ] ॥ ३२ ॥

## ३२०९. साम आकम् ॥ ३३ ॥ (४००)

**'साम' इति षष्ठीबहुवचनमागतसुट्कं गृह्यते । तस्य युष्मदस्मद्भ्यामुत्तरस्य 'आकम्' इत्ययमादेशो भवति । युस्माकम् । अस्माकम् ।**

**अथ किमर्थमागतसुट्को गृह्यते, न ह्यादेशविधानकाले सुड् विद्यते ? तस्यैव तु भाविनः सुटो**

**न्यासः**

**साम आकम् । साम इति षष्ठीबहुवचनमागतसुट्कं परिगृह्यत इति ।** युष्मदस्मद्भ्यामुत्तरस्यान्यस्य सामशब्दस्यासम्भवात् । आगतः सम्प्राप्तः सुट् यत्र येन वा तत् तथोक्तम् ।

**अथेत्यादौ** वाक्य **आगतसुट्क** इत्याम्प्रत्ययापेक्षया पुंल्लिङ्गत्वं वेदितव्यम् ! 'अथ किमर्थमागतसुट्कः परिगृह्यते' इति पृष्टस्य ससुट्कस्यादेशो यथा स्यादिति प्रतिवचनमाशङ्क्याह—**न हीत्यादि** । 'आमि सर्वनाम्नः सुट्' इत्यत्र 'आज्जसेरसुक्' इत्यत आदिति वर्त्तते, तेनाकारान्तात् सर्वनाम्नः सुड् विधीयते । अकारान्तता च युष्मदस्मदोः 'शेषे लोपः' इत्यन्तलोपे सति भवति । शेषेलोपेनाप्याकमादेशे कृते भवितव्यम् । तस्मादादेश-विधानकाले सुण्न विद्यते, ततश्च ससुट्कस्यादेशो यथा स्यादित्येतत्प्रयोजनं नोपपद्यत इत्यन्यद्वक्तव्यमित्यभि-प्रायेणाह—**तस्यैवेत्यादि** । यद्यसुट्को गृह्यते 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यसुट्कस्यैवादेशः स्यात् । एवञ्चा-भिनिवृत्ते स्थान्यादेशभावे पश्चाद्भवतः सुटः केन निवृत्तिः स्यात् ? इष्यते च तस्यापि निवृत्तिः । अतस्तस्य भाविनोऽपि निवृत्तिर्यथा स्यादित्येवमर्थं ससुट्को गृह्यते । ननु च युष्मदस्मद्भ्यामुत्तरस्यामः सुडेव न प्राप्नोति, अकाराद्धि सर्वनाम्नः सुड् विधीयते, युष्मदस्मदोश्च त्यदाद्यत्वं नास्ति, द्विपर्यन्तास्त्यदादयः' इति त्यदाद्यत्वस्या-भावाच्छेषेलोपस्य च टिलोपादकारान्तता न सम्भवति; अतो भाविनोऽपि सुटो निवृत्तिर्नैव प्रयोजनमुप-पद्यते ?—एतच्चोद्यमपाकर्तुम् "शेषे लोपः' इत्यन्तलोपः" इति हृदि कृत्वाऽऽह—**कृते हीत्यादि** । अथ क्रियमाणे ससुट्कस्य ग्रहणे कथमसौ निवर्त्तते, शास्त्रान्तराद्धि प्रसक्तस्य शास्त्रेण निवृत्तिः क्रियते, न चादेशविधानकाले

**पदमञ्जरी**

**साम आकम् ॥ सामिति षष्ठीबहुवचनमागतसुट्कं गृह्यत इति ।** अङ्गसंज्ञानिमित्तस्यान्यस्यासम्भवात् ।

**अथ किमर्थमागतसुट्को गृह्यत इति ।** यद्यपि षष्ठीबहुवचनमागतसुट्कं गृह्यत इति प्रकृतम्, इह तु प्रत्ययापेक्षया पुंल्लिङ्गनिर्द्देशः । नपुंसकलिङ्गमेव वा पठितव्यम् । अथेति न प्रयोजनप्रधानः प्रश्नः, किं तर्हि ? युष्मदस्मद्भ्यां परस्यैवंविधस्यासम्भवप्रधानः । अत एवाह—**न ह्यादेशविधानकाले सुड्विद्यत इति ।** सुड्विधौ 'आज्जसेरसुक्' इत्यत आदित्यनुवर्त्तते, अकारान्तत्वं च युष्मदस्मदोः 'शेषे लोपः' इत्यन्त्यस्य लोपे भवति, कश्च शेषः ? आदेशः । अनादेशे यत्वात्वयोर्विधानात् । आदेशत्वं चाकमादेशे सति । न च त्यदाद्यत्वेनाकारा-

**भावबोधिनी**

'साम' यह षष्ठीबहुवचन 'आगतसुट्क' (सुट् आगम विशिष्ट) का ग्रहण किया जाता है । युष्मद् तथा अस्मद् से उत्तरवर्त्ती उस 'साकम्' का 'आकम्' यह आदेश होता है । उदा० युष्माकम्, अस्माकम् । [ युष्मद् + आम्, अस्मद् + आम्, "आमि सर्वनाम्नः सुट्" सूत्र से सुट् = स् आगम, प्रस्तुत सूत्र से 'आकम्' आदेश, "शेषे लोपः" से टिलोप— युष्माकम्, अस्माकम् । ]

प्रश्न—आये हुए सुट् से युक्त का ग्रहण क्यों किया जाता है क्योंकि आदेश करने के समय तो सुट् नहीं रहता है ? उसी भावी सुट् की निवृत्ति के लिए [ सुट्युक्त 'सामः' ऐसा ग्रहण ] है । क्योंकि आकम् आदेश कर देने पर 'शेषे लोपः' से अन्त्य लोप हो जाने पर "युष्मद् तथा अस्मद् के अकारान्त हो जाने के कारण [ "आमि सर्वनाम्नः सुट्" सूत्र से ] सुट् प्राप्त होता है, वह [ ससुट्क आदेश करने पर ] स्थानी (आम्) का अन्तर्भूत (अवयव) हो जाने के कारण निवृत्त हो जाता है । [ अतः स् के श्रवण का अतिप्रसङ्ग नहीं होता है । ]

**निवृत्त्यर्थम्। आदेशे कृते हि शेषेलोपे युष्मदस्मदोरकारान्तत्वात्सुट् प्राप्नोति, स स्थान्यन्तर्भूतत्वान्निवर्तते।**

**दीर्घोच्चारणं सवर्णदीर्घार्थम्। अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्वं न न प्राप्नोति। तत्सामर्थ्यमेत्वं प्रति भविष्यतीति अकारकरणमेत्वनिवृत्त्यर्थमिति 'अतो गुणे' (६.१.९७) पररूपत्वं स्यात्॥**

**न्यासः**

सुट्प्रसङ्गोऽस्ति? इत्याह—**स च स्थान्यन्तर्भूतत्वादित्यादि।** यद्यादेशविधानकाले सुटः प्रसङ्गः सम्भवेत्, ततो भावी न निवर्त्तते, न चासावादेशकाले सम्भवति। तस्माद् भाविनः सुटः ससुट्कग्रहणेन स्थान्यन्तर्भूतत्वाद् यस्यामवस्थायां तस्य प्राप्तिस्तस्यां प्रसक्तः स निवर्तते; अन्यथा हि तस्य स्थान्यन्तर्भावोऽनर्थकः स्याद्। स्यादेतत्—यदि 'शेषे लोपः' इत्यन्तलोपस्ततः ससुट्कस्योपादानमर्थवद्भवति, यदा तु शेषेलोपष्टिलोपस्तदा नार्थः ससुट्ग्रहणेन; टिलोपे हि कृतेऽकारान्तत्वाभावात् सुटः प्रसङ्ग एव नास्तीति? एवं तर्हि टिलोप एव कस्मान्नाश्रीयते, तस्यानुपपत्तेः। अनुपपत्तिस्तु लक्षणाभावात्। अन्त्यलोपस्यास्यैतदेवास्ति लक्षणमिति स एवाश्रितः। यद्येवम्, युष्मद् ब्राह्मणीभ्यो गच्छतीत्यन्तलोपे सति 'अजाद्यतष्टाप्' इति टाप्प्रसज्येत? 'अलिङ्गे युष्मदस्मदी' इति नैषोऽस्ति प्रसङ्गः।

**दीर्घोच्चारणमित्यादि।** ननु चाकम्यपि अकः सवर्णदीर्घत्वे न सिध्यत्येव? न; सिध्यति। 'अतो गुणे' इति पररूपत्वमपवादः प्राप्नोतीति चेत्? न; अकारोच्चारणसामर्थ्यात्। यदि 'अतो गुणे' पररूपत्वं स्यात् तदाकारोच्चारणमनर्थकं स्यात्, कमित्येव ब्रूयादित्यत आह—**अकमि त्वित्यादि।** तुशब्दो दीर्घोच्चारणापेक्षया समुच्चयार्थः। इतिकरणो हेतौ।

यदि ह्यकारोच्चारणस्य प्रयोजनं न स्यात्, शक्यते वक्तुम्—अकारोच्चारणसामर्थ्यान्न भविष्यतीति; अस्ति च तस्य प्रयोजनम्, किं तत्? 'बहुवचने झल्येत्' इत्येत्वं मा भूत्। तस्मात् सत्यप्यकारोच्चारण एत्वनिवृत्त्यर्थे 'अतो गुणे' पररूपत्वं स्यात्, न सवर्णदीर्घत्वम्। अतस्तदर्थं दीर्घोच्चारणं क्रियते॥ ३३॥

**पदमञ्जरी**

न्तत्वम्; 'त्यदाद्यत्वं प्रति द्विपर्यन्तास्त्यदादयः' इति स्मरणात्। तस्मादादेशविधानकाले सुण्न विद्यते। उत्तरवादी तु—आदेशविधानकालेऽसत एव सुट उपादानम्, अथापि तस्योपादाने प्रयोजनमस्तीत्याह—**तस्यैव त्विति।** यद्यसुट्को गृह्यते, ततः पूर्वोक्तेन न्यायेन पश्चाद्भवतः सुटः केन निवृत्तिः स्यात्! **स्थानिन्यन्तर्भूतत्वादिति।** तेन सहस्थानित्वेनोपादानसामर्थ्यादिति भावः। एतच्च पाक्षिकं प्रयोजनम्। कतरस्मिन्पक्षे? यदा शेषेलोपो अन्त्यलोपस्तदा, यदा तु टिलोपस्तदा पश्चादपि सुटः प्रसङ्गाभावान्नैतत्प्रयोजनम्।

**दीर्घोच्चारणमित्यादि।** अन्यथातो गुणे पररूपत्वं स्यात्। नन्वकारोच्चारणसामर्थ्यान्न भविष्यति, अन्यथाऽकमेव विदध्यात्? अत आह—**अकमि त्विति**॥ ३३॥

**भावबोधिनी**

आकम् का दीर्घ उच्चारण (अन्त्यलोप पक्ष में) सवर्णदीर्घ के लिए है। परन्तु 'अकम्' में तो ह्रस्व करने पर ह्रस्वविधान-सामर्थ्य से ही सवर्णदीर्घ नहीं प्राप्त होता है। उसका सामर्थ्य एत्व के प्रति होगा। इसलिए अकार का करना एत्व की निवृत्ति के लिए है, इस कारण "अतो गुणे" सूत्र से पररूप होने लगेगा। [ भाव यह है कि 'अकम्' ऐसा करने पर एत्व की निवृत्ति तो हो सकती है किन्तु 'अतो गुणे' सूत्र से पररूपत्व प्रसक्त होगा, सवर्णदीर्घ नहीं हो सकेगा। इस कारण सवर्णदीर्घ करने के लिए यह 'आकम्' आदेश किया गया है। यदि 'शेषे लोपः' से टिलोप किया जाय तब अकारान्त न होने से सुट् की प्राप्त ही नहीं है, ससुट्क निर्देश व्यर्थ है। ] ॥ ३३॥

## ३२१०. आत औ णलः ॥ ३४ ॥ (२३७१)

**आकारान्तादङ्गादुत्तरस्य णल औकारादेशो भवति । पपौ । तस्थौ । जग्लौ । मम्लौ ।**

**अत्रौत्वमेकादेशः, स्थानिवद्भावः, द्विर्वचनम्—इत्यनेन क्रमेण कार्याणि क्रियन्ते (म० भा०) ।**

### न्यासः

**आत औ णलः । तस्थाविति ।** 'शर्पूर्वाः खयः' इति खयः शेषः । **जग्लाविति ।** 'कुहोश्चुः' इति चुत्वम् ।

इह 'पा' इत्यादिभ्यो णलि परत्रावस्थिते युगपत् त्रीणि कार्याणि प्राप्नुवन्ति—द्विवचनम्, एकादेशः, औत्वञ्च । तेषाञ्च तथा प्राप्तानां युगपत्प्रवृत्तिः [न] सम्भवतीति सामर्थ्यात् प्राप्तः क्रम आश्रीयते । तत्र येन क्रमेण तानि कर्त्तव्यानि, तं दर्शयितुमाह—**अत्रेत्यादि ।** अत्रेत्यनेन पपावित्यादीन्युदाहरणानि प्रत्यवमृश्यन्ते । यदि द्विर्वचनादेकादेशः पूर्वं क्रियते तदा 'वृद्धिरेचि' इति वृद्धावेकादेशे कृते निमित्तिनिमित्तिनोर्विशेषाभावाल्लिटि परतः पूर्वस्योच्यमानं द्विवचनं न प्राप्नोतीति तस्य निरासायेदमुक्तम्—स्थानिवद्भावो द्विर्वचनमिति । केन पुनरत्र स्थानिवद्भावः ? 'द्विर्वचनेऽचि' इत्यनेन ? नैवम्; द्विर्वचननिमित्तेऽचि परतः पूर्वस्य स्थानिवद्भाव उच्यते, न चात्र द्विर्वचननिमित्तं परमचं पश्यामः ।

अत्र केचिदाहुः—अचीत्युपलक्षणम्, अचि य आदेशो दृष्टः स द्विर्वचने कर्त्तव्ये स्थानिवद् भवतीतीमं सूत्रार्थमाश्रित्यैतदुक्तम् । इह सम्प्रत्ययनच्परत्वेऽप्येकादेशकरणकालेऽचः परस्य निमित्तभावेनाश्रयणादच्ययमादेशः कृतः । तस्माद् भवितव्यं स्थानिवद्भावेन ।

अन्ये त्वाहुः—'एकादेशः पूर्वविधौ स्थानिवद्भवतीति वक्तव्यम्' इत्यनयेष्ट्या स्थानिवद्भावः ।

'द्विर्वचनेऽचि' इति योगविभागाद्वा स्थानिवद्भावः—इत्यपरे ।

कथं पुनरयमेषां कार्याणां क्रम उपलभ्यते ? इत्यत आह—**एकादेशादित्यादि ।** पा + अ इति स्थितेऽकः सवर्णे दीर्घत्वं प्राप्नोति, औत्वञ्च । तत्रैकादेशः—दण्डाग्रमित्यादौ सावकाशः, औत्वं तु न क्वचित् सावकाशम्; अतस्तावदनवकाशत्वात् प्रागौत्वं क्रियते, तत्र कृते वृद्धिः प्राप्नोति, द्विर्वचनञ्च, तत्र परत्वाद्

### पदमञ्जरी

**आत औ णलः ॥** पपावित्यादौ पा + अ इति स्थिते युगपत् त्रीणि कार्याणि प्राप्नुवन्ति द्विर्वचनम्, सवर्णदीर्घत्वमेकादेशः, औत्वमिति; तत्र येन क्रमेणैतानि कर्तव्यानि, तद्दर्शयति—**अत्रेति ।** लित्स्वरं तु नोपन्यस्यति, सर्वथान्तोदात्तत्वसिद्धेः । उक्तक्रमे हेतुमाह—**एकादेशादिति ।** यदि पूर्वमेकादेशः स्याद्व्यपवर्गाभावादौत्वं न स्यादित्यनवकाशं तत् । **परत्वादेकादेश इति ।** अत्र वृद्धिरेकादेशः, तस्य स्थानिवद्भावाद् द्विर्वचनम्, स्थानिवद्भावस्तु 'द्विर्वचनेऽचि' इति । तत्र ह्यचीति न स्थानिवद्भावस्य निमित्तनिर्देशः, किं तर्हि ? अजादेशस्य—द्विर्वचननिमित्तेऽचि योऽजादेश इति । तेन सम्प्रत्यच्परत्वाभावेऽपि स्थानिवद्भावो भवत्येव । ओकारौकारयोर्लाघवे विशेषाभावात्प्रयोगसमवाय्यौकार एव विहितः । अपर आह—आङ्प्रश्लिष्टाकार ओकारः, तस्योच्चारणे प्रयत्नलाघवं भवति; विश्लिष्टाकार औकारस्तस्योच्चारणे प्रयत्नगौरवं भवति, तद्विधानं दरिद्रात्यर्थम्—ददरिद्रौ,

### भावबोधिनी

आकारान्त अङ्ग से उत्तरवर्त्ती 'णल्' का 'औ' यह आदेश होता है । उदा० पपौ । तस्थौ । जग्लौ । मम्लौ । [ पा, स्था, ग्लै = ग्ला, म्लै = म्ला से लिट् = तिप् के स्थान पर "परस्मैपदानां णलतुस्" इत्यादि सूत्र से तिप् का णल्, णल् का औ, द्वित्व तथा अभ्यासकार्य के बाद रूप बनते हैं ।

[ पा + लिट् = तिप् = णल् = अ इस दशा में एक साथ तीन कार्य प्राप्त होते हैं—(१) द्वित्व, (२) सवर्ण-दीर्घ आदि एकादेश, (३) णल् का औ । इनका क्रम इस प्रकार है— ] इनमें औत्व, एकादेश, स्थानिवद्भाव, द्विर्वचन—

**एकदेशादनवकाशत्वादौत्वं द्विर्वचनादपि परत्वादेकादेश इति ॥**

**३२११. तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ ३५ ॥ (२१९७)**

**तु, हि—इत्येतयोराशिषि विषये तातङादेशो भवत्यन्यतरस्याम् । जीवताद्भवान् । जीवतात्त्वम् । जीवतु भवान् । जीव त्वम् ।**

**न्यास**

वृद्धिर्भवति । द्विर्वचनं हि—पपाचेत्यादौ सावकाशम्, वृद्धेस्त्वकाशः—खट्वैडकेत्यादौ । अतो वृद्धौ कृतायां पश्चाद् भवति द्विर्वचनं स्थानिवद्भावेन ।

**णल इति** णकारोच्चारणं प्रत्ययग्रहणं यथा स्यात् । णलो णकारोच्चारणे हि खल्प्रत्ययोऽस्तीति तस्य ग्रहणं भवति । तस्मिंश्चासत्यल इत्युच्यमाने सत्यलप्रत्ययस्याभावात् प्रत्याहारग्रहणं विज्ञायेत ।

लकारोच्चारणम् 'श्याद्व्यध' इत्यादिना विहितस्य णप्रत्ययस्य ग्रहणं मा भूदित्येवमर्थम् । अथ 'एकवचनस्य' इत्यनुवर्त्तते ? तथा सति मुखसुखार्थम् ॥ ३४ ॥

**तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ जीवताद् भवानिति ।** 'आशिषि लिङ्लोटौ' इति लोट्, तिप्, शप्, 'एरुः' इत्युत्वम्, तस्य तुशब्दस्य तातङ् । **जीवतात्त्वमिति ।** सिप्, 'सेर्ह्यपिच्च' इति हिरादेशः, तस्य तातङ् । **जीव त्वमिति ।** 'अतो हेः' इति हेर्लुक् । अथ जीवतात् त्वमित्यत्र स्थानिवद्भावेन तातङो हिग्रहणेन ग्रहणाल्लुक्कस्मान्न भवति ? 'हुझल्भ्यो हेर्धिः' इत्यतो हेरित्यनुवर्त्तमाने पुनः 'अतो हेः' इति ग्रहणात् । तस्य ह्येतत् प्रयोजनम्—हिरूपावस्थितस्यैव हेर्लुग्यथा स्यात् । स्थानिवद्भावेन यच्छब्दान्तरं हिग्रहणेन गृह्यते तस्य मा भूत् ।

**पदमञ्जरी**

अत्र 'दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः' इत्याकारलोपेऽप्यौकारस्य श्रवणं भवति । यद्यपि 'सिद्धश्च प्रत्ययविधौ' (वा० ७९०) इति वचनाल्लिटि विवक्षित एवाकारलोपे सत्यौत्वस्याप्रसङ्गः, यद्यपि च 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' (वा० २०५) इत्यामि सति णल एवासम्भवः; तथाप्यौत्वविधानसामर्थ्याद् द्वयमप्येतन्न भवति ॥ ३४ ॥

**तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ जीवतात्त्वमिति ।** अत्र स्थानिवद्भावेन तातङो हिग्रहणेन ग्रहणाद् 'अतो हेः' इति लुक् प्राप्नोति ? नैष दोषः; 'हुझल्भ्यो हेर्धिः' इत्यनुवर्त्तमाने पुनः 'अतो हेः' इति हिग्रहणम्—हिरेव यो हिस्तस्य यथा स्यात्, स्थानिवद्भावेन यो हितस्य मा भूदित्येवमर्थम् ।

**भावबोधिनी**

इस क्रम से कार्य किये जाते हैं । अनवकाश होने के कारण एकादेश की अपेक्षा औत्व आदेश होता है और परवर्त्ती होने के कारण द्विर्वचन से भी पहले एकादेश होता है ।

**विमर्श**—भाव यह है कि पा + णल् = अ आदि में यदि एकादेश ही पहले होता रहेगा तो 'औ' आदेश कहीं भी नहीं हो सकेगा, फलतः निरवकाश होकर 'औत्व' आदेश एकादेश का बाध करके पहले होता है । अब द्वित्व-विधायक 'लिटि धातोरनभ्यासस्य' (६।१।८) की अपेक्षा एकादेश-विधायक 'वृद्धिरेचि' (६।१।८८) सूत्र परवर्त्ती होने से पहले एकादेश ही होता है । अब 'द्विर्वचनेऽचि' (१।१।५९) सूत्र से अथवा "एकादेशः पूर्वविधौ स्थानिवद्भवतीति वक्तव्यम्" इस भाष्यकारीय इष्टि से स्थानिवद्भाव करके धातु का द्वित्व करना चाहिए ॥ ३४ ॥

आशीर्विषय में 'तु' और 'हि' इनके स्थान पर विकल्प से तातङ् आदेश होता है । उदा० जीवताद् भवान् । जीवतात् त्वम् । जीवतु भवान् । जीव त्वम् । [ जीव + लोट् = तिप्, शप् = अ 'एरुः' सूत्र से इ का उत्व—जीव + तु, इससे तातङ् । जीव + लोट् = सिप् = हि, इससे तातङ् । 'पक्ष में 'सि' का 'हि' और उसका लोप ]

**ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ् भवति । ङित्त्वाच्चास्य स्थानिवद्भावात्पित्त्वं प्राप्नोति, तन्निवर्त्तते; ङिच्च पिन्न भवति । तेन 'ब्रुव ईट्' (७.३.९३) इति ब्रूताद्भवान्—इतीण्न भवति ।**

**आशिषीति किम् ? ग्रामं गच्छतु भवान् । गच्छ त्वम् ।**

**तातङि ङित्त्वं संक्रमकृत्स्यादन्त्यविधिश्चेत्तच्च तथा न ।**
**हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥**

**न्यासः**

अथ 'ङिच्च' इति वचनात् तातङयमन्त्यस्य कस्मान्न भवति ? इत्याह—**ङित्करणमित्यादि ।** गुणप्रतिषेधार्थम्—ब्रूयात् भवानित्यत्र । वृद्धिप्रतिषेधार्थम्—मृष्टादित्यत्र । इतिकरणो हेतौ । यस्माद् गुणवृद्धिप्रतिषेधार्थं ङित्करणं तस्मात्सर्वादेशस्तातङ् भवति । यदि हि तस्यान्यत् प्रयोजनं न स्यात्, स्यादेवान्त्यस्य तातङ् । अस्ति च तस्यान्यत् प्रयोजनं गुणवृद्धिप्रतिषेधः । तस्मिन् सति किम् 'ङिच्च' इत्यन्त्यस्य भवतु, अथ 'अनेकाल्शित्सर्वस्य' इति सर्वस्य वा ? तत्र परत्वात् सर्वादेशेनैव युक्तं भवितुम् । तस्माद् 'अनेकाल्शित्सर्वस्य' इति सर्वस्यैव स्यादिति सर्वादेशो भवति । ननु च तुस्थानिकस्य तातङः स्थानिवद्भावेन पित्त्वं प्राप्नोति, ततश्च हलि पिति सार्वधातुके यथा ब्रवीत्वित्यत्रेड् भवति, तथा ब्रूताद्भवानित्यत्रापीटा भवितव्यम् ?—एतच्चोद्यमपाकर्तुमाह—**ङित्त्वाच्चेत्यादि ।** अस्येति तातङः । किं कारणं निवर्त्तते ? इत्याह—**ङिच्चेत्यादि ।**

**पदमञ्जरी**

**ङित्करणमित्यादि ।** यद्यपि सर्वादेशतायाः प्राग्गुणवृद्धिप्रतिषेधार्थत्वमनिश्चितम्, तथापि सर्वादेशत्वे अपि ङित्त्वस्य प्रयोजनं तातङि सम्भवति, अनङादिषु तु नैव सर्वादेशत्वे प्रयोजनं सम्भवतीति तेष्वनन्यार्थङित्त्वेषु 'ङिच्च' इत्येतत् सहसा प्रवर्त्तते, तातङि तु प्रयोजनान्तरसम्भावनया कियानपि विलम्बो भवति । तेनास्मिन्विषये उत्सर्गापवादयोस्तुल्यकाला प्रवृत्तिरित्यपवादमपि 'ङिच्च' इत्येतद्बाधित्वा 'अनेकाल्शित्सर्वस्य' इत्येतदेव परत्वात्प्रवर्त्तत इति भावः । एतच्च 'ङिच्च' इत्यत्र सम्यगुपपादितम् । तत्र ब्रूतादित्यादौ गुणप्रतिषेधः, मृष्टादित्यत्र वृद्धिप्रतिषेधः । **ङित्त्वाच्चास्येति ।** ननु च ङित्कार्यं भवतु, स्थानिवद्भावप्राप्तपित्त्वात्पित्कार्यमपि, को विरोधः ? अत आह—**ङिच्च पिन्न भवतीति ।** वचनमिदम् 'सार्वधातुकमपित्' इत्यत्र योगविभागेन कल्पितम् । **ब्रुव ईडिति ।** उपलक्षणमेतत्, तृण्ढाद्भवान् इत्यत्र 'तृणह इम्' न भवतीति ।

**तातङि ङित्त्वमित्यादि** श्लोकद्वयं क्वचित्पठ्यते । तातङि व्यवस्थितं **ङित्त्वं संक्रमकृत्स्यात्,** संक्रमो नाम = गुणवृद्धिप्रतिषेधः, अर्हार्थे लिङ्, गुणवृद्धिप्रतिषेधकृद्भवितुमर्हति । **अन्त्यविधिश्चेत्,** अन्त्यविधिहेतुत्वादन्त्यविधिर्ङित्त्वम् । करणसाधनो वा विधिशब्दः, अन्त्यस्य यथा स्यादित्येवमर्थं चेत् ङित्त्वमित्यर्थः । निराकरोति—**तच्च तथा न ।** चशब्दोऽवधारणे प्रतिषेधेन सम्बध्यते, तत् ङित्त्वं तथा सति नैव कर्त्तव्यम् । 'एरुः' इत्यस्यानन्तरम् 'तुह्योस्तादाशिषि' इति वक्तव्यम्, एर्गुरित्येव, एवं सिद्धे ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति

**भावबोधिनी**

ङित् करना तो गुण और वृद्धि के प्रतिषेध के लिए है, इसलिये तातङ् यह सम्पूर्ण (तु, हि) के स्थान पर होता है । [ तातङ् ङित् होने से "ङिच्च" सूत्र से अन्त्य के ही स्थान पर होना चाहिये ? इस शंका का ऊपर उत्तर दिया गया कि ङित् आदेश के स्थानी के लिये नहीं है अपि तु 'ब्रूतात् भवान्' आदि में गुण का प्रतिषेध करने के लिए ही है । ] और स्थानिवद्भाव से इसका जो पित्त्व प्राप्त होता है वह ङित्व के कारण निवृत्त हो जाता है, जो ङित् है वह पित् नहीं होता है । इसीलिए 'ब्रुव ईद्' (७।३।९३) सूत्र से, 'ब्रूताद् भवान्' इसमें, ईद् आगम (भी) नहीं होता है ।

आशीः अर्थ में—इसका क्या प्रयोजन है ? ग्रामं गच्छतु भवान् । गच्छ त्वम् । [ इन विधियों में नहीं होता है । ]

[ प्रस्तुत सूत्र पर महाभाष्य नहीं लिखा गया है अतः काशिकाकार ने किसी अन्य ग्रन्थ से दो श्लोक ङित्व के सम्बन्ध में उद्धृत किये हैं— ]

तातङो ङित्त्वसामर्थ्यान्नायमन्त्यविधिः स्मृतः।
न तद्वदनङादीनां तेन तेऽन्त्यविकारजाः॥

## ३२१२. विदे शतुर्वसुः॥ ३६॥ (३१०५)

**'विद ज्ञाने'—इत्येतस्माद्धातोरुत्तरस्य शतुर्वसुरादेशो भवति। विद्वान्, विद्वांसौ, विद्वांसः।**

**न्यासः**

चकारो हेतौ। तुस्थानिकस्य तातङो नाप्राप्ते पित्त्वे ङित्त्वमारभ्यत इति ङित्त्वेन हि पित्त्वं बाध्यते। तथासौ ङिद् भवति यदि स्थानिवद्भावेन प्राप्तं पित्त्वं निवर्त्तते। **तेनेत्यादि**। यत एवं पित्त्वं निवर्त्तते तेन पित्त्वाश्रय ईण्न भवति। ग्रामं गच्छतु भवान्। त्वं गच्छेति। 'लोट् च' इति विध्यादौ लोट्॥ ३५॥

**विदेः शतुर्वसुः॥** यद्यपि विदेरिति सामान्यनिर्देशोऽयम्, तथापि ज्ञानार्थस्य ग्रहणं विज्ञायते। तस्यैव हि शतानन्तरः (शत्रनन्तरः) सम्भवति, नान्येषां विदीनाम्। तत्र सत्ताविचारणार्थयोः शतुरसम्भव एव; आत्मनेपदित्वात्। लाभार्थस्य तूभयपदित्वात् सम्भवत्यसौ, न त्वनन्तरः; शप्रत्ययेन व्यवधानात्। ज्ञानार्थस्य तु लुग्विकरणत्वाच्छतुर्विकरणकृतं व्यवधानं नास्ति, अतस्तस्यैव ग्रहणमित्याह—**विद ज्ञान इति**। **विद्वानिति**।

**पदमञ्जरी**

निश्चीयते। न च सर्वादेशतामन्तरेण तत् तत्प्रतिषेधार्थत्वं ङित्त्वस्योपपद्यत इति सर्वादेशस्तातङ् भवति। ननु चान्त्यविधिश्चास्तु, 'अवयवे कृतं लिङ्गम्' (हे० प० १०७) इति न्यायेन गुणवृद्धिप्रतिषेधार्थश्चास्तु ङित्करण-सामर्थ्यादित्याशङ्क्य परिहारान्तरमाह—**हेरधिकार इति**। 'अतो हेः' इत्यत्र लोपविधौ 'हुझल्भ्यो हेर्धिः' इत्यतो हेरित्यधिकारे सत्येव योऽयं हेरित्यधिकारस्तं ज्ञापकमाह **सूत्रकारः**, तस्य ह्येतत्प्रयोजनम्—हिरेव यो हिस्तस्य यथा स्यात्, स्थानिवद्भावेन यो हिस्तस्य मा भूदिति। तच्च सर्वादेशत्वे सत्युपपद्यते।

ननु च हिरेव यो हिस्तस्य यथा स्याद्विकृतो यो हिस्तस्य मा भूदित्यन्त्यादेशत्वेऽपि तावङो हेरित्य-धिकार उपपद्यत इत्याशङ्क्य साक्षात्परिहारमाह—**तातङो ङित्त्वसामर्थ्यादिति**। ङित्त्वसामर्थ्यात्किलाय-मन्त्यविधिः स्यात्, तच्च सामर्थ्यं नास्ति, सर्वादेशत्वेऽपि प्रयोजनसम्भवात्। ततश्च पूर्वोक्तया रीत्या विप्रति-षेधात्सर्वादेश एव तातङ् भवति। 'अनङ् सौ' इत्यादावनङादीनां नैवं ङित्त्वसामर्थ्याभावः, तेन तेऽन्त्यविकारदा जाताः॥ ३५॥

**विदेः शतुर्वसुः॥ विद ज्ञान इति**। सत्ताविचारणार्थयोरात्मनेपदित्वेन शतुरसम्भवः, लाभार्थस्य तूभयपदित्वेन शतुः सम्भवेऽपि तुदादित्वाद्विकरणेन व्यवधानमिति ज्ञानार्थस्यैव लुग्विकरणस्य परस्मैपदिनो ग्रहणमिति भावः।

**भावबोधिनी**

तातङ् में ङित्व सङ्क्रम = गुणवृद्धि के प्रतिषेध को करने वाला है, अर्थात् ङित् होने से गुण और वृद्धि नहीं हो सकती हैं। यह अन्त्य के स्थान पर विधि—यह कोई कहे तो ऐसा नहीं है। [इसके लिए ङित्व नहीं करना चाहिये।] हि के अधिकार में अर्थात् 'अतो हेः' इस लोपविधि में 'हुझल्भ्यो हेर्धिः' इससे हि का अधिकार रहते ही जो 'हेः' [सूत्रकार ने कहा] है वह लोपविधि मे ज्ञापक कहा गया है। [हि रूप से ही जो 'हि' है उसी का लोप होता है। विकारयुक्त का या स्थानिवद्भाव वाले 'हि' का लोप नहीं होता है।]

तातङ् के ङित्व के सामर्थ्य से यह अन्त्य के स्थान पर विधि नहीं मानी गयी है। परन्तु अनङ् आदि का वह सामर्थ्य नहीं है इस कारण वे अन्त्य के स्थान पर ही होते हैं। [तातङ् तो सम्पूर्ण के स्थान पर ही होता है।]॥ ३५॥

'विद् ज्ञान अर्थ में है' इस धातु से उत्तरवर्ती शतृ का वसु आदेश होता है। उदा० विद्वान्, विद्वांसौ, विद्वांसः। [विद् + लट्, "लटः शतृशानचावप्रथमासमानाधिकरणे" सूत्र से शतृ और शतृ के स्थान पर 'वसु' आदेश—विद् + वस् सु प्रत्यय करने पर "उगिदचां सर्वनामस्थाने" सूत्र से नुम् = न् आगम, 'सान्तमहतः संयोगस्य" सूत्र से उपधा का दीर्घ—विद्वान् स् + सु, सुलोप, संयोगान्तलोप—विद्वान्।]

स्थानिवद्भावादुगित्कार्ये सिद्धे वसोरुकारकरणम् **'वसोः सम्प्रसारणम्' (६.४.१३१) इत्यत्र क्वसोरपि सामान्यग्रहणार्थम् । 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' (व्या० प० ५२) इत्येतदपि न भवति; तथा सत्युकारकरणमनर्थकं स्यात् ।**

**अन्यतरस्यांग्रहणं केचिदनुवर्त्तयन्ति । विदन्, विदन्तौ, विदन्तः ॥**

## ३२१३. समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ३७ ॥ (३३३२)

**समासेऽनञ्पूर्वे 'क्त्वा' इत्येतस्य 'ल्यप्' इत्ययमादेशो भवति । प्रकृत्य । प्रहृत्य । पार्श्वतःकृत्य ।**

**न्यासः**

उगित्त्वान्नुम्, 'सान्तमहतः संयोगान्तस्य' इति दीर्घः । अन्यतरस्यांग्रहणनुवर्त्तते । तेन पक्षे विदन्, विदन्ती, विदन्त इत्याद्यपि भवति । एतच्च गम्यमानत्वाद् वृत्तौ नोक्तम् ।

अथ किमर्थमुकारोऽनुबन्धः क्रियते, नुमाद्युगित्कार्यं यथा स्यादिति चेत् ? न; तस्य स्थानिवद्भावेनैव सिद्धत्वादित्यत आह—**स्थानिवद्भावादित्यादि । क्वसोरपीति** । अपिशब्दादस्यापि । असत्युकारे सामान्यार्थे क्वसोरेव ग्रहणं स्यात्, नान्यस्य । अथ 'वसोः सम्प्रसारणम्' इति सूत्रं क्रियत एवास्यैव ग्रहणार्थम्, न क्वसोः; ननु च सत्यप्युकारकरणे सामान्यग्रहणं नोपपद्यते, एकानुबन्धकपरिभाषयास्यैव ग्रहणं स्यात्, न क्वसोः ? इत्याह—**एकानुबन्धकग्रहण इत्यादि** । एतत् परिभाषासूत्रम् । **न भवति** । नोपतिष्ठत इत्यर्थः । किं कारणं न भवति ? इत्याह—**तथा च सतीत्यादि** । एवञ्च सतीत्यर्थः । यदि क्रियमाणेऽप्युकार एकानुबन्धपरिभाषोपतिष्ठते, एवं सत्युकारकरणमनर्थकं स्यात् । विनापि तेन 'वसः संप्रसारणम्' इत्युच्यमाने केवलस्यास्य ग्रहणं लभ्यत एव । तस्मादुकारकरणसामर्थ्यादियं परिभाषा नोपतिष्ठते ॥ ३६ ॥

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ अनञ्पूर्व इति** । न नञ् अनञ्, अनञ् पूर्वो यस्य सोऽनञ्पूर्वः ।

**पदमञ्जरी**

**क्वसोरपि सामान्यग्रहणार्थमिति** । अन्यथा 'वसः सम्प्रसारणम्' इत्युच्यमाने निरनुबन्धकत्वादस्यैव ग्रहणं स्यात् । ननु च क्रियमाणेऽप्युकारानुबन्धे एकानुबन्धकत्वादस्यैव ग्रहणं स्यात् ? तत्राह—**एकानुबन्धकग्रहण इति** ॥ ३६ ॥

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥** पूर्वशब्दोऽवयववचनः, अनञ्पूर्वोऽवयवो यत्र समासे सोऽनञ्पूर्वः । **प्रकृत्येति** । 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा, 'कुगतिप्रादयः' इति समासः, ल्यपि सति ह्रस्वस्य तुक् ।

**भावबोधिनी**

[ शतृ का वस् आदेश करके ] स्थानिवद्भाव से भी उगित् मानकर [ नुम् आदि ] कार्य के सिद्ध रहते भी 'वसु' के उकार अनुबन्ध का लगाना 'वसोः सम्प्रसारणम्' इसमें क्वसु का भी सामान्य रूप से ग्रहण कराने के लिए है । 'एक अनुबन्ध वाले के ग्रहण में दो अनुबन्धों वाले का ग्रहण नहीं होता है' यह (परिभाषा) भी यहाँ नहीं प्रवृत्त होती है, ऐसा करने पर तो उकार लगाना व्यर्थ ही हो जायगा । [ यदि उकार लगाने पर भी 'एक अनुबन्ध वाले का ग्रहण' इत्यादि परिभाषा उपस्थित होती है तब तो उकार का लगाना व्यर्थ हो जायगा । क्योंकि उसके बिना भी 'वसुः सम्प्रसारणम्' ऐसा सूत्र करने पर केवल इसी का ग्रहण प्राप्त ही है । तब फिर उकार करने के सामर्थ्य से यही समझा जाता है कि 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकग्रहणम्' यह परिभाषा उपस्थित नहीं होती है । ]

कुछ लोग इसमें 'अन्यतरस्याम्' ग्रहण की अनुवृत्ति करते हैं अर्थात् शतृ का वसु विकल्प से होता है । अतः विदन्, विदन्तौ, विदन्तः । [ विद् + लट् = शतृ = अत्, नुम् आदि कार्य होते हैं । ] ॥ ३६ ॥

अनञ्पूर्व वाले समास में 'क्त्वा' इसके स्थान पर 'ल्यप्' यह आदेश होता है । उदा० प्रकृत्य । प्रहृत्य । पार्श्वतःकृत्य । नानाकृत्य । द्विधाकृत्य । [ प्र पूर्वक कृ धातु से 'समानकर्तृकयोः पूर्वकाले' सूत्र से क्त्वा-प्रत्यय और इसका

**नानाकृत्य । द्विधाकृत्य ।**

**समास इति किम् ? कृत्वा । हृत्वा । अनञ्पूर्व इति किम् ? अकृत्वा । अहृत्वा । परमकृत्वा । उत्तमकृत्वा ।**

**'अनञ्' इति हि नञोऽन्यदनञ् नञ्सदृशमव्ययं परिगृह्यते । तेन नञ् अनव्ययं चानञ् न भवति । स्नात्वाकालकादिषु मयूरव्यंसकादिषु निपातनाल्ल्यबादेशो न भवति ।**

न्यासः

**प्रकृत्येत्यादि ।** 'समानकर्तृकयोः पूर्वकाले क्त्वा', 'कुगतिप्रादयः' इति समासः, 'ह्रस्वस्य पिति कृति तुक्' । **पार्श्वतःकृत्येति ।** 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इति क्त्वा, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासः । **नानाकृत्येति ।** 'नाधार्थप्रत्यये च्व्यर्थे' इति क्त्वा, पूर्ववत्समासः ।

**कृत्वा हृत्वेति ।** एतत् प्रत्युदाहरणम् । अत्र कृत्वाशब्दोऽनञ्पूर्वोऽस्ति; किन्तु समासो न भवतीति ल्यबभावः । **परमकृत्वा, उत्तमकृत्वेति ।** 'सन्महद्' इत्यादिना समासः । कथं पुनरनेन समासः ? कथञ्च न स्यात् ? सामानाधिकरण्याभावात् ? वार्त्तमेतत्; कर्त्तरि क्त्वा विहितः, स एव च परमोत्तमशब्दाभ्यां विशिष्यते, तत् कथं सामानाधिकरण्याभावः ! अथ क्रियाविशेषणत्वं तयोराश्रित्य सामानाधिकरण्याभाव उच्यते, एवमपि 'विशेषणं विशेष्येण बहुलम्' इत्यतो बहुलग्रहणानुवृत्तेरसमानाधिकरण्येऽपि समासो भवति ।

ननु चानञ्पूर्वावितौ समासौ, तत् कथमेतत्प्रत्युदाहरणमुपपद्यते ? इत्याह—**अनञित्यादि ।** अनञिति नायं प्रसज्यप्रतिषेधः; किं तर्हि ? पर्युदासः—नञोऽन्यदनञ् । तत्र नञिवयुक्तन्यायेन नञो यदन्यन्नञ्सदृशमव्ययं तदनञिति परिगृह्यते । तेन कारणेन नञव्ययमनव्ययञ्च परमशब्दादिकमुभयमप्येतदनञ् न भवति, तत्राव्ययेन नञा सादृश्यमस्ति । अत्यन्ताभेदादनव्ययत्वाच्च यथाक्रमम् । तस्माद् यथा अकृत्वा, अहृत्वेत्येतत् प्रत्युदाहरण-

पदमञ्जरी

**पार्श्वतःकृत्येति ।** आद्यादित्वात्सप्तम्यन्तात्तसिः, 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इति क्त्वा, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' 'क्त्वा च' इति समासः । **नानाकृत्य, द्विधाकृत्येति ।** 'नाधार्थप्रत्यये च्व्यर्थे' इति क्त्वा, पूर्ववत्समासः ।

**अकृत्वा, अहृत्वेति ।** हृत्वेत्येतत्प्रत्युदाहरणम्, अत्र कृत्वाशब्दो नञ्सदृशः पूर्वोऽस्ति, समुदायस्तु समासो न भवति । **परमकृत्वेति ।** 'सन्महत्' इत्यादिना समासः, तुमर्थाधिकाराद्भावे क्त्वा प्रत्ययः । पारम्यमपि क्रियाया एव विशेषणमिति सामानाधिकरण्यम् ।

कथं पुनरिदं प्रत्युदाहरणम्, यावता भवत्येवायमनञ्पूर्वः समासः ? इत्यत आह—**अनञिति हीति ।** 'अनञ्' इति पर्युदासोऽयम्, तत्र नञिवयुक्तन्यायेन नञ्सदृशमव्ययं परिगृह्यते, तेन नञ् अनव्ययं च परमशब्दादिकमनञ् न भवति, **अभेदादनव्ययत्वाच्च । स्नात्वाकालक इत्यादिष्विति ।** आदिशब्देन पीत्वास्थिरक इत्येवमादेर्ग्रहणम्, यत्रोत्तरपदे क्रिया नोपादीयते तत्राध्याहृतक्रियापेक्षः क्त्वाप्रत्ययः । सापेक्षत्वेऽपि निपातनात्समासः । **निपातनाल्ल्यबादेशो न भवतीति ।** न प्राकरणिकः समास एव तत्र निपात्यते, किं तर्हि ? यस्य लक्षणं नास्ति तत्सर्वमिति भावः ।

भावबोधिनी

ल्यप् = य आदेश होता है—प्रकृ + य, "ह्रस्वस्य पिति कृति तुक्" सूत्र से तुक् = त् आगम । क्त्वा प्रत्ययान्त अव्यय होने से सु आदि का लोप हो जाता है । ]

समास में—इसका क्या प्रयोजन है ? कृत्वा हृत्वा । [ समास न होने से ल्यप् नहीं होता है । ] नञ्पूर्वक नहीं होने पर—इसका क्या फल है ? अकृत्वा । अहृत्वा । परमकृत्वा । उत्तमकृत्वा । [ इन समासों में नञ् पूर्व है । अतः ल्यप् आदेश नहीं होता है । ]

[ परमकृत्वा, उत्तमकृत्वा—इनमें तो नञ् का श्रवण नहीं है ? इसका उत्तर दे रहे हैं— ] 'अनञ्' यह नञ् से भिन्न अनञ् है, नञ् के सदृश अव्यय का ग्रहण होता है । इस कारण नञ् तथा अनव्यय ये अनञ् नहीं होते हैं । [ अर्थात् नञ् ही होते हैं । ] स्नात्वाकालकः आदि मयूरव्यंसकादि शब्दों में निपातन के बल से ल्यप् आदेश नहीं होता है ।

**अथ वा—'समासे' इति निर्धारणे सप्तमी। तेन क्त्वान्तः समास एव परिगृह्यते। स च 'येन विधिस्तदन्तस्य' (व्या० प० ३) इत्यनेन तदन्तविधिना, न तु 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' (व्या०प० १२६)**

**न्यासः**

मुपपन्नरूपम्, एवं परमकृत्वा, उत्तमकृत्वेत्यपि। यदि तर्हि अनञिति नञ्सदृशमव्ययं परिगृह्यते—स्नात्वा-कालकः, पीत्वास्थिरक इत्यादावपि स्यात्, अस्ति ह्यत्रापि नञ्सदृशमव्ययं पूर्वपदम्; क्त्वाप्रत्ययस्याव्यय-त्वादित्याह—**स्नात्वाकालक इत्यादि**। मयूरव्यंसकादिषु समाससंज्ञार्थमेते समुदायाः पठ्यन्ते, तस्मान्नि-पातनाल्ल्यबादेशो न भवति।

**अथ वेत्यादि**। 'समासे' इत्यधिकरणसप्तम्यां सत्यां स्नात्वाकालकादिषु ल्यबादेश-प्रसङ्गो भवतीति। तथा ह्यधिकरणसप्तम्यामयमर्थो भवति—समासेऽनञ्पूर्वे यः क्त्वा वर्त्तते तस्य ल्यब् भवति। एवञ्च सति देश-विशेषपरिग्रहाभावाद् यथा समासस्यान्ते वर्त्तमानस्य क्त्वो ल्यब् भवति, तथा मध्येऽपि स्यात्। तस्मान्न चेयम-धिकरणसप्तमी, किं तर्हि ? निर्धारणसप्तमी। तस्मिंश्च पक्षे 'समासे' इति जातावेकवचनम्, यथा—'कारके' इति। अथ वा—'व्यत्ययो बहुलम्' इति सुब्व्यत्ययेन बहुवचनस्य स्थान एकवचनं वेदितव्यम्। **तेनेत्यादि**। यतो निर्धारण इयं सप्तमी, तेन क्त्वान्तः समास एव गृह्यते, न समासावयवः—स्नात्वेति। निर्धारणं हि समानजातीय-स्यैव भवति, यथा कृष्णा गवां सम्पन्नक्षीरतमेत्युक्ते गौरेव निर्धार्यमाणा प्रतीयते, तथात्रापि 'समासेऽनञ्पूर्वे' इत्युक्ते समासेष्वनञ्पूर्वेषु मध्ये यः क्त्वान्तः समासः स एव निर्धार्यमाणः प्रतीयते। तेन समासस्यैव क्त्वान्तस्य

**पदमञ्जरी**

**निर्धारणे सप्तमीति**। जातावेकवचनम्, वचनव्यत्ययो वा। **समास एव निर्धार्यत' इति**। निर्धारणस्य तुल्यजातीयापेक्षत्वात्। कथं पुनः समासः क्त्वान्तो भवति, यावता 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तद-न्तस्य ग्रहणम्' (भो० प० ७) न च समासात् क्त्वा विहितः ? अथ 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्' (व्या० प० १२६) समासस्य क्त्वान्तता ? एवमपि प्रकृत्य, पार्श्वतःकृत्येत्यादावेव स्यात्, उच्चैःकृत्येत्येवमादौ तु न स्यात्; अगतित्वादकारकत्वाच्च ? इत्याशङ्क्याह—**स चेति**। तत्र 'निर्दिश्यमानस्यादेशा भवन्ति' (व्या प० १०६) इति क्त्वामात्रस्यैव ल्यब्भवति। ननु प्रत्ययविषये पूर्वेण परिभाषाद्वयेन तदन्तविधिव्यवस्था, न तु 'येन विधिस्तदन्तस्य' इत्यनेन ? तत्राह—**तथा चेति**। कथं पुनरेतज्ज्ञापकम् ? इत्याह—**गतिकारकपूर्वस्य त्विति**। कथं नास्ति प्रसङ्गः ? इत्याह—**नञ्न गतिरिति**। 'अदो जग्धिर्ल्यप्ति किति' इत्यत्र यदुक्तम्—'जग्धौ सिद्धमन्त-रङ्गत्वात्' इत्यादिना, तत्स्मारयति—**प्रधाय, प्रस्थायत्येवमादिष्विति**।

**भावबोधिनी**

[ भाव यह है—'अनञ्' में नञ् है यह प्रसज्यप्रतिषेध न होकर पर्युदास है 'नञ् से युक्त और इव से युक्त स्वसदृश तथा स्वभिन्न का ग्रहण कराता है' इस न्याय से अव्यय नञ् का अव्ययत्वेन सादृश्य लेना चाहिए। नञ् = अव्यय होता है तो अनञ् = अनव्यय परम आदि तथा नञ्—ये दोनों नहीं हैं। नञ् तथा अव्यय को छोड़ कर जो है वह सब अनञ् है। अतः परमकृत्वा आदि भी नञ्पूर्व ही होते हैं। ल्यब नहीं होता है। ]

अथवा 'समासे' यह निर्धारण अर्थ में सप्तमी है। इस कारण [ समासों के मध्य में जो ] क्त्वा-प्रत्ययान्त समास ही लिया जाता है। [ 'स्नात्वाकालकः' आदि में तो क्त्वाप्रत्ययान्त समास के आदि में है, अतः इसका ल्यप् नहीं होता है। निपातन की कल्पना की आवश्यकता नहीं है। ] और वह 'जिस विशेषण से विधि होती है वह तदन्त की होती है—'इस परिभाषा के द्वारा तदन्तविधि से [ क्त्वाप्रत्ययान्त के ही क्त्वा का ल्यप् होता है ], न कि 'कृदन्त के ग्रहण में गतिपूर्वक और कारकपूर्वक का भी ग्रहण होता है।" [ अतः स्नात्वाकालकः आदि में कोई दोष नहीं है। ] और इसीलिए

१. परिगृह्यते—अयं पाठः काशिकायाम्।

**इति । तथा च 'अनञ्पूर्वे' इत्युच्यते । गतिकारकपूर्वस्यैव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति, नञ्न गतिः, न च कारकमिति (म० भा० ।**

**प्रधाय, प्रस्थायेत्यादिषु हिप्रभृतीन् 'अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधत एव' (व्या० प०)–इति**

**न्यासः**

ग्रहणमिति तस्यैव ल्यबादेशेन भवितव्यम्,, न च स्नात्वाकालकादिषु क्त्वान्तः समासः । स्नात्वाकालकादयो यद्यपि समासाः, न तु क्त्वान्ता इति ल्यबादेशो न भवति । स च समासः 'येन विधिस्तदन्तस्य' इति तदन्तविधिना क्त्वान्तो गृह्यते । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणेन वा प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं न शक्यते वक्तुम् । न हि क्त्वाप्रत्ययः समासादुत्पद्यते । तत्र यदि कृद्ग्रहणपरिभाषया तदन्तो गृह्यते, नानाकृत्येत्यत्र न स्यात्, न ह्ययं गतिकारकपूर्वः । इहैव तु स्यात्—प्रकृत्य, पार्श्वतःकृत्येति । अस्ति ह्यत्रापि गतिः कारकञ्च पूर्वोऽवयवः, 'येन विधिस्तदन्तस्य' इत्यनेन तदन्तविधौ गम्यमाने सर्वत्र भवतीति मन्यमान आह—**स चेत्यादि ।** अत्रैवोपपत्तिमाह—**तथा चेत्यादि ।** यस्माद् 'येन विधिस्तदन्तस्य' इत्यनेन क्त्वान्तः समासो गृह्यते, एवञ्च कृत्वा 'नञ्पूर्वे' इत्युच्यते । 'येनविधिस्तदन्तस्य' इत्यनेन हि सामान्येन तदन्तविधौ सति 'नञ्पूर्वस्यापि प्रसज्येत । तस्मात् तन्निवृत्त्यर्थम्—'अनञ्पूर्वे' इति युक्तमुक्तम् । यदि कृद्ग्रहणपरिभाषया क्त्वान्तः समासो गृह्यते, तदा गतिकारपूर्वस्यैव ग्रहणं स्यात् । एवञ्च गतिकारकपूर्वस्य ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति । **नञ् न गतिर्न च कारकमिति ।** अतो हेतोर्यथैव परमकृत्वेत्यत्र प्रसङ्गो नास्ति, परमशब्दस्यागतित्वादकारकत्वाच्च; तथाऽकृत्वेत्यत्रापि, नञोऽगतित्वादकारकत्वाच्च । ततश्च प्रसङ्गाभावाद् 'अनञ्पूर्वे' इति न वक्तव्यं स्यात्, उक्तञ्च । तदेतस्मादनञ्पूर्वे इति वचनाद् 'येन विधिस्तदन्तस्य' इत्यनेन क्त्वान्तः समासो गृह्यते, न तु कृद्ग्रहणपरिभाषयेति स्थितमेतत् ।

**प्रधायेति**—अत्रान्तरङ्गत्वाद् 'दधातेर्हिः' इति हिः प्राप्नोति । **प्रस्थायेति**—अत्रापि 'द्यतिस्यतिमास्थामित्ति किति' इतीत्वम् । **प्रखन्येति**—'जनसनखनाम्' इत्यात्वम् । **प्रणम्येति**—'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । **आपृच्छ्येति**—'च्छ्वोः शूडनुनासिके च' इति शत्वम् । **प्रतिदीव्येति**—तेनैवोठ् । **प्रपठ्येति**—'आर्धधातुकस्येड् वलादेः' इतीट् । अन्तरङ्गत्वं पुनरेषामेकपदाश्रयत्वात् । ल्यबादेशस्य तु बहिरङ्गत्वम्, समर्थानेकपदाश्रयसमासापेक्षत्वात् । हिप्रभृतिषु कृतेषु प्रधायेत्यादीनि रूपाणि न सिध्यन्ति ? इति यश्चोदयेत्, तं प्रत्याह—**प्रधायेत्यादि । ज्ञापितमेतदिति ।** 'अदो जग्धिर्ल्यप्ति किति' इत्यत्र ।

**पदमञ्जरी**

के पुनरन्तरङ्गा विधयः ? हित्वदत्वात्वेत्वेत्वदीर्घत्वशूडिटः । हित्वम्—'दधातेर्हिः', हित्वा, प्रधाय । दत्वम्—'दो दद्घोः', दत्वा, प्रदाय । आत्वम्—'जनसनखनां सञ्झलोः', खात्वा, प्रखाय, प्रखन्य । इत्वम्—'द्यतिस्यतिमास्थामित्ति किति', स्थित्वा, प्रस्थाय । ईत्वम्—'घुमास्थागापाजहातिसां हलि' पीत्वा, प्रपाय । दीर्घत्वम्—'अनुनासिकस्य क्विझलोः क्ङिति', शान्त्वा, प्रशम्य । शू—'च्छ्वोः शूडनुनासिके च', पृष्ट्वा, आपृच्छ्य । ऊठ्—द्यूत्वा । इट्—'उदितो वा', देवित्वा, प्रदीव्य, अत्रेटि सति 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधाद् गुणः स्यात् ।

**भावबोधिनी**

'अनञ्पूर्वे' ऐसा कहा गया है । यदि गतिपूर्वक और कारकपूर्वक का ही ग्रहण होता है तब तो नञ्पूर्वक [के क्त्वा के ल्यप्] का प्रसङ्ग ही नहीं है क्योंकि नञ् न तो गतिसंज्ञक है और न कारक है । [ इसलिये 'अनञ्पूर्वे' इस निर्धारणसप्तमी होने से और 'येन विधिस्तदन्तस्य' इस परिभाषा से तदन्तविधि के कारण क्त्वान्त का ही ग्रहण होने से कोई दोष नहीं रहता है ।]

[ 'धा' के स्थान पर 'दधातेर्हिः' से हि आदेश तथा 'स्था' के आ का 'द्यतिस्यतिमास्थामित्ति किति' सूत्र से ई आदेश को ल्यप् बाधित कर लेता है । इसी प्रकार अन्य आदेशों से पहले ल्यप् ही हो जाने से वे आदेश नहीं हो पाते

ज्ञापितमेतत् ॥

३२१४. क्त्वापि छन्दसि ॥ ३८ ॥ (३५६०)

समासेऽनञ्पूर्वे 'क्त्वा' इत्येतस्य 'क्त्वा' इत्ययमादेशो भवति, अपिशब्दाल्ल्यबपि भवति छन्दसि विषये। 'कृष्णं वासो यजमानं परिधापयित्वा' (काठ० सं० ६.८) 'प्रत्यञ्चमर्कं प्रत्यर्पयित्वा' (अ० वे० २.१२.५५)। ल्यबपि भवति—'उद्धृत्य जुहोति' (काठ० सं० ६.८)।

'वा छन्दशि' इति[1] नोक्तम्, सर्वोपाधिव्यभिचारार्थम्। तेनासमासे ल्यब्भवति—अर्च्य तान् देवान् गतः।

न्यासः

अथ पूर्वग्रहणं किमर्थम्, नानञोत्येवमुच्येत ? नैवं शक्यम्; अनञोत्युच्यमाने बहुव्रीहिरयं स्याद्—अविद्यमानो नञ् यत्रासावनञिति। ततश्चेहापि न स्यात्—स्त्रैणीकृत्येति। स्त्रिया इदं स्त्रैणम्, 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्। तदन्ताद् 'अभूतद्भावे' इत्यादिना च्विः, 'अस्य च्वौ' इतीत्वम्, 'कुगतिप्रादयः' इति समासः। पूर्वग्रहणे तु सति पूर्वशब्द आदिभूतावयवमाचष्टे। तेन यत्र समासादिभूतो नञ्, तत्र न ल्यपा भवितव्यम्, तत्र स्त्रैणीकृत्येत्र भवत्येव। न ह्यत्र समासादिभूतो नञवयवः, किं तर्हि ? मध्यभूतः।

लित्करणम्—प्रचिकीर्ष्येत्यत्र लित्प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्। प्रकृत्येत्येवमादावुदात्तार्थं लित्करणं नोपपद्यते, धातुस्वरेणैव पूर्वस्योदात्तत्वं सिध्यति। तस्मादनेकाजवयव एव धातुर्लित्त्वं प्रयोजयति॥ ३७॥

क्त्वापि च्छन्दसि। परिधापयित्वा, प्रत्यर्पयित्वेति। दधातेः, अर्त्तेश्च हेतुमण्णिच् 'अर्त्तिह्री' इत्यादिना पुक्, 'पुगन्तलघूपधस्य' इति गुणः, क्त्वा, इट्, अयादेशः। उद्धृत्येति। 'हृञ् हरणे', 'झयो होऽन्यतरस्याम्' इति हकारस्य धकारः।

पदमञ्जरी

पूर्वग्रहणं किमर्थम्, 'अनञ्' इत्येवोच्यमाने बहुव्रीहिः स्यात्—अविद्यमानो नञ् यस्मिन्नसावनञिति, तथा च स्त्रैणीकृत्येत्यत्रापि प्रतिषेधः स्यात्। पूर्वग्रहणे तु सति, तस्य नियतदेशावयववचनत्वान्नायं दोषः। लित्करणं प्रचिकीर्ष्येत्यत्र प्रत्ययात्पूर्वस्य स्वरार्थम्। प्रकृत्येत्यादौ तु धातुस्वरेणैव सिद्धम्। पित्करणं तुगर्थम् ॥ ३७ ॥

क्त्वापि छन्दसि। अपिशब्दाल्ल्यबपीति। स च समासेऽसमासे च भवति, अप्राप्तिविषये ल्यपः

भावबोधिनी

है— ] 'प्रधाय, प्रस्थाय—इत्यादि में 'हि' आदि अन्तरङ्ग भी विधियों को बहिरङ्ग भी ल्यप् बाधित ही कर लेता है' यह ज्ञापित है।

[ 'अदो जग्धिर्ल्यप्ति किति' इस सूत्र में यह श्लोक लिखते हुए ल्यप् की बलवत्ता प्रतिपादित है—

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥ (काशिका २।४।३६)

अतः कोई अनुपपत्ति नहीं है। ] ॥ ३७ ॥

अनञ्पूर्वक समास में 'क्त्वा' इसका 'क्त्वा' यह आदेश होता है। 'अपि' शब्द के बल से ल्यप् भी होता है वेदविषय में। उदा० कृष्णं वासो यजमानं परिधापयित्वा। [ परिउपसर्ग के साथ भी ल्यप् नहीं हुआ है। ] प्रत्यञ्चमर्कं प्रत्यर्पयित्वा। [ प्रति उपसर्ग के साथ भी ल्यप् नहीं हुआ है। ] ल्यप् भी होता है—उद्धृत्य जुहोति। [ उत् हृ + क्त्वा = ल्यप्, तुक् आगम। ] "झयो होऽन्यतरस्याम्" से 'ह' का धकार होता है। ]

"वा च्छन्दसि" (वेद में विकल्प से होता है)—ऐसा नहीं कहा क्यों सभी उपाधियों के व्यभिचार के लिये।

---

१–१. पाठोऽयं कस्मिंश्चित्पुस्तके नास्ति।

छन्दोऽधिकारः 'आज्जसेरसुक्' (७.१.५०) इति यावत्'॥

**३२१५. सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥ (३५६१)**

छन्दसि विषये सुपां स्थाने—सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच्, आल्—इत्येते आदेशा भवन्ति।

सु— 'अनृक्षरा ऋजवः सन्तु पन्थाः (ऋ० १०.८४.२३) पन्थान इति प्राप्ते।

❋ सुपां सुपो भवन्तीति वक्तव्यम् ❋ (ऋ० १०.८५.२३)। धुरि दक्षिणायाः (ऋ० १.१६४.१९)। दक्षिणायामिति प्राप्ते।

❋ तिङां तिङो भवन्तीति वक्तव्यम् ❋ (म० भा० ७.१.३९)। चषालं ये अश्वयूपाय तक्षति। (ऋ० १.१.६१६)। तक्षन्तीति प्राप्ते।

**न्यासः**

'वा छन्दसि' इति वक्तव्ये 'क्त्वापि च्छन्दसि' इति वचनमसमासेऽपि यथा स्यात्—अर्च्य तान् देवान् गत इति ॥ ३८ ॥

**सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः। पन्था इति।** पथिन्नित्येतस्माज्जस्, तस्य सुः, 'पथिमथ्यृभुक्षामात्' इत्यात्त्वम्, 'इतोऽत्सर्वनामस्थाने' इतीकारस्यात्त्वम्, 'थो न्थः' इति न्थादेशः।

**सुपाम्**—इत्यादिना सुपां स्थाने सुप आदेशो भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्रादपिशब्दोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन सुपामन्येऽपि सुपो भवन्ति। **धुरि दक्षिणाया इति।** सप्तम्येकवचनस्य स्थाने पञ्चम्येकवचनम्, षष्ठ्येकवचनं वा।

**तिङामित्यादि।** तिङाञ्च तिङो भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्ववदेव वक्तव्यम्।

**पदमञ्जरी**

प्रापणार्थत्वादपिशब्दस्य, अन्यथा 'वा छन्दसि' इत्येव वाच्यं स्यात्, तथा च छन्दोविधानमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते-आज्येनाक्षिणी अज्येत्यादि ॥ ३८ ॥

**सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः।** सुशब्द आदेश उच्यमाने अन्ये सुपो न प्राप्नुवन्ति, तस्मात् सुग्रहणमपनीय सुब्ग्रहणं कर्त्तव्यमित्याह—**सुपां सुप इति। तिङां तिङ इति।** एतच्च 'व्यत्ययो बहुलम्' इति सिद्धम्। सुपां सुप इत्ययमपि तस्यैव प्रपञ्चः। **तक्षवन्तीति प्राप्त** इति तु युक्तः पाठः।

**भावबोधिनी**

इसलिए असमास में भी ल्यप् होता है—"अर्च्य तान् देवान् गतः।" [ वास्तव में ल्यप् का विकल्प लौकिक प्रयोगों में भी प्राचीन काल में था। बाल्मीकिरामायण में ऐसे प्रयोग मिलते हैं। ]

'छन्दसि' इसका अधिकार "आज्जसेरसुक्" (७।१।५०) सूत्र तक चलेगा ॥ ३८ ॥

वेदविषय में सुपों के स्थान पर—सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याज्, आल्—ये इतने आदेश होते हैं। उदा० सु—अनृक्षराः ऋजवः सन्तु पन्थाः। यहाँ 'पन्थानः' इस रूप के प्राप्त रहते अर्थात् जस् का सु होता है। [ अतः बहुवचन में भी 'सु' ही होता है। ]

❋ सुपों के सुप् आदेश होते हैं—ऐसा कहना चाहिए। ❋ उदा० धुरि दक्षिणायाः। यहाँ 'दक्षिणायाम्' ऐसा [ सप्तमी का रूप ] प्राप्त रहते [ ङि के स्थान पर ङस् यह सुप् आदेश हो जाता है ]।

❋ तिङ् के तिङ् आदेश होते हैं—ऐसा कहना चाहिए।❋ उदा० चषालं ये अश्वयूपाय तक्षति। यहाँ 'तक्षन्ति' ऐसा प्राप्त रहते [ 'झि' के स्थान पर 'ति' तिङ् होता है ]।

---

१. 'हविर्धानाय' इति पाठा०।

लुक्—'आर्द्रे चर्मन्', (तै० सं० १.५.९.३) लोहिते चर्मन् । चर्मणीति प्राप्ते । हविर्धाने' यत्सुन्वन्ति तत्सामिधेनीरन्वाह । यस्मिन्सुन्वन्ति तस्मिन्सामिधेनीरिति प्राप्ते ।

पूर्वसवर्णः—'धीती' (ऋ० १.१६४.८) । मती । 'सुष्टुती' (ऋ० २.३२.४) । धीत्या, मत्या, सुष्टुत्या इति प्राप्ते ।

आ—'उभा [द्वा] यन्तारा (तै० सं० ४.६.९.३) । उभौ यन्तारौ इति प्राप्ते ।

आत्—न ताद् ब्राह्मणाद् [ब्राह्मणान्[1]] निन्दामि । तान् ब्राह्मणानिति प्राप्ते ।

**न्यासः**

**आर्द्रे चर्मन्निति** । सप्तम्येकवचनस्य चर्मन्-शब्दाल्लुक् ।

**यदिति** । अत्रापि यच्छब्दात्, तच्छब्दाच्च ।

**धीतीत्यादि** । धीति-मति-सुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्ण इकारः, उभयोरकः सवर्णे दीर्घत्वम् ।

**उभा इति** । उभशब्दात्प्रथमाद्विवचनस्याकारः । 'प्रथमयोः पूर्वसवर्णः' इत्येकादेशः ।

**न ताद् ब्राह्मणाद् निन्दामीति** । तच्छब्दाद् ब्राह्मणशब्दाच्च द्वितीयैकवचनस्यात् । निशब्दे परतः 'यरोऽनुनासिकेऽनुनासिको वा' इति तकारस्य नकारादेशः[1] ।

**पदमञ्जरी**

**आर्द्रे चर्मन्निति** । ननु च पूर्वसवर्णेनाप्येतत्सिद्धम्, कथम् ? चर्मन्+इ इति स्थिते इकारस्य पूर्वसवर्णो नकारः, तत्र परतः 'स्वादिषु' इति पदसंज्ञायां सत्यां पूर्वस्य नकारस्य लोपः, तत्रायमप्यर्थः—'न ङिसम्बुद्ध्योः' इत्यत्र ङिग्रहणं न कर्त्तव्यं भवति, अप्रातिपदिकत्वादेव विभक्तिनकारस्य लोपाप्रसङ्गात्, पूर्वस्य तु नकारस्येष्ट एव लोपः ? नैतदस्ति; अत्र हि पूर्वसवर्णो भवन्नान्तर्यतो निरनुनासिकस्य निरनुनासिको दकार एव स्यात् । अस्तु, संयोगान्तलोपो भविष्यति ? नात्र संयोगान्तलोपः प्राप्नोति, 'स्वादिषु' इति पदसंज्ञायां सत्यां पूर्वनकारस्य लोपे सति असंयोगान्तत्वात् । नलोपो हि संयोगान्तलोपे सिद्धः । एवं तर्हि 'न ङिसम्बुद्ध्योः' इत्यत्र ङिग्रहणं करिष्यते, तत्र नलोपाभावे संयोगान्तलोपः ? तदेवमस्यान्यथासिद्धत्वादुदाहरणान्तरमाह—**हविर्धाने यत्सुन्वन्तीति** । यत्+इ इति स्थिते अत्र यदि पूर्वसवर्णो दकारः स्यात्त्यदाद्यत्वे सति स्थानिवद्भावात्स्मिन्भावः प्राप्नोति । तस्मादत्र लुगेव कर्त्तव्यः । अनेकाल्सु च भ्यामादिषु अन्त्यस्य पूर्वसवर्णे पूर्वभागस्य श्रवणाप्रसङ्गः, तस्मात्तत्रापि लुगेव कर्त्तव्यः ।

**धीतीत्यादि** । धीति-मति-सुष्टुतिशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्ण इकारः, सवर्णदीर्घत्वम् ।

**न ताद् ब्राह्मणादिति** । तच्छब्दाद् ब्राह्मणशब्दाच्च शस्, तस्यादादेशः, 'न विभक्तौ तुस्माः' इति

**भावबोधिनी**

लुक्—आर्द्रे चर्मन्, लोहिते चर्मन् । यहाँ 'चर्मणि' ऐसा प्राप्त रहते [ ङि का लुक् होता है ] । हविर्धाने यत् सुन्वन्ति तत्सामिधेनीरन्वाह । यहाँ 'यस्मिन् सुन्वन्ति' और 'तस्मिन् सामिधेनीः' ऐसा रूप प्राप्त रहते [ङि का लुक् होता है ।]

पूर्वसवर्णदीर्घ—धीती । मती । सुष्टुती । इसमें [ तृतीया एकवचन में टा = आ परे रहते ] धीत्या, मत्या, सुष्टुत्या रूप प्राप्त रहते [ यण् न होकर पूर्वसवर्णदीर्घ होता है ] ।

आ—द्वा यन्तारा । यहाँ 'द्वौ यन्तारौ' ऐसा रूप प्राप्त है । [औ का आ आदेश करने पर उक्त रूप बनते हैं ।]

आत्—न ताद् ब्राह्मणाद् निन्दामि । यहाँ 'तान् ब्राह्मणान्' ऐसा प्राप्त रहते [ 'आत्' आदेश करने पर उक्त रूप बनता है । ]

---

१-१. अनुनासिकवैकल्पिकत्वेन 'ब्राह्मणाद्' इत्यपि साधुः ।

शे—'न युष्मे वाजबन्धवः' ( ऋ० ८.६८.१९) । 'अस्मे इन्द्राबृहस्पती' (ऋ० ४.४९.४) । 'यूयं वयमिति प्राप्ते । यूयादेशः, वयादेशश्च छान्दसत्वान्न भवति ।

या—'उरुया' (मै० ३.७.८) । धृष्णुया । उरुणा, धृष्णुनेति प्राप्ते ।

डा—'नाभा पृथिव्याम्' (अ० वे० ७.६१.१) । नाभौ पृथिव्यामिति प्राप्ते ।

ड्या—'अनुष्ट्या च्यावयतात्' (मै० ४.१३.४.२५) । अनुष्टुभेति प्राप्ते ।

याच्—'साधुया' (ऋ० १०.६६.१२) साध्विति सोर्लुकि प्राप्ते ।

आल्—'वसन्ता यजेत' (मै० २.३.४) । वसन्त इति प्राप्ते ।

**न्यासः**

**युष्मे, अस्मे इति ।** युष्मदस्मच्छब्दाभ्यां परस्य च 'जसः शे' इत्ययमादेशः । शकारः सर्वादेशार्थः । अथेह 'यूयवयौ जसि' इति यूयवयादेशौ कस्मान्न भवति ? इत्याह—**यूयादेश इत्यादि** ।

**उरुया, धृष्णुयेति ।** उरुधृष्णुशब्दाभ्यां परस्य तृतीयैकवचनस्य यादेशः ।

**नाभेति ।** नाभिशब्दात् सप्तम्येकवचनस्य डादेशः । डकारष्टिलोपार्थः ।

**अनुष्टयेति ।** अनुष्टुप्-शब्दात् तृतीयैकवचनस्य ड्यादेशः ।

**साधुयेति ।** साधुशब्दात् परस्य प्रथमैकवचनस्य याजादेशः । चकारोऽन्तोदात्तार्थः । **सोर्लुकि प्राप्त इति ।** याजित्ययमादेशो विधीयत इति शेषः । लुक्प्राप्तिस्तु 'स्वमोर्नपुंसकात्' इत्यनेन ।

**वसन्तेति ।** वसन्तशब्दात् परस्य सप्तम्येकवचनस्यालित्ययमादेशः । लित्करणं लित्प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात् ।

**पदमञ्जरी**

इत्संज्ञाप्रतिषेधः । 'या देव विप्नतात् त्वा महान्तम्' इति बह्वृचाः । **यूयं वयमिति प्राप्त इति ।** प्रमादपाठोऽयम्, तथा हि—'न युष्मे बाजबन्धवः' (ऋ० ८.६८.१९) इत्यत्र मन्त्रे ऋक्षाश्वमेधनाम्नो राज्ञोर्दानं स्तूयते, व्यत्ययेन द्वयोर्बहुवचनम्, बाजमित्यन्ननाम, अन्नप्रदानेन सर्वेषां बन्धवस्तेषां सम्बोधनं हे बाजबन्धवः । युष्मे युष्मासु अधीत्यस्यानेन सम्बन्धः, स च सप्तम्यर्थानुवादी । निनित्सुश्च निन्दनशीलोऽपि मर्त्यो युष्मासु अवद्यं न धारयति नावधारयति, अवद्याभावादित्यर्थः । **'अस्मे इन्द्राबृहस्पती'** (ऋ० ४.४९.४) इत्यत्रापि रयिं धत्तमिति क्रिया, दधातिश्च दानार्थः । [1]तस्माद्युष्मासु अस्मभ्यमिति युक्तः पाठः । **यूयादेश** इत्याद्यपि न पठितव्यम्[1] ।

**अनुष्टुभेति प्राप्त इति ।** अध्रिगुप्रैषे तु ता अनुष्ट्योच्यावयतादिति अनुपूर्वात्तिष्ठतेः 'आतश्चोपसर्गे' इत्यङ्, अनुष्ठानमनुष्ठा, तयाऽनुष्ठ्या ।

**भावबोधिनी**

शे—युष्मे बाजबान्धवः । अस्मे इन्द्राबृहस्पती । यहाँ क्रमशः 'यूयम्' 'वयम्' [वास्तव में 'युष्मासु अस्मभ्यम्'] रूप प्राप्त रहते उक्त रूप होते हैं । [ इनमें 'जस्' सम्पूर्ण का आदेश करने के लिए 'शे' इसके शकार की इत्संज्ञा है । [ टिलोप हो जाने पर युष्म+ए, अस्म्+ए ] छान्दस होने के कारण 'यूय' 'वय' आदेश नहीं होते हैं ।

या—उरुया । धृष्णुया । यहाँ 'उरुणा' 'धृष्णुना' इन रूपों के प्राप्त रहते ['या' आदेश होने से उक्त रूप बनते हैं] ।

डा—नाभा पृथिव्याम् । यहाँ 'नाभौ पृथिव्याम्' ऐसा रूप प्राप्त रहने पर [ ङि का 'डा' आदेश ड् की इत्संज्ञा, डित् होने से टिलोप ] ।

ड्या—अनुष्ट्योऽच्च्यावतात् । यहाँ 'अनुष्टुभा' ऐसा रूप प्राप्त रहने पर 'ड्या' आदेश [ डित् होने से 'अनुष्टुप्' की टि का लोप—'अनुष्ट्या' बनता है । ]

याच्—साधुया । 'साधु' यह रूप सुलुक् करने पर प्राप्त रहते [ 'याच्' = या आदेश होने से उक्त रूप बनता है । ]

१-१. अत्र 'युष्मासु' 'अस्मभ्यम्' इत्येवोचितः पाठः, पदमञ्जर्यां सिद्धान्तकौमुद्यादौ तथैव पाठदर्शनात् ।

❀ इयाडियाजीकाराणामुपसंख्यानम् ❀ (म० भा० ७.१.३९ वा० १)। इया—'उर्विया [परिज्मन्] परिधानम्' (ऋ० १.९७.२)। दार्विया। उरुणा, दारुणेति प्राप्ते। डियाच्—सुक्षेत्रिया॥ सुगात्रिया। सुक्षेत्रिणा, सुगात्रिणेति प्राप्ते। ईकारः—'दृतिं न शुष्कं सरसी शयानम्' (ऋ० ७.१०.३.२)। सरसि शयानमिति प्राप्ते।

❀ आङयाजयारामुपसंख्यानम् ❀ (वा० २)। आङ्—प्रबाहवा (ऋ० २.२८.२)। [1]प्रबाहुनेति प्राप्ते। अयाच्—'स्वप्नया सचसेजनम्' (अ० ५.७.८)। स्वप्नेनेति प्राप्ते। आयर्—सिन्धुमिव नवया (ऋ० १.९७.८)। नावेति प्राप्ते[2]॥

**न्यास**

**उपसंख्यानमिति**। प्रतिपादनमस्यार्थः। उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं त्वपिशब्दमाश्रित्य कर्त्तव्यम्। **उर्विया, दार्वियेति**। उरुदारुशब्दाभ्यां परस्य तृतीयैकवचनस्येयादेशः। **सुक्षेत्रियेति**। सुक्षेत्रिन्नित्यादेर्मत्वर्थायेनिप्रत्ययान्तात् परस्य तृतीयैकवचनस्य डियाजादेशः। डकारष्टिलापार्थः। चकारोऽन्तोदात्तार्थः। **सरसी इति**। सरःशब्दात् सप्तम्येकवचनस्य ईकारः। **प्रबाहवेति**। प्रबाहुशब्दात् तृतीयैकवचनस्याङादेशः, 'घेर्ङिति' इति गुणः, अवादेशः। ननु च 'ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत् स्यात्तच्च विद्यात्तदादौ' इत्युक्तम्, न चेहादौ ङकारः, तत् कथं गुणः? ङित्करणसामर्थ्याद् भविष्यतीत्यदोषः। **स्वप्नयेति**। स्वप्नशब्दात् परस्य तृतीयैकवचनस्यायाच्, 'अतो गुणे' पररूपत्वम्। चकारः स्वरार्थः। **नावयेति**। नौशब्दात् परस्य तृतीयैकवचनस्यायारादेशः। रेफः 'उपोत्तमं रिति' इत्युपोत्तमाकारस्योदात्तत्वार्थः॥ ३९॥

**पदमञ्जरी**

**प्रबाहवेति**। 'घेर्ङिति' इति गुणः। ननु 'ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ' इत्युक्तम्? सत्यम्; ङित्करणसामर्थ्यात्तु गुणः। **प्रबाहुनेति प्राप्त इति**।[1] **बाहुनेति** तु युक्तः पाठः प्रशब्दस्याख्यातेन सम्बन्धनात्। अयाचोऽकारः 'सुपि च' इति दीर्घनिवृत्त्यर्थः॥ ३९॥

**भावबोधिनी**

आल्—वसन्ता यजेत। यहाँ 'वसन्ते' ऐसा रूप प्राप्त रहते [ आल् आदेश करने से उक्त रूप बनता है। ]

❀ इया तथा डियाच् और ईकार आदेश कहना चाहिए। ❀ इया का उदा० उर्विया परिज्मन्। दार्विया। इनमें 'उरुणो 'दारुणा' इन रूपों के प्राप्त रहते [ इया आदेश उरु+टा = इया, यण्, दारु+टा = इया, यण् ] डियाच्—सुक्षेत्रिया। सुगात्रिया। सुक्षेत्रिणा, सुगात्रिणा—इनके प्राप्त रहने पर [ डियाच् आदेश, डित् होने से टि = का लोप सुक्षेत्र् + इया, सुगात्र् इया ] ईकार—दृतिं न शुष्कं सरसी शयानम्'—सरसि शयानम् ऐसा रूप प्राप्त रहते [ ईकार आदेश करने पर उक्त ईकारान्त 'सरसी' रूप बनता है। ]

❀ आङ्, अयाच् और अयार्—का उपसंख्यान करना चाहिए।❀ उदा० आङ्—प्र बाहवा। 'प्र बाहुना' ऐसा प्राप्त रहते [ टा का आङ् आदेश ङित् होने से 'घेर्ङिति' सूत्र से 'उ' का गुण अवादेश—प्र बाहव् आ। ] अयाच्—स्वप्नयवा सच से जनम्। 'स्वप्नेन' ऐसा प्राप्त रहते [ अयाच् करने पर स्वप्न + अया, अ का 'अतो गुणे' सूत्र से पररूप ]। अयार्—'सिन्धुमिव नावया।' 'नावा' ऐसा प्राप्त रहते [ टा का 'अयार्' नौ + अया, आव् आदेश नावया ] [ इसी सूत्र के अनुसार वैदिक प्रयोगों में रूपों की विविधता देखी जाती है। ]॥ ३९॥

---

१—१. प्रादीनामुपसर्गत्वेन क्रियावाचकपदेनैव योगः।

२. 'अयारिति रेफ उपोत्तमं रितीत्युपोत्तमस्योदात्तार्थः'—'अधिकोऽयं पाठ एकत्र।

## ३२१६. अमो मश् ॥ ४० ॥ (३५६२)

'अम्' इति मिबादेशो गृह्यते। तस्य छन्दसि विषये मशादेशो भवति। 'वधीं वृत्रम्' (ऋ० १.१६५.८)। क्रमीं वृक्षस्य शाखाम्'। लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (६.४.७५) इत्यडागमाभावः।

शित्करणं सर्वादेशार्थम्। मकारस्यापि हि मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात्॥

न्यासः

**अमो मश्॥ अमिति मिबादेशो गृह्यत इति।** द्वितीयैकवचनाशङ्कां निराकरोति। द्वितीयैकवचनस्याग्रहणम्; छन्दसि यथादृष्टानुविधानात्। अपिशब्दानुवृत्तेर्वा तदनुवृत्तौ ह्येवं सम्बन्धः क्रियते—अमो मश्च भवति, अपिशब्दात् क्वचिच्छ्रवणमपीति। **वधीमिति।** हन्तेर्लुङ्, 'च्लेः सिच्' सिप्, तस्य 'तस्थस्थ' इत्योदिनाऽम्, तस्य मशादेशः—अकार उच्चारणार्थः, 'लुङि च' इति हन्तेर्वधादेशः, 'आर्धधातुकस्य' इत्यादिनेट्, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः, सवर्णदीर्घत्वम्। **क्रमीमिति।** 'क्रमु पादविक्षेपे'। सर्वं पूर्ववत्। अयमत्र विशेषः—'स्नुक्रमोरनात्मनेपदनिमित्ते' इतीट्। अवधिषम्, अक्रमिषमिति प्राप्ते।

**शित्करणं सर्वादेशार्थमिति।** असति तस्मिन् 'अलोऽन्त्यस्य' स्यादिति भावः। ननु च मकारस्य मकारवचने प्रयोजनं नास्तीत्यन्तरेणापि शकारं सर्वादेशो भविष्यति? इत्याह—**मकारस्येत्यादि।** अस्ति हि मकारविधाने प्रयोजनम्। किं तत्? 'मोऽनुस्वारः' प्राप्नोति, स मा भूदिति। सत्येतस्मिन् प्रयोजने यदि शकारो न क्रियेत, तदाऽन्त्यस्यैव स्यात्, न सर्वस्य। तस्मात् सर्वादेशार्थः शकारः कर्त्तव्यः॥ ४०॥

पदमञ्जरी

**अमो मश्॥ अमिति मिबादेशो गृह्यत इति।** द्वितीयैकवचनस्य ग्रहणं न भवति; छन्दसि दृष्टानुविधानाद्वक्ष्यमाणेषु बाहुल्येन तिङां निर्देशात्। **वधीमिति।** हन्तेर्लुङ्, 'लुङि च' इति वधादेशः, 'च्लेः सिच्', इट्, मिपोऽम्भावः, तस्य मश्—अकार उच्चारणार्थः, 'अस्तिसिचोऽपृक्ते इतीड्, 'इट ईटि' इति सिचो लोपः, सवर्णदीर्घत्वम्।

**शित्करणं सर्वादेशार्थमिति।** अन्यथा हि 'अलोऽन्त्यस्य' इति मकारस्य मकारवचने प्रयोजनाभावात्सर्वादेशो भविष्यति, अत आह—**मकारस्यापीति।** यथा 'मो राजि समः क्वौ' इत्यत्रेति भावः। पञ्चमीनिर्देशाभावात्तु 'आदेः परस्य' इत्येतन्न भवति। अथोच्यते—द्विमकारकोऽयं निर्देशः करिष्यते, तत्रैकस्य संयोगान्तलोपेऽपि वधीमित्यादि सिद्धमिति? एवमपि लाघवे नास्ति विशेषः। किञ्च संयोगान्तलोपस्यासिद्धत्वादपृक्तलक्षण ईट् एव स्यात्। एवं तर्हि यकारादिः करिष्यते, किम्? यकारो न श्रूयते, वलि लुप्तनिर्दिष्टो यकारः? नात्र किञ्चित् प्रमाणमस्ति, तस्माच्छित्करणम्॥ ४०॥

भावबोधिनी

'अम्' यह मिप् का आदेश लिया जाता है। इसका वेदविषय में 'मस्' यह आदेश होता है। उदा० वधीं वृत्रम्। क्रमीं वृक्षस्य शाखाम्। लुङ् में 'बहुलं छन्दस्यमाङ्योगेऽपि' (६।४।७५) इससे अट् आगम का अभाव होता है। [हन् धातु से लुङ् = मिप् अट् आगम का अभाव, मिप् के स्थान पर 'तस्थस्थमिपां तान्तन्तामः' सूत्र से अम् आदेश—हन्+अम्, च्लि और इसका सिच् आदेश, मिप् का मश् आदेश, शित् होने से सर्वादेश, म का अकार उच्चारणार्थ, हन्-स्-म्, 'लुङि च' से 'हन्' का वध आदेश, इट् आगम, 'अस्तिसिचोऽपृक्ते' सूत्र से ईट् आगम, 'इट ईटि' से सिच् का लोप वध इ ई म्, सवर्णदीर्घ—वधीम् 'क्रमीं'—'क्रमु पादविक्षेपे' का लुङ् उत्तमपुरुष का रूप है। पूर्वोक्त सभी प्रक्रिया होती है।]

शित् करना ["अनेकाल्शित् सर्वस्य" से] सम्पूर्ण का आदेश करने के लिये है। मकार का भी मकार आदेश करना अनुस्वार की निवृत्ति के लिये हो सकता है। [भाव यह है कि 'मश्' न करके केवल 'म' किया जाता तो 'अलोऽन्त्यस्य' सूत्र से अन्त्य अर्थात् 'म्' के स्थान पर ही होता। किन्तु ऐसा करने से कोई अन्तर नहीं पड़ता। अतः व्यर्थ होकर सम्पूर्ण 'अम्' का 'म्' हो सकता था। इस शंका का समाधान यह है कि अन्त्य आदेश 'म्' का 'म्' करने

१. 'अवधिषमक्रमिषमिति प्राप्ते'—इत्यधिकं पुस्तकान्तरे।

## ३२१७. लोपस्त आत्मनेपदेषु ॥ ४१ ॥ (३५६३)

आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपो भवति। 'देवा अदुह्र' (मै० ४.२.१)। गन्धर्वाप्सरसो अदुह्र। अदुहतेति प्राप्ते। [1]'दुह्रामश्विभ्यां पयो अघ्न्येयम्' (ऋ० १.६४.२७)। दुग्धामिति प्राप्ते। 'दक्षिणतः शये'। शेत इति प्राप्ते।

अपीत्यधिकारान्न भवति—तत्र आत्मानमनृतं कुरुते।

आत्मनेपदेष्विति किम्? 'वत्सं दुहन्ति कलशं चतुर्बिलम्' (तै० ब्रा० ३.७.४.१६)॥

**न्यासः**

लोपस्त आत्मनेपदेषु। अदुह्रेति। दुहेर्लङ्, अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनतः' इत्यदादेशः, 'बहुलं छन्दसि' इति रुट्, तकारलोपे कृते द्वयोरकारयोः 'अतो गुणे' पररूपत्वम्। दुह्रामिति। लोट्, बहुवचनं झः, टेरेत्वम्, आमादेशः, झादेशस्यातो रुडागमः, पूर्ववच्छपो लुक्, तकारलोपे कृते 'अकः सवर्णे दीर्घः'। शय इति। लट्, एकवचनान्तः, 'शीङः सार्वधातुके गुणः', शपो लुक्। दुहामिति। लोट् एकवचनान्तः, टेरेत्वम्, 'आमेतः' इत्याम्। दुग्धामिति। 'दादेर्धातोर्घः', 'झषस्तथोर्धोऽधः' इति धत्वम्, 'झलां जश् झशि' इति घकारस्य गकारः।

अपीत्यधिकारादित्यादि। 'क्त्वापि छन्दसि' इत्यतोऽपीत्यनुवर्त्तते, तत्रैवमभिसम्बन्धः क्रियते—लोपो भवति श्रवणमपीति; तेन कुरुत इत्यत्र न भवति। करोतेर्गुणे कृते 'अत उत्सार्वधातुके' इत्युत्त्वम्। यदि अपिशब्दानुवृत्तेः क्वचिच्छ्रवणमपि भवति, अत एव हेतोः परस्मैपदेषु न भवतीति किमात्मनेपदग्रहणेन? एवं तर्हि विस्पष्टार्थमात्मनेपदग्रहणम्॥ ४१॥

**पदमञ्जरी**

लोपस्त आत्मनेपदेषु॥ अदुह्रेति। दुहेर्लङ्, 'आत्मनेपदेष्वनतः' इति झस्यादादेशः, 'बहुलं छन्दसि' इति रुट्, तकारस्य लोपे द्वयोरकारयोः 'अतो गुणे' पररूपत्वम्। शये इति। शेते इत्यत्र तलोपे कृते अयादेशः। दुहामिति। लोट्, टेरेत्वम्, 'आमेतः', तलोपः।

अपीत्यधिकारादिति। एवं च 'आत्मनेपदेषु' इति वचनं तस्यैव प्रपञ्चः॥ ४१॥ ४२॥

**भावबोधिनी**

का फल अनुस्वार की निवृत्ति भी हो सकता है। जैसा कि 'मो राजि समः क्वौ' में देखा जाता है। अतः व्यर्थ नहीं है। ज्ञापक नहीं बन सकता। सम्पूर्ण के स्थान पर नहीं हो सकता। इसलिए थित् करना आवश्यक है।]॥ ४०॥

आत्मनेपद प्रत्ययों में जो 'त' है उसका वेदविषय में लोप होता है। उदा० "देवा अदुह्र। गन्धर्वाप्सरसो अदुह्र।" इनमें 'अदुहत' ऐसा प्राप्त रहते ['अदुह्र' होता है।] [दुह+लङ्, अट्, अदादिगणीय होने से शप् का लुक् झ के स्थान पर 'आत्मनेपदेष्वनतः" सूत्र से 'अत' आदेश, 'बहुलं छन्दसि' से रुट् = र् आगम—अदुह् र अत। 'त्' का लोप करने पर दोनों अकारों का पररूप—अदुह्र।] दुह्रामश्विभ्यां पयो अघ्न्येयम्। 'दुग्धाम्' ऐसा प्राप्त रहते ['दुहाम्' होता है]। [दुह् लोट् = त, 'टित आत्मनेपदानां टेरे" सूत्र से टि का एत्व 'दुह् ते' "आमेतः" सूत्र से 'ए' का आम् दुह् त् आम्, त् का लोप—दुहाम्।] दक्षिणत उपशये। उपशेते—यह प्राप्त रहते [उक्त रूप बना है]। [शीङ्+लट् = त, टि का एत्व, ई का गुण शे+ते, त् का लोप, शे+ए, ए का अय् आदेश—शये।]

["क्त्वापि छन्दसि' ७।१।३८ सूत्र से] 'अपि' इसके अधिकार (अनुवृत्ति) के कारण [लोप] नहीं भी होता है—तत्र आत्मानमनृतं कुरुते। [यहाँ 'त्' का लोप नहीं हुआ है।]

आत्मनेपद प्रत्ययों में—इसका क्या फल है? वत्सं दुहन्ति कलशं चतुर्बिलम्। [यहाँ 'दुहन्ति' परस्मैपद के 'त्' का लोप नहीं होता है।]॥ ४१॥

---

१. 'दुहाम्' इति मुद्रितः पाठः।

## ३२१८. ध्वमो ध्वात् ॥ ४२ ॥ (३५६४)

छन्दसि विषये ध्वमो ध्वादित्ययमादेशो भवति । 'अन्तरेवोष्माणं वारयध्वात्' ( मै० ३.४.१३ ) । वारयध्वमिति प्राप्ते ॥

## ३२१९. यजध्वैनमिति च ॥ ४३ ॥ (३५६५)

'यजध्वम्' इत्येतस्य एनमित्येतस्मिन्परतो मकारलोपो निपात्यते वकारस्य च यकारश्छन्दसि विषये । 'यजध्वैनं प्रियमेधाः' (ऋ० ८.२.३७) । यजध्वमेनमिति प्राप्ते ॥

## ३२२०. तस्य तात् ॥ ४४ ॥ (३५६६)

तशब्दस्य लोण्मध्यमपुरुषबहुवचनस्य स्थाने 'तात्' इत्ययमादेशो भवति । 'गात्रंगात्रमस्या नूनं

**न्यासः**

**ध्वमो ध्वात् । वारयध्वादिति ।** वृञो वृङो वा हेतुमण्णिजन्ताद् 'वृञ् आवरणे' इत्यस्माद्वा चुरादिण्यन्ताल्लोट्, तस्य ध्वम्, तस्य ध्वात् । **वारयध्वमिति ।** टेरेत्वे कृते 'सवाभ्यां वामौ' इत्यमादेशः ॥ ४२ ॥

**यजध्वैनमिति च** ॥ ४३ ॥

**तस्य तात् । लोण्मध्यमपुरुषबहुवचनस्येति ।** अथ प्रथमपुरुषस्यैकवचनं कस्मान्न भवति ? छन्दसि यथादृष्टानुविधानात्, अपिशब्दानुवृत्तेर्वा । **कृणुतादिति ।** 'कृवि हिंसाकरणयोः' इत्यस्येदित्वान्नुम्, 'धिन्विकृण्योर

**पदमञ्जरी**

**यजध्वैनमिति च ॥ वकारस्य च यकार इति ।** बह्वृचास्तु वकारमेवाधीयते, तत्र मलोपमात्रं निपात्यते ॥ ४३ ॥

**तस्य तात् ॥ लोण्मध्यमपुरुषबहुवचनस्येति ।** प्रथमपुरुषैकवचनस्य तु ग्रहणं न भवति; छन्दसि

**भावबोधिनी**

वेदविषय में 'ध्वम्' का 'ध्वात्' यह आदेश होता है । उदा० अन्तरेवोष्माणं वारयध्वात् । 'वारयध्वम्' ऐसा प्राप्त रहते [ ध्वम् का ध्वात् आदेश कर देने पर 'वारयध्वात्' ऐसा रूप होता है ] ॥ ४२ ॥

'यजध्वम्' इसका 'एनम्' इसके परे रहते मकारलोप और वकार का यकार वेदविषय में निपातित होता है । उदा० यजध्वैनं प्रियमेधाः । यजध्वमेनम्—यह प्राप्त रहते [यजध्वम्+एनम् ध्वम् के मलोप कर देने पर वृद्धि होती है ।]

विमर्श—काशिकाकार ने प्रस्तुत सूत्र से दो कार्य निपातित किये हैं—(१) म् का लोप और 'व' का 'य' । इस आधार पर काशिकाकार के मत में "यजध्यैनमिति च" ऐसा सूत्राकार होना चाहिए । परन्तु 'व्' का यकार आदेश सम्भवतः कहीं नहीं मिलता है । अतः उनका व् का य् निपातन करना असंगत है । इस विषय में न्यासकार का कोई वक्तव्य नहीं है । पदमञ्जरीकार केवल 'म' लोप निपातन का ही लक्ष्य सूचित करते हैं । इसीलिए सिद्धान्तकौमुदीकार ने स्पष्ट लिखा है "वकारस्य यकारो निपात्यते इति वृत्तिकारोक्तिः प्रामादिकी ।" प्रस्तुत सूत्र की सुबोधिनी व्याख्या में भी इसी प्रकार लिखा है "वृत्तिकारस्तु यजध्यैनमिति पाठं ज्ञात्वा—वकारस्य यकारश्च निपात्यते—इत्याह, तद्दूषयति—वकारस्येत्यादि । लक्ष्ये वकारपाठस्य निर्विवादत्वात् । वेदभाष्येऽपि प्रकृतसूत्रस्य मलोपमात्रपदतोक्तेश्चेति भावः" ॥ ४३ ॥

लोट् मध्यमपुरुष बहुवचन = त के स्थान पर 'तात्' यह आदेश होता है । उदा० गात्रं गात्रमस्यानूनं कृणुतात् । यहाँ 'कृणुत' यह प्राप्त रहते [ 'कृवि हिंसाकरणयोश्च' से इकार इत् होने से 'इदितो नुम् धातोः" से नुम् आगम "धिन्विकृण्व्योर च" सूत्र से 'उ' प्रत्यय, वकार का आकार अन्तादेश, अलोप कृ ण् उ+लोट = थ, "तस्थस्थ" सूत्र से थ का 'त' आदेश, प्रस्तुत सूत्र से 'त' का 'तात्' आदेश—कृणुतात् । ] ऊवध्य गोहं पार्थिवं खनतात् । खनत—ऐसा प्राप्त रहते

कृणुतात्' (मै० ४.३.४.२५)। कृणुतेति प्राप्ते। 'ऊवध्यगोहं पार्थिवं खनतात्' (मै० ४.१३.४.२५)। खनतेति प्राप्ते। 'अस्नारक्षः संसृजतात्' (मै० ४.१३.४.२५)। संसृजतेति प्राप्ते। सूर्यं चक्षुर्गमयतात्' (४.१३.४.२४)। गमयतेति प्राप्ते॥

## ३२२१. तप्तनप्तनथनाश्च॥ ४५॥ (३५६७)

'तस्य' इति वर्त्तते। छन्दसि विषये तस्य स्थाने तप्, तनप्, तन, थन—इत्येते आदेशा भवन्ति। तप्—'शृणोत ग्रावाणः'। शृणुतेति प्राप्ते। 'सुनोत' (ऋ० ७.३२.८)। सुनुतेति प्राप्ते। तनप्—'संवरत्रा दधातन' (ऋ० १०.१०१.५)। धत्तेति प्राप्ते। तन—'जुजुष्टन' (ऋ० ४.३.६.७)। 'जुषतेति प्राप्ते। छान्द-

**न्यासः**

च' इत्युप्रत्ययः, अकारश्चान्तादेशः, अतो लोपः। **संसृजतादिति**। सृजेस्तुदादित्वाच्छः। **गमयतादिति**। णिच्, 'मितां ह्रस्वः'॥ ४४॥

**तप्तनप्तनथनाश्च। शृणोतेरिति**। 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च। पित्त्वे ङित्त्वाभावाद् गुणः। **सुनोतेति**। 'स्वादिभ्यः श्नुः'। **दधातनेति**। दधातेः 'श्लौ' इति द्विर्वचनम्। अत्रापि पूर्ववत् ङित्त्वाभावात् 'श्नाभ्यस्तयोरातः' इत्याकारलोपो न भवति। **धत्तेति**। 'दधस्तथोश्च' इत्यभ्यासदकारस्य धकारः। धातोराकारलोपे कृते 'झलां जश् झशि' इति जश्त्वम्—दकारः, तस्य 'खरि च' इति चर्त्वम्—तकारः। **जुजुष्टनेति**। जुषेः'

**पदमञ्जरी**

दृष्टानुविधानात्। पूर्वोत्तराभ्यां बहुवचनाभ्यां वा साहचर्यात्। **कृणुतादिति**। 'कृवि हिंसाकरणयोः' (धा० पा० ५९८), 'धिन्विकृण्व्योर च' इत्युप्रत्ययः, वकारस्य चाकारः, 'अतो लोपः'॥ ४४॥

**तप्तनप्तनथनाश्च॥ शृणोतेति**। 'श्रुवः शृ च' इति श्नुप्रत्ययः शृभावश्च, पित्त्वे सति ङित्त्वाभावाद् गुणः। **दधातनेति**। अत्रापि पित्त्वाभावात् 'श्नाभ्यस्तयोः' इत्याकारलोपाभावः। **जुजुष्टनेति**। व्यत्ययेन परस्मैपदम्, तुदादित्वाच्छः, तस्य 'बहुलं छन्दसि' इति श्नुः, द्विर्वचनम्। जुषेरनुदात्तेत्वात् **जुषध्वमिति प्राप्त** इति

**भावबोधिनी**

[ त का तात् करने पर उक्त रूप है ]। अस्ना रक्षः संसृजतात्। यहाँ संसृजत—ऐसा प्राप्त रहते [ त का तात् होता है ]। सूर्यं चक्षुर्गमयतात्। गमयत—ऐसा प्राप्त रहते [ 'त' का तात् ]॥ ४४॥

'तस्य' (तकार के स्थान पर) इसकी अनुवृत्ति होती है। वेदविषय में 'त' ( = लोट् मध्यमपुरुष बहुवचन) के स्थान पर तप्, तनप्, तन और थन—ये आदेश होते हैं। उदा० शृणोत ग्रावाणः। शृणुत—यह प्राप्त रहते [ 'त' का तप् करने पर पित् हो जाने से ङित् नहीं माना जाता है इसलिए गुण हो जाता है। ] सुनोत। सुनुत—यह प्राप्त रहते। [ 'सु' = षुञ् का रूप है। पित् होने से गुण होता है। ] तनप्—सं वरत्रा दधातन। धत्त—इसके प्राप्त रहते। [ धा + लोट् = त, जुहोत्यादिगणीय होने से शप् का श्लु, द्वित्व, अभ्यास कार्य, दधा + त, त का तनप् पित् आदेश करने से ङित् न होने के कारण "श्नाभ्यस्तयोरातः" सूत्र से 'आ' का लोप नहीं होता है। लोक में 'त' ङित् होने से आ लोप—दध् + त, "दधस्तथोश्च" सूत्र से अभ्यास दकार का धकार आदेश धध् + त, "झलां जश् झशि" से ध् का द्, "खरि च" से 'द्' का 'त्' धत्त—होता है।] तन—जुजुष्टन। जुषत (जुषध्वम्)—ऐसा प्राप्त रहते। छान्दस=वैदिक प्रयोग होने से 'श्लु' होता है। [ यहाँ व्यत्यय से परस्मैपद जुष् + लोट् = थ = त, तुदादि होने से 'श' इसका 'बहुलं छन्दसि' सूत्र से श्लु, द्वित्व, अभ्यासकार्य—जुजुष् + त, 'त' का 'तन' ष्टुत्व—जुजुष्टन ] थन—यदिष्ठन। यदिच्छत—ऐसा प्राप्त रहते। [ इष्

१—१. '√जुषी प्रीतिसेवनयो' रित्यस्यात्मनेपदित्वात् 'जुषध्व' मित्येव साधुः।

सत्वात् श्लुः । श्नन—'यदिष्टन' (ऋ० १०.६३.६) । यदिच्छतेति प्राप्ते ।

पित्करणमङित्त्वार्थम् ॥

**३२२२. इदन्तो मसि ॥ ४६ ॥ (३५६८)**

**छन्दसि विषये मसित्ययं शब्द इकारान्तो भवति । मसः सकारान्तस्य इकारागमो भवति, स च तस्यान्तो भवति । तद्ग्रहणेन गृह्यत इत्यर्थः । 'पुनस्त्वोद्दीपयामसि' (अ० वे० १२.२.५) । दीपयाम इति**

**न्यासः**

पूर्ववच्छः, तस्य 'बहुलं छन्दसि' इति श्लुः, द्विर्वचनम्, ष्टुत्वम् । **यदिष्ठनेति** । इषेरिच्छार्थात् पूर्ववच्छः, 'बहुलं छन्दसि' इति तस्य लुक् । **यदिच्छतेति** । 'इषुगमियमां छः' । चकारस्तस्येत्यस्येहानुकर्षणार्थः ॥ ४५ ॥

**इदन्तो मसि । इदन्त इति ।** तकारोऽसन्देहार्थः असति हि तकारे यणादेशे कृते 'य्रन्तः' इति भवितव्यम्, तत्र सन्देहः स्यात्—किमयं यकारान्तः, उतेकारान्तः इति । इद् अन्तो यस्य इदन्तः । मसित्ययं शब्दोऽन्यपदार्थः । सकारान्तमसीत्यविभक्तिकोऽयं निर्देशः; 'सुपां सुलुक्' इति प्रथमैकवचनस्य लुप्तत्वात् । इकार उच्चारणार्थः । **मसीत्ययं शब्द इकारान्तो भवतीत्यस्यार्थं मसः सकारान्तस्येत्यादिना** व्यक्तीकरोति । 'सकारान्तस्य' इत्यनेन मन्त्रं वोचेमेत्यत्राकारान्तस्य न भवतीति दर्शयति । कथं पुनः सकारान्तस्योपादानेऽसकारान्तस्य प्राप्नोति ? एकदेशविकृतस्यानन्यत्वात् । यद्येवम्, कस्मान्न भवति ? छन्दसि यथादृष्टानुविधानात् । अपीत्यधिकाराद्वा । **वोचेमेति** । वचेः परस्याशिषि लिङो मस्, यासुट्, 'लिङ्याशिषि' इत्यङ्, 'अतो येयः' इतीयादेशः, 'वच उम्' इत्यमागमः । 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः, 'नित्यं ङितः' इत्युत्तमस्य सलोपः, 'लोपो व्योर्वलि' इति यकारस्य च, 'आद् गुणः' । **आगम इकारो भवतीति** । कथम्पुनरयमागमः ? कथञ्च न स्यात् ? आगमलिङ्गाभावात् । टित्त्व-कित्त्व-मित्त्वान्यागमलिङ्गानि, अत्र चैषामेकमपि नास्ति, ततो नासावागमः, यथा—'अस्तेर्भूः' इति भूभावः । यद्येवम्, 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ च ताभ्यामैच्' इत्यैजागमो न स्यात् । अथ पूर्वग्रहणात् तस्यागमत्वमवसीयते ? अस्याप्यन्तग्रहणादवसीयताम् । अथैव हि पूर्वशब्दोऽवयववचनो नियतदेशमवयवमाचष्टे तथान्तशब्दोऽपीति समानमेतत् । **स च तस्यान्तो भवतीति** । अन्त एकदेशोऽवयव इति यावत् । अत एवासौ तद्ग्रहणेन गृह्यत इत्याह—**तद्ग्रहणेनेत्यादि** ।

**पदमञ्जरी**

तु युक्तः पाठः । **यदिच्छतेति प्राप्त इति । बह्वृचास्तु**[1]—'कोवस्तो मरुतो यतिष्टन' इत्यस्यामृचि यतिष्ठनेति' (ऋ० १०.६३.६) पठन्ति । यतिस्थनेति पदकाले, तत्रास्ते रूपम् ॥ ४५ ॥

**इदन्तो मसि ॥** मसीत्यविभक्तिको निर्द्देशः । **इकार उच्चारणार्थः । अन्तशब्दोऽवयववचनः—इद्** अन्तो यस्य स इदन्तः । तपरकरणमसन्देहार्थम्, 'यन्तः' इत्युच्यमाने सन्देहः स्यात्—किं यकारान्त ईदन्तः ? इदन्तो वेति ? तत्र यदि सकारोपमर्द्देन इकारान्तमभिप्रेतं स्यात्, 'मस इत' इत्येव वाच्यं स्यात् । तस्मादव-

**भावबोधिनी**

तौदादिक से लोट् = थ = त, श का लुक् इष् + त, 'त' का थन, ष्टुत्व—इष्ठन । लोक में 'इषुगमियमां छः' सूत्र से 'छ' अन्त्यादेश—इछ् + अ + त, तुक् आगम, श्चुत्व । ]

इनमें पित् करना—अङित्त्व के सम्पादन के लिए है । [इसीलिए गुणनिषेध न होकर गुण ही होता है ।] ॥४५॥

वेदविषय में 'मस्' यह शब्द इकारान्त होता है । सकारान्त मस् को इकार का आगम होता है और यह उसके अन्त में होता है । उसके ग्रहण से गृहीत होता है—यह अर्थ है । उदा० पुनस्त्वोद्दीपयामसि । 'दीपयामः' ऐसा प्राप्त रहते । [ उत्पूर्वक 'दीपि' णिजन्त से लट् = मस्, उद् दीपि + मस् शप्, गुण, अय् आदेश उद्दीपय + मस, 'अतो दीर्घो

१. 'को वा स्तोमं राधति यजुजोषथविश्वे देवासो मनुषो यतिष्ठन ।' (ऋ० १०.६३.६) अयं पाठः समीचीनः ।

प्राप्ते। 'शलभं भञ्जयामसि' (पै० २.२०.४)। भञ्जयाम् इति प्राप्ते। 'त्वयि रात्रि वासयामसि' (शौ० १९.४७.९)। वासयाम इति प्राप्ते॥

**३२२३. क्त्वो यक्॥ ४७॥ (३५६९)**

'क्त्वा' इत्येतस्य यगागमो भवति छन्दसि विषये। 'दत्त्वाय (ऋ० १०.८५.१३) सविता धियः'। दत्त्वेति प्राप्ते।

'क्त्वापि छन्दसि' (७.१.३८) इत्यस्यानन्तरमिदं कस्मान्नोच्यते? 'समासे' इति तत्रानुवर्त्तते॥

**न्यासः**

एतेनागमत्वमिकारस्य दर्शयति। 'आगमो हि तद्ग्रहणेन गृह्यते' इति प्रसिद्धमेतत्। तद्ग्रहणे च प्रयोजनम्—पृथक् स्वरनिवृत्तिरिति, 'तिङ्ङतिङः' इति निघातश्च। 'मस इक्' इति नोक्तम्; असन्देहार्थम्। एवं ह्युच्यमाने सन्देहः स्यात्—किमिगागमः, उत प्रत्याहार इति। **दीपयामसि, जम्भयामसीति**। 'दीपी दीप्तौ', 'जभि जृभी गात्रविनामे'—आभ्यां ण्यन्ताभ्यां लट्, 'रधिजभोरचि' इति नुम्। क्वचिद् **भञ्जयामसीति** पाठः। स च 'भञ्जो आमर्दने' इत्यस्य ण्यन्तस्य वेदितव्यम्॥ ४६॥

**क्त्वो यक्**। **दत्त्वायेति**। 'दो दद् घोः' इति ददादेशः।

**क्त्वापि छन्दसीत्यादि**। एवमुच्यमाने द्विः क्त्वाग्रहणं न कर्त्तव्यमिति भावः। **समास इत्यत्रानुवर्त्तत इति**। 'समासेऽनञ्पूर्वे' इत्यतः। यदि तस्यानन्तरमिदमुच्यते, तत्रापि समासग्रहणमनुवर्त्तत इत्याशङ्का स्यात्, ततस्तस्यानुवृत्तिनिवृत्त्यर्थं तस्यानन्तरमिदं नोक्तमित्यभिप्रायः॥ ४७॥

**पदमञ्जरी**

स्थित एव सकार इकार उपसृज्यते। अन्तग्रहणाच्च तद्ग्रहणेन गृह्यते, ततश्च टित्त्वादेरागमलिङ्गस्याभावेऽपि अर्थादागमोऽयं सम्पद्यते। तदिदमुक्तम्—**मसः सकारान्तस्येत्यादि**। एवं च 'मस इक्' इति वक्तव्यम्? प्रत्याहारसन्देहप्रसङ्गात्तथा नोक्तम्॥ ४६॥

**क्त्वो यक्**॥ **दत्त्वायेति**। 'दो दद्घोः'। 'सौभाग्यमस्यै दत्त्वाय' (ऋ० १०.८६.३३) 'दत्त्वायास्मभ्यं द्रविणेह भद्रः' (अथर्व० १८.३.१४)—इत्यादिमन्त्रगतमुदाहरणम्। **दत्त्वाय सविता धियमिति** क्वचित् पठ्यते, तत्र **तैत्तिरीयकास्तत्वायेति** पठन्ति।

**क्त्वापि छन्दसीत्यादि**। एवं हि पुनः क्त्वाग्रहणं न कर्त्तव्यं भवति॥ ४७॥ ४८॥ ४९॥

**भावबोधिनी**

यञि' से दीर्घ। प्रस्तुत सूत्र से इकार अन्त में आगम—उद्दीपयामसि। ] शलभं भञ्जयामसि। भञ्जयामः—ऐसा प्राप्त रहते [ इकार अन्तादेश होता है ]। त्वयि रात्रि वसामसि। 'वसामः'—ऐसा प्राप्त रहते [ इकार अन्तादेश होने पर रूप बनता है। ]॥ ४६॥

'क्त्वा' इसको 'यक्' यह आगम वेदविषय में होता है। उदा० दत्त्वाय सविता धियः। यहाँ 'दत्त्वा' ऐसा प्राप्त रहते। [ यक् आगम कित् होने से क्त्वा के बाद होता है। ]

'क्त्वापि छन्दसि' (७।१।३८) के बाद ही इसको क्यों नहीं कहा गया? उस सूत्र में 'समासे' इसकी अनुवृत्ति होती है। [ वह इस सूत्र में भी सम्भव होने पर केवल समास में ही यह आगम हो पाता। ]॥ ४७॥

## ३२२४. इष्ट्वीनमिति च ॥ ४८ ॥ (३५७०)

'इष्ट्वीनम्'—इत्ययं शब्दो निपात्यते छन्दसि विषये। यजेः क्त्वाप्रत्ययान्तस्य ईनमादेशोऽन्त्यस्य निपात्यते। 'इष्ट्वीनं देवान्' (आश्व० श्रौ० सू० पृ० २०४)। इष्ट्वा देवानिति प्राप्ते।

पीत्वीनमित्यपीष्यते। चकारस्यानुक्तसमुच्चयार्थत्वात्सिद्धम् ॥

## ३२२५. स्नात्व्यादयश्च ॥ ४९ ॥ (३५७१)

'स्नात्वी'—इत्येवमादयः शब्दा निपात्यन्ते छन्दसि विषये। स्नात्वी मलादिव (मै० सं० ३.११.१०)। स्नात्वेति प्राप्ते। 'पीत्वी सोमस्य वावृधे' (ऋ० ३.४०.७)। पीत्वेति प्राप्ते।

प्रकारार्थोऽयमादिशब्दः ॥

## ३२२६. आज्जसेरसुक् ॥ ५० ॥ (३५७२)

**न्यासः**

**इष्ट्वीनमिति च। इष्ट्वीनमिति।** वच्यादिसूत्रेण सम्प्रसारणम्। **पीत्वीनमिति।** 'घुमास्था' इत्यादिनेत्वम्। एतच्चेतिकरणादाद्यर्थाच्चकारस्यानुक्तसमुच्चयार्थत्वाद्वा लभ्यते। अनयोरन्यतरोपादानेनैव सिद्ध उभयोरुपादानं वैचित्र्यार्थम् ॥ ४८ ॥

**स्नात्व्यादयश्च। स्नात्वी, पीत्वीति।** आकारस्य स्थान ईत्वन्निपात्यते। ननु च स्नात्व्यादयः शब्दाः प्रातिपदिकगणे न पठ्यन्ते, तत् कथं ते वेदितव्याः? कथं चादिशब्देन ते शक्या लक्षयितुम्? इत्याह—**प्रकारार्थोऽयमादिशब्द इति।** एवम्प्रकारा य एतत्सदृशाः शब्दास्ते स्नात्व्यादयो वेदितव्या ॥ ४९ ॥

**आज्जसेरसुक्।** जसेरिति पूर्वाचार्यनिर्देशः। पूर्वाचार्या हि जसिरित्येवं विहितवन्तः। **ये पूर्वासः, ये परास इत्यत्रेस्यादि चोद्यम्।** एतच्च जातौ पदार्थे। तत्रान्यत्र चारितार्थत्वाच्छास्त्रयोस्तुल्यबलयोर्विरोधे सति परस्परप्रतिबन्धादप्रवृत्तौ प्राप्तायां 'विप्रतिषेधे परं कार्यम्' इति क्रियते—विप्रतिषेधे परं भवति, तत्र कृते यदि

**पदमञ्जरी**

**आज्जसेरसुक्।** 'जसेः' इति पूर्वाचार्यानुरोधेन निर्देशः। **ब्राह्मणास इति।** असुकि कृते जसः सकारस्य श्रवणम्, असुकः सकारस्य विसर्जनीयः[1]।

**भावबोधिनी**

'इष्ट्वीनम्' यह शब्द वेदविषय में निपातित होता है। क्त्वा प्रत्ययान्त 'यज्' अर्थात् इष्ट्वा का 'ईनम्' यह अन्त्य आदेश [ = आ के स्थान पर ईनम् ] निपातित होता है। उदा० इष्ट्वीनं देवान्। इष्ट्वा देवान्—ऐसा प्राप्त रहते [ अन्त्य आ का ईनम् आदेश होने पर उक्त रूप बनता है। ]

'पीत्वीनम्' यह भी इष्ट है। * [ सूत्र में ] चकार अनुक्त के समुच्चय के लिए है इस कारण [ 'पीत्वीनम्' यह भी ] सिद्ध है। [ अतिरिक्त वचन की आवश्यकता नहीं है। ] ॥ ४८ ॥

वेदविषय में 'स्नात्वी' आदि शब्द निपातित होते हैं। उदा० स्नात्वी मलादिव। स्नात्वा—ऐसा रूप प्राप्त रहने पर [ यहाँ आ का ईकार आदेश किया जाने से 'स्नात्वी' आदि रूप बनते हैं ]। पीत्वी सोमस्य वावृधे। पीत्वा—यह प्राप्त रहते [ आ का ईत्वादेश ]।

यहाँ 'आदि' यह शब्द प्रकारार्थ है। [ अतः इस प्रकार के जो भी शब्दरूप वेदों में मिलें उन्हें इसी के अन्तर्गत मान कर ईत्व करना चाहिए। ] ॥ ४९ ॥

अवर्णान्त अङ्ग से उत्तरवर्त्ती जस् को असुक् = अस् का आगम वेदविषय में होता है। उदा० ब्राह्मणासः पितरः सोम्यासः। 'ब्राह्मणाः सोम्याः' ऐसे रूप प्राप्त हैं। [ ब्राह्मण + जस्, असुक् में उक् की इत्संज्ञा लोप होने से कित् होने से अन्त्य में आगम होता है—जस् + असुक् अनुबन्ध लोप कर देने पर असस्। पूर्वसवर्णदीर्घ, स् का रुत्व, विसर्ग—ब्राह्मणासः, सोम्यासः।

---

१. असुकः कित्त्वेन जसोऽन्त्ये एव आगमविधानात्।

अवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमो भवति छन्दसि विषये। 'ब्राह्मणासः पितरः सोम्यासः (ऋ० ६.७५.१०)। ब्राह्मणाः सोम्या इति प्राप्ते।

'ये पूर्वासो य 'उपरासः' (ऋ० १०.१५.२)—इत्यत्र परत्वादसुकि पुनः प्रसङ्गविज्ञानाच्छीभावः प्राप्तः, 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (न्या० प० ४०) इति न भवति ॥

**३२३७. अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५१ ॥ (२६६२)**

'छन्दसि' इत्यतःप्रभृति निवृत्तम्। अश्व, क्षीर, वृष, लवण—इत्येतेषामङ्गानामात्मप्रीतिविषये क्यचि परतोऽसुगागमो भवति। अश्वस्यति वडवा। क्षीरस्यति माणवकः। वृषस्यति गौः। लवणस्यत्युष्ट्रः।

**न्यासः**

पूर्वमपि प्राप्नोति तदपि भवतीति जातिपदार्थः पुनःप्रसङ्गविज्ञानस्य विषयः। सकृदित्यादिना परीहारः। एष च व्यक्तौ पदार्थेऽन्यत्राकृतार्थत्वाद् द्वयोरपि शास्त्रयोरीदृशे विषये पर्यायेण प्रवृत्तौ प्राप्तायामयं नियम आरभ्यते—विप्रतिषेधे परमेव भवति, न पूर्वमिति। तेन पुनःप्रसङ्गविज्ञानाभावाद् बाधितः शीभावो न भवति। न ह्यसति पुनःप्रसङ्गे यद् बाधितं तदुत्सहते पुनर्भवितुम् ॥ ५० ॥

**अश्वक्षीरवृषलवणानामात्मप्रतीतौ क्यचि ॥ आत्मप्रीताविति।** विषयसप्तमीयम्। अत एवाह—**आत्मप्रीतिविषये क्यचीति।** आत्मप्रीतिर्विषयो यस्य क्यचः स तथोक्तः। **अश्वस्यतीति।** आत्मनोऽश्वमिच्छतीति 'सुप आत्मनः क्यच्', अनेनासुक्, 'अतो गुणे' पररूपत्वम्। एवं क्षीरस्यतीत्यादावपि वेदितव्यम्। सर्वत्रात्मप्रीति-विषये क्यच्। यो ह्यात्मनोऽश्वादिकमिच्छति स नियोगत आत्मनः प्रीत्यर्थमिच्छति। यद्येवम्, इच्छायां क्यज्विधीय-मानः सर्वत्रात्मप्रीतिविषये भविष्यतीतीच्छायां वक्तव्यम्? प्रसिद्ध्युपसंग्रहार्थमात्मप्रीताविति लौकिकस्यार्थस्यो-पादानम्, तेन यत्रात्मप्रीतावसुग्लोके प्रयुज्यते तत्रैव भवति, नान्यत्र। तेनाश्ववृषयोर्मैथुनेच्छायां क्षीरलवण-योर्लालसायामित्युपपन्नं भवति।

**पदमञ्जरी**

**ये पूर्वास इत्यादि।** चोद्यम्—**उपरास इति।** अपरशब्दस्यादेरुकारश्छान्दसः। यदि पुनरयं पूर्वान्तः क्रियते—'अस्य जस्यसुक्' इति, नैवं शक्यम्, 'अतो गुणे' पररूपत्वं हि स्यात्। अकारोच्चारणं तु—उत्तरसूत्रे दध्यस्यतीत्यादौ श्रवणार्थं स्यात्। **सकृद्गतावित्यादि** परिहारः। यद्यप्येतत्सर्वनामसंज्ञायाः पूर्वादिषु जसि विकल्पनादेव सिद्धम्; 'उभयासो जातवेदः स्याम' (ऋ० २.२.१२) इत्यत्र तु शीभावप्रसङ्गः, अत्र हि 'प्रथम-चरम' इति विकल्पं बाधित्वा सर्वादिषु पाठान्नित्या संज्ञा भवति, सा ह्यन्तरङ्गा ॥ ५० ॥

**अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ अश्वस्यतीति।** असुकोऽकारः पूर्वत्र ब्राह्मणास इत्यादौ चरितार्थ इति 'अतो गुणे' इति पररूपत्वं भवति, 'नः क्ये' इति नियमादपदान्तोकारः। **मैथुनेच्छायामिति।**

**भावबोधिनी**

'ये पूर्वासः य उपरासः' यहाँ पर परवर्ती होने से [ जस् के शी आदेश से पहले इस सूत्र से असुक् का आगम कर देने पर पुनः प्रसङ्गविज्ञान से जस् का 'शी' आदेश प्राप्त होता है परन्तु 'सकृद्गति में विप्रतिषेध में जिसका एक बार बाध हो गया, उसका हो ही गया' इस न्याय से [ जस् का शी ] नहीं होता है। [ वैदिक विधियाँ बहुलरूप से होने के कारण वैकल्पिक होती हैं। अतः असुक् रहित भी रूप देखे जाते हैं। पाणिनि ने 'जस्' ऐसा प्रत्यय माना है किन्तु प्राचीन आचार्य 'जसि' ऐसा प्रत्ययरूप मानते थे। उसी का यहाँ 'जसेः' ऐसा उल्लेख है। ] ॥ ५० ॥

'छन्दसि' (वेदविषय में)—इसकी यहाँ से लेकर निवृत्ति है, अर्थात् अनुवृत्ति नहीं होती है। [ अतः ये नियम लौकिक शब्द रूपों से सम्बद्ध हैं। ] अश्व, क्षीर, वृष, लवण—इन अङ्गसंज्ञकों को आत्मप्रीति विषय वाले क्यच् के परे रहते असुक् का आगम होता है। उदा० अश्वस्यति वडवा। [ आत्मनः अश्वम् इच्छति—इस अर्थ में 'सुप आत्मनः क्यच्'

---

१. 'अपरासः' इत्यर्थः।

**आत्मप्रीताविति किम् ? अश्वीयति । क्षीरीयति । वृषीयति । लवणीयति ।**

**❀ अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् ❀ (म० भा० ७.१.५१. वा० १) ।**

**❀ क्षीरलवणयोर्लालसायामिति वक्तव्यम् ❀ (वा० २) । तृष्णातिरेकः = लालसा । अन्यत्रात्मप्रीतावपि न भवति ।**

**अपर आह— ❀ सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः ❀ (म० भा०) । दध्यस्यति, मध्वस्यति, इत्येवमाद्यर्थम् ।**

**अपर आह— ❀ सुग्वक्तव्यः ❀ (म० भा०) । दधिस्यति, मधुस्यति— इत्येवमाद्यर्थम् ॥**

**न्यासः**

**अश्वीयतीति ।** अश्वमिवाचरतीति 'उपमानादाचारे' इति क्यच्, 'क्यचि च' इतीत्त्वम् ।

**अश्ववृषयोरित्यादि ।** 'अश्ववृषयोर्मैथुनेच्छायामसुग्भवति'— इत्येतदर्थरूपं व्याख्येयमित्यर्थः ।

**क्षीरलवणयोरित्यादि ।** वक्तव्यमित्येतदपेक्षते । 'क्षीरलवणयोर्लालसायामसुग्भवति' इत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु कृतमेव । **अन्यत्रात्मप्रीतावपि न भवतीति ।** आत्मनोऽश्वादिकमिच्छत्यश्वीयतीति । लवणीयति । **तृष्णातिरेक इति ।** तृष्णाया अतिरेकः = अतिशयः, प्रकर्षः, आधिक्यमित्यर्थः ॥ ५१ ॥

**पदमञ्जरी**

अश्वविषयेच्छा यदा मैथुनार्था, तदेवासुग्भवति । मैथुनेच्छापरत्वाच्च प्रयोगस्याश्ववृषोपादानमतन्त्रमिति मनुष्यादिविषयेऽपि प्रयुज्यते इति— 'रामो वृषस्यन्तीम्' (रघु० १२।३४) इति । **तृष्णातिरेक इति ।** अभ्यवजिहीर्षा = अतिरेकः, क्षीरलवणविषय इच्छातिरेको यदाभ्यवहारार्थो न तु होमाद्यर्थस्तदेत्यर्थः । **सर्वप्रातिपदिकेभ्य इति ।** तादर्थ्ये एषा चतुर्थी सर्वप्रातिपदिकार्थम्, सर्वेषां प्रातिपदिकानामित्यर्थः ॥ ५१ ॥

**भावबोधिनी**

सूत्र से क्यच् = य प्रत्यय, धातुसंज्ञा, विभक्तिलोप— अश्व + अस् + य, 'अतो गुणे' से अ का पररूप— अश्वस्य, तिप् आदि होते हैं । ] क्षीरस्यति माणवकः [ आत्मनः क्षीरम् इच्छति— इस विग्रह में पूर्वोक्त सभी कार्य होते हैं । ] वृषस्यति गौः । [ आत्मनः वृषम् इच्छति— यह विग्रह है । शेष पूर्ववत् । ] लवणस्यति उष्ट्रः । [ आत्मनः लवणम् इच्छति— यह विग्रह है । शेष पूर्ववत् । ]

[ जो अपनी किसी वस्तु को चाहता है, वह निश्चित रूप से अपनी प्रसन्नता के लिए ही चाहता है । क्योंकि अप्रिय वस्तु को कोई नहीं चाहता है ; अतः यहाँ आत्मप्रीति फलित हो जाती है । ]

आत्मप्रीति में— इसका क्या फल है ? अश्वीयति । क्षीरीयति । वृषीयति । लवणीयति । [ अश्वमिव आचरति, क्षीरम् इव आचरति, वृषम् इव आचरति, लवणम् इव आचरति— इन विग्रहों में 'उपमानादाचारे' सूत्र से क्यच् है, ''क्यचि च'' सूत्र से अ का ई होता है । आत्मप्रीति नहीं है अतः असुक् आगम नहीं होता है । ]

* अश्व तथा वृष को मैथुनेच्छा में [ असुक् होता है ]— ऐसा कहना चाहिए । *

* क्षीर और लवण को लालसा में [ असुक् होता है ]— ऐसा कहना चाहिए । * तृष्णा का अतिरेक लालसा है । [ अत्यधिक चाहना लालसा है । ] अन्य में आत्मप्रीति में भी नहीं होता है । [ भाव यह है कि अश्व और वृष क्यच् को असुक् आगम केवल मैथुनेच्छा में ही होता है अतः 'अश्वस्यति' का अर्थ है— मैथुनार्थम् अश्वम् इच्छति । वृषस्यति = मैथुनार्थं वृषम् इच्छति । क्षीरस्यति का अर्थ है— क्षीर की उत्कट इच्छा करता है । लवणस्यति— लवण की उत्कट इच्छा करता है । ]

अन्य आचार्य कहते हैं 'सभी प्रातिपदिकों से लालसा अर्थ में असुक् कहना चाहिए । * उदा० दध्यस्यति, मध्वस्यति इत्यादि के लिए । [ दधि की उत्कट इच्छा करता है, मधु की उत्कट इच्छा करता है । ]

अन्य कोई आचार्य कहता है— * सुक् आगम कहना चाहिए । * दधिस्यति, मधुस्यति इनके लिए । [ उक्त सभी वचन प्रस्तुत सूत्र पर भाष्य में उल्लिखित हैं । आदेश तथा प्रत्यय न होने से षत्व नहीं होता है । ] ॥ ५१ ॥

## ३२२८. आमि सर्वनाम्नः सुट् ॥ ५२ ॥ (२१७)

'आत्' इति वर्त्तते। अवर्णात्सर्वनाम्न उत्तरस्यामः सुडागमो भवति। सर्वेषाम्। विश्वेषाम्। येषाम्। तेषाम्। सर्वासाम्। यासाम्। तासाम्। आदित्येव—भवताम्।

'आमि' इति षष्ठीबहुवचनं गृह्यते, न 'ङेराम्नद्याम्नीभ्यः' (८.३;१६) इति, तस्य हि परत्वादाड्याट्स्याटो भवन्ति। यश्च 'किमेत्तिङव्ययघादामुः' (५.४.११), 'आम् च लिटि' (३.१.३५); न तौ सर्वनाम्नः

**न्यासः**

आमि सर्वनाम्नः सुट् ॥ 'ह्रस्वनद्यापो नुट्' इति प्राप्ते वचनम्।

**आमीति षष्ठीबहुवचनं परिगृह्यत इति।** इह बहवः आमः सम्भवन्ति—षष्ठीबहुवचनम्, 'ङेराम्नद्याम्नीभ्यः' इति, 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति, कास्प्रत्ययादाममन्त्रे लिटि' इत्याम्; एषां यदि सर्वेषां ग्रहणं स्यात् तदा सर्वेषाम् 'ह्रस्वनद्यापो नुट्' इति नुट् प्रसज्येत, तत्राप्येतदेवाम्ग्रहणमनुवर्त्तते, षष्ठीबहुवचनस्यैवेष्यते, अतस्तदेव गृह्यत इत्याह—**तस्य हि परत्वादित्यादि।** सुटो नुटश्च षष्ठीबहुवचनमवकाशः, आट्प्रभृतीनां तु चतुर्थ्येकवचनादिः, 'ङेराम्नद्याम्नीभ्यः' इति परत्वादाडादयो भवन्ति। तत्र 'आण्नद्याः' इत्याट्—कुमार्यामिति। 'याडापः' इति याट्—खट्वायामिति। 'सर्वनाम्नः स्याड्ढ्रस्वश्च' यति स्याट्—सर्वस्यामिति। यस्तर्हि घान्तादाम् विधीयते यश्च लिट्याम् तौ कस्मान्न गृह्येते? इत्याह—**यश्च किमित्यादि।** तयोर्ह्येको घान्ताद् विधीयतेऽपरो धातोः। न च घान्तस्य सर्वनामसंज्ञा, नापि धातोरिति। न तौ सर्वनाम्नः परौ सम्भवत इति न गृह्येते। अथ तु सर्वनाम्नः परौ न सम्भवत इति कृत्वैतदर्थं तयोर्ग्रहणमनुपपन्नम्, तथाप्युत्तरार्थं तूपपद्यते,

**पदमञ्जरी**

**आमि सर्वनाम्नः सुट् ॥** इमे बहव आमः—ङस्-ओस्-आम्, 'ङेराम्नद्याम्नीभ्यः', 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे', 'कास्प्रत्ययादाममन्त्रे लिटि', तेषु कस्येदमामो ग्रहणम्? इत्याह—**आमिति षष्ठीबहुवचनं गृह्यत इति। तस्य हि परत्वादिति।**

सुटो नुटश्च षष्ठीबहुवचनमवकाशः, आट्प्रभृतीनां चतुर्थ्येकवचनादि; ङेराम उभयप्रसङ्गे परत्वादाडादयो भवन्ति, तेषु कृतेषु सकृद्गतिन्यायाश्रयणात् सुट्नुटौ न भवतः। **यश्च घादामुरिति।** 'किमेत्तिङव्ययघादामु' इत्येव। चस्त्वर्थे, तुरेव वा पठितव्यः। **आम् च लिटीति।** लिटि परतो य आम् 'कास्प्रत्ययात्' इति विहित इत्यर्थः। **न तौ सर्वनाम्नः परौ[1] स्त इति।** तेनात्र तावत्तयोरग्रहणम्, यस्य चात्र ग्रहणं तस्यैवोत्तरत्राप्यधिकार इति नुड्विधावपि तयोरग्रहणमिति भावः। आचारक्विबन्तानां सर्वादीनां सर्वार्थत्वाभावात्सर्वनामसंज्ञाभावात्सर्वनाम्नो लिट्यामोऽसम्भवः। यस्तु मन्यते—इह सामान्यग्रहणे सति यथासम्भवं

**भावबोधिनी**

'आत्' इसकी अनुवृत्ति है। अवर्णान्त सर्वनाम से उत्तरवर्त्ती 'आम्' को सुट् का आगम होता है। उदा० सर्वेषाम्। विश्वेषाम्। [ सर्व + आम्, विश्व + आम्, सुट् = स् आगम बहुवचन में अ का एत्व—सर्वे + साम्, विश्वे + साम्, स् का षत्व ] येषाम्। तेषाम्। [ यत् + आम्, तद् + आम्, "त्यदादीनामः" सूत्र से अत्व, 'अतो गुणे' से पररूप कर देने पर अवर्णान्त मान कर सुट्, एत्व, षत्व होने पर रूप बनता है। ] सर्वासाम्। यासाम्। तासाम्। [ इनमें भी आम् को सुट् आगम होता है ] अवर्णान्त से परवर्त्ती आम् को ही—भवताम् [ यहाँ अवर्णान्त न होने से सुट् नहीं होता है। ]

'आमि' यह षष्ठीबहुवचन का ग्रहण है न कि 'ङेराम्नद्याम्नीभ्यः' से होने वाले आम् का। क्योंकि उस आम् को तो परवर्त्ती होने से आट्, याट्, स्याट् होते हैं। और जो 'किमेत्तिङव्ययघादाम्वु' से होने वाला आम् और लिट् परे रहते [ "कास्प्रत्ययादाम्" से होने वाला ] आम् वे दोनों तो सर्वनाम से नहीं होते हैं। अथवा वे दोनों तो सानुबन्धक हैं [ क्योंकि "किमेत्तिङ्" सूत्र से 'आमु' में उकार अनुबन्ध है और 'कासप्रत्ययादाम्' से होवे वाले 'आम' में अकार

---

१. परौ—इदं काशिकायां नास्ति।

स्तः । सानुबन्धकाविति वा, तौ न गृह्येते ।

'आमि' इति सप्तमीनिर्देश उत्तरार्थः । इह तु 'सर्वनाम्नः' इति पञ्चमीनिर्देशात् 'तस्मादित्युत्तरस्य' (१.१.६७) इति षष्ठीप्रक्लृप्तिर्भविष्यति ॥

**३२२९. त्रेस्त्रयः ॥ ५३ ॥ (२६४)**

**'त्रि' इत्येतस्य आमि परे 'त्रय' इत्ययमादेशो भवति । त्रयाणाम् ।**

**❀ त्रीणामित्यपि छन्दसीष्यते ❀—त्रीणामपि समुद्राणामिति ॥**

**न्यासः**

विद्येते तौ हि ह्रस्वान्तात् परौ—पचतितराम्, पचतितमाम्, चिकीर्षाञ्चकार कारयाञ्चकार ? इत्यत आह—**सानुबन्धकाविति वा तौ नगृह्येते इति** । निरनुबन्धकपरिभाषयेति भावः । तत्र घादामोरुकारोऽनुबन्धः, इतरस्य त्वकारः । तथा चोक्तम्—आमोऽमित्वमदन्तत्वादिति ।

**उत्तरार्थ इत्यादि** । 'त्रेस्त्रयः' इत्यादि परतो यथा स्यात् । एतदर्थोऽप्यामीति सप्तमीनिर्देशः कस्मान्न भवति, अस्ति ह्यत्रापि प्रयोजनम्—आमि परतः सर्वनाम्नः सुड् यथा स्यात् ? इत्यत आह—**इह त्वित्यादि** । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'तस्मादित्युत्तरस्य' इति 'सर्वनाम्नः' इत्यनया पञ्चम्या आमीत्यस्याः सप्तम्याः षष्ठ्यां परिकल्पितायामाम एव सुटा भवितव्यमिति नास्तीह निर्देशस्य प्रयोजनम् ॥ ५२ ॥

**त्रेस्त्रयः** ॥ 'ह्रस्वनद्यापो नुट्' इति प्राप्ते वचनम् । **त्रयाणामिति** । 'सुपि च' इति दीर्घः[1] । ननु च 'णिजां त्रयाणां गुणः श्लौ' इति निपातनादेव सिद्धम्, तत्किमर्थमिदमारभ्यते ? एवं सिद्धे सदीदमारभ्यमाणमेतज्ज्ञापयति—'अबाधकान्यपि निपातनानि भवन्ति' इति, तेन पुरातनमिति सिद्धं भवति; अन्यथा 'पुराणप्रोक्तेषु' इति निपातनेन बाधितत्वान्न सिध्यति ।

**त्रीणामपीष्यते छन्दसीति** । एतच्चापीत्यधिकाराद्वा, 'सर्वे विधयश्छन्दसि' विकल्प्यन्ते इति वा लभ्यते ॥ ५३ ॥

**पदमञ्जरी**

प्रकरणे कार्यप्रतिपत्तिः, ततश्च तयोरपि नुट्प्रसङ्ग इति, तं प्रति परिहारान्तरमाह—**सानुबन्धकाविति वेति** । सामान्यग्रहणे तु सति पचतितरामित्यत्र यस्येतिलोपं बाधित्वा परत्वान्नुट् स्यात् । कारयाम्, चिकीर्षामित्यत्र तु नित्यत्वाद् 'अयामन्त' इत्ययादेशे, अतो लोपे च कृते ह्रस्वाभावान्नास्ति नुटः प्रसङ्गः ।

[2]**उत्तरार्थमिति** । 'त्रेस्त्रयः' इत्यामि परतो यथा स्यात् । **इह त्विति** । पञ्चमीनिर्देशस्तु 'आत्' इत्यनुवृत्तेन सामानाधिकरण्यादवसीयते, एवं च कृत्वा 'हलि सर्वेषाम्' इति निर्देशोपपत्तिः ॥ ५२ ॥

**त्रेस्त्रयः** ॥ त्रेरिति षष्ठी, न पञ्चमी; 'णिजां त्रयाणाम्' इति निर्देशात् ॥ ५३ ॥

**भावबोधिनी**

अनुबन्ध है । अतः 'निरनुबन्धक के ग्रहण में सानुबन्धक का ग्रहण नहीं होता है' इस परिभाषा के कारण वे दोनों ] नहीं गृहीत होते हैं ।

'आमि' यह सप्तम्यन्त का निर्देश उत्तरवर्ती सूत्र के लिए है । इस प्रस्तुत सूत्र में तो 'सर्वनाम्नः' यह पञ्चमी का निर्देश होने के कारण "तस्मादित्युत्तरस्य" इस सूत्र से [ परवर्ती आमि सप्तम्यन्त ही ] षष्ठी = षष्ठ्यन्त के रूप में हो जायगा । [ और 'आमि' 'आमः' हो जायगा, इसी को सुट् आगम होगा । ] ॥ ५२ ॥

'त्रि' इसके स्थान पर 'आम्' परे रहते 'त्रय' यह आदेश होता है । उदा० त्रयाणाम् । [ त्रि + आम्, त्रय आदेश—त्रय + आम्, 'ह्रस्वनद्यापो नुट्' सूत्र से नुट् = न् आगम, णत्व, दीर्घ—त्रयाणाम् । ] ❀ वेद में 'त्रीणाम्' यह भी इष्ट है ।❀ 'त्रीणामपि समुद्राणाम् । [ त्रि + आम्, नुट्, दीर्घ, णत्व ] ॥ ५३ ॥

---

१. 'सुपि च' इति दीर्घो यद्यपि परस्तथापीह न प्रवर्त्तते, सन्निपातपरिभाषाविरोधादिति भट्टोजिप्रभृतिमतेऽत्र 'नामि' इत्यनेनैव दीर्घः ।

२. उत्तरार्थः – इदं दृश्यते काशिकायाम् ।

## ३२३०. ह्रस्वनद्यापो नुट् ॥ ५४ ॥ (२७८)

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चोत्तरस्यामो नुडागमो भवति। ह्रस्वान्तात्तावत्—वृक्षाणाम्। प्लक्षाणाम्। अग्नीनाम्। वायूनाम्। कर्तॄणाम्[1]। नद्यन्तात्—कुमारीणाम्। किशोरीणाम्। गौरीणाम्। शार्ङ्गरवीणाम्। लक्ष्मीणाम्। ब्रह्मबन्धूनाम्। वीरबन्धूनाम्। मालानाम्। बहुराजानाम्। कारीषगन्ध्यानाम्॥

## ३२३१. षट्चतुर्भ्यश्च ॥ ५५ ॥ (३३८)

षट्संज्ञकेभ्यश्चतुःशब्दाच्चोत्तरस्यामो नुगाडमो भवति। षण्णाम्। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। चतुर्णाम्।

### न्यासः

**ह्रस्वनद्यापो नुट् कुमारीणामिति**। 'वयसि प्रथमे' इति ङीष्। **गौरीणामिति**। 'षिद्गौरादिभ्यश्च' इति ङीष्। **शार्ङ्गरवीणामिति**। शार्ङ्गरवाद्यञो ङीन्' इति ङीन्। **लक्ष्मीणामिति**। **ब्रह्मबन्धूनामिति**। ब्रह्मा बन्धुरासामिति बहुव्रीहिः। 'ऊङुतः' इत्यूङ्। **खट्वानामिति**। 'अजाद्यतष्टाप्' **बहुराजानामिति**। 'डाबुभाभ्या-मन्यतरस्याम्' इति डाप्। **कारीषगन्ध्यानामिति**। कारीषगन्धेरपत्यमित्यण्, तस्य 'अणिञोरनार्षयोः' इत्यादिना ष्यङादेशः, 'यङश्चाप्' इति चाप्॥ ५४॥

**षट्चतुर्भ्यश्च ॥ पञ्चानामिति**। 'नोपधायाः' इति दीर्घः, 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः। **षण्णामिति**। 'झलां जशोऽन्ते' इति षकारस्य डकारः, 'यरोऽनुनासिकेऽनुनासिको वा' इति डकारस्य णकारः, 'ष्टुना ष्टुः' इति नकारस्य णकारः।

### पदमञ्जरी

**ह्रस्वनद्यापो नुट् ॥** ह्रस्वनद्याप इति पञ्चमी, 'नामि' इति लिङ्गेन; अन्यथाऽङ्गनिमित्तस्य नामो न ह्यस्ति सम्भवः[2]॥ ५४॥

**षट्चतुर्भ्यश्च ॥ पञ्चानामिति**। नुटि कृते 'नोपधायाः' इति दीर्घः। 'नलोपः प्रातिपदिकान्तस्य'। **षण्णामिति**। 'झलां जशोऽन्ते'—इति षकारस्य डकारः, 'यरोऽनुनासिके' इति डकारस्य णकारः, ष्टुत्वम्।

### भावबोधिनी

ह्रस्वान्त, नद्यन्त (नदीसंज्ञक ई ऊ जिसके अन्त में हैं उससे) और आबन्त से उत्तरवर्त्ती 'आम्' प्रत्यय को नुट् आगम होता है। ह्रस्वान्त के उदा॰ वृक्षाणाम्। प्लक्षाणाम्। अग्नीनाम्। वायूनाम्। कर्तॄणाम्। [ ह्रस्व अकारान्त, इकारान्त, उकारान्त, ऋकारान्त शब्दों से 'आम्' परे है उसे नुट् = न् आगम होता है, दीर्घ, णत्व आदि कार्य होते हैं। ] नदीसंज्ञक अन्तवाले के उदा॰ कुमारीणाम्। किशोरीणाम्। गौरीणाम्। शार्ङ्गरवीणाम्। लक्ष्मीणाम्। [ इनमें सभी ईकारान्तों की नदी संज्ञा होने से नुट् होता है। ] ब्रह्मबन्धूनाम्। वीरबन्धूनाम्। [ ऊकारान्त की नदी संज्ञा होने से नुट् होता है। ] [ आबन्त में टाप्, डाप्, चाप् तीनों का ग्रहण है। ] आबन्त से—मालानाम्। खट्वानाम्। [ टाप् प्रत्ययान्त माला + आम्, नुट् ] बहुराजानाम्। [ डाप् प्रत्ययान्त से आम् को नुट् ] कारीषगन्ध्यानाम्। [ चाप् प्रत्ययान्त से आम् को नुट् आगम ] ॥ ५४॥

षट्संज्ञकों से और चतुर् शब्द से उत्तरवर्त्ती आम् को नुट् आगम होता है। उदा॰ षण्णाम्। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। [ षष्, पञ्चन् आदि शब्द संख्यावाची हैं अतः "ष्णान्ता षट्" सूत्र से षट्संज्ञक हैं। इनसे परे आम् को नुट् आगम होता है। ] चतुर्णाम्। [ चतुर् + आम्, नुट्, णत्व आदि होता है ] रेफान्त की षट् संज्ञा नहीं की गई है, क्योंकि "षड्भ्यो लुक्" सूत्र से [ जस्, शस् का ] लुक् न होने लगे। [ इसीलिये 'चतुर्' की

---

१. 'हर्तॄणाम्' इत्यपि बहुषु पुस्तकेष्वस्ति।

२. केचिदत्र पद्यं कल्पयन्ति, तन्न सम्यक्, गद्येऽपि क्वचित् गीत्यंशसम्भवादिति त्रिपाठी।

रेफान्तायाः संख्यायाः षट्संज्ञा न विहिता; 'षड्भ्यो लुक्' (७.१.२२) इति लुग्मा भूत्। बहुवचन-निर्देशादत्र संख्याप्रधानस्य ग्रहणं भवति—परमषण्णाम्। परमपञ्चानाम्। परमसप्तानाम्। परमचतुर्णाम्।
उपसर्जनीभूतायास्तु संख्याया न भवति—प्रियषषाम्, प्रियपञ्चाम्, प्रियचतुरामिति ॥

**३२३२. श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥ (३५७३)**

श्री, ग्रामणी—इत्येतयोश्छन्दसि विषये आमो नुडागमो भवति। श्रीणामुदारो धरुणो रयी-

**न्यासः**

'ष्णान्ता षट्' इति रेफान्ताया अपि संख्यायाः कस्मान्न विहिता षट्संज्ञेति, एवं सतीह चतुर्ग्रहणं न कर्त्तव्यं भवति? इत्याह—**रेफान्ताया इत्यादि**। गतार्थम्। **बहुवचननिर्देशादिति**। यदि हि शब्दस्य प्रधानस्य ग्रहणं स्यात्, तदेतरेतरयोगपक्षे 'षट्चतुर्भ्याम्' इति द्विवचने निर्देशं कुर्यात्, समाहारपक्षे त्वेकवचनेन 'षट्चतुरः' इति, बहुवचनेन तु निर्देशः कृतः। तस्माद् बहुवचननिर्देशात् संख्याप्रधानस्यैव षट्संज्ञकस्य चतुःशब्दस्य च ग्रहणम्। तस्य चेदं प्रयोजनम्—यत्र संख्यायाः प्राधान्यं तदन्तादपि यथा स्यात्। अत एव परमषण्णामित्यादिषूत्तरपदार्थ-प्रधानत्वात् तत्पुरुषस्य संख्यायाः प्राधान्यम्, तेन तदन्तादपि भवति। अर्थप्रधाने हि निर्द्देशोऽर्थग्रहणमेतद् भवति, अर्थाच्च शब्दद्वारेणैवामः परत्वं विज्ञायते। अतः केवलेभ्यः चट्चतुर्भ्यो भवति, तदन्ताच्च। तदन्तादपि शब्द-द्वारेणैवामः परत्वं भवत्येव।

**उपसर्जनीभूतायास्त्वित्यादि**। बहुवचननिर्देशाद्धि संख्यार्थस्येदं ग्रहणम्। स चार्थो द्विविधः—प्रधानः, अप्रधानश्च। तत्र प्रधाने कार्यसम्प्रत्ययाद्यत्र संख्यायाः प्राधान्यं तत्र तदन्तादपि भवति। यत्र तूपसर्जनीभूता संख्या तत्र न भवति—प्रियषषामित्यादौ। अन्यपदार्थस्य ह्यत्र प्राधान्यम्, संख्यायास्त्वप्राधान्यम्। **प्रियपञ्चा-मिति**। अल्लोपे कृते 'स्तोः श्चुना श्चुः' इति श्चुत्वम् ॥ ५५ ॥

**श्रीग्रामण्योश्छन्दसि** ॥ श्रीग्रामण्योरिति सम्बन्धलक्षणा षष्ठी। **नित्यार्थं वचनमिति**। श्रीशब्दस्य, न

**पदमञ्जरी**

अथ 'ष्णान्ताः षट्' इति रेफस्य प्रक्षेपणेन रेफान्ताया अपि संख्याया षटसंज्ञा कस्मान्न विहिता, एवं ह्यत्र चतुर्ग्रहणं न कर्त्तव्यं भवति, तथा 'षट्त्रिचतुर्भ्यो हलादिः' इत्यत्रापि? इत्यत आह—**रेफान्ताया इति**। **बहुवचननिर्देशादिति**। शब्दप्राधान्ये हीतरेतरयोगे द्विवचनेन भाव्यम्, समाहारद्वन्द्वे त्वेकवचनेन भाव्यम्, अर्थप्राधान्ये तु षट्संज्ञका एव प्रत्येकं बह्वर्थाश्चतुःशब्दश्चेत्युपपद्यते बहुवचनम्। अत्रामः परत्वं शब्दद्वारकम्। **परमषण्णामिति**। अत्रापि षडर्थप्राधान्यात्तत एव पर आम् भवति। बहुव्रीहौ त्वन्यपदार्थस्य प्राधान्यान्न षडर्थापेक्ष परत्वमिति न भवति।

**प्रियपञ्चामिति**। अल्लोपे कृते चुत्वम्—ञकारः ॥ ५५ ॥

**श्रीग्रामण्योश्छन्दसि** ॥ **नित्यार्थं वचनमिति**। अन्यथा भाषायामिव विकल्पः स्यात्, छन्दसि नुडेव चेद् दृश्यते, तस्य च लक्षणमस्ति, कोऽयं विकल्पप्रसङ्ग इति? चिन्त्यमेतत्।

**भावबोधिनी**

षट् संज्ञा न होने से अलग से ग्रहण करना पड़ा।] बहुवचन का निर्देश होने के कारण संख्याप्रधान का ही ग्रहण होता है—परमषण्णाम्। परमपञ्चानाम्। परमसप्तानाम्। परमचतुर्णाम्।

परन्तु जो उपसर्जन बन जाती है उस संख्या (वाचक) का ग्रहण नहीं होता है—प्रियषषाम्। प्रियपञ्चाम्। [नान्त होने से उपधा अकार के लोप और न् का श्चुत्व ञ् कर देने पर उक्त रूप बनता है।] प्रियचतुराम्। [प्रियाः षट् येषां ते, तेषाम्, प्रियाः पञ्च येषां ते तेषाम्, प्रियाः चत्वारः येषां ते तेषाम्—ऐसा विग्रह होने से संख्या गौण हो जाती है, संख्येय अन्य पदार्थ प्रधान हो जाता है अतः न षट् संज्ञा होती है और न नुट् आदि।] ॥ ५५ ॥

श्री तथा ग्रामणी—इनके वेदविषय में आम् को नुट् का आगम होता है। उदा० "श्रीणामुदारो धरुणो रयीणाम्।" अपि तत्र सूतग्रामणीनाम्। [श्री + आम्, सूतग्रामणी + आम्, नुट्।]

णाम् (ऋ० १०.४५.५) 'अप्यत्र सूतग्रामणीनाम्' (का० २८.३)।

श्रीशब्दस्य 'वामि' (१.४.५) इति विकल्पेन नदीसंज्ञा, तत्र नित्यार्थं वचनम्।

सूतग्रामणीनामिति—यदा सूताश्च ग्रामण्यश्च सूतग्रामण्यो भवन्ति, तदर्थमिदं वचनम्। यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि, सूतग्रामणि च सूतग्रामणि च सूतग्रामणि चेति सूतग्रामणीनामिति, तदा 'ह्रस्वात्' (७.१.५४) इत्येव सिद्धम्॥

**३२३३. गोः पादान्ते ॥ ५७ ॥ (३५७४)**

'गो' इत्येतस्मादृक्पादान्ते वर्तमानादुत्तरस्यामो नुडागमो भवति। विद्मा हि त्वा सत्पतिं शूरगोनाम् (ऋ० १०.४७.२)।

**न्यासः**

तु ग्रामणीशब्दस्य। तस्य तु प्राप्त्यर्थमेव। यथैव हि भाषायां नदीसंज्ञापक्षे 'ह्रस्वनद्यापो नुट्' इति सिध्यति, तथा छन्दस्यपि। तस्मान्नित्यं यथा स्यादित्येवमर्थम्। असति ह्यस्मिन् यदा नदीसंज्ञा, तदैव स्यात्, नान्यथा।

**यदा सूताश्चेत्यादि**। एतेनैतद् दर्शयति—यदा सूतशब्दस्य ग्रामणीशब्देन सह कर्मधारयः क्रियते तदा सूतग्रामणीशब्दो न ह्रस्वान्तः, न नद्यन्तः, नाप्यावन्त इति न प्राप्नोति, इष्यते च, ततो यथा स्यादित्येवमर्थं वचनम्। यदा सूतग्रामणीशब्दयोः 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकवद्भावी द्वन्द्वः, तदा 'स नपुंसकम्' इति नपुंसकत्वाद् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वं कृत्वा बहूनां सूतग्रामणीशब्दानामेकशेषश्च, ततः षष्ठीबहुवचनं विधीयते। तदा ह्रस्वान्तत्वादेव सिद्धमिति नार्थस्तदर्थेन वचनेन॥ ५६॥

**गोः पादान्ते॥ ऋक्पादान्ते वर्तमानादिति**। छन्दसि ऋक्पाद एव सम्भवति, न श्लोकपाद इति

**पदमञ्जरी**

**सूताश्च ते ग्रामण्यश्चेति**। नेदं कर्मधारयस्य वाक्यम्, किं तर्हि? बहुवचनान्तयोर्यदेतरेतरयोगे द्वन्द्वस्तदा नुड्विधेः प्रयोजनम्। यदैकवचनान्तयोः समाहारद्वन्द्वं कृत्वा एकशेषः क्रियते तदा ह्रस्वान्तत्वादेव नुट् सिद्ध इति न प्रयोजनमिति दर्शयति। एवं च तेशब्दो न पठितव्यः।

अत्रापि नुडेव चेद् दृश्यते तस्य च निर्वाहोऽस्ति, इतरेतरयोगद्वन्द्वो न करिष्यते, तदेवमिदं सूत्रं भाष्ये प्रत्याख्यातम्॥ ५६॥

**गोः पादान्ते॥** 'छन्दसि' इत्यधिकारादृक्पादस्यैव ग्रहणम्, न श्लोकपादस्येत्याह—**ऋक्पादान्त**

**भावबोधिनी**

"वाऽमि" सूत्र से श्री शब्द की विकल्प से नदी संज्ञा होती है, उसमें नित्य नुट् करने के लिए [ 'श्री' शब्द का ] ग्रहण है।

सूतग्रामणीनाम्—जब 'सूताश्च ग्रामण्यश्च'—'सूतग्रामण्यः' ऐसा [ दीर्घान्त ] द्वन्द्व होता है, उसके लिए [ यहाँ 'नुट् करने के लिए ग्रामणी का ] ग्रहण है। किन्तु जब—सूतश्च ग्रामणीश्च'—सूतग्रामणि यह होता है, और 'सूतग्रामणि च सूतग्रामणि, सूतग्रामणि च—[ ऐसा विग्रह करके समास होता है ] सूतग्रामणीनाम् ऐसा। तब तो 'ह्रस्वान्त से' इसी से कार्यनिर्वाह हो जाता है। [ भाव यह है कि जब इतरेतरयोग में द्वन्द्व होता है तब समासान्त ह्रस्व नहीं होने से नुट् प्राप्त नहीं है। वहाँ के लिए इस वचन की आवश्यकता है। जब 'सर्वो द्वन्द्वो विभाषया एकवद् भवति" के अनुसार, एकवचन और नपुंसक होने से ह्रस्वान्त हो जाता है वहाँ तो 'ह्रस्वोनद्यापः' इसी पूर्व नियम से नुट् हो जाता है। इसके लिये यह सूत्र आवश्यक नहीं है। न्यासकार इतरेतरयोगद्वन्द्व न मानकर कर्मधारय मानते हैं। ] ॥ ५६॥

ऋचा के पाद के अन्त में वर्तमान 'गो' शब्द से उत्तरवर्त्ती 'आम्' को नुट् का आगम होता है। उदा० विद्मा हि त्वा गोपतिं शूर गोनाम्। [ गो + आम्, नुट् होता है। ]

**पादान्त इति किम्? 'गवां गोत्रमुदसृजो यदङ्गिरः' (ऋ० २.२३.१८)। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु० प० ३५) इति पादान्तेऽपि क्वचिन्न भवति। हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम्' (ऋ० १०.१६६.१)।**

## ३२३४. इदितो नुम् धातोः ॥ ५८ ॥ (२२६२)

**इदितो धातुर्नुमागमो भवति। कुडि—कुण्डिता, कुण्डितुम्, कुण्डितव्यम्, कुण्डा। हुडि—हुण्डिता, हुण्डितुम्, हुण्डितव्यम्, हुण्डा।**

**इदित इति किम्? पचति। पठति।**

**अयं धातूपदेशावस्थायामेव नुमागमो भवति (भ० भा०)—कुण्डा, हुण्डेति; 'गुरोश्च हलः'**

**न्यासः**

ऋक्पादग्रहणम् ॥ ५७ ॥

**इदितो नुम् धातोः ॥ कुण्डिता, हुण्डितेति।** 'कुडि दाहे', हुडि सङ्घाते'—आभ्यां तृच्, इड् 'ऋदुशनस्' इत्यादिनानङ्।

किमयं धातूपदेशावस्थायामेव नुम् विधीयते? इत्याह—**कुण्डा, हुण्डेत्यादि**। यदि प्रत्यय उत्पन्ने नुम् स्यात्, तदा प्रत्ययविधानवेलायां कुडिहुडयोरगुरुत्वात् क्तिन्नेव स्यात्, न त्वकारप्रत्ययः, स चेष्यते। तस्मात् तदर्थं धातूपदेशावस्थायायामेव नुम् भवतीत्यवसीयते। कथं पुनर्धातूपदेशावस्थायां नुम् भवतीत्यवसीयते, यावतात्रोपदेशग्रहणं नास्ति? इत्याह—**तथा हीत्यादि**। 'धिन्विकृण्व्योर च इत्युप्रत्ययविधानकाले नुमनुषक्तयोर्ग्रहणं सनुम्कयोरेव प्रकृतत्वं यथा स्यात्। एवं सनुम्कयोः प्रकृतत्वं भवति यद्युपदेशावस्थायामेव नुम् भवति, नान्यथा। तस्मान्नुमनुषक्तयोर्ग्रहणाज्ज्ञापकादवसीयते—धातूपदेशावस्थायामेव नुम् भवतीति। तस्य ह्येतत् प्रयोजनम्—

**पदमञ्जरी**

**इति** ॥ ५७ ॥

**इदितो नुम् धातोः** ॥ 'कुडि दाहे' (धा० पा० २७०), 'हुडि सङ्घाते' (धा० पा० २६९)।

अङ्गाधिकारान् नुमयं प्रत्यये परतो भवेत्।
कुण्डेत्यादौ ततश्च क्तिन्स्यान्नाकारो गुरोर्हलः?

इत्याशङ्क्याह—**अयमिति**। अत्र प्रमाणमाह—**तथा हीति**। कथं पुनरेतज्ज्ञापकम्, यावता 'इक्श्तिपौ धातुनिर्द्देशे वक्तव्यौ' (वा० ३१९) इति इक्प्रत्यये कृतेऽङ्गसंज्ञायां सत्यां नुमा भवितव्यमिति लक्षणवशादेव नुमनुषक्तयोर्ग्रहणं कर्त्तव्यम्? एवं मन्यते—नायमिका निर्देशः, किं,तर्हि? आगन्तुकेनेकारेण, तत्राप्राप्तो नुमिति।

**भावबोधिनी**

पाद के अन्त में—इसका क्या फल है? 'गवां गोत्रमुदसृजो यदङ्गिरः। [ यहाँ पाद के आदि में नुट् नहीं होता है। ] "सभी विधियाँ वेद में विकल्प से होती हैं" इसके अनुसार कहीं-कहीं पाद के अन्त में भी नहीं होता है—"हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम्।" [ यहाँ अन्त में रहने पर भी नुट् नहीं होता है। ] ॥ ५७ ॥

इदित् (इकार की इत्संज्ञावाली) धातु को नुम् का आगम होता हैं। उदा० कुण्डिता। कुण्डितुम्। कुण्डितव्यम्। कुण्डा। [ 'कुडि दाह अर्थ में है।' इकार की इत्संज्ञा करने पर प्रस्तुत सूत्र से नुम् = न् आगम, न् का अनुस्वार और परसवर्ण होने पर 'ण्' बनता है।] हुडि—हुण्डिता। हुण्डितुम्। हुण्डितव्यम्। हुण्डा। ['हुडि धातु संघात अर्थ में है। इकार की इत्संज्ञा लोप, नुम् = न् आगम, अनुस्वार, परसवर्ण—हुण्ड्। तृच्, तुमुन् तव्य, अ प्रत्यय परे रूप है। ]

इकार की इत्संज्ञावाला—इसका क्या फल है? पचति। पठति। [ यहाँ 'पच' 'पठ' में अकार की इत्संज्ञा-लोप है। ]

**(३.३.१०३) इत्यकारप्रत्ययो यथा स्यात्। तथा हि—'धिन्विकृण्व्योर च' (३.१.८०) इति प्रत्ययविधावेव नुमनुषक्तयोर्ग्रहणम्।**

**धातुग्रहणं चेह क्रियते—धातूपदेशकाल एव नुमागमो यथा स्यादित्येवमर्थम्। तासिसिचोरिदित्कार्यं नास्ति—इत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते। अमंस्तेत्येवमादौ हि 'हनः सिच्' (१.२.२४) इति कित्त्वविधानसामर्थ्यान्नकारलोपो न भवति।**

**न्यासः**

उपदेशावस्थायामेव नुम् यथा विज्ञायेतेति। न हि तन्नुमर्थं प्रयुज्यते; नुम इदित्वादेव सिद्धत्वात्। ननु च 'इक्श्तिपौ धातुनिर्देशे' इतीगिति प्रत्ययेऽङ्गसंज्ञायां सत्यां नुम भवितव्यम्, तत्र लक्षणवशादेव 'धिन्विकृण्व्योर च' इति नुमनुषक्तयोर्ग्रहणम्, तत् कथमस्यार्थस्य ग्रहणं ज्ञापकम्? नैतदस्ति; न हि 'धिन्विकृण्व्योर च' इत्ययमिका निर्देशः, स हि 'रोगाख्यायां ण्वुल् बहुलम्' इति बहुलवचनेन सन्निधानात् क्वचिदेव भवति, न सर्वत्र। एवञ्च 'गुप्तिज्किद्भ्यः सन्' इत्येवमादयो निर्देशा उपपद्यन्ते। तस्माद् 'धिन्विकृण्व्योः' इति नायमिका निर्देशः, किं तर्हि? उच्चारणार्थेनेकारेण, यथा—'इन्धिभवतिभ्याम्' इत्यत्रेकारेण निर्देशः; अन्यथा 'अनिदिताम्' इत्यादिनानुनासिकलोपः स्यात्।

अथापि हि 'धिन्विकृण्व्योः' इतीका निर्देशः स्यात्, एवमपि यदि धातूपदेशावस्थायामेव नुम्भवतीत्ययमर्थो ज्ञापयितुं नाभीष्टः स्यात्, ततो लाघवार्थमनित्यत्वादागमशासनस्य नुममकृत्वैव निर्देशं कुर्याद्, यथा—'युवोरनाकौ' इत्यत्र द्वन्द्वैकवद्भावपक्ष उक्तम्। तस्मान्नुमनुषक्तयोर्ग्रहणं ज्ञापकमेव धातुग्रहणादप्यवसीयते। नुमुपदेशावस्थायामेव भवतीति दर्शयितुमाह—**धातुग्रहणं चेत्यादि**। धातुसंज्ञाप्रवृत्तिकालो धातूपदेशकालः, तत्रैव नुम् भवतीत्येवमर्थमिह धातुग्रहणं क्रियते। तस्मादतोऽपि धातुग्रहणादुपदेशावस्थायामेव नुम् भवतीति ज्ञायते, न ह्यन्यद्धातुग्रहणस्य प्रयोजनमस्तीत्यभिप्रायः। ननु च भेत्ता, अभैत्सीदित्यत्राधात्वोस्तासिसिचोरिदितोर्नुम् मा भूदित्येवमर्थं धातुग्रहणं स्यात्? इत्याह—**तासिसिचोरित्यादि**। यदि तासिसिचोरिदित्कार्यं स्यात्, तदेकारस्येत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायेत, न चास्ति प्रयोजनमिति न प्रतिज्ञायते; ततश्च निरनुनासिकोऽप्रतिलब्धेत्संज्ञक उच्चारणार्थ एवानयोरिकारः पठ्यत इति नुमः प्रसङ्ग एव नास्ति, तत् किं तन्निवृत्त्यर्थेन धातुग्रहणेन? ननु चारंस्त, अमंस्त, मन्ता, संगन्तेत्यत्र 'अनिदिताम्' इत्यनुनासिकलोपो मा भूदित्येवमर्थं तासिसिचोरिदित्कार्यम्, तत् किमुच्यते इदित्कार्यं तासिसिचोर्नास्ति? इत्यत आह—**अरंस्त, अमंस्तेत्यादि। 'हनः सिच्' इति।**

**पदमञ्जरी**

नात्र किञ्चित्प्रमाणमस्तीत्याशङ्क्याह—**धातुग्रहणं चेति**। धातुत्वमेवापेक्षितं न त्वङ्गत्वमित्येवमर्थं धातुग्रहणम्, नान्यत्किञ्चित्प्रयोजनमस्तीति भावः। ननु च भेत्ता, अभैत्सीदित्यत्राधात्वोस्तासिसिचोरिदितोर्नुम्निवृत्त्यर्थं धातुग्रहणं स्यात्? अत आह—**तासिसिचोरिति**। ननु चामंस्तेत्यादौ आत्मनेपदं ङितमपेक्ष्य सिजन्तस्य 'अनिदिताम्' इति लोपो मा भूदित्येतत्सिचोदित्कार्यं स्यात्? इत्यत आह—**अमंस्तेत्यादाविति**। यथा 'हनः सिच्' इति कित्त्वविधानमस्य लिङ्गं तथा तत्रैव प्रतिपादितम्।

**भावबोधिनी**

वह नुम् आगम धातु की उपदेशावस्था में ही हो जाता है—जिससे 'कुण्डा, हुण्डा' इनमें "गुरोश्च हलः" सूत्र से अकार प्रत्यय हो सके। जैसा कि 'धिन्विकृण्व्योर च' सूत्र में प्रत्ययविधि में नुमनुषक्त (नुम् आगम वाली) ही दोनों ( धातुओं ) का ग्रहण है।

धातुग्रहण—इसलिए किया गया है—धातु के उपदेश काल में ही जिससे नुम् का आगम हो सके। तासि और सिच् का इदित्-सम्बन्धी कार्य नहीं है अतः उच्चारणार्थ ही निरनुनासिक इकार का ग्रहण है। 'अमंस्त' इत्यादि में 'हनः सिच्' सूत्र से कित्वविधान के सामर्थ्य से नकार का लोप नहीं होता है।

'मन्ता यहाँ भी "असिद्धवदत्रा भात्" इस सूत्र से टिलोप असिद्ध हो जावे से नलोप नहीं होता है।

**मन्ता—इत्यत्रापि 'असिद्धवदत्रा भात्' (६.४.२२) इति टिलोपस्यासिद्धत्वान्नलोपो न भवति।**

**न्यास**

कित्त्वविधावस्यैतत्प्रयोजनम्—आहतेत्यत्रानुनासिकलोपो यथा स्यात्। यदि सिजन्तस्यानुनासिकलोपः सार्वधातुकङित्त्वमाश्रित्य स्याद्, 'हनः सिच्' इति कित्त्वमनर्थकं स्यात्, प्रयोजनाभावात्? नैतदस्ति; अस्ति ह्यन्यत् कित्वविधानस्य प्रयोजनम्—'अनुदात्तोपदेश' इत्यादिना सिच्यनुनासिकलोपो यथा स्यादिति; 'अनिदिताम्' इत्यादिना सिजन्तस्य सार्वधातुके मा भूदिति। कः पुनरत्र विशेषः—सार्वधातुके ङिति वा? सिचि किति वा? अयमस्ति विशेषः—समानाश्रये सिच्यनुनासिकलोपस्यासिद्धत्वादतो लोपो न भवति; सार्वधातुके तूपधालोपे तस्य व्याश्रयत्वेनासिद्धत्वाभावादतो लोपः स्यादेव। नैषोऽस्ति विशेषः; अतो लोपविधौ 'अनुदात्तोपदेश' इत्यादेः सूत्रादुपदेशग्रहणमनुवर्त्तते, तेनार्धधातुकोपदेशे यदकारान्तमङ्गं तस्य लोपो विज्ञायते; न चाहतेत्यत्रोपदेशेऽकारान्तमेतत्। तस्माद् 'हनः सिच्' इति कित्त्वविधानसामर्थ्यादरंस्तेत्यादौ नकारलोपो न भवति। तदेवं सिच इदित्कार्यं न भवतीति प्रतिपादितम्।

इदानीं तासेरप्यनुनासिकलोपाभाव इदित्कार्यं न भवतीति प्रतिपादयितुमाह—**मन्तेत्यादि**। नकारलोपो न भवतीति प्रकृतेन सम्बन्धः। उपधानकारस्य 'अनिदिताम्' इत्यादिना लोप उच्यते। न च मन्तेत्यत्र नकार उपधा भवति; टिलोपस्यासिद्धत्वात्। तस्मात् तासेरपीदित्कार्यं न विद्यते। ततश्च युक्तमुक्तम्—

**पदमञ्जरी**

तासेस्तर्हीदित्करणं मन्तेत्यादौ आत्मनेपदैकवचनस्य डादेशे कृते टिलोपे च मनत्+आ इति स्थिते नकारस्योपधालोपो मा भूदित्येवमर्थं स्यादत आह—**मन्तेत्यत्रेति**। नकारलोपो न भवतीत्यनुषङ्गः।

**जयादित्यस्तु**—आभीयमसिद्धत्वमनित्यमाश्रित्य तासेरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्यवोचत्। तन्मते धातुग्रहणं तासिनिवृत्त्यर्थं कर्तव्यमिति 'उपदेशे नुम्भवति' इत्यत्र यत्नान्तरमास्थेयम्।

**भावबोधिनी**

इनमें क्यों नहीं होता है—भेत्ता, छेत्ता? 'इरित्' इस समुदाय की इत्संज्ञा होती है, इस कारण केवल इदित्व नहीं होने से [ नुम् आगम नहीं होता है ]।

अवयवशः इत्संज्ञा में भी 'गोः पदान्ते' इस सूत्र से 'अन्त' ग्रहण की अनुवृत्ति करनी चाहिए। इस कारण अन्तइदित् धातुयें ही ली जाती है।

**विमर्श**—प्रस्तुत सूत्र के विषय में कुछ आवश्यक बातें ये हैं कि यह नुम् आगम पाणिनि द्वारा धातूपदेश की अवस्था में ही कर दिया जाता है, अर्थात् 'इ' की इत्संज्ञा के करने के बाद पहला कार्य यह नुमागम ही है। इसी कारण 'कुडि हुडि' में नुम्, अनुस्वार, परसवर्ण कर देने से संयोगपूर्व को गुरु मानकर 'गुरोश्च हलः' सूत्र से 'अ' प्रत्यय होकर 'टाप्' करने पर 'कुण्डा' हुण्डा' बनते हैं। अन्यथा क्तिन् प्रत्यय ही होता। इसी कारण 'धिन्विकृण्व्योर च'' सूत्र में नुम्विशिष्ट का ग्रहण है। यह सूत्र उ करता है इसमें नुम्विशिष्ट ही 'धिन्वि कृण्वि' गृहीत हैं। यहाँ 'इक्श्तिपौ धातुनिर्देशे' वचन से 'इक्' प्रत्यय होने पर नुम् होता है—ऐसा नहीं कहना चाहिए क्योंकि ये धातुनिर्देश वाले प्रत्यय अनित्य हैं। इसमें प्रमाण है 'रोगाख्यायां ण्वुल् बहुलम्' का बहुलग्रहण। इसीलिये 'गुप्-तिज्-किद्भ्यः सन्' सूत्र में कोई प्रत्यय नहीं है। अतः यह स्पष्ट है कि 'धिन्विकृण्व्योर च' सूत्र में 'धिवि कृवि' धातुओं के इ की इत्संज्ञा और नुम् करने के बाद उच्चारणार्थक 'इ' कार सुनाई देता है।

सूत्र में 'धातोः' इसका ग्रहण भी उपदेशावस्था में ही नुम् आगम में प्रमाण है। क्योंकि इसके अतिरिक्त धातुग्रहण का कोई प्रयोजन नहीं दिखाई देता है। तासि और सिच् के इकार की इत्संज्ञा करने पर इनमें नुम् आगम न हो—इसके लिये भी धातुग्रहण नहीं है क्योंकि इनके इकार की अनुनासिकत्व-प्रतिज्ञा नहीं है। क्योंकि इत्संज्ञा का

इह कस्मान्न भवति--भेत्ता, छेत्तेति ? 'इरितां समुदायस्येत्संज्ञा' (४.२.५७) इतीदित्त्वं नास्ति। अवयवशोऽपीत्संज्ञायां सत्याम् 'गोः पादान्ते' (७.१.५७) इत्यतोऽन्तग्रहणमनुवर्त्तयितव्यम्। तेनान्तेदितो धातवो गृह्यन्ते ॥

## ३२३५. शे मुचादीनाम् ॥ ५९ ॥ (२५४२)

**शे प्रत्यये परतो मुचादीनां नुमागमो भवति। मुच्लृ—मुञ्चति। लुप्लृ—लुम्पति। विद्लृ—विन्दति।**

**न्यासः**

'तासिसिचोरिदित्कार्यं नास्ति' इति। अथ नुमागम इदित्कार्यं कस्मान्न भवति ? अनिष्टत्वात्। न ह्यनिष्टं कार्यं शास्त्रे परिकल्पयितुं युक्तम्। यदि तर्हि तासेर्निरनुनासिक इकार उच्चारणार्थः, एवं तर्हि 'स्यतासी ऌलुटोः' इत्यत्र यदुक्तम्—'इदित्करणमनुनासिकलोपप्रतिबन्धार्थम्', तत् कथं न विरुध्यते ? यथा न विरुध्यते तथा तत्रैवोक्तम्।

अथ भिदिरित्येवमादीनां नुम् कस्मान्न भवति, अस्ति ह्येषामपीकार इत्संज्ञकः ? इत्याह—**इरितामित्यादि**। भिदिर्प्रभृतयो हीरितः, न त्विदितः; यस्मादिर उपसंख्यानमिति रेफेकारस्य समुदायस्य तेषामित्संज्ञा, न प्रत्येकमवयवस्य। तत्रेदितामुच्यमानो नुम् कः प्रसङ्गो यदिरितां स्यात्!

स्यादेतत्—'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञेकारस्य, 'हलन्त्यम्' इति रेफस्य, तस्मादस्त्येव तेषामिदित्त्वम् ? इत्याह—**अवयवस्यापीति**। गतार्थम् ॥ ५८ ॥

**शे मुचादीनाम्** ॥ मुचादयस्तुदादौ पठ्यन्ते 'मुच्लृ मोक्षणे' इत्यतः प्रभृत्या गणपरिसमाप्तेः।

**पदमञ्जरी**

इह भिदिर्प्रभृतिषु इकारस्य 'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञा, रेफस्यापि 'हलन्त्यम्' इति, ततश्चेदित्त्वान्नुम् प्राप्नोति ? तत्राह—**इरितामिति**। 'इरितामिर उपसङ्ख्यानम्' (वा० ८३५) इत्यौपसङ्ख्यानिकी समुदायस्येत्संज्ञा, न प्रत्येकं सौत्री, ततश्चानिदित्त्वान्नुम् न भवतीत्यर्थः।

नन्वेवमपि स्वरितेत्त्वनिबन्धनमात्मनेपदं न प्राप्नोति भिदिर्प्रभृतिषु, तस्मात्प्रत्येकपक्षे परिहारो वाच्यः—इति मत्वा प्रत्येकपक्षे परिहारमाह—**अवयवशोऽपीति**। अपर आह—इदित इति नायं बहुव्रीहिः, किं तर्हि ? कर्मधारयः, ततश्च वर्णग्रहणमिदं भवति। तत्र तदन्तविधिनेत्संज्ञकेकारान्तस्य धातोर्नुमिति। अथेदितो धातवो नुमनुषक्ता एव कस्मान्न पठिताः, एवं हीदं न कर्त्तव्यं भवति ? नुम्ग्रहणं तावदुत्तरार्थं कर्त्तव्यम्, इदितां च भूयस्त्वात्प्रत्येकं नकारोच्चारणादिदमेव सूत्रं लघीयः ॥ ५८ ॥

**शे मुचादीनाम्** ॥ मुचादयः 'मुच्लृ मोक्षणे' (धा० पा० १४३०) इत्यारभ्य तुदादिष्वा गणान्ताद्वेदितव्याः।

**भावबोधिनी**

कोई फल नहीं है। इनमें केवल उच्चारणार्थ ही इकार है। 'अरंस्त' 'अमंस्त' आदि में इत्संज्ञा का फल सम्भव है क्योंकि सिच् के इ की इत्संज्ञा लोप होने से 'अनिदितां हल उपधायाः क्ङिति' (६।४।२४) से अनुनासिक नकार का लोप नहीं होता है। परन्तु यह प्रयोजन संगत नही है क्योंकि 'हनः सिच्' सूत्र से कित् करने का यही फल है कि 'आहत' (आहन् स् त) में न् का लोप हो सके। यदि इसके विना भी लोप हो सकता है तो यह सूत्र व्यर्थ होकर ज्ञापक बनता है कि अन्य के न् का लोप नहीं होता है।

जहाँ केवल 'इ' की इत्संज्ञा होती है वहीं नुमागम होता है। इस कारण 'छिदिर्' आदि में 'इर्' समुदाय की इत्संज्ञा में यह आगम नहीं होता है। यदि एक-एक अवयव की हीं इत्संज्ञा मानी जाय तो भी 'अन्ते' की अनुवृत्ति करने से 'इ' अन्त का जब इत्संज्ञक होता है तभी आगम होता है। इस प्रकार कहीं कोई दोष नहीं रहता है ॥ ५८ ॥

'श' प्रत्यय परे रहते मुच् आदि धातुओं को नुम् आगम होता है। उदा०—मुच्लृ = मुञ्चति। लुप्लृ लुम्पति। विद्लृ—विन्दति। लिपि—लिम्पति। सिच्—सिञ्चति। कृती—कृन्तति। खिद—खिन्दति। पिश—पिंशति। [ मुच्लृ

**लिपि—लिम्पति। सिच्—सिञ्चति। कृती—कृन्तति। खिद—खिन्दति। पिश—पिंशति।**

**शे इति किम्? मोक्ता, मोक्तुम्, मोक्तव्यम्। मुचादीनामिति किम्? तुदति, नुदति।**

**❀ 'शे तृम्फादीनामुपसंख्यानं कर्त्तव्यम् ❀ (म० भा० ७.१.५९ वा० १)। के पुनस्तृम्फादयः? 'तृफ तृम्फ तृप्तौ' (धा० पा० १३०८–९), 'दृफ दृम्फ उत्क्लेशे' (धा० पा० १३१४–१५), 'गुफ गुम्फ ग्रन्थे' (धा० पा० १३१८–१९); 'उभ उम्भ पूरणे' (धा० पा० १३२०–२१), 'शुभ शुम्भ शोभार्थे' (धा० पा०**

**न्यासः**

**मोक्तेति।** तृच्, 'एकाचः' इतीट् प्रतिषेधः, 'चोः कुः' इति कुत्वम्।

**के पुनस्तृम्फादय इति।** एवं मन्यते—तृम्फादिषु तृफादयो निरनुषङ्गा अपि गणे पठ्यन्ते—'तृफ तृन्फ तृप्तौ' इत्येवमादयः। तत्र यदि तेऽपि तृफादिग्रहणेन गृह्येरन्, तृफतीत्यादि रूपं नोपपद्यत इत्यत आह—**ये तत्र सानुषङ्गाः पठ्यन्ते, ते तृम्फादय इति।** आदिशब्दोऽयं प्रकारार्थः, प्रकारस्तु सादृश्यम्, तस्मात् तृम्फतिना सानुषङ्गेण ये सदृशाः, त एवादिग्रहणेनोपलक्ष्यन्त इत्यभिप्रायः। **सानुषङ्गा इति।** नकारोऽनुषङ्गः, तेन सह वर्त्तन्त इति सानुषङ्गाः। यदि तर्हि ये सानुषङ्गाः पठ्यन्ते ते तृम्फादयः, तेषां नुमि कृते परस्यानुस्वारे कृते तस्य परसवर्णे द्वयोर्नकारयोः श्रवणं प्राप्नोति? इत्यत आह—**तेषामित्यादि।** कृते हि नकारलोपे नुम् विधीयते। अतो न भवत्येष दोष इति भावः। अथ सोऽपि नुम् कस्मान्न लुप्यते? इत्याह—**स चेत्यादि।**

**पदमञ्जरी**

**के पुनस्तृम्फादय इति।** व्यवस्थावाचिन्यादिशब्दे निरनुषङ्गाणामपि ग्रहणप्रसङ्गादिति प्रश्नः। प्रकारवाची आदिशब्दः, प्रकारश्च सादृश्यम्, तच्च नकारानुषक्ततयेत्युत्तरम्। यदि सानुषङ्गाणां पुनर्नुम् विधीयते, एवं सति परस्य नकारस्यानुस्वारपरसवर्णयोः कृतयोर्नकारमकारयोः श्रवणप्रसङ्गः इत्यत आह—**तेषामिति।** अथास्य नुमोऽपि लोपः कस्मान्न भवति? तत्राह—**स चेति। विधानसामर्थ्यादिति।** अयं च मुचादिष्वेव लोपाभावस्य हेतुः। तृम्फादिषु तु परनकारलोपस्य चिणो लुग्न्यायेनासिद्धत्वादेव पूर्वनकारस्य

**भावबोधिनी**

आदि धातुयें तुदादिगण के अन्त में पठित हैं। ऌ आदि की इत्संज्ञा लोप के बाद लट् तिप्—मुच्+ति, 'तुदादिभ्यः शः' सूत्र से 'श' प्रत्यय, अनुबन्धलोप मुच्+अ ति प्रस्तुत सूत्र से नुम् यह मित् आगम अन्त्य अच् 'उ' से परे होने से मुन् च् अ ति, न् का अनुस्वार, परसवर्ण—ञ्। 'अनुस्वारस्य ययि परसवर्णः' सूत्र यय् परे ही परसवर्ण करता है इसलिये—पिंशति में अनुस्वार ही सुनाई देता है। ]

'श' परे—इसका क्या फल है? मोक्ता, मोक्तुम्, मोक्तव्यम्। [ तृच्, तुमुन्, तव्यत् परे 'नुम्' नहीं होता है। गुण, कुत्व होने पर उक्त रूप बनते हैं। ]

मुच् आदि को ही—इसका क्या फल है? तुदति, नुदति। [ तुद्+श+ति, नुद+श+ति में मुचादि परिगणित धातु न होने से नुम् नहीं होता है। ]

❀ श परे तृम्फ आदि का भी नुम् कहना चाहिए। ❀ तो फिर तृम्फ आदि कौन से हैं? 'तृफ तृम्फ ये तृप्त होना अर्थ में हैं', 'दृफ दृम्फ ये उत्क्लेश करना अर्थ में हैं', 'गुफ, गुम्फ गूँथना = ग्रन्थित करना अर्थ में हैं', 'उभ उम्भ पूरित करना अर्थ में हैं, 'शुभ शुम्भ शोभित होना अर्थ में हैं'—इनमें जो नुम् से युक्त (सानुषङ्ग) हैं वे तृम्फ आदि हैं इनका 'अनिदितां हल उपधायाः क्ङिति' (६।४।२४) सूत्र से अनुनासिक का लोप कर देने पर [ प्रस्तुत सूत्र से ] नुम् का विधान किया जाता है और विधान-सामर्थ्य से इसका लोप नहीं होता है (यदि लोप ही करना होता तो अनर्थक विधान करने का क्या लाभ था? अतः लोप नहीं होता है)। उदा० तृम्फतिः दृम्फति, गुम्फति, उम्भति,

---

१. भाष्ये, प्रदीपे च 'शे तृम्पादीनामि'ति पाठः।

१३२२–२३)—इत्यत्र ये सानुषङ्गास्तृम्फादयः, तेषाम् 'अनिदितां हल उपधायाः क्ङिति' (६.४.२४) इत्यनुनासिकलोपे कृते नुम्विधीयते, स च विधानसामर्थ्यान्न लुप्यते—तृम्फति, दृम्फति, गुम्फति, उम्भति, शुम्भति। ये तु निरनुषङ्गाः, तेषां तृफति, दृफति, गुफति, उभति, शुभतीत्येवं भवति ॥

**३२३६. मस्जिनशोर्झलि ॥ ६० ॥ (२५१७)**

**मस्जि, नशि—इत्येतयोरङ्गयोर्झलादौ प्रत्यये नुमागमो भवति। मङ्क्ता, मङ्क्तुम्, मङ्क्तव्यम्। नंष्टा, नंष्टुम्, नंष्टव्यम्।**

**न्यासः**

यदि सोऽपि लुप्येत, नुमो विधानमनर्थकमेव स्यादिति मन्यते। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—'धातोः' इत्यनुवर्त्तते, 'शे' इति योगविभागः क्रियते, तेन तृम्फादीनाञ्च नुम् भविष्यति। मुचादीनामित्येवमनर्थकं स्यात्, 'शे' इत्यनेन सिद्धत्वात्? नानर्थकम्; 'शे' इत्यस्यासर्वविषयत्वज्ञापनार्थत्वात्। एवं ह्यतिप्रसङ्गो न भवति। कथं मुचादिष्वेव तृम्फादयो न पठिताः? येऽत्र निरनुषङ्गाः पठ्यन्ते तेषां नुमागमो मा भूदित्येवमर्थम् ॥ ५९ ॥

**मस्जिनशोर्झलि ॥ मङ्क्तेति।** 'टुमस्जो शुद्धौ', तृच्, पूर्ववदिडभावः, कुत्वञ्च, अन्त्याज्जकारात् पूर्वो नुम्, 'स्कोः' इत्यादिना सकारलोपः, अनुस्वारपरसवर्णौ। **नंष्टेति।** 'रधादिभ्यश्च' इति यदेण्नास्ति तदायं नुम्, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्। इट्पक्षे झलादित्वाभावान्नुम् नास्ति—नशितेति।

**पदमञ्जरी**

लोपाभावः सिद्धः। अथ मुचादिष्वेव तृम्फादयः कस्मान्न पठिताः? इत्यत आह—**ये त्विति।** अयमभिप्रायः—सानुषाङ्गाणां निरनुषङ्गाणां च तन्त्रेणार्थनिर्देशः। तत्र यदि सर्वे मुचादिषु पठ्येरन्, निरनुषङ्गाणामपि नुम्प्रसङ्गः। सानुषङ्गाणां निष्कृष्य पाठे द्विरर्थनिर्देशेन गौरवप्रसङ्ग इति ॥ ५९ ॥

**मस्जिनशोर्झलि ॥ मङ्क्तेति।** 'टुमस्जो शुद्धौ' (धा० पा० १४१५), तृच्, 'एकाचः' इतीट्प्रतिषेधः, अन्त्याज्जकारात्पूर्वो नुम्, 'स्कोः संयोगाद्योरन्ते च' इति सलोपः, कुत्वम्, अनुस्वारपरसवर्णौ। **नंष्टेति।** 'रधादिभ्यश्च' इतीडभावपक्षे नुम्। **मज्जनमिति।** जकारे परतः सकारस्य श्चुत्वे जश्त्वे च प्राप्ते जश्त्वस्यासिद्धत्वात् श्चुत्वम्, शकारस्य जश्त्वम्—जकारः।

**भावबोधिनी**

शुम्भति। [ इनमें तृम्फ आदि अनुनासिक वर्ण-विशिष्ट धातुयें हैं। तुदादिगणीय होने से 'श' विकरण के बाद 'अनिदिताम्' सूत्र से न् (म्, न्) का लोप करने के बाद पुनः इस सूत्र से नुम्, अनुस्वार और परसवर्ण करने पर उपर्युक्त रूप बनते हैं। ] परन्तु ऊपर जो अनुषङ्ग = नुम् से रहित हैं [ उनका न तो लोप ही होता है और न नुम् आगम, इस कारण ] तृफति, दृफति, गुफति, उभति, शुभति—ये ही रूप होते हैं। [ अपितु सार्वधातुक ङित् हो जाने से इनमें गुण भी नहीं होता है। निष्कर्ष यह है कि जो अनुनासिक वर्ण-विशिष्ट हैं वे लोप करने के बाद पुनः नुमागम के कारण वैसे ही रूप में रह जाती हैं। ] ॥ ५९ ॥

मस्जि और नशि—इन अंगों को झलादि प्रत्यय परे रहते नुम् आगम होता है। उदा० मङ्क्ता, मङ्क्तुम्, मङ्क्तव्यम्। नंष्टा, नुष्टम्, नंष्टव्यम्। [ √'टु मस्जो शुद्धौ' धातु के अनुबन्ध और 'टु' की इत्संज्ञा, लोप के बाद तृच्, तुमुन्, तव्यत् प्रत्यय परे रहते रूप हैं। मस्ज् + तृ, एकाच् होने से इट् प्रतिषेध, नुम्—म् स् न् ज् + तृ, "स्कोः संयोगाद्योरन्ते च" सूत्र से स् लोप, 'चोः कुः' से कुत्व से ज् का ग्, चर्त्व से ग् का क्—मन् क् + तृ, न् का अनुस्वार परसवर्ण ङ्—मङ्क्तृ + सु आनङ् आदि होते हैं। सामान्यतया नुम् मित् होने से अन्त्य अच् के बाद होता है किन्तु "मस्जेरन्त्यात् पूर्वो नुम् वाच्यः' से अनुस्वार अन्त्य ज् से पहले ही किया जाता है अन्यथा संयोगादि न होने से स् लेस नहो हो सकता। √णश् अदर्शने का नत्वादेश के बाद तृच्, तुमुन्, तव्यत् प्रत्यय परे के रूप हैं। नश् + तृच्, नुम्, अनुस्वार नंश् + तृ, श् का ष् 'व्रश्चादि' सूत्र से, ष्टुत्व से नंष्टृ + सु आदि। ]

**झलीति किम् ? मज्जनम् । नशनम् ।**[1]

**'मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम्' (म० भा० ८.२.२१) । मग्नः । मग्नवान् ॥**

## ३२३७. रधिजभोरचि ॥ ६१ ॥ (२३०२)

**रधि, जभि—इत्येतयोरजादौ प्रत्यये नुमागमो भवति । रन्धयति । रन्धकः । साधुरन्धी । रन्धं-**

### न्यासः

**मज्जनम्, नशनमिति ।** ल्युट्, 'झलां जश् झशि' इति जश्त्वम्—सकारस्य दकारः, तस्य चुत्वम्—जकारः ।

**मस्जेरित्यादि ।** यदि मस्जेरन्त्यादचः परो नुम् स्यात्, असंयोगादित्वात् सलोपो न प्राप्नोति, अनुपधत्वान्न नलोपः, स चेष्यते; अन्यथा मग्नो मग्नवानिति न सिध्येत् । तस्मादन्त्यात्पूर्वमाचार्या मस्जेर्नुममिच्छन्ति । कथं पुनरिष्यमाणोऽप्ययमर्थो लभ्यते ? नशेरल्पाच्तरस्य पूर्वनिपातलक्षणव्यभिचारचिह्नात् । स हि लक्षणनिरपेक्षतां सूचयन् 'मिदचोऽन्त्यात्परः' इत्येतदपीह लक्षणं नापेक्षत इति सूचयति । तस्मिंश्चानपेक्षिते लक्ष्यानुरोधाद् यत्र मस्जेर्नुमि कृते सतोष्टं सिध्यति तत्रैव विधीयते । तेन मस्जेरन्त्यात्पूर्वं नुम् सिद्धो भवति । **मग्न इति ।** 'ओदितश्च' इति निष्ठानत्वम् ॥ ६० ॥

**रधिजभोरचि । रन्धयतीति ।** 'रध हिंसासंराद्धयोः', हेतुमण्णिच् । **रन्धक इति ।** ण्वुल् । **साधुरन्धीति ।** 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । **रन्धंरन्धमिति ।** 'आभीक्ष्ण्ये णमुल्', 'आभीक्ष्ण्ये द्वे भवतः' इति

### पदमञ्जरी

**मस्जेरित्यादि ।** यद्यन्त्यादचः परः स्यात्तदा नसजानां समुदायस्यैका संयोगसंज्ञेति सकारस्यासंयोगादित्वाल्लोपो न स्यात् । अथापि सजयोः पृथक्संयोगसंज्ञामाश्रित्य लोपः स्याद् ? एवमपि तस्य लोपस्यासिद्धत्वान्नकार उपधा न भवतीति तस्य लोपो न स्यात् । तस्मादन्त्याज्जकारात्पूर्वः सजयोर्मध्ये नुमेषितव्यः ॥६०॥

**रधिजभोरचि ॥** 'रध हिंसासंराध्योः' (धा० पा० ११९३) 'जभ जृभी गात्रविनामे' (धा० पा० ३८८-८९), इहास्य नुमोऽवकाशः—रन्धनम्, ररन्धतुरित्यादि, 'अत उपधायाः' वृद्धेरवकाशः—पाचकः,

### भावबोधिनी

झलादि प्रत्यय परे—इसका क्या फल है ? मज्जनम् । नशनम् । [ मस्ज् + ल्युट् = अन हो जाते हैं इसमें 'स्' का श्चुत्व' और 'झलां जश् झशि' से जश्त्व इन दोनों की प्राप्ति में जश्त्व असिद्ध हो जाता है अतः श्चुत्व ही होता है । बाद में 'श्' का जश्त्व करने पर 'ज्' होता है । किन्तु न्यासकार ने पहले स् का जश्त्व करके 'द्' और बाद में श्चुत्व करके 'द्' का ज् किया है । इसमें पूर्ववर्त्ती मत पदमञ्जरीकार द्वारा भी समर्थित होने से उचित प्रतीत होता है । ]

* मस्ज धातु को अन्त्य वर्ण से पूर्व में नुम् चाहते हैं, अनुषङ्गादिलोप के लिए ।* उदा० मग्नः । मग्नवान् । [ मस्ज् + क्त = त, क्तवतु = तवत् परे रहते नुम् करने के प्रसङ्ग में अन्त्य अर्थात् ज् से पूर्व ही करना चाहिए । अन्यथा 'मन् स् ज् + त' में संयोगादि न होने से 'स्कोः संयोगाद्योः' सूत्र से स् का लोप नहीं हो सकेगा और उपधा में 'न्' न होने से उपधान् का भी लोप नहीं हो सकेगा । फलतः उक्त रूप नहीं बन सकेंगे । इसलिए अन्त्य अच् से परे न करके अन्त्य वर्ण अर्थात् 'ज्' से पहले नुम् करेंगे—म स् न् ज् + क्त, अब संयोगादि 'स्' का और उपधा न् का लोप होने में बाधा नहीं हैं, मज् + त, 'ओदितश्च' सूत्र से 'त' का न, ज् का कुत्व होने से 'ग्'—मग्नः । इसी प्रकार मग्नवान् । ] ॥ ६० ॥

√रधि और जभि'—इनको अजादि प्रत्यय परे रहते नुम् आगम होता है । उदा० रन्धयति । [ 'रध् यहाँ प्रेरणार्थक णिच् = इ प्रत्यय अजादि है अतः नुम्, अनुस्वार, परसवर्ण—रन्धि + लट् = ति शप्, गुण, अयादेश ]

१. 'नशिता'—इति मुद्रितः पाठः ।

**रन्धम्। रन्धो वर्त्तते। जम्भयति। जम्भकः। साधुजम्भी। जम्भं जम्भम्। जम्भो वर्त्तते। परापि सती वृद्धिर्नुमा बाध्यते; नित्यत्वात्।**

**अचीति किम्? रद्धा। जभ्यम्॥**

**३२३८. नेटचलिटि रधेः॥ ६२॥ (२५१६)**

**इडादावलिटि प्रत्यये परे रधेर्नुमागमो न भवति। रधिता। रधितुम्। रधितव्यम्।**

**इटीति किम्? रन्धनम्, रन्धकः। अलिटीति किम्? ररन्धिव, ररन्धिम्।**

**न्यासः**

द्विर्वचनम्। **रन्धो वर्त्तत इति।** भावे घञ्। अथ रन्धयतीत्यादिषु परत्वात् 'अत उपधायाः' इति वृद्धिः प्राप्नोति, सा कस्मान्न भवति? इत्यत आह—**परापि सतीत्यादि।** नित्यत्वं पुनः कृताकृतप्रसङ्गित्वान्नुमः। स हि कृतायां वृद्धौ प्राप्नोत्यकृतायामपीति नित्यः, वृद्धिस्तु नुमि कृते न प्राप्नोत्यकारस्यानुपधत्वादित्यनित्या।

**रद्धेति।** 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः, धातुधकारस्य जश्त्वम्—दकारः॥ ६१॥

**नेटचलिटि रधेः।** पूर्वेण प्राप्तस्य नुमः प्रतिषेध उच्यते। **रधितेत्यादि।** 'रधादिभ्यश्च' इतीट्। **ररन्धिव, ररन्धिमेति।** क्रादिनियमादिट्, 'परस्मैपदानाम्' इत्यादिना वस्मसोर्वमादेशौ।

**पदमञ्जरी**

पाठकः; रन्धकइत्यादावुभयप्रसङ्गे परत्वाद्वृद्धिः प्राप्नोति? तत्राह—**परापि सतीति।** वृद्धिस्तु नुमि कृते न प्राप्नोति, अकारस्यानुपधात्वादित्यनित्या। **रद्धेति।** 'रधादिभ्यश्च' इति पक्षे इडभावः, 'झषस्तथोर्धोऽधः इति तकारस्य धत्वम्।

इह 'जभेरचि रधेर्लिटि च नेटि'—इति सूत्रन्यासः कर्त्तव्यः? तथा तु न कृतमित्येव॥ ६१॥

**नेटचलिटि रधेः॥ नुमि कृते इत्यादि।** ननु चेटि सत्यजादित्वान्नुमा भवितव्यम्, प्रागेव चेटः कित्वं प्राप्नोति; न च 'अलिटि' इत्यस्य वैयर्थ्यम्, थल्यर्थवत्त्वात्? एवं हि धातोरित्यनुवृत्तेरुपदेश एव नुम् भवति। अचीत्येषा तु विषयसप्तमी।

**भावबोधिनी**

रन्धकः [ रध+ण्वुल् = अक, यहाँ भी नुम् ]। साधुरन्धी। [ 'साधु उपपद रध् से णिनि = इन् परे नुमागम—साधुरन्धिन् ] रन्धं रन्धम्। [ रध्+णमुल् = अम्, नुम्, अनुस्वारादि के बाद द्वित्व ] रन्धो वर्तते [ रध् से भाव में घञ्, वृद्धि से पहले नुम् ]। जम्भयति। जम्भकः। साधुजम्भी। जम्भं जम्भम्। जम्भो वर्तते। [ इनमें 'जभी गात्रविनामे' जमुहाई लेना अर्थ है। नुम्, अनुस्वार परसवर्ण 'म्' हो जाता है—जभ्, जन् भ, जं म्भ, जम्भ्+णिच् = इ, आदि परे के रूप हैं। ]

[ रध्+णिच्, ण्वुल् आदि में 'अत उपधायाः' सूत्र से उपधावृद्धि पहले क्यों नहीं होती है? ] परवर्ती होवे पर भी उपधावृद्धि का बाध नुम् से होवा है क्योंकि नुम् नित्य है। [ पर, नित्य, अन्तरङ्ग, अपवाद—इनमें उत्तरोत्तर बलवत्तर होता है। अतः नित्य नुम् कर देने पर उपधा में अकार न होने से उपधावृद्धि नहीं होती है। ]

अच् परे—इसका क्या फल है? रद्धा। जभ्यम्। [ रध्+तृच्, जभ्+यत् यहाँ अजादि परे न होने से नुम् नहीं होती है। ]॥ ६१॥

इडादि अलिट् (लिट् से भिन्न) प्रत्यय परे रहते 'रध्' को नुम् आगम नहीं होता है। [ पूर्व सूत्र से नुम् प्राप्त है क्योंकि इट् आगम करने पर अजादि हो जाता है। ] उदा० रधिता। रधितुम्। रधितव्यम्।

इडादि परे—इसका क्या फल है? रन्धनम्, रन्धकः। [ यह इट् आदि में नहीं है अतः पूर्वसूत्र से नुम् होता है। ] लिट् परे न होने पर—इसका क्या फल है? ररन्धिव, ररन्धिम। [ रध्+लिट्, वस्, मस्, द्वित्व, अभ्यासलोप आदि के बाद "कृसृभृवृ"—सूत्र से इट् होवे पर नुम् आगम होता है क्योंकि यहाँ इडादि लिट् परे है। ] [ ररन्धिव

**नुमि कृते संयोगान्तत्वाद् 'असंयोगाल्लिट् कित्' (१.२.५) इति कित्त्वं नास्तीति नलोपो न भवति।**

**अथ क्वसौ कथं भवितव्यम्? रेधिवानिति। कथम्? एत्वाभ्यासलोपयोः कृतयोरिडागमः क्रियते, ततो नुमागमः, तस्यौपदेशिककित्त्वाश्रयो लोपः।**

**न्यासः**

ननु रधिरयमसंयोगान्तः पठ्यते, तत्र 'असंयोगाल्लिट् कित्' इति कित्त्वे 'अनिदिताम्' इति नलोपः प्राप्नोति, स कस्मान्न भवति? इत्याह—**नुमि कृत इत्यादि**। 'उपदेशावस्थायामेव नुम् भवति' इत्युक्तमेतत्, तेनोपदेशावस्थायामेव नुमि कृते संयोगान्तत्वं जातमिति कित्त्वं नास्तीति न भवति नलोपः।

**अथ क्वसौ कथं भवितव्यमिति**। किं ररध्वानिति भवितव्यम्, उत रेधिवानिति पृच्छति। अपर आह—**रेधिवानिति**। 'लिटः कसुश्च' इति क्वसुः, द्विर्वचनम्, 'अत एकहल्मध्ये' इत्यादिनैत्वाभ्यासलोपौ, 'वस्वेकाजाद्घसाम्' इतीट्, नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः। **कथमित्यादि**। एवं मन्यते—यदेड् भवति तस्मिंश्च नुमा भवितव्यम्, नुमि च सत्येकहल्मध्यता नास्तीत्येत्त्वेभ्यासलोपयोः पुनः प्रत्यापत्त्या भवितव्यम्, ततश्च कृतद्विर्वचन एकाज्न भवतीतीटा न भवितव्यम्; तस्माद्ररध्वानिति युक्तं भवितुमिति। इतरस्तु कृतस्यापि नुमोऽत्र लोपेन भवितव्यम्, ततश्चैकहल्मध्यताभावो नोपपद्यते, कुतः पुनरेत्त्वाभ्यासलोपयोः प्रत्यापत्तिः? इत्याह—**एत्त्वाभ्यासलोपयोः कृतयोरित्यादि**। कृतद्विर्वचनानानेकाचां क्वसोरिड् विधीयते। **ततो नुमागम इति**। अचि तद्विधानात् तस्यौपदेशिककित्त्वाश्रयो लोप इत्यौपदेशिकग्रहणान्नुमि कृते संयोगान्तत्वादातिदेशिकस्य कित्त्वस्यासम्भवात्।

**अथेत्यादि**। इटि नेटीत्युच्यमाने पूर्वेण सिद्धे सति नियमार्थमेतद् भविष्यसि—लिट्येवेडादौ, नान्यस्मिन्निडादाविति। तेन ररन्धिव, ररन्धिमेत्यादौ भविष्यति, न रधितेत्येवमादौ। तस्मादिटि लिटीति कस्मान्नोक्तम्, एवं सतीष्टं सिध्यति, लघु च सूत्रं भवतीति भावः। **लिटचेवेति**। नियमस्वरूपं दर्शयति।

**पदमञ्जरी**

**अथेति**। येषां छान्दसः कसुस्तेषामेष विचारो नास्ति; छन्दसि दृष्टानुविधानात्। **एत्वाभ्यासलोपयोः कृतयोरिति**। 'वस्वेकाजाद्घसाम्' इत्यत्र कृतद्विर्वचनानामेकाचां ग्रहणादेवमुक्तम्। **तत्र कृते नुमागम इति**। अचीति वचनात्। **तस्येत्यादि**। यद्यपि ररन्धिवेत्यादिवत् क्वसावप्यातिदेशिकं कित्त्वं नास्ति, तथाप्यौपदेशिकं कित्त्वमाश्रित्य नलोपो भवतीत्यर्थः।

**भावबोधिनी**

यहाँ 'रध' धातु मूलरूप से असंयोगान्त है अतः 'असंयोगाल्लिट् कित्' इस सूत्र से कित् हो जाने से 'अनिदिताम्' सूत्र से 'न्' का लोप क्यों नहीं होता है?]

नुम् आगम कर देने पर संयोगान्त हो जाने से 'असंयोगाल्लिट् कित्' सूत्र से कित् नहीं होने से न् का लोप नहीं होता है। [चूंकि नुम् उपदेशावस्था में ही मान लिया जाता है अतः कित् नहीं हो सकता।]

[लिट् का] क्वसु आदेश कर देने पर कैसा रूप होना चाहिये? रेधिवान्। क्यों? एत्व और अभ्यासलोप करने के बाद इट् आगम होता है, इसके बाद नुम् आगम, इस कारण इस धातु के औपदेशिक कित्व को मान कर न् लोप हो जाता है। [भाव यह है कि लिट् का क्वसु = वस् आदेश करने पर लिट्-सम्बन्धी द्वित्वादि कार्यों के बाद 'ररध्वान्' ऐसा अथवा 'रेधिवान्' ऐसा होगा? यहाँ प्रक्रियाक्रम में पहले ही द्वित्व और अभ्यासलोप कर लिया जाता है इसलिए एकहल्मध्यता होने से अभ्यासलोप और एत्व में बाधा नहीं है। इसके बाद इट् किया जाता है तब इडादि लिट् परे मान कर नुम् होता है क्योंकि अजादि प्रत्यय परे ही पूर्ववर्ती 'रधिजभोरचि' सूत्र इट् करता है। परन्तु मूल में असंयोगान्त मान कर कित्व सम्भव होने से न् का लोप भी हो जाता है। अतः 'रेधिवान्' में न् का श्रवण नहीं होता है।]

अथ इटि लिटीत्येवं नियमः कस्मान्न क्रियते—लिटचेवेटि नान्यत्रेति ? विपरीतमप्यवधारणं सम्भाव्येत—इटचेव लिटि नान्यत्रेति। तथा हि सति ररन्धेत्यत्र न स्यात्, रधितेत्यत्र च स्यादेव ॥

**३२३९. रभेरशब्लिटोः ॥ ६३ ॥ (२५८१)**

रभेरङ्गस्य शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति। आरम्भयति। आरम्भकः। साध्वारम्भी। आरम्भमारम्भम्। आरम्भो वर्त्तते।

अशब्लिटोरिति किम् ? आरभते। आरेभे।

अचीत्येव—आरब्धा ॥

**३२४०. लभेश्च ॥ ६४ ॥ (२५८२)**

लभेश्चाजादौ प्रत्यये शब्लिड्वर्जिते नुमागमो भवति। लम्भयति। लम्भकः। साधुलम्भी। लम्भं-

**न्यासः**

**नान्यत्रेत्य**नेनापि तस्य व्यवच्छेद्यम्। यतो हेतोर्नियमो न क्रियते, तं दर्शयितुमाह—**विपरीतमित्यादि**। **इटचेव लिटीति**। विपरीतनियमस्य स्वरूपकथनम्। **नान्यत्रेत्य**नेनापि तद्व्यवच्छेद्यं दर्शयति। कस्माद्विपरीतमवधारणं नेष्यते ? इत्याह—**तथा हीत्यादि**। इटचेव लिटीत्यस्य नियमस्यानिडादिर्ल्लिड् व्यावर्त्त्य इतीडादावेव लिटि भवति, नानिडादाविति। ततश्चानिडादित्वाद् ररन्धेत्यत्र नुम् न स्यात्। रधितेत्यत्र पूर्वेण स्यादेव; नियमेना-व्यावर्त्तित्वात्। तस्मात्तद्दोषपरिजिहीर्षया नियमो न क्रियते ॥ ६२ ॥

**रभेरशब्लिटोः** ॥ **आरेभ इति**। 'रभ राभस्ये', लिट्, अनुदात्तेत्वादात्मनेपदम्। 'लिटस्तझयोरे-शिरेच्' इत्येश्, पूर्ववदेत्वाभ्यासलोपौ ॥ ६३ ॥

**लभेश्च** ॥ **पृथग्योगकरणमुत्तरार्थमिति**। उत्तरसूत्रेण लभेरेव कार्यं यथा स्यात् रभेर्मा भूदिति।

**पदमञ्जरी**

**अथेत्यादि**। एवं सति 'नेड्यलिटि' इति द्वावपि प्रतिषेधौ न वक्तव्यौ भवति इति भावः। **विपरीत-मवधारणं सम्भाव्येतेति**। एवकारे तु क्रियमाणे न लाघवे विशेषः ॥ ६२ ॥

**रभेरशब्लिटोः** ॥ 'रभ राभस्ये' (धा० पा० ९७४), अनुदात्तेत् ॥ ६३ ॥

**लभेश्च** ॥ 'डुलभष् प्राप्तौ' ( धा० पा० ९७५ ), अनुदात्तेत्। **लम्भो वर्त्तत इति**। 'उपसर्गादिव

**भावबोधिनी**

प्रश्न यह है कि 'इटि लिटि' ऐसा नियम क्यों नहीं किया जाता—लिट् परे ही इडादि रहने पर नुम् होता है अन्यत्र नहीं ? [ नहीं, ऐसा नहीं हो सकता क्योंकि ] विपरीत भी अवधारण (नियमस्वरूप) बन सकता है—इडादि लिट् परे ही नुम् हो अन्यत्र न हो। ऐसा हो जाने पर तो 'ररन्ध' इसमें नुम् नहीं हो सकेगा और 'रधिता' यहाँ होवे ही लगेगा। [ क्योंकि लिट् न होने से नियम प्रभावी नहीं होगा। पूर्वसूत्र से अजादि लुट् आदि में इट् होवे लगेगा। अतः यही नियम मानना होगा—लिट्-भिन्न इडादि प्रत्यय परे ही नुम् का निषेध होता है। ] ॥ ६२ ॥

शप् और लिट् से भिन्न अजादि प्रत्यय परे रहते 'रभ' को नुम् का आगम होता है। उदा० आरम्भयति। आरम्भकः। साध्वारम्भी। आरम्भम् आरम्भम्। आरम्भो वर्त्तते। [ √'रभ राभस्ये' धातु से णिच्, ण्वुल्, णिनि, णमुल्, घञ् प्रत्ययों के अनुबन्धलोप के बाद अजादि होने से नुम् होता है। अनुस्वार और परसवर्ण करने पर 'म्' हो जाता है। ]

शप् और लिट् परे न रहते—इसका क्या फल है ? आरभते। [ आङ् रभ् + शप् = अ + लट् = त, आ रभ् + लिट् = त = एश् = ए, द्वित्व, एत्वाभ्यासलोप। यहाँ नुम् नहीं होता है। ]

अजादि परे ही होता है—आरब्धा। [ यह तृच् परे या लुट् का रूप है। अजादि परे न होने से नुम् नहीं होता है। ] ॥ ६३ ॥

शप् और लिट् को छोड़ कर अजादि प्रत्यय परे रहते 'लभ्' को भी नुम् का आगम होता है। उदा० लम्भयति।

**लम्भम् । लम्भो वर्त्तते ।**

**अशब्लिटोरित्येव—लभते । लेभे । अचीत्येव-लब्धा ।**

**लभेश्च पृथग्योगकरणमुत्तरार्थम् ॥**

## ३२४१. आङो यि ॥ ६५ ॥ (२८४५)

**आङ उत्तरस्य लभेर्यकारादि[1]प्रत्ययविषये नुमागमो भवति । आलम्भ्या गौः । आलम्भ्या वडवा ।**

**प्राक्प्रत्ययोत्पत्तेर्नुमि कृते विहतमदुपधत्वमिति 'ऋहलोर्ण्यत्' (३.१.१२४) इति ण्यत्प्रत्ययः, तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनान्तस्वरितत्वं भवति । यति तु पुनरुत्तरपदाद्युदात्तत्वं स्यात् ।**

**न्यासः**

यदि 'रभिलभ्योरशब्लिटोः' इत्येको योगः क्रियते, ततो रभेरित्यनुवृत्तिरुत्तरत्र स्यात् । अतश्च तस्याप्युत्तरत्र कार्यं प्रसज्येत ॥ ६४ ॥

**आङो यि ॥ यकारादौ[1] प्रत्यय इति ।** अनेन 'यि' इत्यस्याः सप्तम्या विषयसप्तमीत्वं दर्शयन् यकारादौ प्रत्यये विषयभूतेऽनुत्पन्न एव नुम् भवतीति दर्शयति ।

**प्रागित्यादिना** विषयसप्तम्यां सत्यां यदिष्टं सम्पद्यते तदाचष्टे । परसप्तम्यां हि पूर्वं प्रत्ययेन भवितव्यम्, पश्चान्नुमा, ततश्च 'अदुपधात्' इति यत् प्रसज्येत । विषयसप्तम्यां तु प्रागुत्पन्नेन नुमादुपधत्वस्य विहतत्वाद्

**पदमञ्जरी**

खल्घञोः' इति नियमस्य वक्ष्यमाणत्वादपपाठोऽयम् । 'खनो घ च' इति चकाराद् 'भगः पदम्' इतिवत् घप्रत्यय इत्येके । **योगविभाग उत्तरार्थ इति ।** उत्तरो विधिर्लभेरेव यथा स्याद्रभेर्मा भूत् । किञ्च—शब्लिटोर्यथासंख्य-निरासार्थश्च ॥ ६४ ॥

**आङो यि ॥** अत्र 'धातोः' इत्यनुवृत्तेरुपदेशावस्थायामेव नुमा भवितव्यम्, तस्माद् 'यि' इति विषय-सप्तमीत्याह—[1]**यकारादौ प्रत्यये विषय इति । प्रागित्यादिना** विषयसप्तम्याश्रयणस्य फलं दर्शयति । **तत्रेत्यादि ।**

**भावबोधिनी**

लम्भकः । साधुलम्भी । लम्भं लम्भम् । लम्भो वर्तते । [ लभ् से णिच्, ण्वुल्, णिनि, णमुल्, घञ् प्रत्यय, अनुबन्धों के लोप हो जाने पर अजादि रह जाने पर नुम्, अनुस्वार, परसवर्ण होता है । ]

शप् और लिट् को छोड़ कर ही—लभते । लेभे । [ लभ् + शप् = अ + लट्, लभ + लिट् = त = एश । इनमें अजादि होने पर भी नुम् नहीं होता है । ] अच् = अजादि परे ही होता है—लब्धा । [ लभ् + तृच् में अजादि परे न होने से नुम् नहीं होता है । ] [ पूर्व सूत्र में ही लभ् का ग्रहण क्यों नहीं किया गया ? ] 'लभेश्च' यह पृथक् सूत्र बनाना आगे के सूत्र में अनुवृत्ति के लिए है ॥ ६४ ॥

आङ् से उत्तरवर्त्ती लभ् को यकारादि प्रत्यय के विषय में नुम् आगम होता है । उदा० आलम्भ्या गौः । आलम्भ्या बडवा । [ आङ् उपसर्ग लभ् + ण्यत् में पहले ही नुम् हो जाता है इसलिये यत् प्रत्यय और उपधावृद्धि नहीं होती है । ]

[ 'यि' इसमें परसप्तमी नहीं है अपि तु विषयसप्तमी है । अतः प्रत्यय होने के पहले ही नुम् आगम हो जाता है—इसी को लिख रहे हैं—] प्रत्यय के होने के पहले ही नुम् आगम कर लेने पर [ अनुस्वार और परसवर्ण हो जाने पर ] अदुपधत्व समाप्त हो जाता है, [ उपधा में 'म्' हो जाता है—लम्भ् ] इसलिए 'ऋहलोर्ण्यत्' सूत्र से ण्यत् प्रत्यय ही होता है [ न कि 'पोरदुपधात्' सूत्र से यत् प्रत्यय । यद्यपि ण्यत् और यत् दोनों में एक समान ही रूप बनता है क्योंकि उपधा में अकार न रह जाने से ण्यत् में भी उपधावृद्धि नहीं होती है । इसका उत्तर यह है— ] ण्यत् करने पर कृदुत्तर-पदप्रकृति-स्वर होने से अन्तोदात्त होता है । यदि यत् प्रत्यय होता तब तो उत्तरपद का आद्युदात्त ही होता । [ कारण यह है कि 'यतोऽनावः' इस सूत्र से आद्युदात्त ही होने पर प्रकृतिस्वर करने पर भी आद्युदात्तत्व ही रह जाता । ण्यत् करने पर स्वरित ही रहता है । अतः ण्यत् करना आवश्यक है । ]

---

१-१-१. न्यासपदमञ्जर्योरनुरोधात् 'यकारादौ' इत्युचितः पाठः ।

आङ इति किम् ? लभ्यम्[1]।

कथम्—'अग्निष्टोम आलभ्य' इति ? 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु० प० ३५)।

अथ वा—आलभ्य इत्यत्र नुमि कृतेऽनुषङ्गलोपः क्रियते ॥

**३२४२. उपात्प्रशंसायाम् ॥ ६६ ॥ (२८४६)**

**उपादुत्तरस्य लभेः प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति । उपलम्भ्या भवता विद्या । उपलम्भ्यानि धनानि । ण्यत्प्रत्ययान्तत्वादन्तस्वरितत्वमेव ।**

**न्यासः**

'ऋहलोर्ण्यत्' इति ण्यदेव भवति । कः पुनर्ण्यति यति वा विशेषः, यावतोभयत्रापि तदेव रूपमिति, ण्यत्प्रत्ययेऽपि वृद्धया न भवितव्यम्, तथा च प्रागुक्तम्—परापि सती वृद्धिर्नित्यत्वान्नुमा बाध्यते' इति ? अत आह—**तत्रेत्यादि**। तत्र ण्यति सति तित्स्वरितत्वाद् 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरः; तेनालम्भ्य इत्युदाहरणमन्त्यस्वरितं भवति । यति तु 'यतोऽनावः' इत्याद्युदात्तत्वे सति प्रकृतिवद्भावेनाप्युदात्तत्वमित्यस्ति विशेषः ।

**लभ्यमिति** । यदन्तमेतत् ।

**एवमालभ्य** इत्येतदपि । आलभ्यत इति भावे कर्मणि वा लकारः ।

**अनुषङ्गलोपः क्रियत इति** । 'अनिदिताम्' इत्यादिना ॥ ६५ ॥

**उपात् प्रशंसायाम् ॥ प्रशंसायामिति** । उपलम्भ्य इति स्तुतौ । अतिप्रशंस्य इत्यर्थः । **उपलभ्यमिति** ।

**पदमञ्जरी**

रूपे तु नास्ति विशेषः, ण्यत्प्रत्ययेऽपि वृद्धया नैव भवितव्यम्; नित्ये नुमि सति विहतनिमित्तत्वात् । **यति पुनरुत्तरपदाद्युदात्तत्वं स्यादिति** । 'यतोऽनावः' इत्युत्तरपदाद्युदात्तत्वात् । **आलभ्य इति । यक्**[2] **। अनुषङ्गलोपः क्रियत इति** । एतेन यक्ल्यपौ व्याख्यातौ । तेन 'यि' इति सामान्योक्तावपि ण्यदेवोदाहृत इति भावः ॥ ६५ ॥

**उपात्प्रशंसायाम् ॥** अत्र प्राप्तिरेव धात्वर्थः । प्रशंसा तु गम्यमानतया विशेषणम् । अतो यस्य

**भावबोधिनी**

आङ् से परे—इसका क्या फल है ? लभ्यम् । [ इसमें यत् ही है । नुम नहीं होता है ]

'तब 'अग्निष्टोम आलम्यः' यह कैसे होता है ? 'वेदविषय में सभी विधियाँ विकल्प से होती हैं ।' '[ इस वचन से इसमें नुमागम नहीं भी होता है । ]

अथवा 'आलम्यः' यहाँ नुम् कर देने पर अनुषङ्ग = न् का लोप [ "अनिदितां हल उपधाया क्ङिति" सूत्र से ] किया जाता है । [इसी प्रकार 'आलभ्यते' में भाव या कर्म में 'यक्' प्रत्यय परे होने से नुमागम करने पर भी कित् मान कर नुम्के न् का लोप होता है । ल्यप् में भी कित्व अतिदिष्ट होने से न् का लोप हो जाता है । पदमञ्जरी में आलम्य इति । यक् ।" ऐसा लिखने के बाद "अनुषङ्गलोपः क्रियते इति । यक्ल्यपौ व्याख्यातौ ।" ऐसा लिखा है । इससे 'आलम्यः में यक् प्रत्यय माना है किन्तु यह सम्भवतः अशुद्ध पाठ है । यहाँ 'यत्' होना चाहिये । जैसा कि न्यास में लिखा है "लभ्यमिति । यदन्तमिति । एवमालभ्य इत्येतदपि ।" इसके अतिरिक्त लभ् से यक् कृत्प्रत्यय करने वाला कोई सूत्र नहीं है । और यदि 'यम्' यह कित् प्रत्यय किया जाता है तब 'नुम्' करने पर भी उसका लोप हो ही जाता है वैदिक विकल्प मानने की कोई आवश्यकता नहीं है । इसके अतिरिक्त 'एतेन यक्ल्यपौ व्याख्यातौ' इस कथन की संगति नहीं बैठती है । ] ॥ ६५ ॥

प्रशंसा की प्रतीति रहने पर यकारादि प्रत्यय के विषय में 'उप' से उत्तरवर्ती 'लभ्' धातु से नुम् आगम होता है । उदा० उपलम्भ्या भवता विद्या । [ उप लभ् + ण्यत् = य, नुम्, अनुस्वार परसवर्ण आदि कार्य प्रत्यय करने से पहले ही हो जाते हैं । विद्या का विशेषण होने से टाप् होता है । ] उपलम्भ्यानि धनानि । ण्यत् प्रत्यय

---

१. 'अदुपधत्वाद्यत्प्रत्ययान्तमेतत् । यीति किम् ? आलब्वा'—इत्यधिकमेकस्मिन् पुस्तके । २. 'यत्' इति तूचितं न्यासानुरोधात् ।

प्रशंसायामिति किम् ? उपलभ्यमस्माद् वृषलात्किञ्चित् । पोरदुपधत्वाद्यत्प्रत्ययान्तमिदम् ॥

**३२४३. उपसर्गात्खल्घञोः ॥ ६७ ॥ (३३०६)**

उपसर्गादुत्तरस्य लभेः खल्घञोः परतो नुमागमो भवति । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । घञि—प्रलम्भः, विप्रलम्भः ।

सिद्धे सत्यारम्भो नियमार्थः—उपसर्गादेव लभेः खल्घञोः परतो नुमागमो भवति, नान्यत्र । ईषल्लभः । लाभो वर्त्तते ॥

**३२४४. न सुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥ (३३०७)**

सु, दुर्—इत्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्यामुपसृष्टस्य लभेः खल्घञोः परतो नुमागमो न

**न्यासः**

प्राप्तव्यमित्यर्थः ॥ ६६ ॥

**उपसर्गात्खल्घञोः ॥ ईषत्प्रलभ्य इति ।** 'ईषद्दुःसुषु' इत्यादिना खल् । **दुष्प्रलम्भ इति ।** 'इदुदुपधस्य' इत्यादिना षत्वम् । **विप्रलम्भ इति ।** भावे घञ् । ननु च 'लभेश्च' इत्यनेन नुम्सिद्धः, तत्किमर्थोऽयमारम्भः ? इत्याह—**सिद्ध इत्यादि । उपसर्गादिवेत्यादिना** नियमस्य स्वरूपं दर्शयति । **अन्यत्र न भवतीति** तद्व्यवच्छेद्यम् । 'उपसर्गात् खल्घञोरेव'—इत्येष तु विपरीतनियमोऽत्र न सम्भावनीयः; 'गृधिवञ्च्योः प्रलम्भने' इति निर्देशात् ॥ ६७ ॥

**न सुदुर्भ्यां केवलाभ्याम् ॥ उपसृष्टस्येति ।** उपसर्गेण सम्बद्धस्येत्यर्थः । **सुलाभ इति ।** सुशब्दोऽयमा-

**पदमञ्जरी**

प्राप्तिर्यतो वा प्राप्तिः प्रशंसाहेतुर्भवति तत्रोदाहरणम् । विपर्यये तु प्रत्युदाहरणम् ॥ ६६ ॥

**उपसर्गात् खल्घञोः ॥ सिद्धे सतीति ।** 'लभेश्च' इत्यनेन । **उपसर्गादिवेति ।** विपरीतस्तु नियमो न भवति—उपसर्गात्खल्घञोरेवेति; 'गृधिवञ्च्योः प्रलम्भने' इति निर्द्देशात् ॥ ६७ ॥

**न सुदुर्भ्यां केवलाभ्याम् ॥** केवलशब्दः शब्दोपात्तादन्यस्य सजातीयस्याभावमाचष्टे । यथा हि—

**भावबोधिनी**

अन्त में है इस कारण अन्त का स्वरितत्व ही रहता है । [ यहाँ प्रशंसा अर्थ की भी ऊपर से प्रतीति = व्यञ्जना होती है । धातु का अर्थ तो 'प्राप्त करना' ही है । ]

प्रशंसा में—इसका क्या फल है ? उपलभ्यम् अस्मात् वृषलात् किञ्चित् । [ यहाँ केवल 'प्राप्त करना' अर्थ है । नुम् नहीं होता है । ] पवर्गान्त अदुपध धातु होने के कारण "पोरदुपधात्" सूत्र से यत् प्रत्यय ही होता है । [ ण्यत् नहीं होता है । जिसकी प्राप्ति अथवा जिससे प्राप्ति प्रशंसा का कारण बनती है वहीं नुम् होता है । अन्यथा नुम् नहीं होता है । ] ॥ ६६ ॥

खल् तथा घञ् प्रत्ययों के परे रहते उपसर्ग से उत्तरवर्त्ती 'लभ्' धातु को नुम् आगम् होता है । उदा० ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । [ इनमें ईषत्, सु, दुर् के साथ 'प्र' उपसर्ग से परे 'लभ्' धातु है 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" सूत्र से खल् = अ प्रत्यय होने पर नुम्, अनुस्वार परसवर्ण होता है । ] घञ् परे उदा० प्रलम्भः । विप्रलम्भः । [ 'लभ' यह 'प्र' 'वि-प्र' उपसर्गों से परे है । इससे घञ् प्रत्यय और नुमागम होता है । ]

[ 'लभेश्च' इस पूर्वोक्त सूत्र से अजादि प्रत्यय परे रहते नुम् आगम के ] सिद्ध रहने पर ही प्रस्तुत सूत्र बनाना नियम के लिये है—"उपसर्ग से ही परवर्त्ती लभ धातु को खल् और घञ् प्रत्यय परे रहते नुमागम होता है, अन्यत्र नहीं होता है । [ अतः इनमें नुम् आगम नहीं होता है— ] ईषल्लभः । [ ईषत् लभ् + खल् = अ, 'तोर्लि' सूत्र से परसवर्ण ] लाभो वर्त्तते । [ लभ् + घञ् = अ, उपधावृद्धि होती है । ] ॥ ६७ ॥

सु, दुर्—ये अकेले अन्य उपसर्गों से रहित हैं तो इन उपसर्गों से युक्त 'लभ्' धातु को 'खल्' और 'घञ्'

इक इत्येव—कीलालपा ब्राह्मणः । कीलालपं ब्राह्मणकुलम् । कीलालपेन ब्राह्मणकुलेन ।
अचीत्येव—ग्रामणिभ्यां ब्राह्मणकुलाभ्याम् ॥

### ३२५१. अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥ ७५ ॥ (३२२)

**अस्थि, दधि, सक्थि, अक्षि—इत्येतेषां नपुंसकानां तृतीयादिष्वजादिषु विभक्तिषु परतोऽनङित्ययम्**

**न्यासः**

कार्यासम्भवाद् यथोक्तेन प्रकारेण यो भाषितपुंस्कः शब्दस्तस्यैवायं पुंवद्भावो विधीयते। एवञ्च स विधीयमानः समानायामाकृतौ यो भाषितपुंस्कः शब्दः सामर्थ्यात् तस्य भवतीति विज्ञायते। यो ह्येवं भाषितपुंस्केन शब्द-प्रवृत्तिनिमित्तेन सम्बद्धं नपुंसकमाह स नियोगतः समानायामाकृतौ भाषितपुंस्को भवति। यथा स एव ग्रामणीशब्दः, शुचिशब्दश्च। पीलुशब्देन यत्र भाषितः पुमान् प्रवृत्तिनिमित्ते वृक्षाकृतौ न तत्सम्बद्धमसौ नपुंसक-माह। किं तर्हि ? फलाकृतिसम्बन्धम्। तस्मात् पीलुशब्दो न समानायामाकृतौ भाषितपुंस्क इति न भवति तस्य पुंवद्भावः।

**कीलालपा इति।** 'आतो मनिन्क्वनिब्वनिपश्च' इति विच्। कीलालपाशब्दोऽयं समानायामाकृतौ भाषितपुंस्कः—उभयत्रापि वर्त्तमानः कीलालपात्वं प्रवृत्तिनिमित्तमादाय प्रवर्तत इति कृत्वा। इगन्तस्तु न भवतीति न भवति पुंवद्भावः, तेन ह्रस्वत्वं भवत्येव। तस्मिन् सति 'टाङसिङसामिनात्स्याः' इतीनादेशे कृते कीलालपेनेति भवति। यदि पुनरत्र पुंवद्भावः स्यात् तदा ह्रस्वत्वं न स्यात्, ततश्च 'आतो धातोः' इत्यकार-लोपे कृते कीलालपेति स्यात् ॥ ७४ ॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥** 'इकोऽचि विभक्तौ' इति नुमि प्राप्तेऽस्थ्यादीनामनङ् विधीयते। ङकारोऽन्त्यादेशार्थः। अकार उच्चारणार्थः। अस्थ्यादयश्चैते 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्ताः, शेष-

**पदमञ्जरी**

व्युत्पत्तौ वृक्षावान्तरजातिरप्यङ्गीकृता, तथापि न सा फले प्रवृत्तिनिमित्तम्, किं तर्हि ? फलावान्तरजातिरेवेति भिद्यते निमित्तम्। **तदेतदेवमित्यादि** 'स्त्रियाः पुंवत्' इत्यत्रैतद्व्याख्यातम्, तत एवावधार्यम्।

**कीलालपेनेति।** ह्रस्वस्य निवृत्तौ 'आतोः धातोः' इति लोपः स्यात् ॥ ७४ ॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥** अनङो द्वितीयोऽकार उच्चारणार्थः, ङकारोऽन्तादेशार्थः, अस्थ्यादयः 'नब्विषयस्यानिसन्तस्य' (फि० सू० २.३) इत्याद्युदात्ताः, शेषमनुदात्तम्। तत्रान्तर्यतोऽनुदात्त आदेशे प्राप्ते

**भावबोधिनी**

निमित्त रहते पुंवद्भाव होता है। यहाँ तो पहले ( पीलु—इस ) वृक्ष की आकृति, पुंल्लिङ्ग में पीलु शब्द की प्रवृत्ति-निमित्त है और फल की आकृति नपुंसक में प्रवृत्तिनिमित्त है। [ अतः आकृति = आकार भिन्न-भिन्न होने से पुंवद्भाव नहीं होता है। ] यदि ऐसा है तो फिर यह कैसे होता है—भाषितपुंस्क ? भाषित (कहा है) पुमान् जिस अर्थ में = प्रवृत्ति-निमित्त में है वह भाषितपुंस्क शब्द से कहा जाता है' इसके योग से अभिधेय भी जो नपुंसक होता है वह भी भाषितपुंस्क होता है। उस अर्थ का प्रतिपादक जो शब्दस्वरूप वह भी भाषितपुंस्क होता है।

इगन्त का— इतना ही है—कीलालपा ब्राह्मणः। कीलालपं ब्राह्मणकुलम्। कीलालपेन ब्राह्मणकुलेन। [ यहाँ नहीं होता है, क्योंकि यह इगन्त शब्द नहीं है। ]

अजादि विभक्ति में—इतना ही है—ग्रामणिभ्यां ब्राह्मणकुलाभ्याम्। [ भ्याम् अजादि न होने से पुंवद्भाव नहीं होता है। ] ॥ ७४ ॥

अस्थि, दधि, अक्षि और सक्थि—इन नपुंसक शब्दों का तृतीया आदि अजादि विभक्तियों के परे रहते अनङ् यह आदेश होता है और वह उदात्त होता है। उदा० अस्थ्ना, अस्थ्ने। दध्ना, दध्ने। सक्थ्ना, सक्थ्ने। अक्ष्णा, अक्ष्णे।

**मादेशो भवति, स चोदात्तो भवति। अस्थ्ना, अस्थ्ने। दध्ना, दध्ने। सक्थ्ना, सक्थ्ने। अक्ष्णा, अक्ष्णे।**

**अस्थ्यादय आद्युदात्ताः, तेषामनङादेशः स्थानिवद्भावादनुदात्तः स्यादित्युदात्तवचनम्। तत्र भसंज्ञायामल्लोपे कृते उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता भवति।**

**एतैरस्थ्यादिभिर्नपुंसकैरनपुंसकस्याप्यङ्गस्य तदन्तग्रहणमिष्यते। प्रियास्थ्ना ब्राह्मणेन, प्रियदध्ना[1]।**

**तृतीयादिष्विति किम्? अस्थिनी, दधिनी।**

**न्यासः**

मनुदात्तम्। तत्रानङ् विधीयमानः स्थानिवद्भावादनुदात्तत्वं प्राप्नोतीत्युदात्तत्वमुच्यते—नब्विषयस्येति। नपुंसकविषयस्येत्यर्थः। **अस्थ्नेति**। अनङि कृते 'अल्लोपोऽनः' इत्यकारलोपः।

**एतैरित्यादि**। कथं पुनरेतल्लभ्यते, यावता प्रकृतस्यास्थ्यादिभिर्विशेषणाद् विशेषणेन तदन्तविधिरिति विज्ञानाद् 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य' इति वचनाद्वा यद्यपि तदन्तविधिर्भवति, तथापि सत्यपि तस्मिन्नस्थ्याद्यन्तस्यानपुंसकस्य ग्रहणं नोपपद्यते, नपुंसकस्येत्यनुवृत्तेः? नैष दोषः; न ह्यत्र नपुंसकेनाङ्गं विशिष्यते, अपि तु श्रुतत्वादस्थ्यादय एव। एवञ्च तदन्तस्याङ्गस्य लिङ्गान्तरेऽपि वर्त्तमानस्यास्थ्यादीनां नपुंसकत्वं विद्यत एव। तेन नपुंसके ये वर्त्तन्तेऽस्थ्यादयस्तदन्तस्यानपुंसकेऽपि वर्त्तमानस्य ग्रहणमुपपन्नं भवति। यदि तर्हि तदन्तस्य ग्रहणम्, केवलानां न सिध्यति? अयमप्यदोषः; व्यपदेशिवद्भावात् केवलानां न भविष्यति। 'व्यपदेशिवद्भावोऽप्रातिपादिकेन' इत्येषा परिभाषा प्रत्ययविधिविषये भवतीतीह नोपतिष्ठत एव।

**पदमञ्जरी**

उदात्तवचनमस्थ्नेत्यादौ 'अल्लोपोऽनः' इत्यकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तेरुदात्तत्वार्थम्। 'विभाषा ङिश्योः' इत्यल्लोपाभावपक्षे त्वकारस्य उदात्तस्य श्रवणं भवति—अस्थनीति, यथा 'छन्दस्यपि दृश्यते' इत्यत्र—'इन्द्रो दधीचो अस्थभिरिति' (ऋ० १.८४.१३)।

**एतैरस्थ्यादिभिरित्यादि**। अत्र 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' (सी० प० ७७) इति तदन्तस्य तावद् ग्रहणं भवति। तथा 'नपुंसकस्य' इत्यनुवृत्तं श्रुतत्वादस्थ्यादीनां विशेषणम्, न प्रकृतस्याङ्गस्य, तेनानपुंसकस्यापि तस्य ग्रहणम्। किमर्थं पुनरस्थ्यादयो नपुंसकत्वेन विशेष्यन्ते? यदृच्छाशब्दानां पुंल्लिङ्गानां मा भूत्—दधिर्नाम कश्चित्, तेन दधिनेति। नैतदस्ति प्रयोजनम्—

**भावबोधिनी**

[ अस्थि + टा = आ, यहाँ इगन्त होने से 'इकोऽचि' सूत्र से नुम् प्राप्त रहते यह अनङ् आदेश होता है इसके 'न' का अ उच्चारणार्थ है अतः अस्थ् अन् आ भसंज्ञा अलोप, अस्थ्ना। इसी प्रकार अन्य में भी 'इ' का अनङ् होता है। ]

अस्थि आदि शब्द [ 'नब्विषयानिसन्तस्य' सूत्र से ] आद्युदात्त हैं [ अतः आदि को छोड़कर शेष अनुदात्त हो जाते हैं। अतः 'इ' आदि अनुदात्त हैं। इसके स्थान पर होने वाला अनङ् आदेश ] स्थानिवद्भाव से अनुदात्त होने लगेगा, इसलिये उदात्त का विधान किया गया है। यहाँ भसंज्ञा में अ का लोप कर देने पर उदात्तनिवृत्ति-स्वर से विभक्ति उदात्त होती है। [ अस्थि + टा = आ, इ का अनङ् = अन् अस्थन् + आ, 'अल्लोपोऽनः' सूत्र से 'अन' के उदात्त अ का लोप हो जाने पर 'अनुदात्तस्य च यत्रोदात्तलोपः' सूत्र से विभक्ति का उदात्त होता है। इसीलिये अनङ् उदात्त किया गया है। ]

इन नपुंसक 'अस्थि' आदि से अनपुंसक भी अङ्ग के तदन्त का ग्रहण इष्ट है। [ अर्थात् अस्थि आदि अन्त में होने पर भी अनङ् आदेश होता है। ] प्रियास्थ्ना ब्राह्मणेन। प्रियदध्ना। [ प्रियम् अस्थि यस्य स तेन—बहुव्रीहि में—प्रियास्थि + टा = आ, पूर्ववत् अनङ् = अन्, अलोप होते हैं। ]

तृतीयादि विभक्ति परे—इसका क्या फल है? अस्थिनी। दधिनी। [ 'औ' प्रथमा द्वितीया में ही है। अतः अनङ् नहीं होता है। ]

---

१. 'प्रियास्थ्ने, प्रियदध्ने, प्रियसक्थ्ना, प्रियसक्थ्ने, प्रियाक्ष्णा, प्रियाक्ष्णे'—एतान्युदाहरणान्यधिकान्येकस्मिन् पुस्तके।

**अचीत्येव—अस्थिभ्याम्, दधिभ्याम् ।**

## ३२५२. छन्दस्यपि दृश्यते ॥ ७६ ॥ ( ३५७५)

**अस्थिदधिसक्थ्यक्ष्णामनङ् छन्दस्यपि दृश्यते । यतो[1] विहितस्ततोऽन्यत्रापि दृश्यते ।**

**'अचि' इत्युक्तम्, अनजादावपि दृश्यते—'इन्द्रो दधीचो अस्थभिः (ऋ० १.४४.१३) । 'भद्रं पश्येमाक्षभिः' (वा० सं० २५.२१) ।**

**'तृतीयादिषु' इत्युक्तम्, अतृतीयादिष्वपि दृश्यते—अस्थान्युत्कृत्य जुहोति ।**

**'विभक्तौ' इत्युक्तम्, अविभक्तावपि दृश्यते—अक्षण्वता लाङ्गलेन । 'अस्थन्वन्तं यदनस्था बिभर्ति' (ऋ० १.१६४.४) ॥**

**न्यासः**

नपुंसकेनास्थ्यादिविशेषणं किम् ? यदा ते यदृच्छाशब्दाः सन्तोऽपि लिङ्गान्तरे वर्त्तन्ते तदा मा भूत्—दधिर्नाम कश्चित्, तेन दधिनेति ॥ ७५ ॥

**छन्दस्यपि दृश्यते ॥ यतो विहित** इत्यादिनाऽपिशब्दस्य सर्वोपाधिव्यभिचारार्थतां दर्शयति । **अस्थभिरिति ।** अनङि कृते नलोपः । **अस्थान्युत्कृत्येति ।** शस्यनङ् । **अक्षण्वतेति ।** अत्रापि मतुपि 'अनो नुट्' इति नुडागमः, अनङो नकारस्य लोपे कृते 'मादुपधायाश्च' इति वत्वम् । **अक्षण्वन्तमिति ।** पूर्वेण तुल्यम् । द्वितीयान्तमेतत् । **यदनस्थेति ।** अस्थि यस्य नास्तीति सावनङ्, 'सर्वनामस्थाने च' इति दीर्घः ॥ ७६ ॥

**पदमञ्जरी**

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥

एवं तर्हि, 'नपुंसकस्य' इत्यनुवृत्तस्यान्वयप्रदर्शनमात्रं कृतम्—एतैरस्थ्यादिभिर्नपुंसकैरिति ॥ ७५ ॥

**छन्दस्यपि दृश्यते ।** 'छन्दसि' इत्येव सिद्धे 'अपि दृश्यते' इत्येतत्सर्वोपाधिव्यभिचारार्थम्; अन्यथारम्भसामर्थ्यात्कस्यचिदेव व्यभिचारः शङ्क्येत । तदिदमुक्तम्—**'यत्र विहितस्ततोऽन्यत्रापि दृश्यत इति । अस्थन्वन्तमिति ।** अनङि कृते 'अनो नुट्' इति मतुपो नुट्, अनङो नकारस्य लोपः ॥ ७६ ॥

**भावबोधिनी**

अजादि परे ही—इसका क्या फल है ? अस्थिभ्याम् । दधिभ्याम् । [ अजादि न होने से अनङ् नहीं होता है । ] ॥ ७५ ॥

वेदविषय में भी अस्थि, दधि, सक्थि और अक्षि—इनका अनङ् ( अन्त्यादेश ) होता है । जिनसे विहित हैं उनसे भिन्न में भी देखा जाता है ।

'अजादि विभक्ति परे' कहा गया है किन्तु अनजादि विभक्ति परे भी देखा जाता है—"इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः । [ अस्थि + भिस्, अक्षि + भिस् यहाँ भी अनङ् = अन् आदेश नलोप होता है । ]

तृतीयादि परे कहा गया है, तृतीयाभिन्न परे भी देखा जाता है—अस्थानि उत्कृत्य जुहोति । [ अस्थि + शस् = शि = इ, अनङ् = अन् आदेश उपधादीर्घ । ]

विभक्ति परे—ऐसा कहा गया है, विभक्ति से भिन्न परे रहते भी होता है—अक्षण्वता लाङ्गलेन । अस्थन्वन्तं यदनस्था बिभर्त्ति । [ अक्षि + मतुप्, अस्थि + मतुप्, अनङ् = अन् करने पर "अनो नुट्" आगम मतुप् से पूर्व होता है । अन् के न् के लोप के बाद "मादुपधायाश्च" सूत्र में म् का व्, न् का ण् अक्षण्वता, अस्थन्वता—ये टा परे शब्दरूप हैं । यहाँ मतुप् परे भी अनङ् हुआ है । ] ॥ ७६ ॥

---

१. यतः—इति काशिकापाठः ।

**३२५३. ई च द्विवचने ॥ ७७ ॥ ३५७६)**

**द्विवचने परतश्छन्दसि विषयेऽस्थ्यादीनामीकारादेशो भवति, स चोदात्तः। अक्षी ते इन्द्र पिङ्गले कपेरिव। 'अक्षीभ्यां ते नासिकाभ्याम्' (ऋ० १०.१६३.१)। अक्षी—इत्यत्र नुम्परत्वादीकारेण बाध्यते, तत्र कृते 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (व्या० प० ४०) इति पुनर्नुम्न क्रियते ॥**

**३२५४. नाभ्यस्ताच्छतुः ॥ ७८ ॥ ( ४२७)**

**अभ्यस्तादङ्गादुत्तरस्य शतुर्नुम्न भवति। ददत्, ददतौ, ददतः। दधत्, दधतौ, दधतः। जक्षत्, जक्षतौ, जक्षतः। जाग्रत्, जाग्रतौ, जाग्रतः।**

**न्यासः**

**ई च द्विवचने ॥** चकारश्छन्दसीत्यनुकर्षणार्थः। **अक्षी ते इति।** अक्षि औ इति स्थिते 'नपुंसकाच्च' इति शीभावः, ईकारे कृते 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः, 'दीर्घाजसि च' इति प्रतिषिद्धोऽपि छान्दसत्वाद्भवति। ननु सवर्णदीर्घत्वेनाप्येतत् सिद्ध्यति ? यद्यपि रूपं सिद्ध्यति, उदात्तत्वं तु न सिध्यति। एतेनोदात्त ईकारो विधीयते। अथ वा—रूपमपि न सिध्यति। पूर्वसवर्णाद्धि परत्वात् पूर्वं नुमि कृते नैव सवर्णदीर्घः स्यात्। अथाक्षी इत्यत्र 'इकोऽचि विभक्तौ' इति नुम् कस्मान्न भवति ? इत्याह—**अक्षी इत्यत्रेत्यादि।** नुमोऽवकाशः—त्रपुणे, जतुन इति, इकारस्यावकाशः—अक्षीभ्यामिति; प्रथमाद्विवचन उभयप्रसङ्गे परत्वादीकार एव भवति। अथेदानीमीकारे कृते पुनःप्रसङ्गविज्ञानान्नुम् कस्मान्न भवति ? इत्याह—**सकृद्गताविति** ॥ ७७ ॥

**नाभ्यस्ताच्छतुः ॥ ददद्, ददताविति।** 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। जक्षितिजागर्त्योः 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा।

**पदमञ्जरी**

**ई च द्विवचने। अक्षी इति।** अक्षि + औ इति स्थिते औङः शीभावः, पूर्वस्य ईकारः, तत्र 'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्य 'दीर्घाज्जसि च' इति नित्ये प्रतिषेधे प्राप्ते 'वा छन्दसि' इति पक्षे पूर्वसवर्णदीर्घत्वम्। 'अकः सवर्णे दीर्घः' इति वा दीर्घत्वम्। ननु चासत्यप्यस्मिन्वचने पूर्वसवर्णदीर्घत्वेनैव सिद्धम् ? नात्र पूर्वसवर्णदीर्घत्वं प्राप्नोति, परत्वान्नुमा बाध्यते। एवं तर्हि छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः—'मधोस्तृप्ता इवासते'—इत्येवमाद्यर्थम्, तेन पुंवद्भावेन नुमि शीभावे चासति पूर्वसवर्णदीर्घत्वेनापि सिद्धम्—अक्षी इति ? सत्यम्; स्वरस्तु न सिध्यति, अक्षिशब्दस्य 'नब्विषयस्यानिसन्तस्य' (फि० सू० २.३) इत्याद्युदात्तत्वात्। न च पुंवद्भावेन स्वरस्याप्यभावातिदेश इष्यते। तस्मात्स्वरार्थमत्रापीकार एव विधेयः ॥ ७७ ॥

**नाभ्यस्ताच्छतुः। दददिति।** 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। **जक्षदित्यादौ** 'जक्षित्यादयः षट्'

**भावबोधिनी**

द्विवचन परे रहते वेदविषय में अस्थि आदि का ईकार (अन्त्य) आदेश होता है और वह उदात्त होता है। उदा० "अक्षी ते पिङ्गले कपेरिव। अक्षीभ्यां ते नासिकाभ्याम्। [ अक्षि + औ, "नपुंसकाच्च" से शी = आदेश, पूर्व का ईकार आदेश पूर्वसवर्णदीर्घ। छान्दस प्रयोग के कारण "दीर्घाज्जसि च" से पूर्वसवर्ण-दीर्घप्रतिषेध नहीं होता है। ]

अक्षी—इसमें परवर्ती होने कारण ईत्व आदेश द्वारा नुम् का बाध कर लिया जाता है और ऐसा कर देने पर "विप्रतिषेध में एक बार बाध हो जाने पर बाध ही रहता है पुनः प्रवृत्ति नहीं होती है" इस नियम से पुनः नुम् नहीं किया जाता है ॥ ७७ ॥

अभ्यस्तसंज्ञक अङ्ग से उत्तरवर्त्ती शतृ को नुम् का आगम नहीं होता है। उदा० ददत्, ददतौ, ददतः। दधत्, दधतौ, दधतः। जक्षत्, जक्षतौ जक्षतः। जाग्रत्, जाग्रतौ, जाग्रतः। [ दा और धा का द्वित्व होने से अभ्यस्त हैं तथा "जक्षित्यादयः षट्" से शेष दोनों अभ्यस्त है। सु, औ, जस् परे नुम् प्राप्त है इस सूत्र से निषेध हो जाता है। ]

शतुरनन्तर ईकारो न विहित इति व्यवहितस्यापि नुमः प्रतिषेधो विज्ञायते ॥

**३२५५. वा नपुंसकस्य ॥ ७९ ॥ (४४४)**

अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्य वा नुमागमो भवति। ददति ददन्ति कुलानि। दधति दधन्ति कुलानि। जक्षति जक्षन्ति कुलानि। जाग्रति, जाग्रन्ति कुलानि॥

**३२५६. आच्छीनद्योर्नुम् ॥ ८० ॥ (४४५)**

अवर्णान्तादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति शीनद्योः परतः। तुदती कुले, तुदन्ती कुले। तुदती

**न्यासः**

कथं पुनरयं नुमः प्रतिषेधो विज्ञायते, यावता 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इतीकारस्य प्रतिषेधो युक्तः ? इत्याह—**शतुरनन्तर इत्यादि**। लक्षणान्तरेण विहितस्य प्रतिषेधो भवति, न तु शतुरनन्तर ईकारः केनचिद्विहितः। अङ्गस्येति वर्त्तते, न च नुमोऽन्यत् कार्यं शतुः सम्भवति। अतः सामर्थ्याद्व्यवहितस्यापि 'उगिदचाम्' इति नुमः प्रतिषेधो विज्ञायत इति ॥ ७८ ॥

**वा नपुंसकस्य ॥** शतृप्रत्ययमात्रं नपुंसके न वर्त्तत इत्यभ्यस्तादङ्गादुत्तरो यः शता[1] तदन्तस्य नपुंसकस्य विकल्पो विज्ञायत इत्याह—**अभ्यस्तादङ्गादित्यादि** ॥ ७९ ॥

**आच्छीनद्योर्नुम् ॥ तुदन्ती कुले इति**। 'नपुंसकाच्च' इति शीभावः। **तुदती ब्राह्मणीति**। 'उगितश्च'

**पदमञ्जरी**

इत्यभ्यस्तसंज्ञा। कथं पुनश्चतुर्भिर्योगैर्व्यवहितस्य नुमः प्रतिषेधः शक्यो विज्ञातुम् ? इत्याह—**शतुरन्तरो न विहित इति**। अनन्तर ईकारः शत्रन्तस्य न विहितः, एवं तदनन्तर इति यावद्विहितान्वेषणे नुमि पर्यवसानम् ॥ ७८ ॥ ७९ ॥

**आच्छीनद्योर्नुम् ॥ अवर्णान्तादङ्गादुत्तरस्य शतुरिति**। सूत्राक्षरैस्तावदयमेवार्थः प्रतीयते इत्येवं व्याख्यातम्, न पुनरयं व्यवस्थितः सूत्रार्थः, दूषणस्य वक्ष्यमाणत्वात्। तस्मान्नाप्रदर्शितविषयं दूषणं शक्यं

**भावबोधिनी**

शतृ-प्रत्ययान्त का ईकार आदेश अव्यवहित पूर्व मान कर नहीं किया गया है अतः व्यवहित भी नुम् का प्रतिषेध विज्ञात होता है। [ भाव यह है कि निषेध तो अव्यवहित पूर्ववर्ती का ही होता है। नुम् तो चार सूत्रों से पहले है अतः उसका निषेध कैसे होगा ? समाधान यह है चूंकि शतृप्रत्ययान्त को ईकार आदेश का विधान ही नहीं है तब निषेध कैसा ? जिसका विधान होता है उसी का निषेध किया जाता है। शतृप्रत्ययान्त को नुम् विहित है अतः उसी का निषेध, व्यवहित होने पर भी, किया जाना उचित है। ] ॥ ७८ ॥

अभ्यस्त अङ्ग से उत्तरवर्त्ती जो शतृ प्रत्यय तदन्त नपुंसक को विकल्प से नुम् आगम होता है। उदा० ददति ददन्ति कुलानि। दधति दधन्ति कुलानि। जक्षति जक्षन्ति कुलानि। जाग्रति जाग्रन्ति कुलानि। [ दा शतृ-प्रत्ययान्त के श्लु, द्वित्व, आलोप के बाद ददत्+जस् नपुंसक में शि = इ आदेश, प्रस्तुत सूत्र से विकल्प से नुम् आगम ] ॥ ७९ ॥

अकारान्त अङ्ग से उत्तरवर्त्ती शतृ ( प्रत्ययान्त ) को विकल्प से नुम् आगम होता है शी तथा नदी परे रहते (नदी = ई)। उदा० तुदती कुले, तुदन्ती कुले। [ तुदत् = औ का शी = ई आदेश, विकल्प से नुम्। ] तुदती ब्राह्मणी, तुदन्ती ब्राह्मणी। [ शतृ प्रत्ययान्त से 'उगितश्च' सूत्र से ङीप् = ई होता है। विकल्प से नुम् आगम अनुस्वार परसवर्ण ] याती कुले, यान्ती कुले। याती ब्राह्मणी, यान्ती ब्राह्मणी। करिष्यती कुले करिष्यन्ती कुले। करिष्यती ब्राह्मणी, करिष्यन्ती ब्राह्मणी। [ करिष्यन्ती—में 'लृटः सद् वा' सूत्र से लृट् का शतृ, स्य, इट् षत्व, गुण, रपर, ङीप्, विकल्प से नुमागम होता है। ]

---

१. कर्तृशब्दस्य 'कर्ता' इतिवत् 'शतृ' शब्दस्य प्रथमैकवचने 'शता' इति रूपं बोध्यम्, न तु तृतीयैकवचनान्तमिति।

**ब्राह्मणी, तुदन्ती ब्राह्मणी याती कुले, यान्ती कुले। याती ब्राह्मणी, यान्ती ब्राह्मणी। करिष्यती कुले, करिष्यन्ती कुले। करिष्यती ब्राह्मणी, करिष्यन्ती ब्राह्मणी।**

**अत्रान्तरङ्गत्वादेकादेशे कृते व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुम्, 'उभयत आश्रये नान्तादिवत्' (व्या० प० ५१) इत्यन्तादिवद्भावोऽपि नास्ति, भूतपूर्वगत्याश्रयणे वा—अदती, घ्नतीत्येवमादिष्वतिप्रसङ्ग इति ? अत्र समाधिं केचिदाहुः—शतुरवयवे शतृशब्दो वर्त्तते, अवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति[1]।**

**न्यासः**

इति ङीप्। **याती ब्राह्मणीति।** अदादित्वाच्छपो लुक्, 'उगितश्च' इति ङीप्। **करिष्यन्ती कुले इति।** 'लृटः सद्वा' इति शत्रादेशः, 'ऋद्धनोः स्ये' इतीट्।

**अत्रान्तरङ्गत्वादित्यादि**—चोद्यम्। अकारान्तादङ्गात् परे शतरि व्यवस्थिते ईकारे च किं नुम् क्रियताम्? उतैकादेशः ? अत्रान्तरङ्गत्वाद् 'अतो गुणे' पररूपमेकादेशः। अन्तरङ्गत्वं पुनस्तस्य वर्णाश्रयत्वात्, नुमस्तु बह्वपेक्षत्वाद् बहिरङ्गत्वम्। स ह्यकारान्तमङ्गं शतृप्रत्ययान्तं ततश्च परतः शीनद्योर्भावमपेक्षते। 'वार्णादाङ्गम्' इत्यादीह नास्ति; भिन्नकालत्वात्—शीनद्योर्हि परभावे सति नुम् प्राप्नोति, एकादेशस्तु ततः प्रागेव। 'यत्र च वार्णाङ्गयोर्युगपत् प्राप्तिः, तत्रेयमुपतिष्ठते' इत्युक्तं प्राक्। व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति शक्यते वक्तुम्। भेदे हि सत्यवध्यवधिमतोरिदमस्मादुत्तरमिदञ्च पूर्वमित्येष व्यवहारो भवति, नान्यथा। स्यादेतत्—'अन्तादिवच्च' इत्यन्तादिवद्भावेनैकादेशः पूर्वं प्रत्यन्तवद्भवति परञ्च प्रत्यादिवदित्येकादेशस्य पूर्वं प्रत्यन्तवत्वात् परञ्च प्रत्यादिवत्वाद्युज्यत एवावर्णादङ्गादुत्तरस्य शतुः ? इत्याह—**उभयत आश्रय इत्यादि।** अत्र ह्यकारान्तमङ्गं शता चोभयमाश्रितम्। 'उभयत आश्रये नान्तादिवत्' इति नास्त्यन्तादिवद्भावः। न ह्येकस्यैकदा पूर्वं

**पदमञ्जरी**

वक्तुमिति विषयप्रदर्शनपरमिदं द्रष्टव्यम्। **याती कुले इति।** 'नपुंसकाच्च' इत्यौङः शीभावः। **याती ब्राह्मणीति।** 'उगितश्च' इति ङीप्। **करिष्यतीति।** लृट्, 'लृटः सद्वा', 'ऋद्धनोः स्ये' इतीट्।

**अत्रेत्यादि**—चोद्यम्। अन्तरङ्गत्वं पुनरेकादेशस्य शतृमात्रापेक्षत्वात्। नुमस्तु बहिरङ्गत्वम्, शीनद्युत्पत्त्यपेक्षत्वात्। व्यपवर्गः = भेदः—इदमवर्णान्तमङ्गम्, अयं शतृप्रत्यय इत्येवंरूपः। स एकादेशे कृते नास्ति, क्षीरोदकवत्। तद्यथा—क्षीरोदके संयुक्ते न ज्ञायेते—इदं क्षीरमिदमुदकम्, अमुष्मिन्नवकाशे क्षीरममुष्मिन्नवकाशे उदकमिति।

**भावबोधिनी**

यहाँ ( पूर्वोक्त उदाहरणों में) अन्तरङ्ग होने से ( पररूप) एकादेश कर देने पर व्यपवर्ग (अलग होना) न होने के अवर्णान्त अङ्ग से उत्तरवर्त्ती शतृ को (नुम् होता है)—ऐसा कहना ठीक नहीं है। [ भाव यह है कि उक्त सभी उदाहरणों में शतृ होने पर औ का शी = ई तथा ङीप् = ई कर देने पर धातु आदि के साथ शत् = अत् का पररूप एकादेश भी प्राप्त है और नुम् भी। इनमें अन्तरङ्ग होने से पहले पररूप किया जाता है। अब दोनों अकारों के मिल जाने के कारण अकारान्त अङ्ग से परे शतृ नहीं रहता है, नुम् की प्राप्ति नहीं हो सकती। अन्तादिवद्भाव से भी निर्वाह नहीं हो सकता क्योंकि ] 'दोनों ओर से आश्रयण करने में पूर्व का अन्तवद्भाव और पर का आदिवद्भाव नहीं होता है' इस परिभाषा के कारण अन्तादिवद्भाव नहीं हो सकता। अथवा भूतपूर्व गति (अर्थात् पहले अवर्णान्त का ऐसा) मानने पर तो—अदती, घ्नती—आदि में भी [ लुक् से पूर्व अकारान्त होने के कारण ] अतिप्रसङ्ग होता है ? इस शंका के समाधान में कुछ लोग कहते हैं—"शतृ शब्द शतृ के अवयव में है अतः अवर्णान्त अङ्ग से उत्तरवर्त्ती जो शतृ का अवयव [ तकार है उसको नुम् का आगम होता है। अतः एकादेश हो जाने पर भी अवर्णान्त अङ्ग से उत्तरवर्त्ती शत्रवयव 'त्' है इससे परे शी या नदी = ई मिलने से नुम् होने में बाधा नहीं है ]।

---

१. 'यथा ग्रामो दग्ध इति ग्रामैकदेशे ग्रामशब्दो निर्दिश्यते'—इत्यधिकमेकत्र।

**अपरे पुनराहुः—'आत्' इत्येतेन शीनद्यावेव विशेष्येते, अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः परतः शत्रन्तस्य नुम्भवतीति । तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति तकारेणैव व्यवधानमाश्रयिष्यते ।**

**न्यासः**

प्रत्यन्तवद्भावः परश्च प्रत्यादिवद्भाव उपपद्यते । तथा हि—यदि पूर्वं प्रत्यन्तवद्भवति, तदा शतृरूपं न सम्पद्यते; अथ परं प्रत्यादिवद्भवति, तदाऽकारान्तताऽङ्गस्य न परिकल्प्यते; उच्यते चेदमाच्छीनद्योर्नुमिति, न चावर्णान्तादङ्गादुत्तरः शता क्वचित् सम्भवति; तत्र वचनप्रामाण्याद् भूतपूर्वगतिराश्रीयते—अवर्णान्तादुत्तरो यः शता पूर्वमासीदिति । अत आह—**भूतपूर्वगत्येत्यादि** । यदि हि भूतपूर्वगतिराश्रीयते, अदती घ्नतीत्यादावतिप्रसङ्गः स्यात्; अत्राप्यवर्णान्तादङ्गादुत्तरः शता पूर्वमासीत् ? इत्याह—**अत्र केचित्समाधिमाहुरिति** । समाधि = परीहारः । परीहारश्च—शतुरवयव इति । शतुरवयवस्तकारः । तत्रेह शतृशब्दो वर्त्तते, यथा—पटो दग्ध इत्यत्र पटावयवे पटशब्दः, समुदायेषु प्रवृत्ताः शब्दा क्वचिदवयवेष्वपि वर्त्तन्त इति । स च शत्रवयव एकादेशे हि कृतेऽवर्णान्तादङ्गादुत्तरो भवतीति 'अत्यन्तरङ्गत्वादेकादेशे कृते'—इत्यादिना यत् कृतश्चोद्यं तत् परिहृतं भवति । किं पुनरनच्कस्य तकारस्य नुम् ? कथञ्च नुम् स्यात् ? कथञ्च न स्यात् ? 'मिदचोऽन्त्यात् परः' इति वचनात् । मा भूत् तकारस्य, तदन्तस्य भविष्यति । एवञ्च सूत्रार्थं वर्णयिष्यामः—अवर्णान्तादङ्गादुत्तरो यः शत्रवयवस्तदन्तस्याङ्गस्य नुम् भवतीति । अङ्गग्रहणञ्च द्विरावर्त्तयिष्यामः—शत्रवयवविशेषणार्थम्, अङ्गकार्यंप्रतिप्रत्ययर्थञ्च । कथं पुनस्तुदतीत्यादौ तकारात् पूर्वस्याङ्गत्वम्, यावता यतः प्रत्ययो विहितस्तदादेः प्रत्यये परतोऽङ्गसंज्ञा, न च तकारः प्रत्ययः, असत्याञ्चाङ्गसंज्ञायां यदुक्तमवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति तन्नोपपद्यते ? नैष दोषः; यथैव हि शत्रवयवे शतृशब्दो वर्त्तते, तथाङ्गावयवे तकारात् पूर्वस्मिन्नङ्गशब्दः । किं पुनस्तदङ्गम् ? यस्यावयवः शत्रन्तम् । तस्य हि शीनद्योः परतोऽङ्गसंज्ञा विधीयते ।

**पदमञ्जरी**

**अवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुमिति** । यथा पूर्वमवोचस्तथा न युज्यत इत्यर्थः । तथा हि सर्वत्रैवावर्णस्य निवृत्त्या भवितव्यम्, क्वचिल्लुका—अदती, घ्नतीति, क्वचिच्छ्लुना—जुह्वतीति, तुदतीत्यादावेकादेशेन, लुनतीत्यादौ 'श्नाभ्यस्तयोरातः' इत्याकारलोपेन । स्यादेतत्—एकादेशविषयेऽन्तादिवद्भावेन व्यपवर्गो भविष्यतीति ? तत्राह—**उभयत आश्रय इति** । यत्र च पूर्वं परं चोभयं युगपदाश्रीयते न तत्रान्तादिवद्भावोऽस्तीति, यथा 'उपसर्गाद्ध्रस्वः' ऊहते, प्रोहते, 'एतेर्लिङि' अभीयादिति । इहाप्यवर्णान्तमङ्गं शता चेत्युभयं युगपदाश्रीयते, इति नास्त्यन्तादिवद्भावः । एतर्ह्युच्यते चेदमवर्णान्तादङ्गादुत्तरस्य शतुरिति, न च सम्प्रत्येवंविधः शता क्वचित्सम्भवति, तत्र भूतपूर्वगतिराश्रयिष्यते—पूर्वं यः शता अवर्णान्तादङ्गादुत्तर आसीदिति ? तत्राह—**भूतपूर्वगत्याश्रयणे वेति** । समाधिः = समाधानम्, परिहारः । **अवर्णान्ताच्छब्दादिति** । अङ्गादिति द्रष्टव्यम्; अन्यथा ददतीत्यादावपि प्रसङ्गात् । भवति ह्यत्रापि शत्रवयवादकारात्परस्तकारः । कथं पुनरवर्णान्तस्याङ्गत्वम् ? एकादेशस्यान्तवद्भावात् । न हीदानीं परम्प्रत्यादिवत्वं विवक्षितम्; तकारस्य स्वयमेव शत्रवयवत्वात् । एव तेन तकारेण पुनरङ्गस्य तदन्तविधिः, 'अङ्गस्य' इत्येतदत्रावर्त्यते ।

**भावबोधिनी**

दूसरे विद्वान् ऐसा कहते हैं—'आत्' से शी तथा नदी ही विशेषित किये जाते हैं—अवर्णान्त अङ्ग से उत्तरवर्ती जो शी और नदी इनके परे रहते शतृप्रत्ययान्त को नुम् का आगम होता है। ऐसा मान लेने पर 'जिसका अव्यवधान नहीं होता है अर्थात् सदैव व्यवधान रहता है उसके द्वारा व्यवधान में भी कार्य होता है' इस वचन के प्रामाण्य से केवल तकार से ही व्यवधान का आश्रयण किया जाता है। [ अतः कोई दोष नहीं है। यद्यपि नुम् की अनुवृत्ति सम्भव होने से पुनः 'नुम्' का ग्रहण अनावश्यक प्रतीत होता है किन्तु वह ज्ञापनार्थ समझना चाहिए—अवर्णान्त से शतृ से परे शी, नदी होने पर विकल्प से ही होता है। ]

आदिति किम् ? कुर्वती । सुन्वती । शीनद्योरिति किम् ? तुदताम् । नुदताम् ॥

**३२५७. शप्श्यनोर्नित्यम् ॥ ८१ ॥ (४४६)**

शप्, श्यन्—इत्येतयोः शतुः शीनद्योः परतो नित्यं नुमागमो भवति । पचन्ती कुले, पचन्ती ब्राह्मणी । दीव्यन्ती कुले, दीव्यन्ती ब्राह्मणी । सीव्यन्ती कुले, सीव्यन्ती ब्राह्मणी ।

नित्यग्रहणम् 'वा' इत्यस्याधिकारस्य निवृत्त्यर्थम् । इहारम्भसामर्थ्यान्नित्यमुत्तरत्र विकल्प एवेत्याशङ्क्येत ॥

**न्यासः**

इहापि तर्हि कस्मान्न भवति—अदती, घ्नतीति, अत्रापि ह्यवर्णान्तादङ्गादुत्तरः शत्रवयवो भवति ? यद्यत्रापि स्याद्, आदिति विशेषणमनर्थकं स्यात्, शीनद्योरित्येवं ब्रूयात् । यत्र च शीनद्योः परतः शत्रन्तमङ्गं भवति, तत्र नियोगत एवाकारान्तादङ्गादुत्तरो शत्रवयवो भवति । तस्माद् 'आतः' इति विशेषणोपादानसामर्थ्याद् विशेषपरिग्रहो विज्ञायते—शत्रवयवादकारात् पूर्वो योऽकारस्तदन्तादुत्तरो यः शत्रवयव इति नेह नुमः प्रसङ्गः । **अवर्णान्तादङ्गादुत्तरे ये शीनद्याविति** । अत्रापि पूर्ववदङ्गावयवेऽङ्गशब्दो वर्त्तते । ननु च तुदन्तीत्यादाववर्णान्तादङ्गादुत्तरे शीनद्यौ न सम्भवत एव; तकारेण व्यवधानात् ? इत्याह—**तत्र येनेत्यादि** । गतार्थम् । अथ नुम्यनुवर्त्तमाने किमर्थं पुनर्नुम्ग्रहणम् ? नेति, वेति च प्रकृतम् । तत्र नुम्ग्रहणमन्तरेणानिष्टमपि विज्ञायते—शीनद्योर्विभाषा नुमवर्णान्तान्न भवतीति । किञ्च स्यात् ? कुर्वती, तन्वतीत्यत्र विभाषा स्यात्, करिष्यन्तीत्यत्र न स्यात् । केन पुनः प्राप्तस्य नुमः शीनद्योः प्रतिषेध क्रियते ? एतदेव ज्ञापयति—अस्ति शीनद्योर्विभाषा नुमिति । नुम्ग्रहणे तु क्रियमाणे विधिरेवायं विज्ञायत इत्यदोषः ॥ ८० ॥

**शप्श्यनोर्नित्यम्** ॥ ८१ ॥

**पदमञ्जरी**

**अपरे पुनरिति** । अत्रापि पक्षे युगपदुभयं नाश्रीयते, किन्तु क्रमेणेत्यस्त्यन्तादिवद्भावः । ननु च तुदन्तीत्यादावन्तादिवद्भावादवर्णान्तमङ्गं भवतु; तथापि न ततः परे शीनद्यौ, तकारेण व्यवधानात् ? इत्यत आह—**तत्रेति** । प्रकृतो नुम् प्रतिषेधेन सम्बद्ध इति तदनुवृत्ताविहापि प्रतिषेध एव विकल्पेन, शीनद्योर्वा नुम् न भवति अवर्णान्तादिति, केन पुनः प्रसङ्गः ? इदमेव ज्ञापकं स्यात्—अस्ति शीनद्योर्नुमिति, ततश्च कुर्वतीत्यादावनवर्णान्तान्नित्यं नुमः प्रसङ्गः, मैवं विज्ञायीति नुम्ग्रहणम् ॥ ८० ॥

**शप्श्यनोर्नित्यम्** ॥ **इत्येतयोः शतुरिति** । एतयोः सम्बन्धी यः शता तस्येत्यर्थः, सम्बन्धश्च निमित्तनिमित्तिभावः । क्वचित्तु **सम्बन्धिन** इति पठ्यते । **नित्यग्रहणमिति** । ननु चारम्भसामर्थ्यादेव नित्यं भविष्यति ? तत्राह—**इहेति** ॥ ८१ ॥

**भावबोधिनी**

अकारान्त अङ्ग से परे—इसका क्या फल है ? कुर्वती । सुन्वन्ती । [ यहाँ नुम् नहीं होता है क्यों अकारान्त अङ्ग नहीं है । ]

शी और नदी परे—इसका क्या फल है ? तुदताम् । नुदताम् । [ यहाँ शी या नदी कोई परे नहीं है । नुम् नहीं होता है । ] ॥ ८० ॥

शप् और श्यन्—इनके (सम्बन्धी) शतृ को शी तथा नदी परे रहते नित्य नुमागम होता है । [ शप्श्यनोः—यहाँ संबन्ध में षष्ठी है । ] उदा० पचन्ती कुले, पचन्ती ब्राह्मणी । [ पच् + शप् = अ + शत् = अत् + औ, 'नपुंसकाच्च' से शी = ई आदेश, नित्य नुम्, अनुस्वार, परसवर्ण । इसी प्रकार पचत् + ङीप्, नुमादि कार्य होते हैं । ] दीव्यन्ती कुले, दीव्यन्ती ब्राह्मणी । सीव्यन्ती कुले, सीव्यन्ती ब्राह्मणी । [ दिव् + श्यन् = य + शत् = अत् = दीव्यत् + औ, शी = ई आदेश, नुम् । सीव्यत् + ङीप् = ई, नुमादि होता है । )

'नित्यम्' इसका ग्रहण 'वा' इसके अधिकार ( अनुवृत्ति ) की निवृत्ति ( रोकने ) के लिए है । [ आरम्भ-

३२५८. सावनडुहः ॥ ८२ ॥ (३३२)

**सौ परतोऽनडुहोऽङ्गस्य नुमागमो भवति । अनड्वान् । हे अनड्वन् !**

**अत्र केचित् 'आत्'—इत्यधिकारादाममोः कृतयोर्नुमं कुर्वन्ति । तेन नुमाऽमामौ न बाध्येते, आमम्भ्यां च नुमिति ।**

**अपरे तु—सत्यपि सामान्यविशेषत्वे आममोर्नुमश्च समावेशमिच्छन्ति, न बाध्यबाधकभावम्, यथा—चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोरिति ॥**

न्यास।

**सावनडुहः** ॥ ८२ ॥

पदमञ्जरी

**सावनडुहः** ॥ इह 'चतुरनडुहोरामुदात्तः' इत्यामागमः सर्वनामस्थानमात्रे विधीयमानः सोरन्यत्र सावकाशो निरवकाशेन नुमा बाध्येत, तथा सम्बुद्धेरन्यत्र सो सावकाशो नुम् सम्बुद्धौ विशेषविहितेन 'अम् सम्बुद्धौ' इत्यनेन बाध्येत ? इत्याशङ्क्याह—**अत्र केचिदित्यादि** । कथं पुनरादित्यस्यानुवृत्तौ सत्यामप्याममोः कृतयोर्नुम् भवति, न पुनरयं एवानडुहि नित्यः सन्निहितोऽकारस्तत एव परः स्यात् ? उच्यते; एवं सति 'मिदचोऽन्त्यात्परः' इति परिभाषा बाध्यते, तत्राबाधेनोपपत्तौ सत्यां बाधो न न्याय्यः । तत्र यथा परिभाषा न बाध्यते आदित्यनुवृत्तिश्च सार्थिका भवति, तथा वक्तव्यम् । यदि चाममोरकृतयोर्नुम् स्यात्, नेदमुभयमनुगृहीतं स्यादिति कृतयोरेव तयोर्नुम् भविष्यति । **अमामौ च न बाध्येते इति** । न केवलममेव न बाध्यते, अपि त्वाममावुभावपि न बाध्येते इत्यर्थः । अमत्र दृष्टान्तत्वेनोपात्तः यथाऽम् न बाध्यते तथा आमिति भावः । न पुनरमो नुमा बाधशङ्का; अमो विशेषविहितत्वात् । **आमम्भ्यां च नुमिति** । 'न बाध्यते' इति वचनविपरिणामेनानुषङ्गः । अत्रापि यथा आमा न बाध्यते तथाऽमापीत्यर्थः । न पुनरामा नुमो बाधशङ्का; तस्य सामान्यत्वात् । **अपरे त्वित्यादि** । 'इच्छन्ति' इति वचनादिष्टिरेवेयमिति केचित् । अन्ये त्वाहुः—भवतु वा सामान्यविशेषयोः सन्निधौ बाध्यबाधकभावः, इह त्वनेकेन योगेन व्यवधानम्, 'असति हि सम्भवे बाधनं भवति' (व्या० प० २४) इह च अस्ति सम्भवो यदुभयं स्यादित्याममोर्नुमश्च समावेश इति । **यथेति** । अत्र नाप्राप्ते द्विर्वचने दीर्घ आरभ्यते । अथ च सम्भवात्प्रकरणभेदाच्च समावेशः । बह्वनड्वांहि ब्राह्मणकुलानीति परत्वादामि कृते पुनःप्रसङ्गविज्ञानात् 'नपुंसकस्य झलचः' इति नुम् भवति ॥ ८२ ॥

भावबोधिनी

सामर्थ्य से नित्य नहीं कहा जा सकता क्योंकि ] यहाँ आरम्भसामर्थ्य से नित्य हो जाने पर भी उत्तरवर्त्ती सूत्रों में विकल्प की ही शंका होवे लगती है । [ जब 'नित्यम्' का ग्रहण कर दिया तो अब विकल्प का प्रश्न समाप्त हो गया । ] ॥ ८१ ॥

'सु' परे रहते 'अनडुह्' इसके अङ्गसंज्ञक को नुम् आगम होता है । उदा० अनड्वान् । हे अनड्वन् । [ अनडुह् + सु "चतुरनडुहोरामुदात्तः" सूत्र से आम् आगम अनडु आह् + सु, नुम्, यण् अनड्वान्ह् + सु, सु का हल्ङ्याब्भ्यो लोप, ह् का संयोगान्तलोप । सम्बोधन एकवचन = सम्बुद्धि में 'अम् सम्बुद्धौ' सूत्र से 'अम्' आगम होवे से 'हे अनड्वन्' बनता है । ]

यहाँ कुछ विद्वान् 'आत्' इसके अधिकार से 'आम्' तथा 'अम्' करने पर उन्हें नुम् आगम करते हैं । इस कारण नुम् द्वारा आम् और अम् का बाध नहीं होता है । और न आम् तथा अम् द्वारा नुम् का बाध होता है ।

दूसरे विद्वान् तो—सामान्य तथा विशेष होवे पर भी आम् अम् तथा नुम् का समावेश चाहते हैं, बाध्यबाधकभाव नहीं चाहते हैं; जैसा कि 'चिचीषति' आदि में दीर्घत्व और द्विर्वचन का [ समावेश होता है । ] ॥ ८२ ॥

**३२५९. दृक्स्ववस्स्वतवसां छन्दसि ॥ ८३ ॥ (३५७७)**

दृक्, स्ववस्, स्वतवस्—इत्येतेषां सौ परतो नुमागमो भवति छन्दसि विषये। ईदृङ्। तादृङ्। यादृङ्। सदृङ्। स्ववान्। स्वतवान्पायुरग्ने ॥

**३२६०. दिव औत् ॥ ८४ ॥**

**'दिव्'—इत्येतस्य सौ परतः 'औत्' इत्ययमादेशो भवति। द्यौः।**

**दिविति प्रातिपदिकमस्ति निरनुबन्धकम्। धातुस्तु सानुबन्धकः, स इह न गृह्यते—अक्षद्यूः॥**

**न्यास**

**दृक्स्ववस्स्वतवसां छन्दसि ॥ ईदृङ्, कीदृङिति।** 'त्यदादिषु' इत्यादिना क्विन्, 'इदंकिमोरीश्की' इतीश्की-आदेशौ, हल्ङ्यादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्। **यादृङ्, तादृङिति।** 'आ सर्वनाम्नः' इत्यात्वम्। **सदृङिति।** 'दृग्दृशवतुषु' इति समानस्य सभावः॥ ८३॥

**दिव औत् ॥ द्यौरिति।** औत्वे कृते यणादेशः। इहाक्षद्यूरित्यक्षैर्दीव्यतीति क्विपि कृते तदाश्रये चान्तरङ्गत्वात् 'च्छ्वोः शूडनुनासिके च' इत्यूठ्। एकदेशविकृतस्यानन्यत्वाद् दिव्शब्द एवायमित्यूकारस्यौत्त्वं प्राप्नोति, तत् कस्मान्न भवति? इत्याह—**दिविति प्रातिपदिकमित्यादि।** अस्त्येवायं दिव्शब्दो धातुः, अस्ति चाव्युत्पन्नं प्रातिपदिकम्। तत्र धातुः सानुबन्धकः, अस्य 'उदितो वा' इत्युदित्कार्यम्। प्रातिपदिकं तु निरनुबन्धकम्, न हि तस्य किञ्चिदनुबन्धकार्यमस्ति। तत्र निरनुबन्धकपरिभाषया धातुरिह न गृह्यते। तेनाक्षद्यूरित्यत्र न भवत्यौत्त्वप्रसङ्गः। तकारो मुखसुखार्थः॥ ८४॥

**पदमञ्जरी**

**दृक्स्ववस्स्वतवसां छन्दसि ॥** ईदृङित्यादौ 'त्यदादिषु दृशोऽनालोचने कञ्च' इति क्विनि नुमि च कृते पूर्ववत्कुत्वम्॥ ८३॥

**दिव औत् ॥** धातोः प्रतिषेधो वक्तव्यः—अक्षद्यूरिति, एकदेशविकृतस्यानन्यत्वादूठि कृते दिवशब्द एवायमिति प्रसङ्ग इति? अधात्वधिकारात्सिद्धम्, 'अधातोः' इत्यनुवर्त्तते, क्व प्रकृतम्? 'उगिदचां सर्वनामस्थानेऽधातोः' इति। यदि तदनुवर्तेत, 'नपुंसकस्य झलचः' इत्यत्रापि सम्बध्येत, ततश्च काष्ठतङ्क्षि ब्राह्मणकुलानीत्यत्र न स्यात्। तस्मादशक्यं तदनुवर्त्तयितुम्; ततश्च धातोः प्रतिषेधो वक्तव्य एव? इत्याशङ्क्याह—**दिविति प्रातिपदिकमित्यादि**॥ ८४॥

**भावबोधिनी**

दृक्, स्ववस्, स्वतवस्—इनको सु परे रहते 'आम्' आगम होता है वेदविषय में। उदा० ईदृङ्। तादृङ्। यादृङ्। सदृङ्। [ ईदृश् में क्विन् करने के बाद सु परे नुम्, हल्ङ्यादिलोप, संयोगान्तलोप, "क्विन् प्रत्ययस्य कुः" सूत्र से 'न्' का कुत्व होने पर 'ङ्' बनता है। ] स्ववान्। स्वतवान्। पायुरग्ने। [ यहाँ स्ववस्+सु, स्वतवस्+सु; नुम् करने पर उपधादीर्घ और हल्ङ्यादिलोप करने पर रूप बनते हैं। ] ॥ ८३ ॥

'दिव्' इसका सु परे रहते 'औत्' यह आदेश होता है। उदा० द्यौः। [दिव्+सु, प्रस्तुत सूत्र से 'व्' का 'औ' आदेश दि औ स्, यण्, स् का रुत्व विसर्ग। ]

'दिव्' यह अनुबन्धरहित प्रातिपदिक है। परन्तु 'दिवु' यह धातु तो उकार अनुबन्धसहित है। उसका अतः यहाँ पर ग्रहण नहीं होता है—अक्षद्यूः। [ अक्षैः दीव्यति इस अर्थ में क्विप्, सर्वाहारी लोप, सु परे 'व्' का ऊठ् आदेश 'च्छ्वोः शूडनुनासिके च' सूत्र से होता है दि+ऊ+स्, यण्, विसर्ग। ] ॥ ८४ ॥

## ३२६१. पथिमथ्यृभुक्षामात् ॥ ८५ ॥ (३६५)

**पथिन्, मथिन्, ऋभुक्षिन्—इत्येतेषामङ्गानां सौ परत आकार आदेशो भवति । पन्थाः । मन्थाः । ऋभुक्षाः । स्थानिन्यनुनासिकेऽपि अकारोऽनुनासिको न भवति । भाव्यमानेन[1] सवर्णानां ग्रहणं न भवतीति[1] शुद्धो ह्ययमुच्चार्यते ॥**

## ३२६२. इतोऽत्सर्वनामस्थाने ॥ ८६ ॥ (३६६)

**न्यासः**

**पथिमथ्यृभुक्षामात् ॥** हल्ङ्यादिलोपे प्राप्ते नलोपे चात्त्वं विधीयते । **पन्था इति ।** 'थो न्थः' इति न्थादेशः, 'इतोऽत्सर्वनामस्थाने' इत्यत्त्वम् । ननु चास्य स्थान्यनुनासिको नकारः, तत्र 'तपरस्तत्कालस्य' इति सवर्णानां ग्रहणे सत्यान्तरतम्यादनुनासिकेनैवाकारेणात्र भवितव्यम्, किमिह शुद्धोऽयमुदाह्रियते इत्याह—**स्थानिन्यनुनासिकेऽपीत्यादि ।** अत्रैव कारणमाह—**भाव्यमान इत्यादि ।** यदि च तपरेणापि भाव्यमानेनेनाणा सवर्णानां ग्रहणं न भवति, एवं सति 'विड्वनोरनुनासिकस्यात्' इत्यत्रापि न स्यात्, तथा 'जनसनखनां सञ्झलोः' इत्यत्रानुनासिकाकारो न स्यात् । एवं तर्हि नैवायमकारस्तपरः, किं तर्हि ? दकारः । दकारस्तु मुखसुखार्थः, स चर्त्वभूतत्वान्न श्रूयते । स्यादेतत्—यद्यपि भाव्यमानोऽण् सवर्णान्न गृह्णातीति सवर्णानां ग्रहणं न भविष्यति, तथाप्यनुनासिकविशिष्टस्योच्चारणादनुनासिकेनैव युक्तं भवितुम् ? इत्याह—**शुद्धो हीत्यादि ।** अयं ह्यकारः शुद्धो निरनुनासिक उच्यते, तस्माच्छुद्ध एवेति नानुनासिकत्वविशिष्टः । अथायं किमर्थं दीर्घ उच्यते, न ह्रस्व एव क्रियताम्, अत्रापि 'अकः सवर्णे' इति दीर्घत्वेन सिध्यत्येव ? न सिध्यति; 'अतो गुणे' इति पररूपत्वं स्यात् । अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत् ? न; अस्ति ह्यन्यदकारोच्चारणस्य प्रयोजनम् । किं तत् ? नकारस्य श्रवणं न स्यादिति । लोपे हि क्रियमाणे गौरवं स्यात्, तस्माद्दीर्घो विधीयते ॥ ८५ ॥

**इतोऽत्सर्वनामस्थाने ॥** अथ 'आत्' इत्यनुवर्त्तमाने किमर्थमद्वचनम्, ह्रस्वस्य श्रवणं यथा स्यादिति

**पदमञ्जरी**

**पथिमथ्यृभुक्षामात् ॥ पन्था इति ।** 'इतोऽत्सर्वनामस्थाने' इतीकारस्याकारः, सवर्णदीर्घत्वम्, 'थो न्थः' । अनुनासिकस्य नकारस्यान्तर्यतोऽनुनासिक आकारः कस्मान्न भवति ? इत्याशङ्क्याह—**स्थानिन्यनुनासिकेऽपीति ।** अत्र कारणमाह—**भाव्यमानेनेति । केचिद्भाव्यमानोऽण् सवर्णान्न गृह्णाति ।** (व्या० प० ३५) इति पठन्ति, तेषामप्यण्ग्रहणं ग्राहकोपलक्षणार्थम्, तेनाकारोऽपि भाव्यमानो ग्राहको न भवति । 'तपरस्तत्कालस्य' इत्यनेन तु ग्रहणशङ्का, उक्तं हि तत्र—अनणि विध्यर्थमेतदिति । स्यादेतत्—मा भूत्सवर्णग्रहणम्, अनुनासिकस्यैव तु सूत्रे उच्चारणात्स एव स्यात् ? इत्यत आह—**शुद्धो ह्ययमिति ।** अकारविधाने 'अतो गुणे' पररूपं स्यात् । अकारविधानं तु नकारनिवृत्त्यर्थं स्यात्; लोपविधौ गौरवप्रसङ्गात् । तस्मादाकार एव विहितः ॥ ८५ ॥

**इतोऽत्सर्वनामस्थाने ॥** अद्वचनं किमर्थम्, ह्रस्वस्य श्रवणं यथा स्यात् ? नैतदस्ति; सौ तावदकः

**भावबोधिनी**

पथिन्, मथिन्, ऋभुक्षिन्—इन अङ्गसंज्ञकों का सु परे रहते आकार आदेश होता है । उदा० पन्थाः । मन्थाः । ऋभुक्षाः । [ पथिन् + सु, मथिन् + सु इनमें 'इतोऽत् सर्वनामस्थाने' सूत्र से इ का अ, 'थो न्थः' सूत्र से 'न्थ' पन्थन् + सु, न् का आ, सवर्णदीर्घ सुविसर्ग—पन्थाः, मन्थाः । ऋभुक्षिन् + सु में 'इ' का अ, न् का आ, सवर्णदीर्घ, सु, विसर्ग ]

न् स्थानी अनुनासिक है फिर भी आ आदेश अनुनासिक नहीं होता है कारण यह है भाव्यमान = विधीयमान द्वारा सवर्णों का ग्रहण नहीं होता है इसलिए यह आ शुद्ध ही उच्चारित होता है ॥ ८५ ॥

पथिन् मथिन् ऋभुक्षिन्—इनके इकार के स्थान पर अकार आदेश होता है सर्वनामस्थान प्रत्यय परे रहते ।

---

१–१. 'भाव्यमानोऽण्सवर्णान् न गृह्णाति'—इति पाठा० ।

**पथ्यादीनामिकारस्य स्थाने अकारादेशो भवति सर्वनामस्थाने परतः। पन्था, पन्थानौ, पन्थानः, पन्थानम्, पन्थानौ। मन्थाः, मन्थानौ, मन्थानः, मन्थानम्, मन्थानौ। ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणः, ऋभुक्षाणम्, ऋभुक्षाणौ।**

**'आत्' इति वर्त्तमाने पुनरद्वचनं षपूर्वार्थम्। ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे' (६.४.९) इति दीर्घविकल्पः॥**

**३२६३. थो न्थः॥ ८७॥ (३६७)**

**पथिमथोस्थकारस्य स्थाने 'न्थ'—इत्ययमादेशो भवति सर्वनामस्थाने परतः। पन्थाः, पन्थानौ, पन्थानः। मन्थाः, मन्थानौ, मन्थानः।**

**न्यासः**

चेत्? नैतत्; कृते हि ह्रस्वत्वे सौ परतोऽकः सवर्णे दीर्घत्वेन भवितव्यमन्यत्र 'नोपधायाः' इत्यनेन, तत्कुतो ह्रस्वस्य श्रवणम्? इत्याह—**आदिति वर्त्तमान इत्यादि।** षपूर्वोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। कथं पुनरिदं षपूर्वार्थं भवति? इत्याह—**ऋभुक्षणमित्यादि।** यदि प्रकृतो दीर्घ एव विधीयते, तदा ऋभुक्षणमिन्द्रमित्यत्र ह्रस्वस्य श्रवणं न स्यात्। ह्रस्वविधाने तु 'वा षपूर्वस्य निगमे' इति दीर्घविधानात् पक्षे भवति। स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमित्येके। पथीरित्यत्र दीर्घनिवृत्त्यर्थमित्यन्ये। पन्थानमिच्छति 'सुप आत्मनः क्यच्', 'अकृत्सार्वधातुकयोः' दीर्घः—पथीयति; पथीयतेः क्विप्, 'अतो लोपः' इत्यल्लोपः, 'क्यस्य विभाषा' इति [1]यकारस्य लोपः—पथीः॥ ८६॥

**थो न्थः॥ थः, न्थः—**इति द्वावपि स्थान्यादेशावनच्कौ। यस्त्वन्थ इत्यत्राकारः श्रूयते स उच्चारणार्थः। सत्यप्यादेशस्यानेकाल्त्वे 'निर्दिश्यमानस्यादेशा भवन्ति' इति थकारमात्रस्यादेशो विज्ञायते, न सर्वस्य॥ ८७॥

**पदमञ्जरी**

सवर्णदीर्घत्वं भवति, अन्यत्रापि 'नोपधायाः', 'सर्वनामस्थाने' इति दीर्घेण भाव्यम्, तस्मात्प्रकृत आकार एव विधेयः? अत आह—**आदिति वर्त्तमान इति।** यत्रायं विहितोऽकारः षपूर्वो भवति तत्रास्य प्रयोजनमित्यर्थः। तदेव दर्शयति—**ऋभुक्षणमित्यत्रेति।** अकारविधौ त्वेकमेव रूपं स्याद्। दीर्घविकल्पस्तु तक्षणम्, तक्षाणमित्याद्यर्थं स्यात्। स्थानिन्यादेशे च तपरकरणं मुखसुखार्थम्॥ ८६॥

**थो न्थः॥ पथिमथोरिति।** त्रयाणां प्रकृतत्वेऽप्येतयोरेव थकारसम्भवात् सम्बन्धः। आदेशेऽकार उच्चारणार्थः। स्यादेतत्—'थेरन्थ' इति सूत्रमस्तु, अकारोऽपि विवक्षितोऽस्तु, थिशब्दस्यान्थ आदेशः, एवं च कृत्वा 'इतोऽत्' इति न वक्तव्यम् इति? तदपि वक्तव्यम्; ऋभुक्षिन्शब्दार्थम्॥ ८७॥

**भावबोधिनी**

उदा० पन्थाः, पन्थानौ, पन्थानः। पन्थानम् पन्थानौ। मन्थाः, मन्थानौ, मन्थानः। मन्थानम्, मन्थानौ। ऋभुक्षाः, ऋभुक्षाणौ ऋभुक्षाणः। ऋभुक्षाणम्, ऋभुक्षाणौ। [ पथिन्+सु आदि परे रहते 'इ' का अ पथन्+सु 'पथिमथ्यृभुक्षामात्' इस सूत्र से न् का आ, सवर्णदीर्घ, 'थो न्थः' से 'न्थ' सुलोप आदि होने पर उक्त रूप बनते हैं। ]

'आत्' इसकी अनुवृत्ति रहने पर पुनः 'अत्' यह वचन षपूर्व का ग्रहण कराने के लिए है। "ऋभुक्षणम्" यहाँ पर "वा षपूर्वस्य निगमे" सूत्र से विकल्प से दीर्घ होता है। [ 'आत्' की अनुवृत्ति ही मानी जाती तो 'ऋभुक्षणम् इन्द्रम्' यहाँ ह्रस्व नहीं सुनाई देता क्योंकि 'आ' ही रहता। ह्रस्वविधान करने पर तो 'वा षपूर्वस्य निगमे' से दीर्घविधान होने पर पक्ष में ह्रस्व भी सुनाई देता है। ]॥ ८६॥

पथिन् और मथिन् के 'थ' के स्थान पर 'न्थ' यह आदेश होता है सर्वनामस्थानसंज्ञक प्रत्यय परे रहते। उदा० पन्थाः पन्थानौ, पन्थानः। पन्थानम्, पन्थानौ। मन्थाः, मन्थानौ, मन्थानः। मन्थानम्, मन्थानौ॥ ८७॥

---

1. वस्तुतस्तु 'लोपो व्योर्वलि' इति यलोपः। अत्र धातुप्रदीपे मैत्रेयरक्षितः—"न्यासे प्रमादपाठो दृश्यते—'क्यस्य विभाषा' इति यकारलोप इति। न ह्यनेन प्राप्तिः; 'यस्य हलः' इत्यतो हल्ग्रहणानुवृत्तेः" इति।

### ३२६४. भस्य टेर्लोपः ॥ ८८ ॥ (३६८)

**पथ्यादीनां भसंज्ञकानां टेर्लोपो भवति। पथः, पथा, पथे। मथः, मथा, मथे। ऋभुक्षः, ऋभुक्षा, ऋभुक्षे।**

**'सर्वनामस्थाने' इत्यनुवर्त्तमानमपि विरोधादिह न सम्बद्धयते ॥**

### ३२६५. पुंसोऽसुङ् ॥ ८९ ॥ (४३६)

**'पुंस्' इत्येतस्य सर्वनामस्थाने परतोऽसुङित्ययमादेशो भवति। पुमान्। पुमांसौ। पुमांसः[1]।**

**इह परमपुमानिति प्रागेव च प्रत्ययोत्पत्तेः समासान्तोदात्तत्वमुत्पन्नायां विभक्तौ असुङित्यनिष्टः**

**न्यास**

**भस्य टेर्लोपः ॥ सर्वनामस्थान इत्यादि।** 'यचि भम्' इत्यत्र 'स्यादिष्वसर्वनामस्थाने' इत्यतः 'असर्वनामस्थाने' इत्यनुवर्त्तमाने भसंज्ञा विहिता, तत्र यदि सर्वनामस्थाने परतः पथ्यादीनां टिलोपः स्याद् तदा भसंज्ञकास्ते न स्युः, अथ भसंज्ञाकास्ते स्युस्तदा सर्वनामस्थानं परं तेभ्यो न स्यादिति भसंज्ञकानां सर्वनामस्थानस्य च सहानवस्थानलक्षणो विरोधः। तस्माद् यद्यप्युत्तरार्थं सर्वनामस्थानग्रहणमनुवर्त्तते, तथापीह नाभिसम्बध्यते ॥ ८८ ॥

**पुंसोऽसुङ् ॥** असुङो ङकारोऽन्त्यादेशार्थः। उकार उगित्कार्यार्थः। **पुमानिति।** 'उगिदचाम्' इत्यादिना नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ।

**इह परमपुमानित्यादि।** परमश्चासौ पुमांश्चेति 'सन्महत्' इत्यादिना समासे कृते यावद्विभक्तिर्नोत्पद्यते तावदसुङादेशेन न भवितव्यम्; तस्य तदाश्रयत्वात्। समासान्तोदात्तत्वं तु न किञ्चिदपेक्षत इति

**पदमञ्जरी**

**भस्य टेर्लोपः ॥ पथ्यादीति।** प्रत्येकमभिसम्बन्धाद् 'भस्य' इत्येकवचनम्। **विरोधादिति।** सर्वनामस्थाने भसंज्ञाया अभावो विरोधः। **इह न सम्बद्धयत इति।** उत्तरार्थं त्वनुवर्त्तत एवेति भावः ॥ ८८ ॥

**पुंसोऽसुङ् ॥** असुङो ङकारोऽन्तादेशार्थः। उकार उच्चारणार्थः। **पुमानिति।** पुंशब्दस्योगित्त्वान्नुम्, स हि 'पूञो डुम्सुन्' (द० उ० ९.४८) इति व्युत्पाद्यते। डकारष्टिलोपार्थः, उकार उगित्कार्यार्थः—बहुपुंसीति ङीब् उगिल्लक्षणो भवति। नकारः स्वरार्थः। मकारेऽकार उच्चारणार्थः।

**इहेत्यादि।** चोद्यम्। **प्रागेव च प्रत्ययोत्पत्तेरिति।** प्रत्ययः, सर्वनामस्थानम्। **समासान्तोदात्तत्वमिति।** पुंस्शब्दोकारस्य। **अनिष्टः स्वर इति।** स्रंसनधर्मणः सकारस्य हलः स्थाने तद्धर्माऽनुदात्त आदेशः

**भावबोधिनी**

पथिन् आदि के भसंज्ञकों की टि का लोप होता है। उदा० पथः। पथा। पथे। मथः। मथा। मथे। ऋभुक्षः। ऋभुक्षा। ऋभुक्षे। [ पथिन् + शस् = अस् में "यचि भम्" सूत्र से भसंज्ञा होने से टि = इन् का लोप होता है। अजादि प्रत्ययों में भसंज्ञा होने से टिलोप होता है। ]

'सर्वनामस्थाने' यह अनुवृत्त होता हुआ भी 'भ' से विरोध होने से यहाँ सम्बद्ध नहीं होता है। [ असर्वनामस्थान परे ही भसंज्ञा का विधान है। अतः दोनों का सम्बन्ध नहीं होता है। ] ॥ ८८ ॥

'पुंस्' इसका सर्वनामस्थान परे रहते 'असुङ्' यह आदेश होता है। उदा० पुमान्, पुमांसौ, पुमांसः। पुमांसम् पुमांसौ। [ पुंस् + सु, असुङ् यह ङित् होने के कारण अन्त्य = स् के ही स्थान पर होता है—पुम् असुङ् = अस् + सु पुमस् + सु, उकार की इत्संज्ञा होने से उगित् मान कर होने वाले 'नुम्' आदि सभी कार्य होते हैं। ]

---

१. 'सर्वनामस्थान इत्येव—पुंसः पश्य' इत्यधिकमेकस्मिन्पुस्तके।

स्वरः प्राप्नोति ? तदर्थमसुङि उपदेशिवद्वचनं कर्त्तव्यम् (म० भा०)। तेन परमपुमानित्यन्तोदात्तो भवति। पुमानित्ययं पुनराद्युदात्त एव ॥

**३२६६. गोतो णित् ॥ ९० ॥ (२८४)**

**गोशब्दात्परं सर्वनामस्थानं णिद्भवति[1]। णित्कार्यं तत्र भवतीत्यर्थः। गौः, गावौ, गावः।**

**न्यासः**

अन्तरङ्गत्वात् प्रागेव विभक्तेरन्तोदात्तत्वं भवति। पश्चादुत्पन्नायां विभक्तावसुङ् अस्वरस्य व्यञ्जनस्य स्थाने भवन्न नियतस्वरः स्यात्, ततश्चानिष्टोऽपि स्वरः प्राप्नोति, अन्तोदात्तमेव चोत्तरपदमिष्यते, आद्युदात्तत्वं प्राप्नोति। **तदर्थमित्यादि**। अर्थशब्दो निवृत्तिवाची, यथा—मशकार्थो धूम इति। तदर्थं तस्यानिष्टस्य स्वरस्य निवृत्त्यर्थमुपदेशिवद्वचनं कर्त्तव्यम्, अकृते समासान्तोदात्तत्व उपदेशावस्थायामेव विभक्त्युत्पत्तेः प्रागसुङ् यथा स्यात्। तेनासुङि पूर्वं कृते पश्चात् समासान्तोदात्तत्वेन परमपुमानित्ययं शब्दोऽन्तोदात्तो भवति। यद्येवम्, पुमानित्ययं शब्दोऽप्यन्तोदात्तः स्यात्, उपदेशावस्थायामेवासुङि कृते पश्चात् प्रातिपदिकस्वरेण भवितव्यम् ? इत्याह—**पुमानित्ययं पुनरित्यादि**। पुम्स्शब्दोऽयं पुनातेः 'मुक्सुनौ ह्रस्वश्च' इति मुक्सुन्प्रत्ययान्तो व्युत्पादितः[2]। तेन नित्स्वरेणायमाद्युदात्तो भवति, नान्तोदात्तः॥ ८९॥

**गोतो णित्**॥ णिदिति संज्ञा वाऽनेन क्रियते—गोतः परं सर्वनामस्थानं णिद् भवति, णित्संज्ञं भवतीत्यर्थः, अथ वा—गोतः परस्य सर्वनामस्थानस्य णकार **इत्संज्ञको** भाव्यते, तेन गोतः परस्य सर्वनामस्थानस्य णकार इत्संज्ञको भवतीति; आदेशो वा विधीयते—गोतः परस्य सर्वनामस्थानस्य णिणकारानुबन्धवानादेशो भवति; अतिदेशो वा क्रियते—गोतः णिद् भवति, णिद्वद् भवतीत्यर्थः, विनापि वतिना वत्यर्थो

**पदमञ्जरी**

स्यादित्यर्थः। ननु चोकारस्य कृतमपि समासान्तोदात्तत्वमसुङि कृतेऽन्त्यत्वान्निवर्त्तिष्यते, असुङश्चान्त्यत्वात्प्रवर्त्तिष्यते ? नैतदस्ति; अन्तरङ्गे स्वरे कर्त्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वात्, प्रवृत्तस्य निवर्त्तनायोगाच्च। **तदर्थमित्यादि**। परिहारः। अर्थशब्दो निवृत्तवचनः, तस्यानिष्टस्वरस्य निवृत्त्यर्थमित्यर्थः। **उपदेशिवद्वचनमिति**। उपदेशोऽस्यास्तीत्युपदेशी, सकारः, स यथोपदेशावस्थायां सन्निहितस्तथाऽसुङपीत्यर्थः। 'सर्वनामस्थाने' इति विषयसप्तम्याश्रयणीयेत्युक्तं भवतीति, तत्र समासानन्तरमेव परत्वादसुङि कृते पश्चादुदात्तत्वं भवदसुङ एवाकारस्य भवतीति सिद्धमिष्टम्। यद्येवम्, पुमानित्यादावसमासेऽपि उपदेशावस्थायामसुङि कृते प्रातिपदिकस्वरो भवन्नसुङ एव स्यात् ? इत्यत आह—**पुमानित्ययं पुनरिति**। पुंस्शब्दे प्रत्ययो निदित्युक्तम्, तत्सामर्थ्यादाद्युदात्तत्वम् ॥८९॥

**गोतो णित्**॥ गाङ्कुटादिसूत्रे यावन्तः पक्षाः, इहापि तावन्त एव, त एव गुणा दोषाश्च, तद्वदेव चातिदेशपक्ष आश्रीयते, यदाह—**णिद्भवतीति**। परत्र परशब्दः प्रयुक्तोऽन्तरेणापि वतिं वत्यर्थं गमयति, यथा—सिंहो माणवक इति। णिदित्यनेन सामानाधिकरण्यात् 'सर्वनामस्थाने' इति सप्तम्यन्तं प्रथमया विपरिणम्यते,

**भावबोधिनी**

यहाँ 'परमपुमान्' इसमें प्रत्यय के होने के पहले ही समास का अन्तोदात्तत्व होता है, विभक्ति उत्पन्न होने पर असुङ् यह अनिष्ट स्वर होने लगेगा ? इसके (रोकने के) लिए 'असुङ् में उपदेशिवद्वचन करना चाहिए'। इस कारण 'परमपुमान्' यह अन्तोदात्त होता है। अकेला 'पुमान्' यह तो आद्युदात्त ही रहता है। [ क्योंकि 'पुंस्' यह शब्द 'पु' धातु से 'मुक्सुन्' प्रत्यय होने से नित् होने से "ञ्नित्यादिर्नित्यम्" सूत्र से आद्युदात्त ही होता है। ]॥ ८९॥

गो शब्द से परे सर्वनामस्थान प्रत्यय णिद्वत् होता है। उसमें णित् कार्य होता है —यह अर्थ है। [ णित् न होने पर भी णित् मानकर होने वाले कार्य होते हैं। ] उदा० गौः, गावौ, गावः। [ गो + सु, णिद्वत् होने से 'ओ' की वृद्धि 'औ' होती है। ]

---

१. 'णिद्वेद्भवती' ति पाठान्तरम्।

२. पञ्चपादयुणादिवृत्तौ तु 'पातेर्डुम्सुन्' इति डुम्सुन्प्रत्ययेन पुम्स्शब्दो व्युत्पादितः। कैयटेनाप्ययमेव पन्थाः स्वीकृतः।

**तपरकरणं किम् ? चित्रगुः । शबलगुः ।**

**कथं हे चित्रगो, हे शवलगव[1] इति ? 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (व्या० प० ३४) इति सम्बुद्धिजसोर्गुणे कृते णित्त्वं न भवति ।**

**न्यासः**

गम्यते, यथा—गाङ्कुटादिसूत्रे। तत्राद्ये पक्षे संज्ञोच्चारिता संज्ञिनं प्रत्याययतीति णित्प्रदेशेषु कृत्रिमत्वादस्यैव सर्वनामस्थानस्य ग्रहणं प्राप्नोति न ण्वुलादीनाम्। द्वितीये तु णकार इत्संज्ञकः सर्वनामस्थानस्य प्रसज्येत। तृतीये तु पुनर्णित् सर्वनामस्थाने न क्वचिद् दृष्टमिति। य एवैते ण्वुलादयस्त एवादेशाः प्रसज्येरन्नित्येते दोषा आद्येषु त्रिषु पक्षेषु यथाक्रमं प्रतिविधेयाः। तत्प्रतिविधाने प्रतिपत्तिगौरवं स्यात्, अतिदेशपक्षे तु न किञ्चित् प्रतिविधेयम्, अतः स एव साधुरिति। तमेवाश्रित्याह—**गोशब्दादित्यादि। णित्कार्यमित्यादिना** णिद्भवतीत्यस्यार्थं व्याचक्षाणः कार्यातिदेशोऽयमित्याचष्टे। गौरिति वृद्धिर्णित्कार्यम्।

**चित्रगुरिति।** अत्र बहुव्रीहौ कृते 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। तत्रासति तपरकरणे 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनात्तदन्तविधिमभ्युपगम्य स्थानिवद्भावेन गोशब्दान्तमेतदङ्गं भवतीति णिद्भावः प्राप्नोति। तपरकरणे तु तत्कालनियमे सति न भवति; भिन्नकालत्वात्। 'तपरस्तत्कालस्य' इत्यत्राण्ग्रहणस्य निवृत्तत्वादनणोऽपि तत्कालनियमो भवत्येव।

**कथमित्यादि।** सत्यपि तपरकरणे 'ह्रस्वस्य गुणः', 'जसि च' इति सम्बुद्धिजसोर्गुणे कृते हे चित्रगो, हे चित्रगव इत्यत्र प्राप्नोति। तत्कालत्वादित्यभिप्रायः। ननु च लक्षणप्रतिपदोक्तपरिभाषया न भविष्यति ? नैतदस्ति; यत्र हि स्थानिवद्भावस्तत्रैषा नोपतिष्ठते; अन्यथा हि स्थानिवद्भावोऽनर्थकः स्यात्। **अङ्गवृत्ते पुनरित्यादि** परीहारः। एष तु हे चित्रगवित्यत्र परीहारः, न तु चित्रगव इत्यत्र; अनिष्ठितत्वात्। अवादेशे हि कृते निष्ठितत्वमत्र भविष्यति, न च गुणमात्रे; अप्रयोगार्हत्वात्।

**पदमञ्जरी**

तत्र सर्वनामस्थानस्य णित्कार्यं विधेयं न सम्भवतीति णिति यत्कार्यं तत्सर्वनामस्थाने पूर्वस्यातिदिश्यते। तदाह—[2]**णित्कार्याणि तत्र भवन्तीत्यर्थ इति।**

**चित्रगुरिति।** बहुव्रीहौ 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। अत्रासति तपरकरणेऽङ्गाधिकारे तदन्तविधेरभ्युपगमात् 'सर्वे सर्वपदादेशाः' (म० भा० ७.१.२७) इति न्यायेन स्थानिवद्भावेन गोशब्दान्तत्वात् णिद्वद्भावः प्राप्नोति। तपरकरणे तु तत्कालार्थे सति न भवति; भिन्नकालत्वात्, 'तपरस्तत्कालस्य' इत्यत्राणित्यस्य निवृत्तत्वादनणोऽपि तत्कालनियमो भवतीति मन्यते।

**कथमिति।** 'ह्रस्वस्य गुणः', 'जसि च' इति गुणे कृते सत्यपि तकारे स्थानिवत्त्वात् तत्कालत्वाण्णित्त्वं प्राप्नोत्येवेति प्रश्नः। न च स्थानिवद्भावविषये लक्षणप्रतिपदोक्तपरिभाषा; तस्य वैयर्थ्यप्रसङ्गात्। **अङ्गवृत्ते इत्यादि** परिहारः। **णित्त्वं न भवतीति।** णित्कार्यं न भवतीत्यर्थः।

**भावबोधिनी**

गोत् का तपरकरण किस लिये है ? चित्रगुः, शबलगुः। [ समास में ह्रस्व हो जावे से ओ का 'उ' हो जावे पर द्विमात्रिक 'ओ' न रहने से णिद्वत् नहीं होता है। ]

हे चित्रगो !, हे शबलगवः ! ये कैसे बनते हैं [ इनमें तो 'गो' है णिद्वद्भाव होना चाहिए ] ? अङ्गसम्बन्धी कार्य हो जाने पर पुनः उसकी विधि नहीं होती है। इस नियम के अनुसार सम्बुद्धि = सम्बोधन एकवचन में और जस् परे [ 'उ' का ] गुण हो जाने पर णित्त्व नहीं होता है। [ अतः णित् मानकर वृद्धि नहीं होती है। ]

---

१. 'हे चित्रगव' इति पाठा०। २. मूले तु एकवचनान्तमेव दृश्यते।

**अथ वा—'गोतः' इति सम्बन्धलक्षणा षष्ठी, गोतः सम्बन्धि यत्सर्वनामस्थानमिति। यच्च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद् गोः सर्वनामस्थानमित्युच्यते। चित्रगुशब्दात्तु सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादीनाह।**

**तपरकरणं तु निर्देशार्थमेव।**

**केचित् 'ओतो णित्' इति पठन्ति। द्योशब्दादपि यत्सर्वनामस्थानं विद्यते तदर्थम्। द्यौः, द्यावौ, द्यावः। 'गोतः' इत्येतदेव तपरकरणनिर्देशादोकारान्तोपलक्षणं द्रष्टव्यम्। वर्णनिर्देशेषु हि तपरकरणं प्रसिद्धम्॥**

**न्यासः**

अत एवाव्यापकत्वादस्य परीहारस्यापरितुष्यन् परिहारान्तरमाह—**अथ वेत्यादि**। स्यादेतत्—अत्रापि गोः सम्बन्धि सर्वनामस्थानमानन्तर्यलक्षणेन भवति सम्बन्धेनेति? अत आह—**यच्चेत्यादि**। यद्यानन्तर्यलक्षणेन गोः सम्बन्धि सर्वनामस्थानं गृह्यते तदा षष्ठ्याश्रयणमनर्थकं स्यात्, पञ्चम्येवाश्रयितव्येति; क्रमव्यतिक्रमे प्रयोजनाभावात्। तस्मात् षष्ठ्याश्रयणसामर्थ्याद् गोशब्दस्यार्थस्य य एकत्वादयस्तेषु यत्सर्वनामस्थानं तद् गोः सर्वनामस्थानमित्युच्यते। तत् पुनर्गोशब्दस्यैकत्वादीनां वेदितव्यम्। आदिशब्देन द्वित्वादिपरिग्रहः। तत्रैतत् स्यात्—चित्रगुशब्दादपि यत् सर्वनामस्थानं तद् गोशब्दस्यार्थस्यैकत्वादिषु वर्त्तते? इत्याह—**चित्रगुशब्दादित्यादि**।

यदि यद् गोः सम्बन्धि सर्वनामस्थानं तस्य णिद्भावो विधीयते, तदा तपकरणमनर्थकं स्यात्, तद्धि चित्रगुरित्यादौ मा भूदित्येवमर्थं क्रियते। न चात्र प्राप्तिः, न ह्यत्र गोः सम्बन्धि सर्वनामस्थानम्, किं तर्हि? अन्यपदार्थस्येत्याह—**तपरकरणं त्वित्यादि**।

**केचिदित्यादि**। किमर्थं पुनस्त एवं पठन्ति? इत्याह—**द्योशब्दोऽपीत्यादि**। ये त्वेवं न पठन्ति 'गोतः' इति, तेषां द्योशब्दात् परस्य सर्वनामस्थानस्य णिद्भावो न सिध्यतीत्याह—**गोत इत्येतदेवेत्यादि**। कथं पुनरेतदोकारान्तोपलक्षणार्थं शक्यं विज्ञातुम्? इत्याह—**वर्णनिर्देशेष्वित्यादि**। यथा 'वृद्धिरादैच्', 'अदेङ् गुणः' इत्येवमादिषु योगेषु वर्णस्तपरो निर्दिश्यत इति तपरकरणं वर्णनिर्देशेषु हि प्रसिद्धम्। तस्मादिहापि तपरनिर्देशाद् 'गोतः' इत्येतदोकारान्तोपलक्षणं द्रष्टव्यमिति। अतो वचनात् तपरकरणं वर्णनिर्देशार्थमेवेत्यस्यैवौकारान्तोपलक्षणार्थं विज्ञायते॥ ९०॥

**पदमञ्जरी**

भवतु सम्बुद्धावेष परिहारः, जसि त्ववादेशमन्तरेणानिष्ठितत्वादङ्गस्य नायं परिहारः? इत्याशङ्क्याह— **अथ वेति**। यच्चेत्यादिनार्थद्वारकं विशेषसम्बन्धमाह। आनन्तर्यलक्षणे तु सम्बन्धे चित्रगुशब्दादपि प्रसङ्गो यदि, तर्ह्यर्थद्वारकसम्बन्धाश्रयणादेव चित्रगुशब्देऽप्रसङ्गः, किमर्थं तपरकरणम्? इत्याह—**तपरकरणं तु निर्देशार्थमेवेति**। स्पष्टनिर्देशार्थमेवेत्यर्थः। इतरथा 'गोः' इत्युच्यमाने गुशब्दस्यापि निर्देशः सम्भाव्येत।

**केचिदित्यादि**। एवं पाठे प्रयोजनमाह—**द्योशब्दादपीति**। ये तर्ह्येवं न पठन्ति तेषां कथं द्योशब्दे णिद्वद्भावः? इत्यत आह—**गोत इत्येतदेवेति**। कथं पुनरेतदोकारान्तोपलक्षणं द्रष्टुं शक्यम्? इत्यत आह—**वर्णनिर्देशेषु हीति**। 'वृद्धिरादैच्', 'अतो लोपः' इत्यादौ वर्णनिर्देश एव तपरत्वं दृष्टम्, तस्मात्तपरकरणादिह ओकारान्तोपलक्षणं विज्ञायते॥ ९०॥

**भावबोधिनी**

अथवा 'गोतः' यह सम्बन्धलक्षणा षष्ठी है अतः 'गोत् का सम्बन्धी जो सर्वनामस्थान' [ उसके परे णिद्वत् होता है ]। [ उक्त उदाहरणों गोत्सम्बन्धी नहीं है। ] और जो उसके अर्थ के एकत्वादि में सर्वनामस्थान होता है वह गो का सर्वनामस्थान कहा जाता है। परन्तु 'चित्रगु' शब्द से तो सर्वनामस्थान तो उस (गो) से भिन्न पदार्थ (पुरुषादि) के एकत्वादि को कहता है। [ अतः इसमें णिद्वत् नहीं होता है। ]

तपरकरण तो केवल स्पष्ट निर्देश के लिए है।

कुछ विद्वान् तो "ओतो णित्" ऐसा पढ़ते हैं। द्यो शब्द से भी जो सर्वनामस्थान होता है उसके पर णिद्वत्

**३२६७. णलुत्तमो वा ॥ ९१ ॥ (२२८३)**

उत्तमो णल्वा णिद् भवति। णित्कार्यं तत्र वा भवतीत्यर्थः। अहं चकार, अहं चकर। अहं पपाच, अहं पपच ॥

**३२६८. सख्युरसम्बुद्धौ ॥ ९२ ॥ (२५३)**

असम्बुद्धौ यः सखिशब्दः तस्मात्परं सर्वनामस्थानं णिद्वद्भवति। सखायौ। सखायः।

असम्बुद्धाविति किम्? हे सखे ॥

**३२६९. अनङ् सौ ॥ ९३ ॥ (२४८)**

सखिशब्दस्य सौ परतोऽनङित्ययमादेशो भवति, स चेत्सुशब्दः सम्बुद्धिर्न भवति। सखा।

**न्यासः**

**णलुत्तमो वा। णित्कार्यं वा भवतीत्यर्थ इति।** अनेन णित्कार्यस्य पक्षेऽभावाण्णिद्वा भवतीत्युच्यते, न तु णित्त्वस्यैव प्रतिषेध इति दर्शयति। न तु णल उपदेशावस्थायां सिद्धं णित्त्वं तद्वचनशतेनापि शक्यं प्रतिषेद्धुमिति भावः। **चकार, चकरेति।** यदा णित्त्वं तदा 'अचो ञ्णिति' इति वृद्धिः, अन्यदार्धधातुकलक्षणो गुणः। **पपाच, पपचेति।** यदा णित्त्वं तदा 'अत उपधायाः' इति वृद्धिः, अन्यदा तदभावः ॥ ९१ ॥

**सख्युरसम्बुद्धौ।** 'असम्बुद्धौ' इति पर्युदासः—सम्बुद्धेरन्याऽसम्बुद्धिः। **हे सख इति।** 'ह्रस्वस्य गुणः' इति गुणः ॥ ९२ ॥

**अनङ् सौ।** पूर्वेण णित्त्वे प्राप्तेऽनङ् विधीयते। तस्य ङकारोऽन्त्यादेशार्थः। अकार उच्चारणार्थः।

**पदमञ्जरी**

**णलुत्तमो वा ॥ णित्कार्यं वा तत्र भवतीत्यर्थ इति।** एतेन पक्षे णित्कार्यस्याभावाद्वा णिद्वद्भवतीत्युच्यते, न तु पक्षे णकारस्येत्संज्ञाप्रतिषेधादिति दर्शयति। एतच्च पूर्वत्र कार्यातिदेशाल्लभ्यते। **चकारेति।** णित्त्वपक्षे वृद्धिः, अन्यदा तदभावः ॥ ९१ ॥

**सख्युरसम्बुद्धौ ॥** अत्रापि णिदित्यनेन सामानाधिकरण्यात् 'सर्वनामस्थाने' इति प्रथमान्तम्। तत्रोत्तरार्थम् 'असम्बुद्धौ' इति सप्तम्यन्तस्योपात्तस्य यथेहान्वयः, तथा दर्शयति—**असम्बुद्धौ यः सखिशब्द इति** ॥९२॥

**अनङ् सौ ॥** सर्वनामस्थानप्रकरणात्सम्बुद्धिपर्युदासाच्च 'सौ' इति प्रथमैकवचनस्य ग्रहणम्, न सप्तमी-

**भावबोधिनी**

करने के लिए। द्यौः, द्यावौ, द्यावः। 'गोतः' इसी तपरकरणनिर्देश से ओकारान्त का उपलक्षण समझना चाहिए। क्योंकि वर्णनिर्देश में ही तपरकरण प्रसिद्ध है। [ यहाँ तो वर्णसमूह 'गो' में तपरकरण है। अतः यह ओकारान्त का उपलक्षण ही मानना चाहिए और अभीष्ट लक्ष्य सिद्ध करने चाहिए। ] ॥९०॥

उत्तमपुरुष का णल् विकल्प से णित् होता है। उसमें णित्सम्बन्धी कार्य विकल्प से होता है—यह अर्थ है। उदा० अहं चकार, अहं चकर। अहं पपाच, अहं पपच। [ कृ + लिट् = मिप् = णल् = अ, द्वित्व अभ्यासकार्य चुत्वादि के बाद चकृ + अ में णिद्वद्भाव पक्ष में वृद्धि, रपर होने पर चकार, पक्ष में गुण, रपर होता है। पच् + णल् = में णित् होने पर उपधावृद्धि विकल्प से होती है। ] ॥ ९१ ॥

असम्बुद्धि ( = सम्बोधन एकवचन से भिन्न) परे रहते जो सखि शब्द उससे परे सर्वनामस्थान णिद्वत् होता है। उदा० सखायौ। सखायः। [ सखि + औ, णिद्वत् होने से वृद्धि ऐ; आय् आदेश होते हैं। ]

असम्बुद्धि = सम्बोधन एकवचन से भिन्न में—इसका क्या फल है! हे सखे! [ यहाँ सम्बुद्धि ही परे है। अतः णिद्वद्भाव नहीं होता है। ] ॥ ९२ ॥

सु परे रहते 'सखि' शब्द का 'अनङ्' यह आदेश होता है यदि वह सु शब्द सम्बुद्धि (सम्बोधन एकवचन) नहीं होता है तो। उदा० सखा। [ सखि + सु, इ का अनङ् आदेश। ङित् होने से अन्त्य का ही होता है। सखन् + सु

असम्बुद्धाविति किम् ? हे सखे ॥

**३२७०. ऋदुशनस्पुरुदंसोऽनेहसां च ॥ ९४ ॥ (२७६)**

ऋकारान्तानामङ्गानाम्, उशनस्, पुरुदंसस्, अनेहस्—इत्येतेषां चासम्बुद्धौ सौ परतोऽनङादेशो भवति । कर्त्ता । हर्त्ता । माता । पिता । भ्राता । उशना । पुरुदंसा । अनेहा ।

असम्बुद्धावित्येव—हे कर्त्तः । हे मातः । हे पितः । हे पुरुदंसः । हे अनेहः । हे उशनः ।

उशनसः सम्बुद्धावपि पक्षेऽनङ् इष्यते—हे उशनन् ।

'न ङिसम्बुद्ध्योः' (८.२.८) इति नलोपप्रतिषेधोऽपि पक्ष इष्यते—हे उशन । तथा चोक्तम्—

**न्यासः**

**सखेति** । 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः, हल्ङ्यादिसुलोपः, 'नलोपः प्रातिपदिकान्तस्य' इति नकारस्य । आकारे विधातव्येऽनङ्वचनं सोर्लोपो यथा स्यात् । आकारविधाने तस्य लोपो न स्याद्, यथा—पन्था इति ॥ ९३ ॥

**ऋदुशनस्पुरुदंसोऽनेहसां च** । ऋकारान्तस्य 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे प्राप्ते । इतरेषामपि हल्ङ्यादिलोपे कृते रुत्वविसर्जनीयसान्तदीर्घेषु प्राप्तेषु ।

**उशनसः सम्बुद्धावपि पक्ष इष्यत इति** । तत् कथम् ? चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः । तेन सम्बुद्धावप्युशनसोऽनङ् भविष्यति । यद्येवम्, नित्यं स्यात् ? नैतत्; 'णलुत्तमो वा' इत्यधिकारात् पक्षे भविष्यति । व्यवस्थितविभाषाविज्ञानाच्चान्येषां नित्यम् ।

**पदमञ्जरी**

बहुवचनस्य, आकारविधाने सोर्हल्ङ्यादिलोपो न स्यात् ? एवं तर्हि सोर्डादेशो विधीयताम्, एवं सिद्धे यदनङं शास्ति तज्ज्ञापयति—अनङ एव क्वचिच्छ्रवणमस्तीति । तेन यद्वक्ष्यति—'सम्बुद्धावपि पक्षेऽनङिष्यते' इति, तदुपपन्नं भवति ॥ ९३ ॥

**ऋदुशनस्पुरुदंसोऽनेहसां च** ॥ 'सम्बुद्धावपि पक्षेऽनङिष्यते' इति यदुक्तं तदाप्तागमेन द्रढयति—**तथा चोक्तमिति** । **सम्बोधने**=सम्बुद्धौ, त्रयाणां रूपाणां समाहार**स्त्रिरूपम्**, पात्रादिः ।

**भावबोधिनी**

उपधादीर्घ आदि करने पर रूप बनता है । ]

असम्बुद्धि में—इसका क्या फल है ? हे सखे ! [ यहाँ सम्बुद्धि ही परे है । अतः अनङ् आदेश नहीं होता है । ] ॥ ९३ ॥

ऋकारान्त अङ्गों का और उशनस् पुरुदंसस् अनेहस्—इनका अनङ् आदेश सम्बुद्धिभिन्न सु परे होता है । उदा० कर्त्ता । हर्त्ता । माता । पिता । भ्राता । [ कर्तृ, हर्तृ, मातृ, पितृ, भ्रातृ—सभी में सु परे रहते 'अनङ् आदेश ङित् होने से ऋ के स्थान पर होता है—कर्तन् + सु, उपधादीर्घ, सुलोप, नलोप करने पर उक्त रूप बनते हैं । ] ऊशना । पुरुदंसा । अनेहा । [ उशनस् + सु, पुरुदंसस् + सु, अनेहस् + सु इनमें अन्त्य का अनङ् आदेश होता है । ]

असम्बुद्धि परे ही होता है—हे कर्तः । हे मातः । हे पितः । हे भ्रातः । [ इनमें अनङ् न होने पर "ऋतो ङि सर्वनामस्थानयोः" सूत्र से ऋ का गुण, रपर होता है । संयोगान्तलोप करने पर रेफ का विसर्ग होता है । हे पुरुदंसः । हे अनेहः । हे उशनः । [ इनमें भी हल्ङ्याादिलोप के बाद स् का रुत्व विसर्ग होता है । ]

* उशनस् का सम्बुद्धि परे रहते भी पक्ष में अनङ् इष्ट है ।* हे उशनन् ! [ अनङ् न होने पर हे उशनः ! ये दो रूप होते हैं । ]

"न ङिसम्बुद्ध्योः" इससे नलोप प्रतिषेध भी पक्ष में इष्ट है । [ अतः नलोप हो जाने पर ] 'हे उशन !' [ ऐसा भी रहता है । ] जैसा कि कहा गया है—

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥ (?) इति ।

तपरकरणमसन्देहार्थम् ॥

**३२७१. तृज्वत्क्रोष्टुः ॥ ९५ ॥ (२७४)**

**क्रोष्टुशब्दस्तुन्प्रत्ययान्तः संज्ञाशब्दः सर्वनामस्थानेऽसम्बुद्धौ परतः तृज्वद्भवति । तृजन्तस्य यद्रूपं तदस्य भवतीत्यर्थः ।**

**न्यासः**

**नलोपप्रतिषेधोऽपि पक्ष इष्यत इति** । कथमेतल्लभ्यते ? तत्र हि 'स्वरितो वाऽनुदात्ते पदादौ' इत्यतो वेत्यनुवर्तते, तेनैवं विज्ञायते—न ङिसम्बुद्ध्योर्नलोपप्रतिषेधो वा भवतीति । व्यवस्थितविभाषाविज्ञानाच्चोशनसः सम्बुद्धिनकारस्य लोपो वा भविष्यति । अन्येषां तु नित्यमेव लोपो न भविष्यतीति ।

**तथा चोक्तमित्यादिना**ऽनन्तरोक्तमर्थमागमवचनेन द्रढयति । **सान्तमिति** यदाऽनङ् न क्रियते । **नान्तमिति** । न तु नलोपः । **अदन्तमिति** । यदा नलोपः क्रियते ।

**तपरकरणमसन्देहार्थमिति** । असति हि तस्मिन्नुशनसि परतो यणादेशे कृते सन्देहः स्यात्—किमृकारान्तस्य ग्रहणम् ? उत रेफान्तस्येति ? ॥ ९४ ॥

**तृज्वत्क्रोष्टुः ॥ क्रोष्टुशब्दस्तुन्प्रत्ययान्तः संज्ञाशब्द इति** । 'क्रुश आह्वाने' इत्येतस्मात् 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्ययान्तस्य संज्ञायां व्युत्पादितत्वात् । संज्ञा पुनरियं जम्बुकस्य । **तृज्वद्भवतीति** । तृचा तुल्यं वर्त्तत इति तृज्वत् । 'रूपातिदेशोऽयम्' इति वक्ष्यति । तत्र 'तृज्वद् भवति' इत्युक्ते तृच्छब्दस्य यद्रूपं तदतिदिश्यत इति, कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**तृजन्तस्य यद्रूपमित्यादि** । एतच्च 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवति' इत्यतो लभ्यते । यद्यपि

**पदमञ्जरी**

कानि पुनस्तानि रूपाणि ? इत्यत आह—**सान्तमित्यादि । सान्त**मनङोऽभावपक्षे, **नान्तं** नलोपाभावपक्षे, **अदन्तं** नलोपपक्षे, मध्यन्दिनस्यापत्यं **माध्यन्दिनिः** = आचार्यः, **वष्टि** = इच्छति । भाषायामस्य साधुत्वं चिन्त्यमिति 'जक्षित्यादयः षट्' इत्यत्रावोचाम । तथा **व्याघ्रपदां** = व्याघ्रपादपत्यानां मध्ये **वरिष्ठो** वैयाघ्रपद्य-आचार्यः **नपुंसके** नपुंसकसम्बन्धिनि, **इगन्ते** हे त्रपो इत्यादौ, **गुणं वष्टीति** श्लोकस्यार्थः ॥ ९४ ॥

**तृज्वत्क्रोष्टुः । क्रोष्टुशब्दस्तुन्प्रत्ययान्त इति** । 'क्रुश आह्वाने', 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' । **संज्ञाशब्द इति** । तुन्प्रत्ययस्य संज्ञार्थे विधानात् । जम्बुकस्य चेयं संज्ञा । वस्तुस्वरूपकथनमेतत् । अत्रानन्तरं **तस्येति** पठितव्यम्; क्रोष्टुरिति सूत्रे षष्ठीनिर्देशात् । **तृज्वद्भवतीति** । तृच इव तृज्वत् । 'तत्र तस्येव'

**भावबोधिनी**

मध्यन्दिन के अपत्य आचार्य माध्यन्दिनि उशनस् शब्द के सम्बोधन में तीन रूप चाहते हैं—(१) सान्त (जब अनङ् नहीं होता है—हे उशनः ! ), और (२) नान्त ( जब नलोप नहीं होता है—हे उशनन्), तथा (३) अदन्त (जब न्लोप होता है हे उशन) । व्याघ्रपदों = व्याघ्रपाद् के अपत्यों में वरिष्ठ सर्थात् वैयाघ्रपद्य आचार्य इगन्त नपुंसक में गुण चाहते हैं [ —हे त्रपो ! आदि । इस श्लोक का मूल अज्ञात है । ]

ऋत्—इसका तपरकरण असन्देह के लिए है । [ तत्काल के बोध के लिए नहीं है । अन्यथा केवल "ऋ + उशनस्" में यण् हो जाने पर 'रुशनस्' में सन्देह होने लग जाता । ] ॥ ९४ ॥

क्रोष्टु शब्द तुन् प्रत्ययान्त संज्ञाशब्द सम्बुद्धिभिन्न सर्वनामस्थान परे रहते तृज्वत् होता है । तृजन्त का जो रूप होता है वह इस (क्रोष्टु) शब्द का भी हो जाता है ।

यह रूपातिदेश है । और प्रत्यासत्ति से क्रुश् के ही तृजन्त का जो रूप है उसी का अतिदेश होता है ।

**रूपातिदेशोऽयम् । प्रत्यासत्तेश्च क्रुशेरेव तृजन्तस्य यद्रूपं तदतिदिश्यते । तच्च 'क्रोष्टृ' इत्येतदन्तोदात्तम् । क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । क्रोष्टारम्, क्रोष्टारौ ।**

**न्यासः**

शास्त्रातिदेशोऽप्यदोषो बहुधा भाष्ये प्रदर्शितः—तस्यादुष्टत्वेन प्रतिपादनात्, कार्यातिदेशोऽप्यदोषवानेव व्याख्यातः—तस्य शास्त्रातिदेशेनाभिन्नत्वात्; तथापि शास्त्रातिदेशकार्यातिदेशयोररूपार्थत्वाद् रूपे गुणभावः। रूपस्य तु प्राधान्यम्; ताभ्यां तस्य संस्कार्यत्वात् । अतो रूपातिदेशोऽयं युक्त इत्याह—**रूपातिदेशोऽयमित्यादि ।** यदि तर्हि तृजन्तस्य यद्रूपं तत् क्रोष्टुशब्दस्यातिश्यते तदा यत्किञ्चिदेव तृजन्तस्य रूपम्—वक्तृ, पक्तृ—इत्येवमाद्यपि प्राप्नोति ? अत आह—**प्रत्यासत्तेश्चेत्यादि** । इह धात्वन्तरस्य पचतिप्रभृतेस्तृजन्तस्य रूपमस्ति,

**पदमञ्जरी**

इति षष्ठीसमर्थाद्वतिः । तदेतत्सर्वमुत्तरग्रन्थे स्पष्टीकृतम् । **तृजन्तस्य यद्रूपं तदस्य भवतीति** । प्रत्ययग्रहणपरिभाषया तृजन्तस्येति लभ्यते ।

अतिदेशोऽनेकप्रकारः— निमित्त-व्यपदेश-तादात्म्य-शास्त्र-कार्य-स्वरूपविषयः । तत्रेहादितस्त्रयाणामसम्भवादनतिदेशः, शास्त्रकार्यातिदेशयोश्चायं विशेषः । शास्त्रातिदेशे तेन तेन शास्त्रेण कार्याणि भवन्ति, कार्यातिदेशे त्वतिदेशवाक्येनैवेति तत्र विप्रतिषेधे फलविशेषः । तद्यथा—'कर्मवत्कर्मणा' इत्यत्र शास्त्रातिदेशे कर्मकर्तरि 'भावकर्मणोः' इत्येतद्बाधित्वा स्वाश्रयं कर्तृत्वमाश्रित्य शेषात्कर्त्तरि परस्मैपदप्रसङ्गः, कार्यातिदेशे त्वात्मनेपदमेव परत्वाद्भवतीति । इह तु नैवं विशेषः सम्भवतीति तयोरभेदमाश्रित्य विचारः प्रवर्त्तितो **महाभाष्ये**—किं पुनरयं शास्त्रातिदेशः ? आहोस्विद्रूपातिदेश इति ? तत्र शास्त्रस्य शास्त्रं प्रत्यासन्नमिति शास्त्रातिदेशः प्राप्नोति, प्राधान्यात्तु रूपातिदेशप्रसङ्गस्तदर्थत्वादतिदेशान्तराणाम् । तत्राद्ये पक्षे आहत्य तृचि यच्छास्त्रं तद्वातिदिश्यते ? अनाहत्य वा ? यदि तृच्छब्दवच्छास्त्रमतिदिश्यते तत आहत्येति पक्षः, अथ तृच्छब्दे ऋकार एव विवक्षितः, चकारः स्वरार्थः, तकारस्त्वप्रसिद्धाशङ्कानिवृत्त्यर्थः, 'ऋज्वत्' इत्युच्यमाने अप्रसिद्धाश्रयोऽतिदेशः शङ्क्येत, 'ऋक्पूः' इत्यृक्शब्दनिबन्धनस्य वा समासान्तस्यातिदेशः शङ्क्येत, तस्मात्तृजन्ते यदृकारप्रयुक्तं शास्त्रं कार्यं वा तदतिदेशेनाहत्येति पक्षः । तत्राहत्येति पक्षे 'अप्तृन्तृच्' इति दीर्घत्वमेकमतिदिष्टं स्यादनङ्गुणरपरत्वान्यनतिदिष्टानि—अनङ् 'ऋदुशनस्पुरुदंसोऽनेहसां च', 'ऋतो ङिसर्वनामस्थानयोः'; 'उरण् रपरः' इति नह्येतानि तृच्संशब्दनेन विधीयन्ते । ननु च दीर्घत्वेऽतिदिष्टेऽनङादीन्यप्यतिदिष्टान्येव भवन्ति, कथम् ? दीर्घविधौ 'उपधायाः' इति वर्तते, 'अचश्च' इति चोपतिष्ठते, ततश्च तृजन्तस्येव तुन्नन्तस्यापि दीर्घो भवतीत्युक्ते—उपधाया अचो दीर्घो भवतीत्युक्तं भवति, न चाकृतेष्वनङादिषु तुन्नन्तस्योपधा दीर्घभाविनी सम्भवति । जसि गुणावादेशयोः सम्भवतीति चेत् ? न ह्येकमुदाहरणं योगारम्भं प्रयोजयति, यद्येतावत्प्रयोजनं

**भावबोधिनी**

और वह 'क्रोष्टृ' यह अन्तोदात्त है । उदा० क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । क्रोष्टारम्, क्रोष्टारौ, क्रोष्टून् ।

सर्वनामस्थान परे ही—कोष्टून् । [ यह शस् परे का रूप होने से तृज्वद्भाव नहीं होता है । ]

असम्बुद्धि में ही—हे क्रोष्टो ! [ यह सम्बोधन एकवचन = सम्बुद्धि परे रहते रूप है । अतः तृज्वद्भाव नहीं होता है । गुण होकर रूप बनता है । ]

**विमर्श**—'क्रोष्टु' शब्द 'क्रुश आह्वाने' धातु से 'सितनिगमिमसिच्यविधाञ्कुशिभ्यस्तुन्' (उणादि १।६) से तुन् प्रत्यय, श् का 'व्रश्चादि' सूत्र से ष् और ष्टुत्व करने पर 'क्रोष्टु' यह शृगाल की संज्ञा=नाम है । 'तृज्वत्क्रोष्टुः' यहाँ 'तृज्वत् भवति' से किसी को यह शंका हो सकती है कि 'तृच्' शब्द के रूप का अतिदेश है । इसका निराकरण करने के लिए वृत्तिकार ने स्पष्ट किया है कि क्रुश् का तृजन्त का जो रूप होता है उसी का अतिदेश किया जाता है । अर्थात् 'क्रोष्टु' के प्रसङ्ग में 'क्रोष्टृ' ऐसा समझना चाहिए । 'तृच्' प्रत्यय है । अतः 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इस परिभाषा से 'क्रोष्टृ' समझना चाहिए ।

'सर्वनामस्थाने' इत्येव–क्रोष्टून्। 'असम्बुद्धौ' इत्येव—हे क्रोष्टो!॥

**न्यास**

क्रुशेरपि, तत् किमश्रुतस्य धातोस्तृजन्तस्य यद्रूपं तदतिदिश्यते, उत श्रुतस्य क्रुशेरिति? तत्र श्रुतस्यैव यद्रूपं तदेवातिदेष्टुं युक्तमिति क्रुशेरेव तृजन्तस्य यद्रूपं तदेवातिदिश्यते। किं तद्रूपम्? इत्याह—**तच्चेत्यादि। अन्तोदात्तार्थमिति।** चकारोच्चारणसामर्थ्यात् स्वरोऽप्यतिदिश्यते। अन्यथा 'तृवत्' इत्येव ब्रूयादिति भावः।

**पदमञ्जरी**

स्यात्, 'अप्तृन्' इत्यत्रैव क्रोष्टुग्रहणं कुर्यात्। नन्वेवम् 'स्त्रियां च', 'विभाषा तृतीयादिष्वचि' इत्येवमर्थं पुनः 'तृज्वत्क्रोष्टुः' इति वक्तव्यं स्यादिति गौरवं स्यात्? स्यादेतत्; 'अचि र ऋतः' इत्यस्यानन्तरम् 'क्रोष्टुः स्त्रियाम्' 'विभाषा तृतीयादिष्वचि' इति रादेशार्थं वक्ष्यामीति नास्ति गौरवमिति। एवमपि क्रोष्टुः, क्रोष्टरि; पञ्चक्रोष्टृभी रथैरिति न सिद्ध्यति, नापि 'उदात्तयणो हल्पूर्वात्' इति स्वरः, तुन्नन्तस्याद्युदात्तत्वात्तदेवं जसि दीर्घातिदेशेऽपि नातिदेशाश्रयणं व्यर्थमिति न तत्सामर्थ्यादनङादीनामाक्षेपतः सिद्धिः—इत्याहत्यपक्षो दुष्ट एव।

अथानाहत्यपक्षः, अनङादीन्यतिदिष्टानि दीर्घत्वमनतिदिष्टम्, न हि तद्वत इत्येवं विधीयते। अथ तृजितिसमुदाय एव विवक्षितः, न त्वृकारः, न चाहत्यपक्ष आश्रीयते, किं तर्हि? तृचि यद् दृष्टं यत्किञ्चन निबन्धनं तस्य सर्वस्यातिदेशः? एवमप्यङ्गप्रकरणादङ्गाधिकार एव विहितं यत् शास्त्रं कार्यं तदेवातिदिश्येत, न विप्रकृष्टमनाङ्गम्। यथाचि रवद्भावेन वृद्ध्यादीन्येव भवन्ति, न ह्नि णिङादेशः, ततश्च रपरत्वमनतिदिष्टं स्यात्। रपरत्वमप्याङ्गम्, 'कार्यकालं संज्ञापरिभाषम्' (व्या० प० ५८), 'ऋतो ङि सर्वनामस्थानयोः' गुणो भवति, उपस्थितमिदं भवति—'उरण् रपरः' इति। 'स्त्रियां च' इत्यत्र तर्हि क्रोष्ट्रीत्यत्रानाङ्गयोरीकारयणोरतिदेशो न स्यात्? वचनाद्भविष्यति, न तृजन्तस्य स्त्रियामाङ्गं किञ्चिदस्ति। स्त्रियामप्याङ्गं किञ्चिदस्ति—पञ्चभिः कर्तृभिः क्रीतो रथः पञ्चकर्त्ता रथः, हे पञ्चकर्त्त, पञ्चकर्तरीति स्त्रीलिङ्गे कर्तृशब्दे ङिसम्बुद्ध्योर्दृष्टस्य गुणस्यातिदेशः 'स्त्रियां च' इत्यत्र सम्भवति? न हि सम्बुद्धौ 'तृज्वत्क्रोष्टुः' इत्यनेन सिद्धिः; 'असम्बुद्धौ' इत्यधिकारात्। ङौ 'विभाषा तृतीयादिष्वचि' इति विकल्पः स्यात्। स्यादेतत्—'स्त्रियां च' इत्यत्र न किञ्चिन्निमित्तमुपादीयते, ततश्च प्रागेव विभक्त्युत्पत्तेः स्त्रियां वर्तत इत्येवं तृजन्ते दृष्टस्यातिदेशः, न च तदाङ्गं सम्भवतीति अनाङ्गस्याप्यतिदेश इति? एवमपि पञ्चभिः क्रोष्टृभिः क्रीतै रथैः पञ्चक्रोष्टृभी रथैरित्यत्र न कथञ्चन तृजन्तरूपप्रादुर्भावः सम्भवति। तथा 'विभाषा तृतीयादिष्वचि' इत्यत्रापि क्रोष्टरीति आङ्गस्य गुणस्यातिदेशसम्भवात् क्रोष्ट्रा, क्रोष्टुरिति यणशास्त्रमुत्त्वशास्त्रं चानाङ्गं नातिदिश्यते, नापि स्वरः। ननु तत्रापि तृतीयादिग्रहणसामर्थ्यादनाङ्गमप्यतिदिश्येत, अन्यथा 'विभाषा ङौ' इत्येव ब्रूयात्? नैतदस्ति; अभावातिदेशार्थं तृतीयादिग्रहणं स्यात्; वतिनिर्देशेष्वभावातिदेशस्यापि दृष्टत्वात्, यथा—मरुभूमिवदस्मिन्ग्रामे जलमिति। शास्त्रेऽपि 'तृतीयादिषु भाषितपुंस्कम्'—इत्यत्र नुम्ह्रस्वयोरभावोऽतिदिश्यते। यदा हि प्रत्यासत्तेराङ्गमेवातिदेश्यमिति स्थितम्, तदा न सर्वासु तृतीयादिषु भावातिदेशः सम्भवतीति यस्य शास्त्रस्य भावस्तृजन्ते दृष्टः, तुन्नन्तेऽपि तस्य भावोऽतिदिश्यते। यस्य त्वभावः, तृजन्तेऽपि तस्याभावोऽतिदेश्यः स्यात्; ततश्च क्रोष्ट्रे, क्रोष्ट्रा—इत्यत्रापि घिलक्षणयोर्गुणनाभावयोरभावोऽतिदिष्टः स्यात्। तदेवं शास्त्रातिदेशस्य बहुच्छिद्रत्वाद्रूपातिदेश एवायमाश्रयणीयः। तदाह—**रूपातिदेशोऽयमिति।**

यद्येवम्, यस्य कस्यचित्तृजन्तस्य रूपमतिदिश्येत—पक्ता, वक्तेति? तत्राह—**प्रत्यासत्तेरिति।** अथैतस्मिन् रूपातिदेशे प्रयोगसमवायि यद्रूपम्—क्रोष्टा, क्रोष्टारौ, पञ्चक्रोष्टृभी रथैः, क्रोष्ट्रा, क्रोष्टुः, क्रोष्टरीत्येवम्—

**भावबोधिनी**

अतिदेश अनेक प्रकार के होते हैं। उनमें रूपातिदेश की प्रस्तुत स्थल में उपयोगिता है। इसीलिए रूप का ही अतिदेश माना गया है। क्रोष्टु + सु के स्थान पर क्रोष्टृ + सु होता है। तृच् यह चित् है। अतः 'चितः' सूत्र से होने वाला अन्तोदात्तत्व भी अतिदिष्ट होता है। अन्यथा 'तृवत्' यह मान लेने पर भी रूप बनना सम्भव था। क्रोष्टृ + सु में "ऋदुशनस् पुरुदंसोऽनेहसां च" सूत्र से ऋ का अनङ् क्रोष्टन् + सु, 'अप्तृन्तृच्०' सूत्र से उपधादीर्घ क्रोष्टान् + सु हल्ङ्याादिलोप,

**३२७२. स्त्रियां च ।। ९६ ।। (३०५)**

**असर्वनामस्थानार्थमारम्भः । स्त्रियां च क्रोष्टुशब्दस्य तृज्वद् भवति । क्रोष्ट्री । क्रोष्ट्रीभ्याम्, क्रोष्ट्रीभिः ।**

**न्यासः**

**क्रोष्टेति** । तृज्वद्भावे कृते पूर्वसूत्रेणानङ् । **क्रोष्टारौ, क्रोष्टार इति** । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः, रपरत्वम्, अप्त्रादिसूत्रेण दीर्घः । **क्रोष्टूनिति** । 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः । 'तस्माच्छसो नः पुंसि' इति नत्वम् ।। ९५ ।।

**स्त्रियाञ्च ।। क्रोष्ट्रीभिरिति** । तृज्वद्भावे कृते यणादेशः ।

केन पुनः क्रोष्टुशब्दादीकारः, तृज्वद्भावे कृते 'ऋन्नेभ्यो ङीप्' इत्यनेनेति चेत् ? न; अनुदात्तत्वप्रसङ्गादित्यत आह—**क्रोष्टुशब्दं केचिदित्यादि । पञ्चभिः क्रोष्ट्रीभिः क्रीतैरिति** । 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः । 'आर्हादगोपुच्छ' इत्यादिना ठक्, तस्य 'अध्यर्द्धपूर्व' इत्यादिना लुक्, 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक्, तस्मिंल्लुप्ते ये ङीष्प्रत्यये कृते तृज्वद्भावं कुर्वन्ति तेषां तृज्वद्भावो न भवति, तस्मात्, **प्रतिविधेयमिति** । प्रतिविधानं कर्तव्यमित्यर्थः । तत्रेदं प्रतिविधानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन लुप्तेऽपि स्त्रीप्रत्यये भविष्यति ।

**पदमञ्जरी**

सावाकारान्तं द्विवचनादावारन्तम्, स्त्रियां क्वचिद्रेफान्तं क्वचिदकारान्तम्, तृतीयादौ रेफान्तम्, ङसिङसोरुकारान्तम्, ङावरन्तमिति तदतिदिश्यते ? आहोस्विच्छास्त्रीयं यद्रूपम् 'ण्वुल्तृचौ', 'तृज्वत्क्रोष्टुः' इत्युपदेशवाक्ये अतिदेशवाक्ये च श्रुतं तदतिदिश्यते ? तत्राद्ये पक्षे 'उदात्तयणो हल्पूर्वात्' इति स्वरो न सिद्ध्यति, न हि क्रोष्ट्रेत्यादावृकारावस्था कदाचिद्दृष्टा, यतोऽयमुदात्तयणः स्यात् । तस्माद् द्वितीयः पक्ष आश्रणीयः । तदाह—**तच्च क्रोष्टृ इत्येतदिति** । नन्वत्रापि पक्षे उपदेशवाक्ये, अतिदेशवाक्ये च तृशब्दस्योदात्तस्योच्चारणाभावादुच्चारितस्य वा गुणानामभेदकत्वेनाकिञ्चित्करत्वात् स्वरस्यातिदेशो न स्यात् ? सत्यम्; चकारग्रहणसामर्थ्यात्तस्याप्यतिदेशो भविष्यति । तदाह—**अन्तोदात्तमिति** । यद्वा—मा भूत्स्वरस्यातिदेशः, तृजन्तरूपेऽतिदिष्टे तृज्बुध्या यथा दीर्घादीनि स्वेन स्वेन शास्त्रेण भवन्ति, स्वरोऽप्येवमेव भविष्यति । वतिनिर्देशाच्चायमतिदेश आश्रितः ।

यदि वतिनिर्देशमकृत्वा स्थान्यादेशभाव एवाश्रीयते, न किञ्चिदनिष्टम् ? तथा तु न कृतमित्येव ।।९५।।

**स्त्रियां च ।।** क्रोष्टुशब्दस्तृज्वद्भवतीत्येतत्त्वर्थकथनम् । षष्ठ्यन्तं तु युक्तं पठितुम् । अन्ये त्वेतद्ग्रन्थपर्यालोचनया पूर्वसूत्रेऽपि 'क्रोष्टुः' इति प्रथमान्तं मन्यन्ते । अनुक्रियमाणरूपविनाशप्रसङ्गात्तु तृज्वद्भावो न कृतः । वतिरपि तृतीयासमर्थादेव । तृजन्तेन तुल्यं वर्त्तत इति तद्रूपभाक्त्वेन तुल्यत्वमिति रूपातिदेशत्वम् । एवं च पूर्वसूत्रेऽप्याद्यग्रन्थे तस्येति न पठितव्यम् । **तृजन्तस्य यद्रूपं तदस्य भवतीति** । एतच्चार्थकथनम् । अत्र 'विभक्तौ' इत्यनुवर्त्तते चेत् क्रोष्ट्री भक्तिरस्येति बहुव्रीहौ भक्तिशब्दस्य प्रियादिषु पाठात्पुंवद्भावाभावे क्रोष्ट्री भक्तिरिति न सिद्ध्यति; समासार्थाया विभक्तेर्लुमता लुप्तत्वात् । अथ वाक्यावस्थायामेव तृज्वद्भावो भविष्यति ? 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' (व्या० प० १२८) । तस्मान्नात्र विभक्तिनिमित्तत्वेन

**भावबोधिनी**

नलोप—क्रोष्टा । क्रोष्टु + औ, तृज्वद्भाव, क्रोष्टृ + औ, 'ऋतो ङि सर्वनामस्थानयोः' सूत्र से ऋ का गुण, रपर, 'अप्तृन् तृच्' से उपधा का दीर्घ—कोष्टारौ । इसी प्रकार अन्यत्र भी सर्वनामस्थान प्रत्ययों में समझना चाहिए ।। ९५ ।।

सर्वनामस्थान से भिन्न के लिए इस सूत्र को बनाया गया है । स्त्री अर्थ में भी क्रोष्टु का तृज्वद्भाव होता है । उदा० क्रोष्ट्री । [ क्रोष्टु + ई तृज्वद्भाव क्रोष्टृ + ई, यण् ] क्रोष्ट्रीभ्याम्, क्रोष्ट्रीभिः ।

कुछ विद्वान् गौरादिगण में क्रोष्टु शब्द का पाठ करते हैं वे [ "षिद्गौरादिभ्यश्च" सूत्र से विहित ] ङीष् प्रत्यय परे रहते तृज्वद्भाव करते हैं । [ भाव यह है कि 'कोष्टु' शब्द से 'ई' प्रत्यय कैसे होगा, क्योंकि तृज्वद्भाव

**क्रोष्टुशब्दं केचिद् गौरादिषु पठन्ति, ते ङीषि प्रत्यये तृज्वद्भावं कुर्वन्ति। तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतैः—पञ्चक्रोष्टृभी रथैरिति स्त्रीशब्दस्य[1] लुकि कृते न सिद्ध्यति, तत्र प्रतिविधेयम्।**

**ये तु गौरादिषु न पठन्ति, तेषां स्त्रियामित्यर्थनिर्देशः—स्त्रियां वर्त्तमानः क्रोष्टुशब्दः तृज्वद्भवति।**

**न्यास**

ये तर्हि गौरादिषु न पठन्ति तेषामीकारः कथम्? इत्याह—**गौरादिष्वित्यादि**। तेषां पञ्चक्रोष्टुभिरित्यत्र न किञ्चित् प्रतिविधेयम्, परस्य स्त्रीप्रत्ययस्य निमित्तत्वेनानाश्रितत्वात्। ननु च तेषामपि स्त्रीप्रत्ययस्य लुप्तत्वादसत्यामङ्गसंज्ञायामङ्गस्योच्यमानस्तृज्वद्भावो न प्राप्नोतीति प्रतिविधेयमेव? नैतदस्ति; लुप्ते हि स्त्रीप्रत्ययलक्षणेनाङ्गसंज्ञा भवत्येव। 'न लुमताङ्गस्य' इति यः प्रतिषेधः सोऽङ्गाधिकारविहितस्यैव कार्यस्य। न चाङ्गसंज्ञाऽङ्गाधिकारे विहिता। **कृतेऽतिदेश इत्यादि**। 'इकोऽचि विभक्तौ' इत्यनुवृत्तेर्विभक्तावुत्पन्नायां तदाश्रयायाञ्चाङ्गसंज्ञायां स्त्रियां वर्त्तमानस्य क्रोष्टुशब्दस्यातिदेशः क्रियते। तस्मिन् कृते

**पदमञ्जरी**

शक्या आश्रयितुम्, किं तर्हि? निमित्तम्? इत्याह—**केचिदित्यादि**। कथं पुनर्गौरादिषु पाठे ङीष्प्रत्ययो निमित्तं भवति? 'स्त्रियाम्' इति नैवं विज्ञायते—स्त्रियामर्थ इति। कथं तर्हि? स्त्रिया+ई=स्त्री, स्त्रियामिति, स्त्रीत्वस्य द्योतको य ईकारस्तत्रेत्यर्थः। अर्थगतं च स्त्रीत्वमीकारे आरोप्य स्त्रियामिति नदीसंज्ञानिमित्तावामाटौ क्रियेते। एवं वदतामनिष्टमाह—**तेषामिति**। **पञ्चक्रोष्टृभिरिति**। तद्धितार्थे समासः, आर्हीयस्य ठकः 'अध्यर्द्धपूर्व' इति लुक्, 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक्। तत्र 'न लुमताङ्गस्य' इति प्रतिषेधादीकारनिमित्तस्तृज्वद्भावो न सिद्ध्यति। अन्तरङ्गाणां च विधीनां लुका बाधनात् न पूर्वमेव तृज्वद्भावो लभ्यते। तत्र सर्वनामस्थाने पूर्वेणैव सिद्धस्तृज्वद्भाव इति तृतीयादावसिद्धिरुक्ता, सर्वनामस्थानेऽपि सम्बुद्धौ पूर्वेणासिद्धिरेव—हे पञ्चक्रोष्टरिति। तथा शसि पञ्चक्रोष्टॄन्, तथा तृतीयादिष्वजादिष्वप्युत्तरसूत्रेण विकल्पः प्राप्नोति—पञ्चक्रोष्ट्रा, पञ्चक्रोष्ट्रे। नन्वारब्धेऽप्यस्मिन्, परत्वाद्विकल्प एव प्राप्नोति? अन्तरङ्गत्वादयमेव नित्यो विधिर्भवति। **तत्र प्रतिविधेयमिति**। वचनमेवात्र शरणम्।

ये तर्हि गौरादिषु न पठन्ति तेषां किं निमित्तम्? न किञ्चिदित्याह—**ये त्वित्यादि**। **स्त्रियां च वर्त्तमान इति**। सूत्राक्षरानुरोधेन चशब्दः पठितः। ननु च यद्यपि न शब्देन किञ्चिन्निमित्तमाश्रीयते, 'अङ्गस्य' इति त्वाश्रीयते, अङ्गे चाश्रिते प्रत्ययोऽप्याश्रित एव, यथोक्तम् 'अङ्गस्य' इत्यत्र वव्रश्चेत्यस्य सिद्धये? सत्यम्; 'कार्यकालं संज्ञापरिभाषम्' (व्या० प० ५८) तदुक्तम्। तत्र हि पक्षे 'उरत्' इत्यत्राङ्गसंज्ञासूत्रमुपतिष्ठते, ततश्च

**भावबोधिनी**

करने पर "ऋन्नेभ्यो ङीप्" सूत्र से ङीप् करने पर तो "अनुदात्तौ सुप्पितौ" सूत्र से पित् होने से अनुदात्त होने लगेगा। इसलिए कुछ लोग ङीष् मानकर अन्तोदात्तत्व सुरक्षित रखते हैं। किन्तु इनके मत में भी दोष दिखाते हैं— ]

इनके मत में 'पञ्चभिः क्रोष्ट्रीभिः क्रीतैः' इस अर्थ में 'पञ्चक्रोष्ट्रीभी रथैः' (पञ्चक्रोष्टृभिः) यहाँ स्त्री शब्द = स्त्रीत्वद्योतक प्रत्यय का लुक् कर देने पर नहीं सिद्ध होता है, इसमें प्रतिविधान करना चाहिए।

[ भाव यह है—पञ्चभिः क्रोष्ट्रीभिः क्रीतः—इस अर्थ में 'तद्धितार्थोत्तरपदसमाहारे च' सूत्र से समास और 'आर्हादगोपुच्छाट्ठक्' इस सूत्र से ठक् प्रत्यय, इसका 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' (४.१.२८) इस सूत्र से लुक् हो जाने पर 'लुक् तद्धितलुकि' सूत्र से स्त्रीप्रत्यय का भी लुक् हो जाता है। अब ङीष् प्रत्यय न रहने पर उसे परे मान कर होने वाला तृज्वद्भाव सम्भव नहीं है। इसलिए प्रतिविधान करना आवश्यक होगा। ]

परन्तु जो लोग गौरादिगण में इसका पाठ नहीं करते हैं उनके मत में 'स्त्रियाम्' यह अर्थनिर्देश है—स्त्री अर्थ में वर्त्तमान क्रोष्टु शब्द तृज्वत् होता है। [ अतः 'ई' प्रत्यय न रहने पर भी स्त्रीत्व अर्थ रहने से तृज्वद्भाव होने में बाधा

१. 'स्त्रीप्रत्ययस्य'—इति पाठा०।

**कृतेऽतिदेशे, 'ऋन्नेभ्यो ङीप्' (४.१.५) इति ङीप्प्रत्ययः। तत्र 'उदात्तयणो हल्पूर्वात्' (६.१.१७४) इत्यन्तोदात्त एवं क्रोष्ट्रीशब्दो भवति ॥**

### ३२७३. विभाषा तृतीयादिष्वचि ॥ ९७ ॥ (२७८)

**तृतीयादिषु विभक्तिष्वजादिषु क्रोष्टुर्विभाषा तृज्वद्भवति। क्रोष्ट्रा, क्रोष्टुना। क्रोष्ट्रे, क्रोष्टवे। क्रोष्टुः, क्रोष्टोः–२। क्रोष्टरि, क्रोष्टौ। क्रोष्ट्रोः, क्रोष्ट्वोः–२।**

**न्यासः**

ऋकारान्तत्वात् 'ऋन्नेभ्यो ङीप्' इति ङीब्भवति। ननु च ङीप्प्रत्यये कृतेऽन्तोदात्तः क्रोष्ट्रीशब्दो न सिध्यति? इत्याह—**तत्रेत्यादि**। क्रोष्ट्रीशब्दोऽन्तोदात्तोऽतिदिश्यत इति तृसम्बन्धिन ऋकारस्य स्थाने यणादेशो भवन्नुदात्तयण् भवति, ततश्च 'शतुरनुमो नद्यजादिः' इत्यनुवर्त्तमाने 'उदात्तयणो हल्पूर्वात्' इत्यन्तोदात्तो भवति क्रोष्ट्रीशब्दः ॥ ९६ ॥

**विभाषा तृतीयादिष्वचि**। 'स्त्रियाम्' इति नानुवर्तते, तेनेयमप्राप्तविभाषा। **क्रोष्टुनेति**। 'आङो नास्त्रियाम्' इति नाभावः। **क्रोष्टवे इति**। 'घेर्ङिति' इति गुणः। **क्रोष्टुरिति**। 'ऋत उत्' इत्युत्वम्, रपरत्वम्, 'रात् सस्य' ति सलोपः। **क्रोष्टोरिति**। पूर्ववद् गुणः, 'ङसिङसोश्च' इति पूर्वरूपत्वम्। **क्रोष्टरीति**। 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः। **क्रोष्टाविति**। 'अच्च घेः' इत्यत्वम्, औत्वञ्च। **तृज्वद्भावादित्यादि**। तृज्व-

**पदमञ्जरी**

'प्रत्ययः' इत्यस्याङ्गसंज्ञायामुरदत्वं च प्रति निमित्तभावः; सन्निधेरविशिष्टत्वात्। इह तु यथोद्देशपक्ष आश्रीयते, ततश्च वस्तुतोऽङ्गस्य स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य तृज्वद्भावो विधीयते, न तु परनिमित्तमाश्रीयते। अङ्गसंज्ञा च प्रत्ययलक्षणेन भविष्यति। 'अङ्गस्य' इति वचनाल्लब्धाङ्गसंज्ञस्य यत्कार्यं प्रत्ययलक्षणं तदेव प्रतिषिद्ध्यते, न चाङ्गसंज्ञा अङ्गस्य कार्यम्। **अन्तोदात्त एव क्रोष्ट्रीशब्दो भवतीति**। गौरादिषु पाठे ङीष्प्रत्ययस्वरेणान्तोदात्तः। अत्रापि पक्षे 'उदात्तयणो हल्पूर्वात्' इत्यन्तोदात्त एवेति एवशब्दार्थः। केचित्तु—ङीपोऽपि 'उदात्तयणः' इत्येवोदात्तत्वम्; अन्यथा ङीषि परतस्तृज्वद्भावे चित्स्वरस्य सतिशिष्टत्वेन ङीषोऽनुदात्तत्वप्रसङ्ग इत्याहुः ॥ ९६ ॥

**विभाषा तृतीयादिष्वचि** ॥ अप्राप्तविभाषेयम्। 'स्त्रियाम्' इति नानुवर्त्तते, पञ्चक्रोष्ट्रेत्यादावन्तरङ्गत्वात्पूर्वेण नित्यस्तृज्वद्भाव इत्यवोचाम, तेनोभयत्रविभाषापि न भवति। **पूर्वविप्रतिषेधेनेति**। तृज्वद्भावस्यावकाशः—क्रोष्ट्रे पुंसे; नुम्नुटोरवकाशः—पपुणे, जतुने, अग्नीनाम्, वायूनाम्; प्रियक्रोष्टुन इत्यादावुभयप्रसङ्गे पूर्वविप्रतिषेधः। अथ किमर्थं तृज्वद्भावो विधीयते, यावता क्रुशेरेव तृचि क्रोष्ट्रेत्यादि सिद्ध्यति? तुन्नन्तस्यासम्बुद्धौ सर्वनामस्थाने स्त्रियां च प्रयोगो मा भूत्, तृजन्तस्यैव यथा स्यात्। 'विभाषा तृतीयादिष्वचि'

**भावबोधिनी**

नहीं है। ] अतिदेश कर देने पर 'ऋन्नेभ्यो ङीप्' इस सूत्र से ङीप् = ई प्रत्यय होता है। इसके होने पर [ क्रोष्टृ + ई में उदात्त ऋ का यण् होने से ] "उदात्तयणो हल्पूर्वात्" (६।१।१७४) सूत्र से 'क्रोष्ट्री' शब्द अन्तोदात्त ही रहता है। [ क्योंकि 'उदात्तयणो हल्पूर्वात्' सूत्र का अर्थ है—उदात्त के स्थान पर जो यण् हल्पूर्व वाला होता है उससे परे नदी (= ई, ऊ) और अजादि असर्वनामस्थान विभक्ति उदात्त होती है। अतः ऋ का र् यण् करने पर 'ई' उदात्त हो जाती है। कोई अनुपपत्ति नहीं है। 'क्रोष्ट्री' शब्द अन्तोदात्त ही रहता है। ] ॥ ९६ ॥

तृतीया आदि अजादि विभक्तियाँ परे रहते 'क्रोष्टु' शब्द विकल्प से तृज्वत् होता है। उदा० क्रोष्ट्रा, क्रोष्टुना। क्रोष्ट्रे क्रोष्टवे। क्रोष्टुः क्रोष्टोः–२। क्रोष्टरि क्रोष्टौ। क्रोष्ट्रोः, क्रोष्ट्वोः–२। [क्रोष्टु+टा=आ, विकल्प से तृज्वद्भाव करने पर क्रोष्टृ + आ, यण्—क्रोष्ट्रा। पक्ष में 'आङो नाऽस्त्रियाम्' सूत्र से 'ना' आदेश—क्रोष्टुना। क्रोष्टु + ङे = ए, तृज्वद्भाव पक्ष में यण्—क्रोष्ट्रे। पक्ष में 'घेर्ङिति' सूत्र से उ का गुण, अव् आदेश—क्रोष्टवे। क्रोष्टु + ङसि और ङस् = अस्, तृज्वद्भाव क्रोष्टृ + अस् "ऋत उत्" सूत्र से ऋ तथा अ का उ एकादेश रपर—क्रोष्टुर्स्, 'रात्सस्य' सूत्र से स् का लोप, रेफ

तृतीयादिष्विति किम् ? क्रोष्टून् । अचीति किम् ? क्रोष्टुभ्याम् । क्रोष्टुभिः ।

❀ तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्नुटौ भवतः ❀ (म० भा० ७.१.९७ वा० १०,११) । प्रियक्रोष्टुनेऽरण्याय । हतक्रोष्टुने वृषलकुलाय । नुट्—क्रोष्टूनाम् ॥

**३२७४. चतुरनडुहोरामुदात्तः ॥ ९८ ॥ (३३१)**

**चतुर्, अनडुह्—इत्येतयोः सर्वनामस्थाने परत आमागमो भवति, स चोदात्तः । चत्वारः । अनड्वान्, अनड्वाहौ, अनड्वाहः, अनड्वाहम् ।**

**न्यासः**

द्भावस्यावकाशः—पुंसि क्रोष्ट्रे इति, नुमोऽवकाशः—त्रपुणे, जतुन इति; प्रियक्रोष्टुने वनायेत्यत्रोभयप्रसङ्गे सति नुम्भवति पूर्वविप्रतिषेधेनेति । नुटोऽवकाशः-अग्नीनाम्, वायूनामिति, तृज्वद्भावस्यावकाशः स एव; क्रोष्टूनामित्यत्रोभयप्रसङ्गे सति नुड् भवति पूर्वविप्रतिषेधेनेति । पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वाल्लभ्यते ॥ ९७ ॥

**चतुरनडुहोरामुदात्तः** । 'सर्वनामस्थाने' इति स्वर्यते, न 'तृतीयादिषु' इति । 'आगमा अनुदात्ता भवन्ति' इत्यनुदात्तत्वे प्राप्ते उदात्तत्वार्थं वचनम् ।

**पदमञ्जरी**

इत्येतर्त्तर्हि किमर्थम्, तृजन्तस्यैव क्रोष्ट्रेत्यादि सिद्धम्, तुन्नन्तस्य क्रोष्टुनेत्यादि ? यथैव तर्ह्यजादावुभयं भवति तथा हलादावपि स्यात्, एवं शस्यपि तुन्नन्तस्यैव च तत्र प्रयोग इष्यते, तेनैतदपि नियमार्थम्—तृतीयादावेवोभयम्, तत्राप्यजादावेवेति ।

यस्तु मन्यते—अभिधानस्वभावादेव तुंस्तृचोर्व्यवस्थितविषयः प्रयोग इति, तं प्रति सूत्रत्रयमपि शक्यमकर्तुम् ॥ ९७ ॥

**चतुरनडुहोरामुदात्तः** ॥ अत्र 'सर्वनामस्थाने' इति स्वर्यते, न तृतीयादिष्विति । आगमानुदात्तत्वबाधनार्थमुदात्तवचनम् । **तदन्तविधिरत्रेष्यत इति** । 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनात् ।

**भावबोधिनी**

का विसर्ग क्रोष्टुः-२ । पक्ष में क्रोष्टु + अस्, उकार का गुण, "ङसिङसोश्च" सूत्र से अ का पूर्वरूप—क्रोष्टोस्, स् का रुत्व विसर्ग—क्रोष्टोः-२ । क्रोष्टु + ङि, तृज्वद्भाव, कोष्टृ + इ, "ऋतो ङि-सर्वनामस्थानयोः" सूत्र से ऋ का गुण, रपर क्रोष्टरि । पक्ष में क्रोष्टु + ङि में 'अच्च घेः' 'सूत्र से उ का अ और ङि का औ—क्रोष्ट+औ, वृद्धि—क्रोष्टौ । क्रोष्टु + ओस्, तृज्वद्भाव, ऋ का यण् र् क्रोष्ट्रोस्, स् का रुत्व विसर्ग क्रोष्ट्रोः-२ । पक्ष में क्रोष्टु + ओस् उ का यण् व् क्रोष्ट्वोस्, स् का रुत्व, विसर्ग—क्रोष्ट्वोः-२ । ]

तृतीया आदि में—इसका क्या फल है ? क्रोष्टून् । [ क्रोष्टु+शस् = अस्, तृज्वदभाव नहीं होवे से पूर्वसंवर्णदीर्घ 'स्' का न् । ] अजादि विभक्ति परे—इसका क्या फल है ? क्रोष्टुभ्याम् क्रोष्टुभिः । [ अजादि न होने से तृज्वद्भाव नहीं होता है । ]

❀ तृज्वद्भाव की अपेक्षा पूर्वविप्रतिषेध से नुम् तथा नुट् हो जाते हैं ।❀ उदा० प्रियक्रोष्टुने अरण्याय । हतक्रोष्टुने वृषलाय । [ प्रियाः क्रोष्टारः यस्य तत् तस्मै—इस बहुव्रीहि में नपुंसक लिङ्ग में प्रियक्रोष्टु+ङे = ए, यहाँ तृज्वद्भाव और 'इकोऽचि विभक्तौ' (७।१।७३) से नुम्—दोनों की प्राप्ति रहते पूर्वविप्रतिषेध के कारण नुम् आगम ही होता है—प्रियक्रोष्टु न् +ए = प्रियक्रोष्टुने । हताः क्रोष्टारः येन तत् तस्मै—इस विग्रह में बहुव्रीहि नपुंसकलिङ्ग में—हतक्रोष्टु+ए, पूर्ववत् नुम् आगम ही होता है—हतक्रोष्टुने । ] नुट् का उदा० क्रोष्टूनाम् । [ क्रोष्टु + आम् यहाँ तृज्वद्भाव और "ह्रस्वनद्यापो नुट्" से नुट् आगम—इन दोनों की प्राप्ति रहते नुट् ही पहले होता है । दीर्घ होने पर 'क्रोष्टूनाम्' बनता है । ] ॥ ९७ ॥

चतुर्, अनडुह्—इनको सर्वनामस्थान परे रहते आम् आगम होता है और वह उदात्त होता है । उदा० चत्वारः । [ चतुर् +जस् = अस्, आम् आगम मित् होवे से अन्त्य अच् के बाद होवे पर चतु आ र् + अस्, यण् स्

**तदन्तविधिरत्रेष्यते । प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः । प्रियानड्वान्, प्रियानड्वाहौ, प्रियानड्वाहः ।**

**❀ अनडुहः स्त्रियां वेति वक्तव्यम् ❀ (म० भा० ७.१.९८ वा० १) । अनुडुही, अनड्वाही । गौरादिपाठात् (४.१.४१) सिद्धम् ॥**

## ३२७५. अम्सम्बुद्धौ ॥ ९९ ॥ (३३३)

**सम्बुद्धौ परतश्चतुरनडुहोरमागमो भवति । पूर्वस्यायमपवादः । हे प्रियचत्वः ! हे प्रियानड्वन् ! ॥**

## ३२७६. ऋत इद्धातोः ॥ १०० ॥ (२३९०)

**ऋकारान्तस्य धातोरङ्गस्य इकारादेशो भवति । किरति । गिरति । आस्तीर्णम् । विशीर्णम् ।**

**न्यास**

**तदन्तविधिरत्रेष्यत इति ।** 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनात् । **प्रियचत्वारिति** बहुव्रीहिः । 'सर्वनामसंख्ययोरुपसंख्यानम्' इति संख्यायाः पूर्वनिपाते प्राप्ते 'वा प्रियस्य' इति प्रियशब्दस्य पूर्वनिपातः ॥ ९८ ॥

**अम् सम्बुद्धौ ॥** पूर्वेणामि प्राप्ते वचनम् । **हे प्रियचत्वः । हे प्रियानड्वन्निति ।** अत्र चतुःशब्दस्य केवलस्य सम्बुद्धिर्न भवतीति तदन्तस्योदाहरणम् । अनडुहस्तु यद्यपि केवलस्य सम्भवति, तथापि तदन्तविधिरत्रेष्यत इति तदन्तस्योदाहरणम् ॥ ९९ ॥

**ऋत इद्धातोः ॥ किरति, गिरतीति ।** 'कॄ विक्षेपे', 'गॄ निगरणे' 'तुदादिभ्यः शः' । **आस्तीर्णमिति ।** 'स्तॄ आच्छादने', 'रदाभ्याम्' इति नत्वम्, 'रषाभ्याम्' इति णत्वम्, 'हलि च' इति दीर्घः । **विशीर्णमिति ।** 'शॄ हिंसायाम्' ।

**पदमञ्जरी**

**प्रियचत्वा इति ।** बहुव्रीहौ 'सर्वनामसंख्ययोरुपसंख्यानमिति' (वा० ११३) चतुर्शब्दस्य पूर्वनिपाते प्राप्ते 'वा प्रियस्य' (वा० ११४) इति प्रियशब्दस्य पूर्वनिपातः ॥ ९८ ॥

**अम्सम्बुद्धौ ॥** चतुःशब्दस्य केवलस्य सम्बुद्ध्यभावादुपसमस्तस्योदाहरणम् । अनडुहस्तु प्रक्रमाभेदाय, 'तदन्तविधिरत्रेष्यते' इति प्रदर्शनाय च तदन्तस्योदाहरणम् ॥ ९९ ॥

**ऋत इद्धातोः ॥ किरतीति ।** 'कॄ विक्षेपे' (धा० पा० १४०९), 'गॄ निगरणे' (धा० पा० १४१०)

**भावबोधिनी**

का विसर्ग—चत्वारः । ] अनड्वान्, अनड्वाहौ, अनड्वाहः । अनड्वाहम् । अनड्वाहौ । [ अनडुह् + सु, आम् आगम, यण्, "सावनडुहः" सूत्र से नुम् आगम अनड्वान्ह् + सु, सलोप ह् लोप—अनड्वान् । अन्य में नुम् नहीं होता है । ]

❀ इसमें तदन्तविधि इष्ट है । ❀ [ क्योंकि अङ्ग के अधिकार में उसका और उसके उत्तरपद रहते होता है—यह नियम है । ] उदा० प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः । [ प्रियाः चत्वारः यस्य, ययोः, येषां वा—इन अर्थों में बहुव्रीहि के बाद प्रियचतुर् + सु, आम् आगम, यण् सुलोप, र् का विसर्ग—प्रियचत्वाः । ] प्रियानड्वान्, प्रियानड्वाहौ, प्रियानड्वाहः । [प्रियाः अनड्वाहः यस्य, ययोः, येषां वा—इन विग्रहों में बहुव्रीहि समास में भी आम् होता है ।]

❀ अनडुह् से स्त्रीलिङ्ग में विकल्प से होता है—ऐसा कहना चाहिए ।❀ उदा० अनडुही अनड्वाही । [ अनडुह् + ङीष् = ई, आम् यण्—अनड्वाही, पक्ष में अनडुही । ] गौरादिगण में पाठ से (ङीष्) सिद्ध होता है ॥ ९८ ॥

सम्बुद्धि परे रहते चतुर् और अनडुह् को अम् आगम होता है । यह पूर्वसूत्र का अपवाद है । उदा० हे प्रियचत्वः ! हे प्रियानड्वन् ! [ प्रियचतुर् + सु अम्, यण् नुट् आदि कार्य पूर्ववत् समझने चाहिए । ] ॥ ९९ ॥

ऋकारान्त धातु के अङ्ग का इकार आदेश होता है । उदा० किरति । गिरति । [ 'कॄ का अर्थ विक्षेप = बिखेरना है, गॄ का अर्थ निगलना है । तुदादिगणीय होने से श होता है—कॄ + श + ति, गॄ + श + ति, श् का इत्संज्ञालोप,

**धातोरिति किम् ? मातॄणाम् । पितॄणाम् ।**
**लाक्षणिकस्याप्यत्र ग्रहणमिष्यते । चिकीर्षतीत्यत्रापि यथा स्यादिति धातुग्रहणं क्रियते[1] ॥**

## ३२७७. उपधायाश्च ॥ १०१ ॥ (२५७१)

न्यासः

**मातॄणाम् । पितॄणामिति ।** 'नामि इति दीर्घः । सत्यपि ॠकारान्तत्वेऽधातुत्वादिह न भवति । ननु च लक्षणप्रतिपदोक्तपरिभाषयैवात्र न भविष्यति, तत्किमेतन्निवृत्त्यर्थेन धातुग्रहणेन ? इत्याह—**लाक्षणिकस्यापीत्यादि ।** किमर्थं पुनर्लाक्षणिकस्य ग्रहणम् ? इत्याह—**चिकीर्षतीत्यादि ।** कथं पुनरिष्यमाणमपि लाक्षणिकस्यात्र ग्रहणं लभ्यते ? अत एव धातुग्रहणाज्ज्ञापकात् । तस्य ह्येतत् प्रयोजनम्—मातॄणाम्, पितॄणामित्यत्र मा भूदिति । यदीह लाक्षणिकस्य ग्रहणं न स्यात् तदा मातॄणाम्, पितॄणामित्यादौ लाक्षणिकत्वादेव न भविष्यतीति धातुग्रहणमनर्थकम् । तस्माल्लाक्षणिकस्याप्यत्र ग्रहणम् । तेन चिकीर्षतीत्येवमादिषु 'अज्झनगमां सनि' इति दीर्घत्वे सत्यपि भवत्येव ।

तपरकरणमसन्देहार्थम् । 'र' इत्युच्यमाने सन्देहः स्यात्—किमयं रेफस्य निर्देशः ? उत यणादेश ॠकारस्येति ? ॥ १०० ॥

**उपधायाश्च ॥** ॠकारान्तस्य धातोरित्त्वमुक्तम् । उपधाभूतस्य धातोॠकारस्य न प्राप्नोति, इष्यते;

पदमञ्जरी

तुदादौ । **'आस्तीर्णम्, विशीर्णमिति ।** 'स्तॄञ् आच्छादने' (धा० पा० १४८४), 'शॄ हिंसायाम्' (धा० पा० १४८८) 'हलि च' इति दीर्घः, 'रदाभ्याम्' इति निष्ठानत्वम् ।

**मातॄणामिति ।** दीर्घत्वे कृतेऽपि लाक्षणिकत्वादेवात्र न भविष्यतीति ? अत आह—**लाक्षणिकस्यापीति ।** किं प्रयोजनम् ? इत्याह—**चिकीर्षतीत्यादि ।** अतस्तदर्थं धातुग्रहणमिति भावः । क्वचित्तु वृत्तावेवैतत् पठ्यते ॥ १०० ॥

**उपधायाश्च ॥** पूर्वेण ॠकारान्तस्य धातोरित्त्वमुक्तम्, उपधायामपि यथा स्यादित्ययमारम्भः । ननु

भावबोधिनी

ॠ का इ, रपर—किरति, गिरति । ] आस्तीर्णम् । विशीर्णम् । [ आङ् स्तॄ + क्त = त, इत्व रपर करने पर आस्तिर् + क्त, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' सूत्र से त का न, णत्व—''हलि च'' से उपधा का दीर्घ—आस्तीर्णम् । विशॄ + क्त, इत्व, रपर, दीर्घ, णत्व—विशीर्णम् ]

धातुका—इसका क्या फल है ? मातॄणाम् पितॄणाम् । [ धातु न होकर प्रातिपदिक है अतः इत्व नहीं होता है । ]

* इस सूत्र में लाक्षणिक (किसी सूत्रादि की प्रवृत्ति से निष्पन्न) ॠ का भी ग्रहण इष्ट है । * चिकीर्षति—इत्यादि में जिस प्रकार से हो सके—इसके लिये 'धातोः' का ग्रहण किया जाता है । [ कृ + सन्, यहाँ 'अज्झनगमां सनि' इससे दीर्घ करने पर कॄ + स में इत्व, रपर किर् + स, द्वित्व तथा अभ्यासादि कार्य करने पर चिकीर्षति बनता है । यदि लाक्षणिक ॠ का ग्रहण न होता तो मातॄणाम् पितॄणाम् में लाक्षणिक होने से ही इत्व प्राप्त नहीं होता । धातुग्रहण व्यर्थ होता । इसीलिये यह ज्ञापक है कि इस सूत्र में लाक्षणिक ॠ का भी ग्रहण होता है । अतः मातॄणाम् आदि में इत्व के वारण के लिये 'धातोः' का ग्रहण सार्थक है । ] ॥ १०० ॥

और उपधा के ॠकार का इकार आदेश होता है । उदा० कीर्त्तयति, कीर्त्तयतः, कीर्त्तयन्ति । [ कॄत् संशब्दनार्थक से स्वार्थिक णिच् प्रत्यय कॄत् + इ प्रस्तुत सूत्र से ॠ का इत्व, रपर, दीर्घ—कीर्ति + लट् = तिप्, शप् = अ, इ का गुण,

---

१. 'तपरकरणमसन्देहार्थम्'—इत्यधिकमेकस्मिन्पुस्तके ।

उपधायाश्च ऋकारस्य इकारादेशो भवति । कीर्त्तयति, कीर्त्तयतः, कीर्त्तयन्ति ॥

**३२७८. उदोष्ठ्यपूर्वस्य ॥ १०२ ॥ (२४९४)**

ओष्ठ्यः पूर्वो यस्माद् ऋकारादसावोष्ठ्यपूर्वस्तदन्तस्य धातोरङ्गस्य उकारादेशो भवति । पूर्त्ताः पिण्डाः । पुपूर्षति । मुमूर्षति । सुस्वूर्षति ।

**न्यासः**

तदर्थमेतत् । **कीर्त्तयतीति** । 'कृत संशब्दने', चुरादौ ण्यन्तः । ननु च 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च' इति निपातनादेवेत्त्वं भविष्यतीति कथं तदर्थो योगारम्भः ? नैतदस्ति; क्तिन्विषय एव निपातनं स्यात् । एवं तर्हि पूर्वयोगे धातुना ऋकारं विशेषयिष्यामः, अत्र तत्स्थस्येति ? एतदपि नास्ति; एवं सति ऋकारमिच्छति ऋकारीयतीत्यत्रापि स्यात् । तस्माद्वक्तव्यमिदम् ।

'कृतश्च' इति वक्तव्ये 'उपधायाश्च' इति वचनं वैचित्र्यार्थम् । 'कृतश्च' इत्युच्यमाने तकारस्य स्यात् ? नैतदस्ति; 'ऋतः' इत्यनुवर्त्तयिष्यते, तेन ऋकारस्यैव भविष्यति । अन्यस्त्वाह—'ऋतः' इति पूर्वसूत्रे विशेषणत्वेन प्रकृतम्, न शक्यते तद्धि विशेष्यत्वेन विवक्षितुमिति । तस्य 'उपधाया ऋकारस्येकारादेशो भवति' इत्येष **वृत्तिग्रन्थो** विरुध्यते । अत्र हि ऋकारस्य विशेष्यता दर्शिता । तस्माद् यथाङ्गस्यैतत् क्वचिद्विशेषणम्; तथा 'ऋतः' इत्येतदपि पूर्वसूत्रे विशेषणम्, इह तु विशेष्यम् ॥ १०१ ॥

**उदोष्ठ्यपूर्वस्य** ॥ 'ऋत इद्धातोः' इतीत्त्वे प्राप्त उत्त्वं विधीयते । **पूर्त्त इति** । 'पॄ पालनपूरणयोः', क्तः । 'न ध्याख्या' इत्यादिना प्रतिषिद्धत्वान्न निष्ठानत्वं भवति । **वुवूर्षतीति** । 'वृ वरणे' । **मुमूर्षतीति** । 'मृ हिंसायाम्' । **सुस्वूर्षतीति** । 'स्वॄ शब्दोपतापयोः,' 'अज्झनगमां सनि' दीर्घत्व ऋकारान्तत्वमस्य ।

**पदमञ्जरी**

पूर्वयोगे धातुना ऋकारं विशेषयिष्यामः—धातोर्य ऋकारो यत्र तत्र स्थित इति, इहापि तर्हि प्राप्नोति—ऋकारमिच्छति ऋकारीयतीति ? एवमपि 'कृतस्य' इतीयता सिद्धम्, 'ऋतः' इत्यनुवृत्तेरन्त्यस्य न भविष्यति ? तथा तु न कृतमित्येव । **कीर्त्तयतीति** । 'कृत संशब्दने' (धा० पा० १६५३) चुरादिः ॥१०१॥

**उदोष्ठ्यपूर्वस्य ॥ पूर्त्ता इति** । 'पॄ पालनपूरणयोः' ( धा० पा० १०८६), 'न ध्याख्यापॄमूर्च्छिमदाम्' इति निष्ठानत्वप्रतिषेधः । **मुमूर्षतीति** । 'मृङ् प्राणत्यागे' (धा० पा० १४०३) । **सुस्मूर्षतीति** । 'स्मृ चिन्तायाम्' (धा० पा० ९३३) । **सुस्वूर्षतीति** पाठे 'स्वॄ शब्दोपतापयोः' (धा० पा० ९३२), 'सनीवन्तर्ध' इत्यादिनेड्भावपक्षे रूपम् । पूर्व एव तु युक्तः पाठः; पृथगुदाहरणस्य वक्ष्यमाणत्वात् ।

**भावबोधिनी**

अय् आदेश—कीर्त्तयति । ]

**विमर्श**—यद्यपि 'कृतस्य' अथवा 'कृतश्च' ऐसा न्यास बनाकर भी निर्वाह सम्भव था फिर भी वैचित्र्य के लिये "उपधायाश्च" ऐसा सूत्र पाणिनि ने बना दिया । अतः कोई अनुपपत्ति नहीं है ॥ १०१ ॥

ओष्ठ्य वर्ण है पूर्व में जिस ऋकार से वह—ओष्ठ्यपूर्व है, तदन्त धातु के अङ्ग का उकार आदेश होता है । उदा० पूर्त्ताः पिण्डाः । [ 'पॄ पालन तथा पूरण अर्थों में है— पॄ + क्त = त, ॠ का उत्व, रपर दीर्घ—पूर् + त, नत्व प्राप्त है किन्तु "न ध्याख्यापॄमूर्च्छिमदाम्" सूत्र से निषेध हो जाता है । पुपूर्षति । मुमूर्षति । सुस्वूर्षति । [ √पॄ + सन्, √मृङ् हिंसा अर्थ में है, √स्वॄ शब्द और उपताप अर्थों में है । मृङ् में 'अज्झनगमां सनि' से दीर्घ करने पर मॄ के ॠ का उकार आदेश रपर करने पर 'पुर् + सन् मुर् + सन्' द्वित्वादि करने पर उक्त रूप होते हैं । ]

दन्त्यौष्ठ्य जिससे पूर्व होता है ऐसा ॠ भी ओष्ठ्यपूर्व होता है इसलिए यहाँ भी उकार आदेश होता है—वुवूर्षति ऋत्विजम्, प्रावुवूर्षति कम्बलम् । [√वॄ वरण अर्थ में है । वकार दन्त्योष्ठ होने से ओष्ठ्य भी है । अतः 'व्' के ॠ का भी उकार हो जाता है । ] यहाँ ओष्ठ्य को प्रत्यासत्ति से अङ्ग का अवयव ही लिया जाता है, इसलिये 'ॠ गतौ' इसके

१. मूले इदं न दृश्यते ।

**दन्त्यौष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवतीति अत्रापि भवति—वुवूर्षति ऋत्विजम्, प्रावुवूर्षति कम्बलम्। ओष्ठ्यो ह्यत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन[1] 'ॠ गतौ' (धा० पा० १४९८) इत्यस्य सम्पूर्वस्य समीर्णमिति भवति[1]।**

**❀ इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन ❀ (म० भा०)। आस्तरणम्, आस्तारकः। निपरणम्, निपारकः। निगरणम्, निगारकः॥**

## ३२७९. बहुलं छन्दसि॥ १०३॥ (२५७८)

### न्यासः

अथेह कथमुत्वम्—'वृङ् सम्भक्तौ', 'वृञ् वरणे'—प्रावुवूर्षते, प्रावुवूर्षतीति, न ह्यत्र ऋकार ओष्ठ्यपूर्वः, किं तर्हि ? दन्त्योष्ठ्यपूर्व इति ? तदेतदाह—**दन्त्यौष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवतीत्यादि**। यो ह्युभयस्थाने निष्पद्यते लभतेऽसावन्यतरव्यपदेशम्। तेन दन्त्यौष्ठ्यो यो भवति सोऽप्योष्ठ्यो भवत्येव दन्त्योष्ठ्यपूर्वोऽप्यौष्ठ्यपूर्वो एव। अथ समीर्णमित्यत्र कस्मान्न भवति, अस्ति ह्यत्राप्योष्ठ्यपूर्वता ? इत्याह—**ओष्ठ्यो ह्यत्रेत्यादि**। ओष्ठ्य ह्यत्राङ्गावयवोऽपि। तत्रेह प्रत्यासत्तेरङ्गावयवो गृह्यते, नोपसर्गावयवः। प्रत्यासन्नत्वं पुनःप्रसङ्गस्य प्रकृतत्वात्। उपसर्गस्य तु नास्ति प्रत्यासन्नत्वम्; विपर्ययात्।

**इत्वोत्वाभ्यामित्यादि**। इत्वोत्वयोरवकाशः—आस्तीर्णम्, पूर्त्त इति, गुणवृद्ध्योरवकाशः—चयनम्, चायक इति; इहोभयं प्राप्नोति—आस्तरणम्, आस्तारकः, निपरणम्, निपारक इति, अत्र गुणवृद्धी भवतो विप्रतिषेधेन॥ १०२॥

**बहुलं छन्दसि॥ ततुरिः, जगुरिरिति**। तरतेर्गिरतेश्च 'आदृगमहनजनः किकिनौ लिट् च' इति

### पदमञ्जरी

**दन्त्योष्ठ्यपूर्वोऽपीत्यादि**। ओष्ठ्यत्वमात्रं विवक्षितं नेतरव्यावृत्तिरिति भावः। **ओष्ठ्योऽत्रेत्यादि**। यथा 'हलः' इत्यत्राङ्गेन हल् विशेष्यते, तेन सम्प्रसारणम्, तेन च पुनरङ्गम्; तथेहाप्यङ्गस्यावयव ओष्ठ्यः पूर्वो यस्मात्तदन्तस्याङ्गस्येति।

**इत्वोत्वाभ्यामित्यादि**। इत्वोत्वयोर्दर्शितान्युदाहरणान्यवकाशः, गुणवृद्ध्योरवकाशः—चयनं चायकः; उभयप्रसङ्गे विप्रतिषेधः। **आस्तरणमिति**। नात्र गुणस्य नित्यत्वम्; लक्षणभेदात्। पूर्वं हीगन्तलक्षणो गुणः प्राप्नोति, इत्वोत्वयोः कृतयोर्लघूपधलक्षणः॥ १०२॥

**बहुलं छन्दसि॥ ततुरिर्जगुरिरिति**। तॄगॄभ्याम् 'आदृगमहनः' इति किन्प्रत्ययः, उत्वम्, तस्य

### भावबोधिनी

'सम्' उपसर्गपूर्वक का 'समीर्णम्' यह रूप होता है। [ अर्थात् 'म्' पूर्व है किन्तु उपसर्ग होने से अङ्गावयव नहीं है। अतः उत्व न होकर इत्व, रपर, णत्व ही होता है। ]

❀ इत्व तथा उत्व की अपेक्षा गुण और वृद्धि विप्रतिषेध से होते हैं। ❀ उदा० आस्तरणम्। आस्तारकः। [ आङ् पूर्वक स्तॄ + ल्युट् = अन, इत्व और गुण दोनों की प्राप्ति में पूर्वविप्रतिषेध से "सार्वधातुकार्धधातुकयोः" सूत्र से गुण ही होता है, रपर, णत्व—आस्तरणम्। आ + स्तॄ + ण्वुल् = अक, वृद्धि ही होती है। आस्तारकः। ] निपरणम् निपारकः। निगरणम्, निगारकः। [ नि पॄ + ल्युट् = अन यहाँ उत्व की अपेक्षा विप्रतिषेध से गुण ही होता है, रपर, णत्व। नि पॄ + ण्वुल् = अक ॠ की वृद्धि ही होती है, रपर—निपारकः। निगॄ + ल्युट्, निगॄ + ण्वुल् में भी गुण तथा वृद्धि ही होती है। इस वचन के फलस्वरूप सभी इष्ट शब्द रूप बन जाते हैं। ]॥ १०२॥

वेदविषय में ॠकारान्त धातु के अङ्ग का उकार आदेश बहुल रूप से होता है। 'ओष्ठ्य है पूर्व जिससे ऐसे

---

१-१. "तेनेह न भवति—समीर्णमिति। 'ॠ गतौ' इत्यस्य सम्पूर्वस्य यद्यपि समो मकार ओष्ठ्यः पूर्वोऽस्ति तथाप्यङ्गावयवो न भवतीति समीर्णमित्यत्र न भवति"—इति पाठ एकस्मिन्पुस्तके।

छन्दसि विषये ॠकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशो भवति। 'ओष्ठ्यपूर्वस्य' इत्युक्तम्, अनोष्ठ्यपूर्वस्यापि भवति—'मित्रावरुणौ ततुरिः (ऋ० १.१४५.३)। 'दूरे ह्यध्वा जगुरिः' (ऋ० १०.१०८.१)। ओष्ठ्यपूर्वस्यापि न भवति—पप्रितमम्, वव्रितमम्। क्वचिद् भवति— 'पपुरिः' (ऋ० १.४६.४)॥

॥ इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ सप्तमाध्यायस्य प्रथमः पादः॥

— ० —

**न्यासः**

किकिनोरन्यतरः, ततश्चोत्त्वे 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् 'तॄ गॄ'—इति द्विरुच्यते, 'उरत्' इत्यत्त्वम्। **पप्रितमम्, वव्रितममिति।** 'पॄ, वॄ'—इत्येतयोः किकिनोरन्यतरः, यणादेशः। किप्रत्ययान्तात् 'अतिशायने तमप्' इत्यादिना तमप्॥ १०३॥

॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य प्रथमः पादः॥

— ० —

**पदमञ्जरी**

'द्विर्वचनेऽचि' इति स्थानिवद्भावात्तॄगॄ—इत्येतस्य द्विर्वचनम्। **पप्रितममिति।** 'पॄ' इत्येतस्मात्पूर्ववत्किन्, इत्त्वोत्त्वयोरभावे यण्, तस्य स्थानिवद्भावाद् द्विर्वचनम्, अतिशायने तमप्॥ १०३॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमाध्यायस्य प्रथमः पादः॥

— ० —

**भावबोधिनी**

ॠ का' आदेश कहा गया है अब अनोष्ठ्यपूर्व का भी होता है—उदा० "मित्रावरुणौ ततुरिः। [ तॄ धातु से "आदृगमहनजनः किकिनौ लिट् च" (३।२।१७१) सूत्र से कि अथवा किन् प्रत्यय, ॠ का उत्व, रपर 'द्विर्वचनेऽचि' से स्थानिवद्भाव से 'तॄ' मानकर ही द्वित्व, 'उरत्' से अभ्यास के ॠ का अत्व, हलादि शेष, ततुर् + इ, कृदन्त होने से प्रातिपदिकत्व, सु, विसर्ग—ततुरिः। ] 'दूरे ह्यध्वा जगुरिः।' [ गॄ + कि अथवा किन् पूर्वोक्त सारी प्रक्रिया, अभ्यास के ग का जश्त्व—जगुरिः। ] ओष्ठ्य जिससे पूर्व है उसका भी नहीं होता है—पप्रितमम्, वव्रितमम्। [ पॄ तथा वॄ धातुओं से कि अथवा किन् प्रत्यय तथा पूर्वोक्त सभी प्रक्रिया के बाद पपॄ + इ, ववॄ + इ यहाँ उत्व न होकर यण् होता है—पप्रि, वव्रि। अतिशायन अर्थ में "अतिशायने तमबिष्ठनौ" से तमप् प्रत्यय करने पर रूप हैं। ] कहीं-कहीं होता भी है—पपुरिः। [ पॄ + कि या किन् = इ में पूर्वोक्त प्रक्रिया के बाद पपॄ + इ में ॠ का उत्व तथा रपर होता है—पपुर् + इ, प्रातिपदिक संज्ञा, सु विसर्ग—पपुरिः। ये लिट् के अर्थ में रूप बनते है। अतः भूतकाल आदि की भी प्रतीति होती है। ]॥ १०३॥

॥ इस प्रकार उपाध्याय श्रीमद् वामन द्वारा विरचित काशिका वृत्ति में सप्तम अध्याय का प्रथमपाद समाप्त हुआ॥

॥ इस प्रकार जयशङ्कर लाल त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के सप्तम अध्याय का प्रथम पाद समाप्त हुआ॥

कृपया विश्वनाथस्य वाग्देव्याश्च प्रसादतः।
सप्तमे प्रथमं पादं व्याचष्ट गुर्वनुग्रहात्॥ १॥
भाष्यादिकं समीक्ष्यालं पूर्वा व्याख्याश्च भूरिशः।
हिन्द्यां व्याख्यां रचितवांस्त्रिपाठी 'जयशङ्करः'॥ २॥
न्यासेन पदमञ्जर्या टिप्पणैश्च सुचिन्तितैः।
युक्तश्च भावबोधिन्या पूर्णो भागोऽष्टमोऽभवत्॥ ३॥

॥ ॐ शान्तिः शान्तिः शान्तिः॥

—: ० :—

# पाणिनीय-सूत्र-सूची


| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| ( अ ) | | |
| अङितश्च | ६।४।१०३ | २७३ |
| अङ्गस्य | ६।४।१ | १३५ |
| अचः | ६।४।१३८ | ३०९ |
| अचि श्नु-धातु० | ६।४।७७ | २४७ |
| अज्झनगमां सनि | ६।४।१६ | १६४ |
| अत उत् सार्वधातुके | ६।४।११० | २७९ |
| अत एकहल्मध्ये | ६।४।१२० | २८८ |
| अतो भिस एस् | ७।१।९ | ३६२ |
| अतोऽम् | ७।१।२४ | ३८० |
| अतो लोपः | ६।४।४८ | २१३ |
| अतो हेः | ६।४।१०५ | २७५ |
| अत्वसन्तस्य | ६।४।१४ | १६० |
| अदभ्यस्तात् | ७।१।४ | ३५६ |
| अद्ड्डतरादिभ्यः | ७।१।२५ | ३८१ |
| अन् | ६।४।१६७ | ३३८ |
| अनङ् सौ | ७।१।९३ | ४६२ |
| अनिदितां हल उपधायाः | ६।४।२४ | १८५ |
| अनुदात्तोपदेश० | ६।४।३७ | १९७ |
| अनुनासिकस्य क्विझलोः | ६।४।१५ | १६३ |
| अन्येषामपि दृश्यते | ६।३।१३७ | १३१ |
| अप्-तृन्-तृच्० | ६।४।११ | १५० |
| अभ्यासस्यासवर्णे | ६।४।७८ | २४९ |
| अमूर्धमस्तकात् | ६।३।१२ | १४ |
| अमो मश् | ७।१।४० | ४०४ |
| अम् सम्बुद्धौ | ७।१।९९ | ४१७ |
| अयामन्ताल्वा० | ६।४।५५ | २२० |
| अरुर्द्विषदजन्तस्य | ६।३।६७ | ७६ |
| अर्थे विभाषा | ६।३।१०० | १०० |
| अर्वणस्त्रसावनञः | ६।४।१२७ | २९९ |
| अलुगुत्तरपदे | ६।३।१ | १ |
| अल्लोपोऽनः | ६।४।१३४ | ३०६ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| अवोदैधौद्म० | ६।४।२९ | १९१ |
| अव्ययीभावे चाकाले | ६।३।८१ | ९२ |
| अश्वक्षीरवृष० | ७।१।५१ | ४११ |
| अषष्ठ्यतृतीया० | ६।३।९९ | १०५ |
| अष्टनः संज्ञायाम् | ६।३।१२५ | १२५ |
| अष्टाभ्य औश् | ७।१।२१ | ३७६ |
| असिद्धवदत्रा भात् | ६।४।२२ | १७५ |
| अस्थिदधिसक्थ्य० | ७।१।७५ | ४४६ |
| अहन्ष्टखोरेव | ६।४।१४५ | ३१५ |
| ( आ ) | | |
| आङो यि | ७।१।६५ | ४२८ |
| आ च हौ | ६।४।११७ | २८७ |
| आच्छीनद्योर्नुम् | ७।१।८० | ४५० |
| आज्जसेरसुक् | ७।१।५० | ४१० |
| आज्ञायिनि च | ६।३।५ | ८ |
| आडजादीनाम् | ६।४।७२ | २४० |
| आत औ णलः | ७।१।३४ | ३९१ |
| आतो धातोः | ६।४।१४० | ३०९ |
| आतो लोप इटि च | ६।४।६४ | २३४ |
| आत्मनश्च पूरणे | ६।३।६ | ८ |
| आत्मनेपदेष्वनतः | ७।१।५ | ३५७ |
| आत्माध्वानौ खे | ६।४।१६९ | ३३९ |
| आनङ् ऋतो द्वन्द्वे | ६।३।२५ | २३ |
| आन्महतः समानाधिकरण० | ६।३।४६ | ५५ |
| आपत्यस्य च तद्धिते० | ६।४।१५१ | ३२३ |
| आमि सर्वनाम्नः | ७।१।५२ | ४१३ |
| आयनेयीनीयियः | ७।१।२ | ३५१ |
| आर्धधातुके | ६।४।४६ | २०७ |
| आ सर्वनाम्नः | ६।३।९१ | ९९ |
| ( इ ) | | |
| इकः काशे | ६।३।१२३ | १२४ |
| इकः सुनि | ६।३।१३४ | १३४ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| इकोऽचि विभक्तौ | ७।१।७३ | ४३७ |
| इको वहेऽपीलोः | ६।३।१२ | १२३ |
| इको ह्रस्वोऽङ्यो | ६।३।६१ | ७० |
| इच एकाचोऽम् | ६।३।६८ | ७७ |
| इणो यण् | ६।४।८१ | २५१ |
| इतोऽत् सर्वनामस्थाने | ७।१।८६ | ४५६ |
| इदं किमोरीश्की | ६।३।९० | ९८ |
| इदन्तो मसि | ७।१।४६ | ४०८ |
| इदितो नुम् धातोः | ७।१।५८ | ४१८ |
| इद् दरिद्रस्य | ६।४।११४ | २८३ |
| इनण्यनपत्ये | ६।४।१६४ | ३३७ |
| इन्-हन्-पूषाऽर्यम्णाम् | ६।४।१२ | १५३ |
| इरयो रे | ६।४।७६ | २४६ |
| इष्टकेषीकामा० | ६।३।६५ | ७४ |
| इष्ट्वीनमिति च | ७।१।४८ | ४१० |
| इष्ठस्य यिट् च | ६।४।१५९ | ३३४ |
| इस्-मन्-त्रन्क्विषु | ६।४।९७ | २६७ |
| ( ई ) | | |
| ई च द्विवचने | ७।१।७७ | ४४९ |
| ईदग्नेः सोमवरुणयोः | ६।३।२७ | २६ |
| ईद्यति | ६।४।६५ | २३५ |
| ईषदर्थे | ६।३।१०५ | १०८ |
| ई हल्यघोः | ६।४।११३ | २८२ |
| ( उ ) | | |
| उगितश्च | ६।३।४५ | ५४ |
| उगिदचां सर्वनाम० | ७।१।७० | ४३३ |
| उतश्च प्रत्ययाद् | ६।४।१०६ | २७६ |
| उद ईत् | ६।४।१३९ | ३०९ |
| उदकस्योदः संज्ञायाम् | ६।३।५७ | ६७ |
| उदोष्ठ्यपूर्वस्य | ७।१।१०२ | ४७३ |
| उपधायाश्च | ७।१।१०१ | ४७२ |
| उपसर्गस्य घञ्यमनुष्ये | ६।३।१२२ | १२३ |
| उपसर्गात् खल्घञोः | ७।१।६७ | ४३० |
| उपात् प्रशंसायाम् | ७।१।६६ | ४२९ |
| उषासोषसः | ६।३।३१ | २८ |
| ( ऊ ) | | |
| ऊदनोर्देशे | ६।३।९८ | १०४ |
| ऊदुपधायाः | ६।४।८९ | २५८ |
| ( ऋ ) | | |
| ऋचः शे | ६।३।५५ | ६६ |
| ऋचि तुनुघ० | ६।३।१३३ | १२८ |
| ऋतो विद्यायोनि० | ६।३।२३ | २२ |
| ऋत्व्यवास्त्व्य० | ६।४।१७५ | ३७५ |
| ऋदुशनस्पुरुदंस्० | ७।१।९४ | ४६३ |
| ( ॠ ) | | |
| ॠत इद्धातोः | ७।१।१०० | ४७१ |
| ( ए ) | | |
| एक तद्धिते च | ६।३।६२ | ७२ |
| एकवचनस्य च | ७।१।३२ | ३८८ |
| एकहलादौ पूरयितव्ये | ६।३।५९ | ६९ |
| एकादिश्चैकस्य | ६।३।७६ | ८८ |
| एरनेकाचोऽसंयोग० | ६।४।८२ | २५१ |
| एर्लिङि | ६।४।६७ | २३८ |
| ( ओ ) | | |
| ओः सुपि | ६।४।८३ | २५४ |
| ओजः सहोम्भः० | ६।३।३ | ७ |
| ओर्गुणः | ६।४।१४६ | ३१६ |
| ओषधेश्च | ६।३।१३२ | १२८ |
| ( औ ) | | |
| औक्षमनपत्ये | ६।४।१७३ | ३४२ |
| औङ आपः | ७।१।१८ | ३७१ |
| ( क ) | | |
| कर्णे लक्षणस्या० | ५।३।११५ | ११९ |
| कवं चोष्णे | ६।३।१०७ | १०९ |
| का पथ्यक्षयोः | ६।३।१०४ | १०७ |
| कारनाम्नि च प्राचाम् | ६।३।१० | १२ |
| कारे सत्यागदस्य | ६।३।७० | ८० |
| कार्मस्ताच्छील्ये | ६।४।७२ | ३४१ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| कोः कत्तत्पुरुषेऽचि | ६।३।१०१ | १०६ |
| क्त्वापि छन्दसि | ७।१।३८ | ३९९ |
| क्त्वि स्कन्दिस्यन्दोः | ६।४।३१ | १९२ |
| क्त्वो यक् | ७।१।४७ | ४०९ |
| क्यङ्मानिनोश्च | ६।३।३६ | ४१ |
| क्यच्व्योश्च | ६।४।१५२ | ३२५ |
| क्यस्य विभाषा | ६।४।५० | २१५ |
| क्रमश्च क्त्वि | ६।४।१८ | १६७ |
| क्षियः | ६।४।५९ | २२४ |
| (ख) | | |
| खचि ह्रस्वः | ६।४।९४ | २६५ |
| खित्यनव्ययस्य | ६।३।६६ | ७५ |
| (ग) | | |
| गमः क्वौ | ६।४।४० | २०१ |
| गमहनजन० | ६।४।९८ | २६८ |
| गाथिविदथि० | ६।४।१६५ | ३३८ |
| गोः पादान्ते | ७।१।५७ | ४१७ |
| गोतो णित् | ७।१।९० | ४५९ |
| ग्रन्थान्ताधिके च | ६।३।७९ | ७० |
| (घ) | | |
| घकालतनेषु | ६।३।१७ | १६ |
| घञि च भावकरणयोः | ६।४।२७ | १९० |
| घरूपकल्पप्० | ६।३।४३ | ५२ |
| घसिभसोर्हलि | ६।४।१०० | २६९ |
| घुमास्थागा० | ६।४।६६ | २३५ |
| घ्वसोरेद्धाव० | ६।४।११९ | २८७ |
| (ङ) | | |
| ङसिङ्योः स्मात्स्मिनौ | ७।१।१५ | ३७० |
| ङे प्रथमयोरम् | ७।१।२८ | ३८५ |
| ङेर्यः | ७।१।१३ | ३६८ |
| ङ्यापोः संज्ञाछन्दसोः | ६।३।६३ | ७३ |
| (च) | | |
| चतुरनडुहोरामुदात्तः | ७।१।९८ | ४७० |
| चरणे ब्रह्मचारिणि | ६।३।८६ | ९६ |
| चिणो लुक् | ६।४।१०४ | २७४ |
| चिण्णमुलोर्दीर्घः | ६।४।९३ | २६२ |
| चितेः कपि | ६।४।१२७ | १२७ |
| चौ | ६।३।१३८ | १३२ |
| च्छ्वोः शूडनुनासिके | ६।४।१९ | १६७ |
| (छ) | | |
| छन्दसि च | ६।३।१२६ | १२६ |
| छन्दस्यपि दृश्यते | ६।४।७३ | २७३ |
| छन्दस्यपि दृश्यते | ७।१।७६ | ४४८ |
| छन्दस्युभयथा | ६।४।५ | १४५ |
| छन्दस्युभयथा | ६।४।८६ | २५५ |
| छादेर्घेऽद्व्युपसर्गस्य | ६।४।९६ | २६६ |
| (ज) | | |
| जश्शसोः शि | ७।१।२० | ३७५ |
| जनसनखनाम्० | ६।४।४२ | २०३ |
| जनिता मन्त्रे | ६।४।५३ | २१९ |
| जसः शी | ७।१।१७ | ३७१ |
| जहातेश्च | ६।४।११६ | २८६ |
| जातेश्च | ६।३।४१ | ४७ |
| जान्तनशां | ६।४।३२ | १९३ |
| ज्यादादीयसः | ६।४।१६० | ३३४ |
| ज्योतिर्जनपद० | ६।३।८५ | ९५ |
| ज्वरत्वर० | ६।४।२० | १७३ |
| (झ) | | |
| झोऽन्तः | ७।१।३ | ३५५ |
| (ट) | | |
| टाङसिङसाम् | ७।१।१२ | ३६६ |
| टेः | ६।४।१४३ | ३११ |
| टेः | ६।४।१५५ | ३२९ |
| (ढ) | | |
| ढे लोपोऽकद्र्वाः | ६।४।१४७ | ३१७ |
| ढ्लोपे पूर्वस्य | ६।३।१११ | ११५ |
| (ण) | | |
| णलुत्तमो वा | ७।१।९१ | ४६२ |
| णेरनिटि | ६।४।५१ | २१६ |

